शंसन्तु । **म.** शंस-तात् शंसतम् शंसत । **उ.** शंसानि शंसाव शंसाम । ६ **प्र.** अशंसत् अशंसताम् अशंसन् । **म.** अशंसः अशंसतम् अशंसत । **उ.** अशंसम् अशंसाव अशंसाम । ७ **प्र.** शंसेत् शंसेताम् शंसेयुः । **म.** शंसेः शंसेतम् शंसेत । **उ.** शंसेयम् शंसेव शंसेम । ८ **प्र.** शस्यात् शस्यास्ताम् शश्यासुः । **म.** शस्याः शस्यस्तम् शस्यास्त । **उ.** शस्यासम् शस्यास्व शस्यास्म । ९ **प्र.** अशंसीत् अशंसिष्टाम् अशंसिषुः । **म.** अशंसीः । अशंसिष्टम् अशंसिष्ट । **उ.** अशंसिषम् अशंसिष्व अशंसिष्म । १० अशंसिष्यत् ।

**कर्मणि**—शंश्यते । **णिचि**—शंसयति-ते । **सनि**—शिशंसिषति । **यङि**—शाशंस्यते । **यङ्लुकि**—शाशंसीति-शाशंस्ति । **कृत्सु**—शंशकः-सिका, शांसिता-त्री, शंसयिता-त्री, शंसन्-न्ती, शंसयन्-न्ती, शंसयिष्यन्ः, शंसमानः, शंसयमानः, शंसः, शंसितुम्, शंसितव्यम्, शंसयितव्यम्, शंसनीयम्, शंस्यमानः, प्रशंस्य । शस्यम्[१]-शंस्यम्, शंसित्वा[२]-शस्त्वा, शंसयित्वा, शस्तम्,[३] नृशंसः,[४] नराशंसः,[५] ब्राह्मणाच्छंसी,[६] प्रशस्तिं[७] विन्दन्ति, प्रशंसा,[८] आशंसा, आशंसुः[९] ।

. **(७२९) चह—परिकल्कने** । परिकल्कनं = दम्भः शाठ्यञ्च । (गर्वीला होना, ठगना, दुष्कर्मी होना) । अक. । सेट् । परस्मै. । चहति । चचाह चेहतुः चेहुः ।

**कर्मणि**—चेह्यते । **णिचि**—चाहयति-ते । **सनि**— चिचहिषति । **यङि**—चाचह्यते । **यङ्लुकि**—चाचहीति-चाचढि । इत्यादि 'रदति' (५३) वत् । **कृत्सु**—चाहकः-हिका, चहिता-त्री, चाहयिता-त्री, चहन्-न्ती, चाहयन्-न्ती, चहिष्यन्-न्ती-ती, प्रचट्-प्रचड्-प्रचहौ-प्रचहः,

---

१ 'शंसिदुहिगुहिभ्यो वा' (काशिका ३-१-१०९) इति वचनात् क्यब्विकल्पः । क्यप्पक्षे प्रत्ययस्य कित्त्वेनोपधानकारलोपः । अनुस्वारोपधत्वेऽपि, उपदेशे 'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इत्यमियुक्त-वचनात् नोपधः । क्यबभाव पक्षे ण्यति शंस्यम् इति भवति । 'प्रशस्यस्य श्रः' (५-३-६०) इति निर्देशबलात् क्यब्विकल्पपक्षः सिद्ध इति बोध्यम् ।

२ उदित्वेन क्त्वायामिट् विकल्पः । इडभावपक्षे उपधानकारलोपः । इट्पक्षे 'न क्त्वा सेट्' (१-२-१८) नियमात् न कित्त्वम् । तेन उपधानकारलोपः ।

३ 'यस्य विभाषा' (७-२-१५) इति निष्ठायामिटनिषेधः ।

४ नृन् शंसतीति = नृशंसः = क्रूरः । 'कर्मण्यण्' (३-२-१) इत्यण् । अत्र दुर्गोक्त रीत्या हिंसैव धात्वर्थः ।

५ नरा एनं शंसन्ति इति नराः अस्मिन् आसीनाः शंसन्ति वा नराशंसः = अग्निः, देशविशेषो वा । 'हलश्च' (३-३-१२१) इति संज्ञायां घञ् । अत्र पूर्वपदस्य वनस्पत्यादिषु (६-२-१४०) पाठात् दीर्घ इति माधवः । काशिकायां तु (६-२-१४०) 'अन्येषामपि—' (६-२-१३६) इति दीर्घ उक्तः ।

६ अत्र ब्राह्मण ददाय शंसति इति वृत्तिपक्षे 'साधुकारिण्युपसंख्यानम्' (वा. ३-२-७८) इति णिनिः । माधवस्तु 'सुप्यजातौ—' (३-२-७८) इति णिनिमाह । तत्तु रूढिशब्देष्व सङ्गतमिति बोध्यम्' 'ब्राह्मणाच्छंसिन उपसंख्यानम्' (वा. ६-३-२) इति पञ्चम्या अलुक् । यदा तु ब्राह्मणानि शंसति इति वृत्तिः, तदा 'बहुलमभीक्ष्ण्ये' (३-२-८१) इति णिनिः । द्वितीयाः पञ्चमी निपातनादेव । पच्चम्या अलुक् तु 'तत्पुरुषे कृति—' (६-३-१४) इति । उभयथाऽपि ब्राह्मणाच्छंसी कश्चन् ऋत्विग् विशेषः ।

७ स्त्रियां क्तिनि नलोपे रूपमेवम् ।

८ 'प्रशंसा वचनैश्च' (२-१-६६) इति निर्देशात् क्तिन पक्षे बाधित्वा अकार प्रत्ययोऽपि भवतीति बोध्यम् । तेन प्रशंसा, प्रशंस्ति, इत्युभयमपि साधु ।

९ 'सनाशंसभिक्ष उः' (३-२-१६८) इति तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु उप्रत्ययः ।

चहितम्, चहः, चहितव्यम्, चाहयितव्यम्, चहनीयम्, चाहनीयम्, चाह्यम्, चाह्यमानः, चाहः, चहितुम्, चाहयितुम्, चाढिः, चहनम्, चाहनम्, चहित्वा, चाहयित्वा, प्रह्य ।

( ७३० ) **मह—पूजायाम्** । (पूजा करना)। सक.। सेट्। परस्मै.। १ महति। २ ममाह मेहतुः। मेहुः। इत्यादि। 'गदति' वत्।

**कृत्सु**—माहकः-हिका, महिता-त्री, माहयिता-त्री, महन्-न्ती, माहयन्-न्ती, महिष्यन्-न्ती-ती, महितम्-तः-तवान्, महितव्यम्, माहयितव्यम्, महनीयम्, माहनीयम्, माह्यम्, माह्यमानः, महितुम्, माहयितुम्, महनम्, माहनम्, महित्वा, माहयित्वा, प्रमह्य, मही,[1] महिषः[2]-महिषी, महिष्मान्, महत्[3]-महान्-महान्तौ-महान्तः, माहिनम्-[4]महिनम्, महिमा ।

( ७३१ ) **रह—त्यागे** । (त्यागना, छोड़ना) **वि**—अलग होना, भिन्न होना । सकर्म.। सेट्। परस्मै.। रहति। रहाह रिहतुः रेहुः। इत्यादि। 'रदति' (५३) वत्।

**कृत्सु**—रहकः[5]-हिका, रहिता-त्री, रहितुम्, रह्यमानः, रहितव्यम्, रहनीयम्, रहित्वाः, क्विपि-प्ररट्[6]-ड्-प्ररहौ-प्ररहः, ल्यपि प्ररहय्य,[7] णमुलि, रहम्, राहम्।

( ७३२ ) **रहि—गतौ**– (जाना) सकर्म.। सेट्। पर.। रंहति। 'क्रन्दति' (७१) वत्।

( ७३३ ) **दृह—वृद्धौ** । (बढ़ना, बुद्धि होना)। अकर्म.। सेट्। पर.। दर्हति। 'वर्षति' (७०६) वत्।

( ७३४ ) **दृहि—वृद्धौ** । (बढ़ना) अकर्म.। सेट्। परस्मै.। दृंहति। 'वृंहति' (७३६) वत्।

( ७३५ ) **बह—वृद्धौ** । (बढ़ना, बृद्धि होना)। अकर्म.। सेट्। परस्मै.। बर्हति। बबर्ह। **णिचि**—बर्हयति-ते। **सनि**—बिबर्हति। **यङि**—बरीबृह्यते-बरबृह्यते। **यङ्लुकि**—बरिबृहीसि– बरीवृहीति। 'वर्षति' (७०६) वत्।

( ७३६ ) **बृहि—**बृद्धौ शब्दे च। (बढ़ना, शब्द करना)। अकर्म.। सेट्। परस्मै.।

१ पचाद्यजन्तात् महशब्दात् गौरादित्वात् (४-१-४१) स्त्रियां ङीषि रूपमेवम्।
२ अविमह्योष्टिषच् (द.उ. ९-३) इति टिषच् प्रत्यये महिषः इति रूपम्। टित्वात् स्त्रियां महिषी इति भवति। महिषा अस्मिन् सन्तीति महिष्मान्=देशः। महिषाच्चेति वक्तव्यम्। (.ा. ४-२-८७) इति 'तदस्मिन्नस्तीति देशे तन्नाम्नि' (४-२-६७) इति विषये ड्मनुप् प्रत्यये डित्वाट्टिलोपे च रूपमेवम्।
३ 'वर्तमाने पृषद्बृहन् महद–'(द.उ. ६-५) इति वर्तमानकाले कतिप्रत्यये शतृवदित्यतिदेशान्नुमि, सान्तमहतः संयोगस्य' (६-४-१०) इत्यसम्बुद्धौ सर्वनामस्थाने परतः उपधायाः दीर्घे च महान् इति रूपं भवति।
४ 'मेहरिणन् च' (द.उ. ५-१९) इति इनण् प्रत्यये माहिनम् इति, चकारात् इनन् प्रत्यये महिनम् इति च रूपम्। महिनम् = इज्यम्।
५ ज्ञपादिषु अस्यधातोः पाठात् मित्त्वेन मितां ह्रस्वः। (६-४-९२) इति णौ उपधायाः ह्रस्वः।
६ 'हो ढः' (८-२-३१) इति ढत्वे, अवसाने चर्त्वविकल्पे च रूपम्।
७ 'ल्यपि, 'ल्यपि लघु पूर्वात्' (६-४-५६) इति णेरयादेशे रूपमेवम्।

१. वृंहति बृंहतः बृंहन्ति **प्र.** बृंहसि बृंहथः बृंहथ **म.** बृंहामि बृंहावः बृंहामः **उ.** २ बबृंह बबृंहतु बबृंहुः। ३ बृंहिता। ४ बृंहिष्यति। ५ बृंहतु। ६ अबृंहत्। ७ बृंहेत्। ८ बृंह्यात्। **अनिदितामित्युक्तत्वान्नलोपो जातः**। ९ अबृंहीत्। १० अबृंहिष्यत्।

**भावे**—बृंह्यते। **णिचि**—वृंहयति-ते। **सनि**—बिबृंहिषति। **यङि**—बरीबृंह्यते। **यङ्लुकि**—बरीबृंहीति-बबृंहीति-बरीबृण्ढि। इत्यादि।

**कृत्सु**—बृंहितव्यम्, बृंहणीयम्, बृंह्यम्। बृंहितः। बृंहितम्। बृंहितुम्। बृंहित्वा। प्रबृंह्य। परिबृढः।

**(७३७-७३८) तुहिर्-दुहिर्—अर्दने।** (पीडा करना, दुख देना, हिंसा करना)। तोहती। दोहति। इत्यादि। 'ज्योतति' (४०) वत्।

**(७३९) उहिर्—अर्दने।** (पीडा करना)। इरित्। सक.। सेट्। पर.।

१ **प्र.** ओहति। ओहतः। ओहन्ति। **म.** ओहसि। ओहथः। ओहथ। **उ.** ओहामि। ओहावः। ओहामः। २ **प्र.** उवोह। ऊहतुः। ऊहुः। **म.** उवोहिथ। ऊहथुः। ऊह। **उ.** उवोह। ऊहिव। ऊहिम। ३ **प्र.** ओहिता। ओहितारौ औहितारः। **म.** ओहितासि। ओहितास्थः। ओहितास्थ। **उ.** ओहितास्मि। ओहितास्वः। ओहितास्मः। ४ **प्र.** ओहिष्यति। ओहिष्यतः। ओहिष्यन्ति। **म.** ओहिष्यसि। ओहिष्यथः। ओहिष्यथ। **उ.** ओहिष्यामि। ओहिष्यावः। ओहिष्यामः। ५ **प्र.** ओहतु-तात्। ओहताम्। ओहन्तु। **म.** ओह-ओहतात्। ओहतम्। ओहत। **उ.** ओहानि। ओहाव। ओहाम। ६ **प्र.** औहत्। औहताम्। औहन्। **म.** औहः। औहतम्। औहत। **उ.** औहम्। औहाव। औहाम। ७ **प्र.** ओहेत्। ओहेताम्। ओहेयुः। **म.** ओहेः। ओहेतम्। ओहेत। **उ.** ओहेयम्। ओहेव। ओहेम। ८ **प्र.** उह्यात्। उह्यास्ताम्। उह्यासुः। **म.** उह्याः। उह्यास्तम्। उह्यास्त। **उ.** उह्यासम्। उह्यास्व। उह्यास्म। ९ **प्र.** औहीत्-औहत्। औहिष्टाम्। औहताम्। औहिषुः-औहन्। **म.** औहीः-औहः। औहिष्टम्-औहतम्। औहिष्ट-औहत। **उ.** औहिषम्- औहम्। औहिष्व-औहाव। औहिष्म-औहाम। १० **प्र.** औहिष्यत। औहिष्यताम्। औहिष्यन्। **म.** औहिष्यः। औहिष्यतम्। औहिष्यत। **उ.** औहिष्यम्। औहिष्याव। औहिष्याम।

**णिचि**—ओहयति-ते। **सनि**—ओजिहिषति। **कृत्सु**—ओहितव्यम्। ओहनीयम्। ओह्यम्। उहितः। ओहन्। ओहितुम्। ओहित्वा। प्रोह्य।

**(७४०) अर्ह—पूजायाम्।** पूजा करना। सक.। सेट्। परस्मै.।

१ **प्र.** अर्हति। अर्हतः। अर्हन्ति। **म.** अर्हसि। अर्हथः। अर्हथ। **उ.** अर्हामि। अर्हावः। अर्हामः। २ **प्र.** आनर्ह। आनर्हतुः। आनर्हुः। **म.** आनर्हिथ। आनर्हथुः। आनर्ह। **उ.** आनर्ह। आनर्हिव। आनर्हिम। ३ **प्र.** अर्हिता। अर्हितारौ। अर्हितारः। **म.** अर्हितासि। अर्हितास्थः। अर्हितास्थ। **उ.** अर्हितास्मि। अर्हितास्वः। अर्हितास्मः। ४ **प्र.** अर्हिष्यति।

अर्हिष्यतः। अर्हिष्यन्ति। **म.** अर्हिष्यसि। अर्हिष्यथः। अर्हिष्यथ। **उ.** अर्हिष्यामि। अर्हिष्यावः। अर्हिष्यामः। ५ अर्हतु। ६ **प्र.** आर्हत्। आर्हताम्। आर्हन्तु। **म.** आर्हः। आर्हेतम्। आर्हेत। **उ.** आर्हाम्। आर्हाव। आर्हाम। ७ **प्र.** अर्हेत्। अर्हेताम्। अर्हेयुः। **म.** अर्हेः। अर्हेतम्। अर्हेत। **उ.** अर्हेयम्। अर्हेव। अर्हेम। ८ **प्र.** अर्ह्यात्। अर्ह्यास्ताम्। अर्ह्यासुः। **म.** अर्ह्याः। अर्ह्यास्तम्। अर्ह्यास्ति। **उ.** अर्ह्यासम्। अर्ह्यास्व। अर्ह्यास्म। ९ **प्र.** आर्हीत्। आर्हिष्टाम्। आर्हिषुः। **म.** आर्हीः। आर्हिष्टम्। आर्हिष्ट। **उ.** आर्हिषम्। आर्हिष्व। आर्हिष्म। १० **प्र.** आर्हिष्यत्। आर्हिष्यताम्। आर्हिष्यन्। **म.** आर्हिष्यः। आर्हिष्यतम्। आर्हिष्यत। **उ.** आर्हिष्यम्। आर्हिष्याव। आर्हिष्याम।

**कर्मणि**—अर्ह्यते। **णिचि**—१ अर्हयति। २ अर्हयामासअर्हयाम्बभूव- अर्हयाञ्चकार। ३ अर्हयिता। अर्हयिष्यति। ५ अर्हयतु-तात्। ६ अर्हयत्। ७ अर्हयेत्। ८ अर्हयात्। ९ आर्जिहत्। १० आर्हयिष्यत्। **सनि**—१ अर्जिहिषति। ९ आर्जिहीषीत्। १० आर्जिहिषिष्यत्। **कृत्सु**—अर्हकः-र्हिका, अर्जिहिषकः-षिका, अर्हिता-त्री, अर्हयिता-त्री, अर्हन्-न्ती, अर्हयन्-न्ती, अर्हिष्यन्-न्ती-ती, अर्हयिष्य्-न्ती-ती, अर्ट-ड्-अर्हौ-अर्हः, अर्हः, पूजार्हः-पूजार्हा, अर्हितव्यम्, अर्हयितव्यम्, अर्हणीयम्, अर्हयम्, अर्ह्यमाणः, अर्हः, अर्घः,[1] अर्हितुम्, अर्हयितुम्, अर्हा, अर्हणा, अर्हणम्, अर्हित्वा, अर्हयित्वा, समर्ह्य।

**(७४१) द्युत—दीप्तौ**। प्रायेणायं विपूर्वकः। (चमकना, प्रकाशित होना)। **वि**—अत्यन्त प्रकाशित होना। अकर्म.।सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | द्योतते | द्योतेते | द्योतन्ते | प्र. |
| | द्योतसे | द्योतेथे | द्योतध्वे | म. |
| | द्योते | द्योतावहे | द्योतामहे | उ. |
| लिट् | दिद्युते[2] | दिद्युताते | दिद्युतिरे | प्र. |
| | दिद्युतिषे | दिद्युताथे | दिद्युदिध्वे | म. |
| | दिद्युते | दिद्युतिवहे | दिद्युतिमहे | उ. |
| लुट् | द्योतिता | द्योतितारौ | द्योतितारः | प्र. |
| | द्योतितासे | द्योतितासाथे | द्योतिताध्वे | म. |
| | द्योतिताहे | द्योतितास्वहे | द्योतितास्महे | उ. |
| लृट् | द्योतिष्यते | द्योतिष्येते | द्योतिष्यन्ते | प्र. |
| | द्योतिष्यसे | द्योतिष्येथे | द्योतिष्यध्वे | म. |
| | द्योतिष्ये | द्योतिष्यावहे | द्योतिष्यामहे | उ. |
| लोट् | द्योतताम् | द्योतेताम् | द्योतन्ताम् | प्र. |
| | द्योतस्व | द्योतेथाम् | द्योतध्वम् | म. |
| | द्योते | द्योतावहे | द्योतामहे | उ. |

१ 'न्यङ्क्वादीनां च' (७-३-५३) इति कुत्वम्। 'मूल्ये पूजाविधावर्घः–' इत्यमरः।

२ 'द्युतिस्वाप्योः संप्रसारणम्' (७-४-६७) अनयोरभ्यासस्य संप्रसारणं स्यात्। 'इयणः सम्प्रसारणम्' (१-१-४५) यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात्।

| | | | | |
|---|---|---|---|---|
| लङ् | अद्योतत | अद्योतेताम् | अद्योतन्त | प्र. |
| | अद्योतथाः | अद्योतेथाम् | अद्योतध्वम् | म. |
| | अद्योते | अद्योतावहि | अद्योतामहि | उ. |
| वि. लि. | द्योतेत | द्योतेयाताम् | द्योतेरन् | प्र. |
| | द्योतेथाः | द्योतेयाथाम् | द्योतध्वम् | म. |
| | द्योतेय | द्योतेवहि | द्योतेमहि | उ. |
| आ. लि. | द्योतिषीष्ट | द्योतिषीयास्ताम् | द्योतिषीरन् | प्र. |
| | द्योतिषीष्ठाः | द्योतिषीयास्थाम् | द्योतिषीध्वम् | म. |
| | द्योतिषीय | द्योतिषीवहि | द्योतिषीमहि | उ. |
| लुङ् | अद्योतिष्ट | अद्योतिषाताम् | अद्योतिषत | प्र. |
| | अद्योतिष्ठाः | अद्योतिषाथाम् | अद्योतिड्ढ्वम्-ध्वम् | म. |
| | अद्योतिषि | अद्योतिष्वहि | अद्योतिष्महि | उ. |

पक्षे—**प्र.** अद्युतत्[1] अद्युतताम् अद्युतन्। **म.** अद्युतः अद्युततम् अद्युतत। **उ.** अद्युतम् अद्युताव अद्युताम।

| | | | | |
|---|---|---|---|---|
| लृङ् | अद्योतिष्यत | अद्योतिष्येताम् | अद्योतिष्यन्त | प्र. |
| | अद्योतिष्यः | अद्योतिष्येथाम् | अद्योतिष्यध्वम् | म. |
| | अद्योतिष्ये | अद्योतिष्यावहि | अद्योतिष्यामहि | उ. |

**भावे**—द्युत्यते। ९ अद्योति। **णिचि**—द्योतयति-ते। **सनि**—दिद्युतिषते[2]-दिद्योतिषते। **यङि**—देद्युत्यते। **यङ्लुकि**—देद्युतीति-देद्योत्ति।

**कृत्सु**—द्योतकः-तिका, दिद्युतिषकः[3]-दिद्योतिषकः-षिका, देद्युतकः-[4]तिका, द्योतिता-त्री, द्योतयिता-त्री, द्योतयन्-न्ती, द्योतयिष्यन्-न्ती-ती, द्योतमानः, द्योतयमानः, द्योतिष्यमाणः, द्योतयिष्यमाणः, दिद्युत्[5]-दिद्युतौ-दिद्युतः, द्युतितम्[6]-द्योतितम्-तः, द्योतः,[7] खद्योतः,[8]

१ 'द्युद्भ्यो लुङि' (१-३-९१) द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि। इति वा परस्मैपदम्। परस्मैपदपक्षे—पुषादिद्युतादिति च्लेरङ्। द्वितीयो लुङ्।

२ 'रलोव्युपधात्—' (१-२-२६) इति सनि क्त्वा च वा द्वित्वम्। कित्वाभावपक्षे गुणः, कित्वपक्षे गुणाभावः।

३ सनन्ताण्ण्वुलि 'रलो व्युपधाद्धलादेः संश्च' (१-२-२६) इति सेटः सनः क्त्वायाश्च कित्त्वविकल्पनात्, कित्त्वपक्षे गुणप्रतिषेधः, कित्त्वाभावपक्षे गुण इति रूपद्वयम्। 'द्युतिस्वाप्योः सम्प्रसारणम्' (७-४-६७) इति अभ्यासे हलादिशेषं बाधित्वा यकारस्य सम्प्रसारणम् इकारः। सन्नन्ते सर्वत्रैषा प्रक्रिया ज्ञेया। क्त्वायामप्येवमेव कित्त्वविकल्पः।

४ यङन्तात् ण्वुलि, 'द्युतिस्वाप्योः—' (७-७-६७) इति प्रथमं हलादिशेषं बाधित्वा सम्प्रसारणे, अनन्तरम्। 'गुणो यङ्लुकोः' (७-४-८२) इति गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।

५ कर्तरि, क्विपि, 'द्युतिगमिजुहोतीनां द्वे च' (वा. ३-२-१७८) इति द्वित्वे, अभ्यासे सम्प्रसारणे, रूपमेवम्।

६ उदुपधाद्भादिकर्मणोरन्यतरस्याम्' (१-२-२१) इति निष्ठायाः कित्त्वविकल्पः। एतच्च भावे आदिकर्मणि च या निष्ठा, तत्रैवेति। तेन रूपद्वयम्।

७ इगुपधलक्षणं कप्रत्ययं बाधित्वा पचादिषु (१-३-१३४) पाठात् कर्तर्यच् प्रत्ययः।

८ खं द्योतयतीति खद्योतः = क्रिमिविशेषः। अन्तर्भावितण्यन्तादस्मात्। 'कर्मण्यण्' (३-२-१) इत्यण् प्रत्यये रूपम्।

प्रद्योतनः,[१] उद्द्योती,[२] विदिद्युतिवान्,[३] द्योतितव्यम्, द्योतयितव्यम्, द्योतनीयम्, द्योत्यम्, द्युत्यमानः, द्योत्यमानः, प्रद्योतः, द्योतितुम्, द्योतयितुम्, विद्युत्[४], द्युतिः,[५] द्योतना, द्योतनम्, द्युतित्वा-द्योतित्वा, द्योतयित्वा, प्रद्युत्य, प्रद्योत्य ज्योतिः[६] ।

**(७४२) श्विता-(श्वित्) —वर्णे।** (सफेद होना, शुभ्र होना)। अक.। सेट्। आत्मने.। आदित्। द्युतादिः। श्वेतते। श्वेतत्वेन प्रकाशते इत्यर्थः। शिश्विते। 'स्वेदति' वत्।

**(७४३) ञिमिदा—स्नेहने।** (स्नेह करना, स्निग्ध होना, पिघलना, पोतना)। सकर्म.। सेट्। आत्मने.। द्युतादिः।

| | | | | |
|---|---|---|---|---|
| लट् | मेदते | मेदेते | मेदन्ते | प्र. |
| | मेदसे | मेदेथे | मेदध्वे | म. |
| | मेदे | मेदावहे | मदामहे | उ. |
| लिट् | मिमिदे | मिमिदाते | मिमिदिरे | प्र. |
| | मिमिदिषे | मिमिदाथे | मिमिदिध्वे | म. |
| | मिमिदे | मिमिदिवहे | मिमिदिमहे | उ. |
| लुट् | मेदिता | मेदितारौ | मेदितारः | प्र. |
| | मेदितासे | मेदितासाथे | मेदिताध्वे | म. |
| | मेदिताहे | मेदितास्वहे | मेदितास्महे | उ. |
| लृट् | मेदिष्यते | मेदिष्येते | मेदिष्यन्ते | इत्यादि। |
| लोट् | मेदताम् | मेदेताम् | मेदन्ताम् | प्र. |
| | मेदस्व | मेदेथाम् | मेदध्वम् | म. |
| | मेदै | मेदावहै | मेदामहै | उ. |
| लङ् | अमेदत | अमेदताम् | अमेदन्त | प्र. |
| | अमेदथाः | अमेदथाम् | अमेदध्वम् | म. |
| | अमेदे | अमेदावहि | अमेदामहि | उ. |
| वि. लि. | मेदेत | मेदेयाताम् | मेदेरन् | प्र. |
| | मेदेथाः | मेदेयाथाम् | मेदेध्वम् | म. |
| | मेदेय | मेदेवहि | मेदेमहि | उ. |

१ तच्छीलादि कर्तृषु 'अनुदात्तेतश्च हलादेः' (३-२-१४९) इति युच्।

२ 'सुप्यजातौ–' (३-२-७८) इति ताच्छील्ये णिनिः।

३ लिटः क्वसौ, 'वस्वेकाजाद्घसाम्' (७-२-६७) इतीडागमे अभ्यासे सम्प्रसारणे च रूपम्।

४ स्त्रियाम्, भावादौ, 'सम्पदादिभ्यः–' (वा. ३-३-९४) इति क्विप्। क्तिनोऽपवादः।

५ 'इक् कृष्यादिभ्यः' (वा. ३-३-१०८) इति इक् प्रत्ययः।

६ 'द्युतेरिसिन् आदेशश्च जः' (दि.उ. ९-३२) इतीसिन् प्रत्यये, आदेश्च जकारादेशः। ज्योतिः = ग्रहनक्षत्रादिः। केचित्तु—अमरटीकायाम्, क्षीरस्वामिना 'ज्योतते ज्योतिः।' इत्युक्तम्। वस्तुतस्तु द्युतिरिव ज्योतिरपि स्वतन्त्रो धातुः। तस्य कात्यायनश्रौतसूत्रे 'तृणेनावज्योत्यासिच्याप: पुनरवज्योत्य निधायं त्रिरुद्वासयत्युदक्।(४-१४-५) इति ल्यबन्तः प्रयोगोऽप्युपलभ्यते।' इत्याहुः। 'अवज्योतषम् दुष्टार्थम्' इति कर्कभाष्येऽपि लुङन्तः प्रयोगोऽप्युपलभ्यते।

| | | | | |
|---|---|---|---|---|
| आ. लि. | मेदिषीष्ट | मेदिषीयास्ताम् | मेदिषीरन् | प्र. |
| | मेदिषीष्ठाः | मेदिषीयास्थाम् | मेदिषीध्वम् | म. |
| | मेदिषीय | मेदिषीवहि | मेदिषीमहि | उ. |
| लुङ् | अमेदिष्ट | अमेदिषाताम् | अमेदिषत | प्र. |
| | अमेदिष्ठाः | अमेषाथाम् | अमेदिड्ढ्वम्-ध्वम् | म. |
| | अमेदिषि | अमेदिष्वहि | अमेदिष्महि | उ. |

पक्षे—**प्र.** अमिदत् अमिदताम् अमिदन्। **म.** अमिदः अमिदतम् अमिदत। **उ.** अमिदम् अमिदाव अमिदाम।

| | | | |
|---|---|---|---|
| लृङ् | अमेदिष्यत | अमेदिष्येताम् | अमेदिष्यन्त इत्यादि। |

**कर्मणि**—मिद्यते। **णिचि**—मेदयति-ते। **सनि**—मिमिदिषते-मिमेदिषते। **यङि**—मेमिद्यते। **यङ्लुकि**—मेमिदीति-मेमेत्ति। **कृत्सु**—मेदकः-दिका, मेदिता-त्री, मेदयिता-त्री, मेदितुम्, मेदमानः, मेदनम्, मेदित्वा, मेदयित्वा, मेदन्-न्ती, मेदयन्-न्ती, मेदिष्यन्, मेदयिष्यन्-न्ती-ती, मेदितव्यम्, मेदयितव्यम्, मिन्नः,[१] प्रमेदितम्,[२] प्रमिन्नम्, प्रमिन्नः, प्रमेदितः, मेदुरः[३], मेदः[४], मेदिनी,[५] मित्रम्[६], मित्राः, मेदः,[७] मेदिष्यमाणः।

**(७४४) ञिष्विदा—स्नेहनमोचनयोः।** (चिकना करना, त्यागना) सकर्म.। सेट्। आत्मने.। स्वेदति। सिष्विदे। इत्यादि 'मेदति' (७४३) वत्। **द्युद्‌भ्यो लुङि।** इति वा परस्मैपदम् अङ् च।

**कर्मणि**—स्विद्यते। **णिचि**—स्वेदयति। **सनि**—सिस्विदिषते-सिस्वेदिषते। **यङि**—सेस्विद्यते। **यङ्लुकि**—सेष्वेत्ति।

**(७४५) रुच—दीप्तौ अभिप्रीतौ च।** (चमकना, प्रकाशित होना, आनन्द करना, प्रसन्न होना, उत्साह करना, रुचना)। अकर्म.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | रोचते | रोचेते | रोचन्ते | प्र. |
| | रोचसे | रोचेथे | रोचध्वे | म. |
| | रोचे | रोचावहे | रोचामहे | उ. |

---

१ 'ञीतः क्तः (३-२-१८७) इति वर्तमाने कर्तरि क्तप्रत्यये, 'ओदितश्च' (७-२-१६) इति इण्निषेधेच, 'रदाभ्यां निष्ठातो नः, पूर्वस्य च दः' (८-२-४२) इति निष्ठातकारधातुदकारयोर्नत्वे च रूपम्।

२ अस्यैव धातोर्निष्टायां भावे आदिकर्मणि च, 'विभाषा भावादिकर्मणोः' (७-२-१७) इतीड्विकल्पे, इट्पक्षे निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' (१-२-१९) इति सेटो निष्ठायाः कित्वनिषेधात् गुणनिषेधाद् गुणे प्रमेदितम् प्रमेदितः इति भवतः। इडभावपक्षे तु कर्त्रर्थकक्तप्रत्ययान्तवत् प्रक्रिया ज्ञेया।

३ भञ्जभासभिदो घुरच् (३-२-१६) इती ताच्छीलादिषु कर्तृषु घुरच् प्रत्यये गुणे च रूपमेतवम्। मेदुरः = वसाविशेषवान् पश्वादिः।

४ कर्तरि पचाद्यचि गुणे च रूपमेतत्। मेदः असुरविशेषः।

५ प्रह्यादित्वात् (३-१-१३४) कर्तरि णिनिप्रत्यये स्त्रियाम्, ऋन्नेभ्यः–' (४-१-५) इति ङीपि रूपमेवम्। मेदिनी = भूमिः।

६ 'अमिचिमिदिशसिभ्यः क्त्रः' (द.उ. ८-८६) इति क्त्रप्रत्यये रूपम्। मेदतीति मित्रम् = सुहृत्। सुहृदि अभिधेये नपुंसकलिङ्गम्, सूर्ये तु पुल्लिङ्गता, गन्धद्रव्ये तु पुंल्लिङ्गमस्यैव पदस्येति ज्ञेयम्।

७ 'असुन्' (द.उ. ३-४९) इत्यस्मादसुन् प्रत्यये गुणे च रूपम्। मेदः = वसा।

| | | | | |
|---|---|---|---|---|
| लिट् | रुरुचे | रुरुचाते | रुरुचिरे | प्र. |
| | रुरुचिषे | रुरुचाथे | रुरुचिध्वे | म. |
| | रुरुचे | रुरुचिवहे | रुरुचिमहे | उ. |
| लुट् | रोचिता | रोचितारौ | रोचितारः | प्र. |
| | रोचितासे | रोचितासाथे | रोचिताध्वे | म. |
| | रोचिताहे | रोचितास्वहे | रोचितास्मे | उ. |
| लृट् | रोचिष्यते | रोचिष्येते | रोचिष्यन्ते | प्र. |
| | रोचिष्यसे | रोचिष्येथे | रोचिष्यध्वे | म. |
| | रोचिष्ये | रोचिष्यावहे | रोचिष्यामहे | उ. |
| लोट् | रोचताम् | रोचेताम् | रोचन्ताम् | प्र. |
| | रोचस्व | रोचेथाम् | रोचध्वम् | म. |
| | रोचै | रोचावहै | रोचामहै | उ. |
| लङ् | अरोचत | अरोचेताम् | अरोचन्त | प्र. |
| | अरोचथाः | अरोचेथाम् | अरोचध्वम् | म. |
| | अरोचे | अरोचावहि | अरोचामहि | उ. |
| वि. लि. | रोचेत | रोचेयाताम् | रोचेरन् | प्र. |
| | रोचेथाः | रोचेयाथाम् | रोचेध्वम् | म. |
| | रोचेय | रोचेयावहि | रोचेयामहि | उ. |
| आ. लि. | रोचिषीष्ट | रोचिषीयास्ताम् | रोचिषीरन् | प्र. |
| | रोचिषीष्ठाः | रोचिषीयास्थाम् | रोचिषीध्वम् | म. |
| | रोचिषीय | रोचिषीवहि | रोचिषीमहि | उ. |
| लुङ् | अरोचिष्ट | अरोचिषाताम् | अरोचिषत | प्र. |
| | अरोचिष्ठाः | अरोचिषाथाम् | अरोचिड्ढ्वम्-ध्वम् | म. |
| | अरोचिषि | अरोचिष्वहि | अरोचिष्महि | उ. |

पक्षे—**प्र.** अरुचत् अरुचताम् अरुचन्। **म.** अरुचः अरुचतम् अरुचत। **उ.** अरुचम् अरुचाव अरुचाम।

| | | | | |
|---|---|---|---|---|
| लृङ् | अरोचिष्यत | अरोचिष्येताम् | अरोचिष्यन्त | प्र. |
| | अरोचिष्यथाः | अरोचिष्येथाम् | अरोचिष्यध्वम् | म. |
| | अरोचिष्ये | अरोचिष्यावहि | अरोचिष्यामहि | उ. |

**कर्मणि**—रुच्यते। **णिचि**—रोचयते[1]। **सनि**—रुरुचिषते रुरोचिषते। अस्य[2] यङ्

१ 'न पादम्याङ्–' (१-३-८९) एभ्यो ण्यन्तेभ्यः परस्मैपदं न।

२ 'भृशं रोचते' इत्यत्रैवायं यङ्निषेधः। पौनः पुन्येन तु रोरुच्यते इति स्यादेव। 'रोरुचीति रोरोक्ति' यङ्लुगन्तरूपं 'भृशं रोचते' इत्यर्थे इष्यत इति वृत्यादौ।

यङ्लुकौ न स्तः। **कृत्सु**—रोचकः-चिका, रोचिता-त्री, रोचयिता-त्री, रोचन्-न्ती, रोचयन्[१]-न्ती, रोचिष्यन्-न्ती-ती, रोचयमानः, रोचयिष्यमाणः, रोचितम्-तः-तवान्, रोचितव्यम्, रोचयितव्यम्, रोचनीयम्, रोच्यम्, रुच्यमानः, रोच्यमानः, रोचितुम्, रोचयितुम्, रुचित्वा-रोचित्वा, रोचयित्वा, संरुच्य, देवदत्ताय, रोचमानो[२] मोदकः, रोचन[३]-रोचना, विरोचनः, रोचनी,[४] रुच्यः,[५] रोच्यम्,[६] रोचिष्णुः,[७] रुचिः[८]-रुचिरम्, नीरुक्[९]-अभीरुक्, रोकः[१०], अरोचकः,[११] रुचकः,[१२] रुक्मम्,[१३] रुचिष्यम्[१४], वसुरोचिः[१५]-रोचिः।

**(७४६) घुट्—परिवर्तने।** (लोटना, पीछे आना, बदलना)। सक.। सेट्। आत्मने.। घोटते। जुघुटे। इत्यादि 'रोचति' (७४५) वत्।

**(७४७-७४९) रुट्-लुट्-लुठ्—प्रतिघाते।** (प्रतिबन्ध करना, रोकना, ढकेलना, धक्का मारना) सक.। सेट्। आत्मने.। रोटते। लोटते। लोठते। इत्यादि 'रोचति' (७४५) वत्।

---

१ धातोरस्याकर्मकत्वात् अभिप्रीतिरूपार्थे चित्तवत्कर्तृकत्वादपि, 'अनावकर्मकात्—' (१-३-१८८) इति कर्त्रभिप्राये प्राप्तस्य परस्मैपदस्य 'न पादभ्याङ्—' (१-३-८९) इति निषेधात्, 'णिचश्च' (१-३-७४) इति यथा सम्भवम्मुभयपदित्वमिति बोध्यम्। तेन शतृशानजन्तावुभावपि साधू इति बोध्यम्।

२ 'रुच्यार्थानां प्रियमाणः' (१-३-३३) इति प्रियमानस्य संप्रदानसंज्ञायाम्, 'चतुर्थी सम्प्रदाने' (२-३-१३) इति चतुर्थी।

३ 'नन्द्यादिषु' (३-१-१३४) 'नन्दिवासिदमिद्विषिसाधिबर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् (ग.सू.) इति वचनात् कर्तरि ल्युः। गुणः। रोचनः = कूटशाल्मलिः। 'स्त्रियामचादिषु' (४-१-४) पाठात् टाप्।

४ रोचनी इत्यत्र ल्युटि, टित्त्वेन स्त्रियां ङीपि रूपम्।

५ 'राजसूयसूर्यमृषोद्यरुच्य—' (३-१-११४) इत्यादिना निपातनात् क्यप्। 'सूर्यरुच्यावथ्याः कर्तरि' (वा. ३-१-११४) इति वचनात् कर्तरि निष्पन्नोऽयम्। रोचतेऽसौ रुच्यः।

६ भावे ण्यति, 'यजयाचरुच—' (७-३-६६) इति निषेधात् कुत्वं न। क्वाद्यजिव्रजि—' (वा. ७-३-५९) इति वार्तिकपक्षे तु रोक्यम् इति कुत्वेनैव भाव्यम्, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति संकेतात्। यदितु रोच्यम् इति प्रयोगो दृश्यते; तदानीं पृषोदरादित्वात् (६-३-१०९) कुत्वाभाव इति बोध्यम्।

७ 'अलङ्कृञ्निरा—' (३-२-१३६) इत्यादिना तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययः।

८ स्त्रियाम् 'इक् कृष्यादिभ्यः' (वा. ३-३-१०८) इति भावे इक् प्रत्ययः। रुचिशब्दात् मत्वर्थीयो रप्रत्ययो बाहुलकात् प्रयोगदर्शनात् द्रष्टव्यः। रुचिरः = रुचिमान् इति यावत्।

९ क्विपि, 'चोः कुः' (८-२-३०) इति कुत्वे, 'नहिवृतिवृषिव्यधिरुचि—' (६-३-११६) इति पूर्वपदस्य दीर्घः। निरोचणम् = नीरुक् इति न्यासे विवरणात् बाहुलकात् करणे भावार्थे वा क्विबत्रेति ज्ञायते।

१० 'चोः कुः घिण्ण्यतोः' (७-३-५२) इति कुत्वम्, इति न्यासः (५-४-१४४)। परं तु निष्ठायामनिटो धातोरेव। 'चजोः—' (७-३-५२) इति कुत्वमित्याश्रयितृणां वार्तिककारभाष्यकारादीनां मते तु 'विभाषा श्यावारोकाभ्याम्' (५-४-१४४) इत्यत्र अरोक इति निपातनादेवात्र कुत्वम् इति।

११ अरोचकः इत्यत्र रोगाख्यायां ण्वुल् बहुलम्' (३-३-१०८) इति ण्वुल्। अरोचकः = अरुचिव्याधिः। अत्र बहुलग्रहणात् स्त्र्यधिकारविहितत्वेऽपि स्त्रीत्वं नेति प्रक्रियासर्वस्म्।

१२ 'क्वुन् शिल्पिसंज्ञयोः—' इति क्वुन्। कित्त्वान्न गुणः।

१३ 'युजिरुचितिजां कुश्च' (द.उ. ७-३३) इति मक् प्रत्ययः, कवर्गश्चान्तादेशः। प्रत्ययस्य कित्त्वान्न गुणः। रोजतेऽतिशयेन तदिति रुक्मम् = सुवर्णम्।

१४ रुचिभुजिम्यां किष्यन् इति किष्यन् प्रत्ययः। रुचिष्यम् = भोज्यम्।

१५ 'वसौ रुचेः संज्ञायाम्' (द.उ. ९-३३) इति इसिन् प्रत्ययः। वसुभ्यो रोचते, वसवः अस्मिन् रोचन्ते इति वा वसुरोचिः = क्रतुः। बाहुलकात् 'वसु' इत्युपपदाभावेऽपि केवलाद्धातोः इसिन् प्रत्यये रोचिः = ज्वाला।

( ७५० ) **शुभ—दीप्तौ।** (प्रकाशित होना, शोभा पाना)। अक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | शोभते | शोभेते | शोभन्ते | प्र. |
| | शोभसे | शोभेथे | शोभध्वे | म. |
| | शोभे | शोभावहे | शोभामहे | उ. |
| लिट् | शुशुभे | शुशुभाते | शुशुभिरे | प्र. |
| | शुशुभिषे | शुशुभाथे | शुशुभिध्वे | म. |
| | शुशुभे | शुशुभिवहे | शुशुभिमहे | उ. |
| लुट् | शोभिता | शोभितारौ | शोभितारः | प्र. |
| | शोभितासे | शोभितासाथे | शोभिताध्वे | म. |
| | शोभिताहे | शोभितास्वहे | शोभितास्महे | उ. |
| लृट् | शोभिष्यते | शोभिष्येते | शोभिष्यन्ते | प्र. |
| | शोभिष्यसे | शोभिष्येथे | शोभिष्यध्वे | म. |
| | शोभिष्ये | शोभिष्यावहे | शोभिष्यामहे | उ. |
| लोट् | शोभताम् | शोभेताम् | शोभन्ताम् | प्र. |
| | शोभस्व | शोभेथाम् | शोभध्वम् | म. |
| | शोभै | शोभावहै | शोभामहै | उ. |
| लङ् | अशोभत | अशोभेताम् | अशोभन्त | प्र. |
| | अशोभथाः | अशोभेथाम् | अशोभध्वम् | म. |
| | अशोभे | अशोभावहि | अशोभामहि | उ. |
| वि. लि. | शोभेत | शोभेयाताम् | शोभेरन् | प्र. |
| | शोभेयाः | शोभेयाथाम् | शोभेध्वम् | म. |
| | शोभेय | शोभेवहि | शोभेमहि | उ. |
| आ. लि. | शोभिषीष्ट | शोभिषीयास्ताम् | शोभिषीरन् | प्र. |
| | शोभिषीष्ठाः | शोभिषीयास्थाम् | शोभिषीध्वम् | म. |
| | शोभिषीय | शोभिषीवहि | शोभिषीमहि | उ. |
| लुङ् | अशोभिष्ट | अशोभिषाताम् | अशोभिषत | प्र. |
| | अशोभिष्ठाः | अशोभिषाथाम् | अशोभिढ्वम् | म. |
| | अशोभिषि | अशोभिष्वहि | अशोभिष्महि | उ. |
| लृङ् | अशोभिष्यत | अशोभिष्यताम् | अशोभिष्यन्त | इत्यादि। |

**कृत्सु**—शोभकः-भिका, शोभिता, शोभयिता-त्री, शोभन्-न्ती, शोभयन्-न्ती, शोभिष्यन्-न्ती, शोभयिष्यन्-न्ती-ती, शोभमानः, शोभयमानः, शोभयिष्यमाणः, शोभितः-तम्, शोभितव्यम्, शोभयितव्यम्, शोभनीयम्, शोभा, शोभना, शोभितुम्, शोभयितुम्, शोभित्वा, शोभयित्वा, प्रशुभ्य, प्रशोभ्य। शुभम्, शोभनः, शोभनम्।

( ७५१ ) **क्षुभ—संचलने।** (मथना, घबड़ाना, क्रोध करना, क्षुब्ध होना)। सक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | क्षोभते | क्षोभेते | क्षोभन्ते | प्र. |
| | क्षोभसे | क्षोभेथे | क्षोभध्वे | म. |
| | क्षोभे | क्षोभावहे | क्षोभामहे | उ. |
| लिट् | चुक्षुभे | चुक्षुभाते | चुक्षुभिरे | प्र. |
| | चुक्षुभिषे | चुक्षुभाथे | चुक्षुभिध्वे | म. |
| | चुक्षुभे | चुक्षुभिवहे | चुक्षुभिमहे | उ. |
| लुट् | क्षोभिता | क्षोभितारौ | क्षोभितारः | प्र. |
| | क्षोभितासे | क्षोभितासाथे | क्षोभिताध्वे | म. |
| | क्षोभिताहे | क्षोभितास्वहे | क्षोभितास्महे | उ. |
| लृट् | क्षोभिष्यते | क्षोभिष्येते | क्षोभिष्यन्ते | प्र. |
| | क्षोभिष्यसे | क्षोभिष्येथे | क्षोभिष्यध्वे | म. |
| | क्षोभिष्ये | क्षोभिष्यावहे | क्षोभिष्यामहे | उ. |
| लोट् | क्षोभताम् | क्षोभेताम् | क्षोभन्ताम् | प्र. |
| | क्षोभस्व | क्षोभेथाम् | क्षोभध्वम् | म. |
| | क्षौभै | क्षोभावहै | क्षोभामहै | उ. |
| लङ् | अक्षोभत | अक्षोभेताम् | अक्षोभन्त | प्र. |
| | अक्षोभथाः | अक्षोभेथाम् | अक्षोभध्वम् | म. |
| | अक्षोभे | अक्षोभावहि | अक्षोभामहि | उ. |
| वि. लि. | क्षोभेत | क्षोभेयाताम् | क्षोभेरन् | प्र. |
| | क्षोभेथाः | क्षोभेयाथाम् | क्षोभेध्वम् | म. |
| | क्षोभेय | क्षोवेवहि | क्षोभेमहि | उ. |
| आ. लि. | क्षोभिषीष्ट | क्षोभिषीयास्ताम् | क्षोभिषीरन् | प्र. |
| | क्षोभिषीष्ठाः | क्षोभिषीयास्थाम् | क्षोभिषीध्वम् | म. |
| | क्षोभिषीय | क्षोभिषीवहि | क्षोभिषीमहि | उ. |
| लुङ् | अक्षोभिष्ट | अक्षोभिषाताम् | अक्षोभिषत | प्र. |
| | अक्षोभिष्ठाः | अक्षोभिषाथाम् | अक्षोभिढ्वम् | म. |
| | अक्षोभिषि | अक्षोभिष्वहि | अक्षोभिष्महि | उ. |

'**द्युद्भ्यो लुङि**'। इति विकल्पपक्षे–

पक्षे—**प्र.** अक्षुभत् अक्षुभताम् अक्षुभवन्। **म.** अक्षुभः अक्षुभतम् अक्षुभत। **उ.** अक्षुभम् अक्षुभाव अक्षुभाम।

| | | | | |
|---|---|---|---|---|
| लृङ् | अक्षोभिष्यत | अक्षोभिष्येताम् | अक्षोभिष्यन्त | प्र. |
| | अक्षोभिष्यथाः | अक्षोभिष्येथाम् | अक्षोभिष्यध्वम् | म. |
| | अक्षोभिष्ये | अक्षोभिष्यावहि | अक्षेभिष्यामहि | उ. |

**कर्मणि**—क्षुभ्यते। **णिचि**—क्षोभयति। चलनार्थत्वात् परस्मैपदमेव। **सनि**—चुक्षुभिषते। **कृत्सु**—क्षोभनीयम्, क्षोभनम्, क्षोभणः, क्षोभः, क्षुब्धिः, क्षोभितुम्, क्षुभित्वा, संक्षुभ्य,

क्षोभितुम्, क्षोभकः-भिका, क्षोभिता-त्री, क्षोभयिता-त्री, क्षोभयन्-न्ती, क्षोभयिष्यन्-न्ती-ती, क्षोभमाणः, क्षोभयिष्यमाणः, क्षोभिष्यमाणः, प्रक्षुप्-प्रक्षुब्-प्रक्षुभौ-प्रक्षुभः, क्षुब्धः, क्षोभितम्, क्षुभः, प्रक्षोभी, क्षोभितव्यम्, क्षोभयितव्यम्, क्षोभ्यम्, क्षुभ्यमाणः, क्षोभ्यमाणः।

(७५२) **णभ—हिंसायाम्**। (मारना)। सकर्म.। सेट्। आत्म.।

| | | | | |
|---|---|---|---|---|
| लट् | नभते | नभेते | नभन्ते | प्र. |
| | नभसे | नभेथे | नभध्वे | म. |
| | नभे | नभावहे | नभामहे | उ. |
| लिट् | नेभे | नेभाते | नेभिरे | प्र. |
| | नेभिषे | नेभाथे | नेभिध्वे | म. |
| | नेभे | नेभिवहे | नेभिमहे | उ. |
| लुट् | नभिता | नभितारौ | नभितारः | प्र. |
| | नभितासे | नभितासाथे | नभिताध्वे | म. |
| | नभिताहे | नभितास्वहे | नभितास्महे | उ. |
| लृट् | नभिष्यते | नभिष्येते | नभिष्यन्ते | प्र. |
| | नभिष्यसे | नभिष्येथे | नभिष्यध्वे | म. |
| | नभिष्ये | नभिष्यावहे | नभिष्यामहे | उ. |
| लोट् | नभताम् | नभेताम् | नभन्ताम् | प्र. |
| | नभस्व | नभेथाम् | नभध्वम् | म. |
| | नभै | नभावहै | नभामहै | उ. |
| लङ् | अनभत | अनभेताम् | अनभन्त | प्र. |
| | अनभथाः | अनभेथाम् | अनभध्वम् | म. |
| | अनभे | अनभावहि | अनभामहि | उ. |
| वि.लि. | नभेत | नभेयाताम् | नभेरन् | प्र. |
| | नभेथाः | नभेयाथाम् | नभेध्वम् | म. |
| | नभेय | नभेवहि | नभेमहि | उ. |
| आ.लि. | नभिषीष्ट | नभिषीयास्ताम् | नभिषीरन् | प्र. |
| | नभिषीष्ठाः | नभिषीयास्थाम् | नभिषीध्वम् | म. |
| | नभिषीय | नभिषीवहि | नभिषीमहि | उ. |
| लुङ् | अनभिष्ट | अनभिषाताम् | अनभिषत | प्र. |
| | अनभिष्ठाः | अनभिषाथाम् | अनभिढ्वम् | म. |
| | अनभिषि | अनभिष्वहि | अनभिष्महि | उ. |

**द्युद्भ्यो लुङि** इति विकल्पपक्षे—

| | | | | |
|---|---|---|---|---|
| | अनभत् | अनभताम् | अनभन् | प्र. |
| | अनभः | अनभतम् | अनभत | म. |
| | अनभम् | अनभाव | अनभाम | उ. |
| लृङ् | अनभिष्यत | अनभिष्येताम् | अनभिष्यन्त | इत्यादि। |

**कृत्सु**—नभकः-भिका, नभिता-त्री, नाभयिता-त्री, नाभयन्-न्ती, नभमानः, प्रणिनभमानः, प्रनिनभमानः,प्रणभमानः,नाभयमानः,नभिष्यमाणः,नाभयिष्यमाणः,प्रणप्-प्रणब्-प्रणभौ-प्रणभः, नभितः-तम्, नभितः, नभः, नाभः, नभितव्यम्, नाभयितव्यम्, नभनीयम्, नाभनीयम्, नभ्यम्, नाभ्यम्, ईषन्नभः-दुर्नभः, सुनभः, नभ्यमानः, नाभ्यमानः, नभितुम्, नाभयितुम, नब्धिः, नभनम्, नभित्वा, नाभयित्वा, प्रणभ्य, प्रणाभ्य।

**( ७५३ ) तुभ—हिंसायाम्**। (मारना)। सकर्म.। सेट्। आत्म.। द्युतादिः।

१ तोभते। २ तुतुभे तुतुभाते तुतुभिरे। ३ तोभिता। ४ तोभिष्यते। ५ तोभताम्। ६ अतोभत। ७ तोभेत। ८ तोभिषीष्ट। ९ अतोभिष्ट। पक्षे- अतुभत्। १० अतोभिष्यत। इत्यादि 'रोचति' (७४५) वत्।

**( ७५४ ) स्रंस—अवस्रंसने**। (गिरना। खिसना, अधः पतन होना)। अकर्म.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | स्रंसते | स्रंसेते | स्रंसन्ते | प्र. |
| | स्रंससे | स्रंसेथे | स्रंसध्वे | म. |
| | स्रंसे | स्रंसावहे | स्रंस्रामहे | उ. |
| लिट् | सस्रंसे | सस्रंसाते | सस्रंसिरे | प्र. |
| | संस्रंसिषे | सस्रंसाथे | सस्रांसिध्वे | म. |
| | सस्रंसे | सस्रंसिवहे | सस्रसिमहे | उ. |
| लुट् | स्रंसिता | स्रंसितारौ | स्रंसितारः | प्र. |
| | स्रंसितासे | स्रंसितासाथे | स्रंसिताध्वे | म. |
| | स्रंसिताहे | स्रंसितास्वहे | स्रंसितास्महे | उ. |
| लृट् | स्रंसिष्यते | स्रंसिष्येते | स्रंसिष्यन्ते | प्र. |
| | स्रंसिष्यथे | स्रंसिष्येथे | स्रंसिष्यध्वे | म. |
| | स्रंसिष्ये | स्रांसिष्यावहे | स्रंसिष्यामहे | उ. |
| लोट् | स्रंसताम् | स्रंसेताम् | स्रंसन्ताम् | प्र. |
| | स्रंसस्व | स्रंसेथाम् | स्रंसध्वम् | म. |
| | स्रंसै | स्रंसावहै | स्रंसामहै | उ. |
| लङ् | अस्रंसत | अस्रंसेताम् | अस्रंसन्त | प्र. |
| | अस्रंसथाः | अस्रसेथाम् | अस्रंसध्वम् | म. |
| | अस्रंसे | अस्रंसेवहि | अस्रंसेमहि | उ. |
| वि. लि. | स्रंसेत | स्रंसेयाताम् | स्रंसेरन् | प्र. |
| | स्रंसेथाः | स्रंसेयाथाम् | स्रंसेध्वम् | म. |
| | स्रंसेय | स्रंसेवहि | स्रंसेमहि | उ. |
| आ. लि. | स्रंसिषीष्ट | स्रंसिषीयास्ताम् | स्रंसिषीरन् | प्र. |
| | स्रंसिषीष्ठाः | स्रंसिषीयास्थाम् | स्रंसिषीध्वम् | म. |
| | स्रंसिषीय | स्रंसिषीवहि | स्रंसिषीमहि | उ. |

| | | | | |
|---|---|---|---|---|
| लुङ् | अस्रंसिष्ट | अस्रंसिषाताम् | असंसिषत | प्र. |
| | अस्रंसिष्ठाः | अस्रांसिषाथाम् | अस्रंसिध्वम् | म. |
| | अस्रंसिषि | अस्रंसिष्वहि | अस्रंसिष्महि | उ. |

**'द्युदभ्यो लुङि'** इति विकल्पे–

| | | | | |
|---|---|---|---|---|
| | अस्रंसत् | अस्रंसताम् | अस्रंसन् | प्र. |
| | अस्रंसः | अस्रंसतम् | अस्रंसत | म. |
| | अस्रंसम् | अस्रंसाव | अस्रंसाम | उ. |
| लृङ् | अस्रंसिष्यत | अस्रंसिष्येताम् | अस्रंसिष्यन्त | प्र. |
| | अस्रंसिष्यथाः | अस्रंसिष्येथाम् | अस्रंसिष्यध्वम् | म. |
| | अस्रंसिष्ये | अस्रंसिष्यावहि | अस्रंसिष्यामहि | उ. |

**कर्मणि**—स्रस्यते। **णिचि**—स्रंसयति। **सनि**—सिस्रंसिषते। **यङि**—सनीस्रस्यते। **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्**। इत्यभ्यासस्य नीक्। **यङ्लुकि**—सनीस्रंसीति-सनीस्रंस्ति। **कृत्सु**—स्रंसितव्यः, स्रंसनीयः, स्रंसमानः, स्रंसितुम्, स्रंसित्वा,[१] स्रस्त्वा विस्रस्य, स्रस्तः, स्रंसितुम्, स्रंसकः-सिका, स्रंसिता-त्री, स्रंसन्-न्ती, स्रंसयन्-न्ती, स्रंसिष्यन्-न्ती-ती, स्रंसयिष्यन्-न्ती-ती, सनीस्रंसकः,[२] क्विपि-उखास्रत्[३], स्रस्तिः[४]-विस्रसा[५]।

**(७५५-७५६) ध्वंसु-भ्रंसु—अवस्रंसने**। ध्वंसु गतौ च। **भ्रंसु**—इत्यपि केचित्। अक.। सेट्. आत्मने.। ध्वंसते। भ्रंसते। 'स्रंसति' (७५४) वत्। **यङि**—दनीध्वस्यते। **यङ्लुकि**—दनीध्वंसीति दनीध्वंस्ति।

**(७५७) स्रम्भु—विश्वासे**। प्रायेणायं विपूर्वः। (विश्वास करना)।अकर्म.। सेट्। आत्मने.। विस्रम्भते। 'संसति' (७५४) वत्।

**(७५८) वृतु—वर्तने**। (रहना)। **अति**—जीतना, अतिक्रमण करना, लांघना, **अनु**—अनुसरण करना, **आ**—चक्राकार घूमना, परिक्रमा करना, पुनः पुनः करना, **अप**—लौटना, **नि**—लौटना, **निर्**—पूरा करना, **परि**—बदलना, परिवर्तन करना, **प्र**—काम में लगना, प्रवृत्त होना, **प्रति**—जाना, **वि**—लौटना, चक्राकार घूमना, **विनि**—पीछे लौटना, **विपरि**—मन में भ्रम होना, **समभि**—कूद कर जाना, उड़ जाना। अक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | वर्तते | वर्तेते | वर्तन्ते | प्र. |
| | वर्तसे | वर्तेथे | वर्तध्वे | म. |
| | वर्ते | वर्तावहे | वर्तामहे | उ. |

---

१ उदित्वादिड्विकल्पः। इट्पक्षे कित्वाभावात् नलोपः।

२ यङन्ते सर्वत्र 'नीग्वञ्चुसुंसु–' (७-४-८४) इत्यादिना अभ्यासे नीगागमो बोध्यः।

३ उखायाः स्रंसते इति 'क्विप् च' (३-२-७६) इति क्विप्। उपधानकारलोपः। 'वसुस्रंसु–' इति पदान्तसकारस्य दकारः।

४ 'क्तिन् आस्वादिभ्यः। (वा. ३-३-९४) इति क्तिन्।

५ 'विपूर्वकादस्मात् भिदादेः' (३-३-१०४) आकृतिगणत्वात् अङि न लोपे विस्रसा—जरा' । इति प्रक्रियासर्वस्वम्।

| | | | | |
|---|---|---|---|---|
| लिट् | ववृते | ववृताते | ववृतिरे | प्र. |
| | ववृतिषे | ववृताथे | ववृतिध्वे | म. |
| | ववृते | ववृतिवहे | ववृतिमहे | उ. |
| लुट् | वर्तिता | वर्तितारौ | वर्तितारः | प्र. |
| | वर्तितासे | वर्तितासाथे | वर्तिताध्वे | म. |
| | वर्तिताहे | वर्तितास्वहे | वर्तितास्महे | उ. |
| लृट् | वर्त्स्यति | वर्त्स्यतः | वर्त्स्यन्ति | प्र. |
| | वर्त्स्यसि | वर्त्स्यथः | वर्त्स्यथ | म. |
| | वर्त्स्यामि | वर्त्स्यावः | वर्त्स्यामः | उ. |

**'वृद्भ्यः स्यसनोः'** इति परस्मैपविकल्पपक्षे–

| | | | | |
|---|---|---|---|---|
| | वर्तिष्यते | वर्तिष्येते | वर्तिष्यन्ते | प्र. |
| | वर्तिष्यसे | वर्तिष्येथे | वर्तिष्यध्वे | म. |
| | वर्तिष्ये | वर्तिष्यावहे | वर्तिष्यामहे | उ. |
| लोट् | वर्तताम् | वर्तेताम् | वर्तन्ताम् | प्र. |
| | वर्तस्व | वर्तेथाम् | वर्तध्वम् | म. |
| | वर्ते | वर्तावहै | वर्तामहै | उ. |
| लङ् | अवर्तत | अवर्तेताम् | अवर्तन्त | प्र. |
| | अवर्तथाः | अवर्तेथाम् | अवर्तध्वम् | म. |
| | अवर्ते | अवर्तावहि | अवर्तामहि | उ. |
| वि. लि. | वर्तेत | वर्तेयाताम् | वर्तेरन् | प्र. |
| | वर्तेथाः | वर्तेयाथाम् | वर्तेध्वम् | म. |
| | वर्तेय | वर्तेवहि | वर्तेमहि | उ. |
| आ. लि. | वर्तिषीष्ट | वर्तिषीयास्ताम् | वर्तिषीरन् | प्र. |
| | वर्तिषीष्टाः | वर्तिषीयास्थाम् | वर्तिषीध्वम् | म. |
| | वर्तिषीय | वर्तिषीवहि | वर्तिषीमहि | उ. |
| लुङ् | अवृतत् | अवृतताम् | अवृतन् | प्र. |
| | अवृतः | अवृततम् | अवृतत | म. |
| | अवृतम् | अवृताव | अवृताम | उ. |

पक्षे—**प्र.** अवर्तिष्ट अवर्तिषाताम् अवर्तिषत। **म.** अवर्तिष्ठाः अवर्तिषाथाम् अवर्तिढ्वम्। **उ.** अवर्तिषि अवर्तिष्वहि अवर्तिष्महि।

| | | | | |
|---|---|---|---|---|
| लृङ् | अवर्त्स्यत् | अवर्त्स्यताम् | अवर्त्स्यन् | प्र. |
| | अवर्त्स्यः | अवर्त्स्येतम् | अवर्त्सयेत | म. |
| | अवर्त्स्यम् | अवर्त्स्याव | अवर्त्स्याम | उ. |

पक्षे—**प्र.** अवर्तिष्यत अवर्तिष्येताम् अवर्तिष्यन्त। **म.** अवर्तिष्यथाः अवर्तिष्येथाम् अवर्तिष्यध्वम्। **उ.** अवर्तिष्ये अवर्तिष्यावहि अवर्तिष्यामहि।

**भावे**—वृत्यते ।४ वर्तिष्यते। **णिचि**—वर्तयति-ते। **सनि**—विवृत्सति-विवर्तिषते। **यङि**—वरीवृत्यते। **'रीगुपधस्य च'** इति रीगागमः। **यङ्लुकि**—वर्वृतीति-वरिवृतीति वरीवृतीति। ववर्ति इत्यादि। **कृत्सु**—वर्तितव्यम्। वर्तनीयम्। वर्त्यम्। वर्तमानः, वर्तितुम्, वर्तित्वा, वृत्त्वा[१], आवृत्य, वर्तकः, वर्तिता-त्री, वृत्यन्-न्ती, वर्तयन्-ती, वर्तिष्यन्-न्ती-ती, वत्सर्यन्, निवत्र्स्यन्[२]-न्ती-ती, वर्तयमाणः, वर्तयिष्यमाणः, वृत्यमाणः, वर्तणम्, वर्तयित्वा, वृत्तम्[३]-तः, वर्तितम्-तः, नीवृत्[४]-उपावृत्, वर्तिष्यमाणः, वर्तिष्णुः,[५] वनवर्ती,[६] व्यावर्वर्ती,[७] वृत्यम्,[८] वार्तः, समावर्तनीयः[९], आर्यावर्तः,[१०] हस्तवर्तं,[११] वर्तिः,[१२] वर्तनिः,[१३] वर्तनी, वर्तिका,[१४] वर्त्म,[१५] वृत्रः[१६]।

## (७५९) वृधु—वृद्धौ। (बढ़ना, अधिक होना)। अकर्म.। सेट्। आत्मने.।

१ 'उदितो वा' (७-२-५६) क्त्वायामिड्विकल्पः (तेन रूपंद्वयम्)।

२ 'वृद्भ्य स्यसनोः' (१-३-९२) इति स्यप्रत्यये विवक्षिते वा परस्मैपदम्। तेन रूपद्वयम्।

३ 'णेरध्ययने वृत्तम्' (७-२-२६) इति ण्यन्तस्य निष्ठायाम् अध्यनार्थ इडभावो णिलुक् च निपात्यते। तेन वृत्तो गुणो देवदत्तेन, वृतं पारायणं देवदत्तेन। अन्यत्र वर्तितमिति। वृतिरयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति। 'तेन निर्वृत्तं' (४-२-६८, ५-१-७९) इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते। तद्- वदिहापि ण्यर्थवृत्तेरेव च वृत्तेः 'वृत्तो गुणो देवदत्तेन' इति भविष्यति, निपातनमनर्थकम्? तत्क्रियते-यदापि णिचैव ण्यर्थोऽभिधीयते, तदा-वर्तितमित्यध्ययने मा भूरिति केचित्। अपरे तु वर्तितो गुणो देवदत्तेन इत्यपि इच्छन्ति'। इति काशिकावृत्तिः (७-२-६) शुद्धे तु धातोः उदित्वादस्य क्त्वायां वेट्कत्वात् 'यस्य विभाषा' (७-२-१५) इतीट्प्रतिषेधः।

४ क्विपि संहितायां विषये 'नहिवृति—' (७-३-११६) इति पूर्वपदस्य दीर्घो भवति। नीवृत् = जनपदः, उपावृत् = उपावृत्तिः।

५ 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पनोन्मदरुच्यपत्रपवृतु—' (३-२-१३६) इति तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययः।

६ वने वर्तन्त इति, 'व्रते' (३-२-८०) इति णिनि प्रत्ययः।

७ 'कर्मव्यातीहारे णच् स्त्रियाम्' (३-३-४३) इति णच् प्रत्ययः। तदन्तात् 'णचः स्त्रियामञ्' (५-४-१४) इत्यञ्। तदन्तात् 'टिड्ढाणञ्—' (४-१-१५) इति ङीप्। 'वार्ता प्रवृत्तिवृतान्तः' इत्यमरः।

८ 'ऋदुपधात्—' (३-१-११०) इति क्यप् प्रत्ययः। वृत्तिरस्त्यस्याम् इत्यर्थे 'वृत्तेश्च' (वा. ५-२-१०१) इति ण प्रत्ययः।

९ समावृत्त्यतेऽस्मादिति समावर्तनीयः = गुरुः। बाहुलकात् अपादाने अनियर् इति प्रक्रियासर्वस्वे।

१० आर्याः वर्तन्ते यत्रेति अधिकरणे घञ् प्रत्ययः। आर्यावर्तः = पुण्यभूभिः।

११ ण्यन्तादस्मात्। 'हस्तेवर्तिग्रहोः' (३-४-३९) इति हस्तवाचिनि करणे उपपदे णवुल्। हस्तिवर्तं वर्तयन्, हस्तेन वर्तयन्। एवं करवर्तम्, इत्यादि च।

१२ 'हृपिशिरुहिवृत्ति—' (द. १-४७) इति इन् प्रत्ययः। वर्तते वृत्यते वा वर्तिः द्रव्यम्। चेलवेष्टनं दीपाङ्गं च।

१३ 'वृत्तेः' (द.उ. १-६) इति अनिप्रत्यये रूपमेवम्। वर्तन्तेऽनेनेति वर्तनिः = मार्गः। 'स्तोत्रे वर्तनिः' उच्छादित्वात् (६-१-१६०) अन्तोदात्तः' इति श्वेतवनवासी। वर्तनी इति तु ल्युडन्तात् स्त्रियां टित्वेन ङीपि बोध्यम्। वर्तनी एकपदी।

१४ 'वृतेस्तिकन्' (द.उ. ३-२८) इति तिकन् प्रत्ययः। वर्तिका = पक्षिजातिः। 'वर्तिका = व्याख्याग्रन्थविशेषः शकुनिविशेषश्च' इति श्वेतवनवासी वर्तिकैव वर्तिकम्।

१५ औणादिके (द.उ. ६-७३) मनिन् प्रत्यये रूपमेवम्। भूतेऽपि दृश्यन्ते (३-३-२) इति भूतेऽयं प्रत्ययः। वृत्तं तत् इति वर्त्म = पन्थाः, इति वृत्तं च।

१६ औणादिके (द.उ. ८-३१) इति रक् प्रत्यये रूपमेवम्। वृत्रः = दानवः, वायुश्च।

| | | | | |
|---|---|---|---|---|
| लट् | वर्धते | वर्धेते | वर्धन्ते | प्र. |
| | वर्धसे | वर्धेथे | वर्धध्वे | म. |
| | वर्धे | वर्धावहे | वर्धामहे | उ. |
| लिट् | ववृधे | ववृधाते | ववृधिरे | प्र. |
| | ववृधिषे | ववृधाथे | ववृधिध्वे | म. |
| | ववृधे | ववृधिवहे | ववृधिमहे | उ. |
| लुट् | वर्धिता | वर्धितारौ | वर्धितारः | प्र. |
| | वर्धितासे | वर्धितासाथे | वर्धिताध्वे | म. |
| | वर्धिताहे | वर्धितास्वहे | वर्धितास्महे | उ. |
| लृट् | वर्धिष्यते | वर्धिष्येते | वर्धिष्यन्ते | इत्यादि। |

पक्षे—वत्सर्यति वत्सर्यतः वत्स्यन्ति इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | वर्धताम् | वर्धेताम् | वर्धन्ताम् | प्र. |
| | वर्धस्व | वर्धेथाम् | वर्धध्वम् | म. |
| | वर्धै | वर्धावहै | वर्धामहै | उ. |
| लङ् | अवर्धत | अवर्धताम् | अवर्धन्त | प्र. |
| | अवर्धथाः | अवर्धथाम् | अवर्धध्वम् | म. |
| | अवर्धे | अवर्धावहि | अवर्धामहि | उ. |
| वि. लि. | वर्धेत | वर्धेयाताम् | वर्धेरन् | प्र. |
| | वर्धेथाः | वर्धेयाथाम् | वर्धेध्वम् | म. |
| | वर्धेय | वर्धेवहि | वर्धेमहि | उ. |
| आ. लि. | वर्धिषीष्ट | वर्धिषीयास्ताम् | वर्धिषीरन् | प्र. |
| | वर्धिषीष्ठाः | वर्धिषीयास्थाम् | वर्धिषीध्वम् | म. |
| | वर्धिषीय | वर्धिषीवहि | वर्धिषीमहि | उ. |
| लुङ् | अवर्धिष्ट | अवर्धिषाताम् | अवर्धिषत | प्र. |
| | अवर्धिष्ठाः | अवर्धिषाथाम् | अवर्धिड्ढ्वम्-ध्वम् | म. |
| | अवर्धिषि | अवर्धिष्वहि | अवर्धिष्महि | उ. |

पक्षे—**प्र.** अवृधत् अवृधताम् अवृधन्। **म.** अवृधः अवृधतम् अवृधत। **उ.** अवृधम् अवृधाव अवृधाम।

| | | | | |
|---|---|---|---|---|
| लृङ् | अवर्धिष्यत् | अवर्धिष्येताम् | अवर्धिष्यन्त | इत्यादि |

पक्षे—**प्र.** अवत्स्यर्त् अवत्स्यर्ताम् अवत्स्यर्न्। **म.** अवत्स्यर्ः अवत्स्यर्तम् अवत्स्यर्त। **उ.** अवत्स्यर्म् अवत्स्यार्व अवत्स्यार्म।

**कृत्सु**—वर्धकः-र्धिका, वर्धिता-त्री, वर्धयिता-त्री, वर्धयन्-न्ती, वर्धन्-न्ती, वर्धिष्यन्-न्ती, वर्धयमाणः, वर्धयिष्यमाणः, वर्धित्वा, सम्वृध्य, वर्धितुम्, वर्धनम्, वर्धितव्यम्, वर्धयितव्यम्,

वर्धनः,[1] वर्धिष्णुः,[2] वृद्धः, वर्षिष्ठः, वर्षीयान्, वृद्धिः,[3] वार्धुषिकः, वर्धमानः,[4] वृधसानः[5], वर्धम्[6]।

**(७६०) शृधु—शब्दकुत्सायाम्**। (अधोवायु छोड़ना) अक.। सेट्। आत्मने.। द्युतादिः वृतादिश्च। १ शर्धते। २ शशृधे। ४ शर्धिष्यते-शर्त्स्यति। ९ अशृधत्-अशर्धिष्ट। १० अशर्धिष्यत-अशर्त्स्यत्। इत्यादि 'वर्तति' (७५८) वत्।

**(७६१) स्यन्दू—प्रस्रवणे**। (टपकना। झरना)। चूना। **अनु**—टपकना। चूना। **निस्**—निकलना। झरना। अक.। सेट्। आत्मने.।

१ स्यन्दते। २ **प्र.** सस्यन्दे सस्यन्दाते सस्यन्दिरे। **म.** सस्यन्दिषे-सस्यन्त्से सस्यन्दाथे सस्यन्दिध्वे-सस्यन्ध्वे। **उ.** सस्यन्दे सस्यन्दिवहे सस्यन्द्वहे सस्यन्दिमहे सस्यन्द्महे। ३ स्यन्दिता-स्यन्ता। ४ सन्दिष्यते-सन्स्यते स्यन्त्यति। 'वृद्भ्यः स्यसनोः' इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं वाधित्वा चतुर्ग्रहणसामर्थ्यान्नवृदभ्यः चतुर्भ्यः' इति निषेधः। ५ स्यन्दताम्। ६ अस्यन्दत। ७ स्यन्देत। ८ स्यन्दिषीष्ट स्यन्त्सीष्ट। ९ अस्यन्दिष्ट-अस्यन्दत-अस्यन्दत्। १० अस्यन्दिष्यत अस्यन्त्स्यत अस्यन्त्स्यत्।

**भावे**—स्यद्यते। **णिचि**—स्यन्दयति-ते। **सनि**—सिस्यन्दिषते- सिस्यन्त्स्यते-सिस्यन्त्सीति। **यङि**—सास्यद्यते। **यङ्लुकि**—सास्यन्दीति सास्यन्ति। **कृत्सु**—सन्दितव्यम्, स्यन्तव्यम्, स्यन्दनीयम्, स्यन्द्यम्, स्यन्नः, स्यन्दमानः, स्यन्दितुम्, स्यन्तुम्, स्यन्दित्वा-स्त्यन्त्वा, प्रस्यद्य, स्यदः, स्यन्दः, सिन्धुः, स्यन्दनः, अनुष्यन्दनः-अनुस्यन्दनः। '**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु**' इति विभाषाषत्वम्। निष्यन्दः इत्यादि।

**(७६२) कृपू—सामर्थ्ये**। (शक्तिमान् होना। समर्थ होना)। अक.। सेट्। आत्मने.। (लुङि, लुटि, लृटि, लृङि च उभय.) **कृपारोलः**। कृपो यो रेफस्तस्य लः स्यात्। इति लः।

| | | | | |
|---|---|---|---|---|
| लट् | कल्पते | कल्पेते | कल्पन्ते | प्र. |
| | कल्पसे | कल्पेथे | कल्पध्वे | म. |
| | कल्पे | कल्पावहे | कल्पामहे | उ. |

१ 'नन्दिग्रहिपचादिभ्यः—' (३-१-१३४) इति नन्द्यादित्वात् संज्ञायां कर्तरि ल्युः। एवम् आनन्दवर्धनः इत्यत्रापि कर्मण्यणं बाधित्वा ल्युरेव।

२ तच्छीलादिषु कर्तृषु 'अलंकृञ्निराकृञ् जननोत्पचोपतोन्मदरुच्यपत्रपवृतुवृधु—' (३-२-१३६) इष्णुच् प्रत्ययः।

३ वृद्धिनिमित्तं द्रव्यं वृद्धिः तादर्थ्यात् ताच्छब्द्यम्। 'क्तच् क्तौ च' (३-३-७४) इति संज्ञायां क्तिच्। यद्वा क्तिन्। 'वृद्धिरादैच्' (१-१-१) इत्यत्र वृद्धिशब्दस्तु संज्ञात्वेऽपि क्तिन्नन्त एव, न क्तिजन्त इति पस्पशायां भाष्ये प्रतिपादितत्वात् स्पष्टम्।

४ 'ताच्छील्यवयोवचनशक्तिषु—' (३-३-१२९) इत्यादिना यथासम्भवमर्थत्रयेऽपि चानश् प्रत्ययः। वर्धमानः त्रिविक्रमः। 'रूढिशब्दप्रकाराः ताच्छीलिकाः' भाष्यम् (३-२-५६) इति वचनात् रूढोऽयम्।

५ वर्धते इति वृधसानः गर्भः। 'ऋञ्जिवृधि—' (द.उ. ५-३०) इत्यसानच् प्रत्ययः। प्रत्ययस्य कित्वान्न गुणः।

६ वर्धतेऽम्भसा स्पृष्टम् इति वर्धम् चर्मच्छेदः। 'वृधिवपिभ्यां रन्' (द.उ.८-४५) इति रन् प्रत्ययः।

| लिट् | चक्लृपे | चक्लृपाते | चक्लृपिरे | प्र. |
|---|---|---|---|---|
| | चक्लृप्से-पिषे | चक्लृपाथे-ढ्वे | चक्लृपिध्वे-ब्ध्वे | म. |
| | चक्लृपे | चक्लृपिवहे-प्वहे | चक्लृपिमहे-प्महे | उ. |

३ **प्र.** कल्प्ता। लुटि च क्लृपः। **लुटि स्यसनोश्च क्लृपेः** परस्मैपदं वा स्यात्। **तासि च क्लृपः**। क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात् तङानयोरभावे। **म.** कल्प्तासि। **उ.** क्लप्तास्मि। **प्र.** कल्प्ता-कल्पिता। **म.** कल्प्तासे कल्पितासे। ऊदित्वात् आत्मनेपदे वेट्। **उ.** कल्प्ताहे-कल्पिताहे। ४ **प्र.** कल्पिष्यते-कल्पस्यते। कल्पिष्येते-कल्प्स्येते कल्पिष्यन्ते-कल्पस्यन्ते। **म.** कल्पिष्यसे कल्प्स्यसे। कल्पिष्येथे कलस्येथे कल्पिष्यध्वे कल्पस्यध्वे। **उ.** कल्पिष्ये कलप्स्ये कल्पिष्यावहे कल्पस्यावहे कल्पिष्यामहे कल्प्स्यामहे। परस्मपदे– कल्प्स्यतीत्यादि– ५ **प्र.** कल्पताम् कल्पेताम् कल्पन्ताम्। **म.** कल्पस्व कल्पेथाम् कल्पध्वम्। **उ.** कल्पे कल्पावहै कल्पामहै। ६ **प्र.** अकल्पत अकल्पेताम् अकल्पन्त। **म.** अकल्पथाः अकल्पेथाम् अकल्पेध्वम्। **उ.** अकल्पे अकल्पावहि अकल्पामहि। ७ **प्र.** कल्पेत कल्पेयाताम् कल्पेरन्। **म.** कल्पेथाः कल्पेयाथाम् कल्पेध्वम्। **उ.** कल्पेय कल्पेवहि कल्पेमहि। ८ **प्र.** कल्पिषीष्ट क्लप्सीष्ट कल्पिषीयास्ताम् क्लप्सीयास्ताम् कल्पिषीरन् क्लप्सीरन्। **म.** कल्पिषीष्ठाः क्लप्सीष्ठाः कल्पिषीयास्थाम् कल्प्सीयास्थाम् कल्पिषीध्वम् क्लप्सीध्वम्। **उ.** कल्पिषीय क्लप्सीय कल्पिषीवहि कल्प्सीवहि कल्पिषीमहि क्लप्सीमहि। ९ **प्र.** अकल्पिष्ट-अक्लप्त। अकल्पिषाताम् अक्लप्साताम् अकल्पिषत अक्लप्सत। **म.** अकल्पिष्ठाः अक्लप्सथाः अकल्पिषाथाम् अक्लप्साथाम् अकल्पिध्वम् अक्लप्ध्वम्। **उ.** अकल्पिषि अक्लप्सि। अकल्पिष्वहि अक्लप्स्वहि अकल्पिष्महि अक्लप्समहि। १० **प्र.** अकल्पिष्यत अक्लप्स्यत अकल्पिष्येताम् अक्लप्स्येताम् अकल्पिष्यन्त-अक्लप्सयन्त। **म.** अकल्पिष्यथाः-अक्लप्स्यथाः अकल्पिष्येथाम्-अक्लप्सयेथाम् अकल्पिष्यध्वम् अक्लप्स्यध्वम्। **उ.** अकल्पिष्ये अक्लप्स्ये अकल्पिष्यावहि अक्लप्स्यावहि अकल्पिष्यामहि अक्लप्स्यामहि। परस्मैपदे—अक्लप्स्यत् इत्यादि।

**भावे**—क्लृप्यते। **णिचि**—कल्पयति-ते। **सनि**—चिक्लिप्सति-चिक्लृप्स्यते चिकल्पिषते। **यङि**—चलीक्लृप्यते। **यङ्लुकि**—चल्क्लृपीति-चलिक्लृपीति चलीक्लृपीति। **कृत्सु**—कल्पितव्यम्, कल्प्तव्यम्, कल्पनीयम्, कल्प्यम्, क्लृप्तः, कल्पमानः, कल्पितुम्, कल्पनम्, कल्पित्वा, परिक्लृप्य, कल्पकः-ल्पिका, कल्पिता-त्री, कल्पयिता-त्री, कल्पयन्-न्ती, कल्पमानः, कल्पयमानः, कल्पिष्यमाणः, कल्पयिष्यमाणः, सुक्लृप् सुक्लृपौ-सुक्लृपः, क्लृप्तम्, क्लृप्तवान्, कल्पितः, कल्पः, विकल्पः, क्लृप्तिः, कल्पना, प्रकल्प्य, कृपणः।

(७६३) **घट—चेष्टायाम्**। (होना, रचना करना, चेष्टा करना)। अकर्म.। सेट्। आत्मने.। १ घटते। २ जघटे। ३ घटिता। ९ अघटिष्ट इत्यादि। 'कलति' (४९७) वत्।

**णिचि**—घटयति-ते। **सनि**—जिघटिषते। **यङि**—जाघट्यते। **यङ्लुकि**—जाघटीति-जाघट्टि। **कृत्सु**—घाटकः-टिका, घटिता-त्री, घटयिता-त्री, घटयन्-न्ती, घटमानः, घटयमानः, घटिष्यमाणः, घटयिष्यमाणः, घट्-घटौ-घटः, घटितम्-तः, घटनः, जिघटिषुः, जाघटः, घटितव्यम्, घटयित्वयम्, घटनीयम्, घाट्यम्, घट्यम्, घटितुम्, घटयितुम्, घटा, घटना, घटित्वा, घटयित्वा, विघट्य।

**(७६४) व्यथ—भयसञ्चलनयोः**। (डरना, क्षुब्ध होना, दुख भोगना)। अक.। सेट्। आत्मने.।

१ व्यथते। २ विव्यथे। **व्यथो लिटि**। व्यथोभ्यासस्य सम्प्रसारणं स्यात् लिटि। विव्यथाते। विव्यथिरे। ३ व्यथिता। ४ व्यथिष्यते। ८ व्यथिषीष्ट। ९ अव्यथिष्ट। इत्यादि 'स्वदति' (१८) वत्।

**कृत्सु**—व्यथा, विधुरः, विथुरः, व्यथनीयम्, व्यतनम्, व्याथः, व्याथकः, व्याथी, व्यथिता, व्यथितः, व्यथितुम्, व्यथितव्यम्, व्यथित्वा, संव्यथ्य, व्याथ्यम्, व्यथमानः, व्यथिष्यमानः।

**(७६५) प्रथ—प्रख्याने**। (प्रसिद्ध होना, जाहिर होना, विस्तार होना)। अक.। सेट्। आत्मने.। मित्। १ प्रथते। २ पप्रथे। इत्यादि 'त्रपति' (३७४) वत्।

**णिचि**—प्रथयति-ते। **कृत्सु**—प्रथनीयम्, प्रथनम्, प्राथः, प्रथकः[1]-थिका, प्रथकः-थिका, प्रथिता, प्रथितः, प्रथितुम्, प्रथितव्यम्, प्रथयितव्यम्, प्रथित्वा, सम्प्रथ्य, प्राथ्यम्, प्रथमानः, प्रथ्यमानः, प्रथा[2], पृथुः, पृथु, प्रथमः, पृथिवी।

**(७६६) प्रस—विस्तारे**। (विस्तार करना)। सक.। सेट्। आत्मने.। घटादिः। षित्। प्रसते। इत्यादि 'प्रथति' (७६५) वत्।

**(७६७) म्रद—मर्दने**। (मर्दन करना, कूटना, पीसना)। सक.। सेट्। आत्मने.। म्रदते। मम्रदे। 'स्वदति' (१८) वत्। मृदुः। म्रदिमा। मृद्वीका।

**(७६८) स्खद—स्खदने**। (जीतना, कतरना, स्थिर करना, दुख देना)। सक.। सेट्। आत्मने.। घटादिः। षित्। स्खदते। चस्खदे। 'प्रथति' (७६५) वत्।

**(७६९) क्षजि—गतिदानयोः**। (जाना, दान देना)। सक.। सेट्। आत्मने.। घटादिः। षित्। इदित्। १ क्षञ्जते। २ चक्षञ्जे। ३ क्षञ्जिता। ९ अक्षञ्जिष्ट।

**सनि**—चिक्षञ्जिषते। **कृत्सु**—क्षञ्जितुम्। क्षञ्जित्वा, क्षञ्जनम्, क्षञ्जितः।

**(७७०) दक्ष—गतिहिंसनयोः**। (जाना। मारना)। सक.। सेट्। आत्मने.। घटादिः। षित्। १ दक्षते। २ ददक्षे। ४ दक्षिष्यते।

१ ण्यन्ते सर्वत्र 'घटादयो मितः' (गण सूत्र भ्वादौ) इति मित् संज्ञायाम्, 'मितां ह्रस्वः' (६-४-९२) इति उपधाह्रस्वे रूपम्।

२ 'घटादयः षितः' (ग.सूत्र भ्वादौ) इति षित्वात् स्त्रियाम्, 'षिद्भिदादिभ्यः—' (३-३-१०४) इत्यङि रूपमेवम्।

**( ७७१ ) क्रप—कृपायां गतौ च।** (दया करना, जाना)। सक.। सेट्। आत्मने.। घटादिः। षित्। १ क्रपते। २ चक्रपे। 'कलति' (५९७) वत्।

**कृत्सु**—क्रापकः-पिका, क्रपकः-पिका, क्रपिता-त्री, क्रपयिता-त्री, क्रापयन्-न्ती, क्रपयिष्यन्-न्ती-ती, क्रपमाणः, क्रपिष्यमाणः, क्रपयमाणः, क्रपिष्यमाणः, क्रपयिष्यमाणः, क्रप्-क्रपौ-क्रपः, क्रपितम्, क्रपः, क्रपणः, क्रपितव्यम्, क्रपयितव्यम्, क्रपणीयम्, क्रप्यम्, क्रप्यमाणः, क्रापः, क्रपितुम्, क्रपयितुम्, कृपा, क्रपणा, क्रपणम्, क्रपयित्वा, प्रक्रप्य।

**( ७७२-७७३ ) कदि-क्रदि—वैकल्ये वैक्लव्ये।** (घबड़ाना, दुखी होना)। अक.। सेट्। आत्मने.। घटादिः। क्रन्दते। क्रन्देते। 'वन्दति' (११) वत्।

**( ७७४ ) क्लदि—वैक्लव्ये वैकल्ये इत्येके।** घबड़ाना, दुखी होना। अक.। सेट्। आत्मने.। क्लन्दते। चक्लन्दे। इत्यादि- 'वन्दति' (११) वत्।

**( ७७५ ) ञित्वरा—सम्भ्रमे।** सम्भ्रमः = आशुकारिता। (जल्दी करना, जल्दी जाना)। अक.। सेट्। आत्मने.। १ त्वरते। २ तत्वरे। ३ त्वरिता। ८ त्वरिषीष्ट। ९ अत्वरिष्ट।

**भावे**—त्वर्यते। **णिचि**—त्वरयति-ते। लुङ्—अतत्वरत्-त। **यङि**— तात्वर्यते। **यङ्लुकि**—तात्वरीति-तातूर्ति। **सनि**—तित्वरिषते। **कृत्सु**—त्वरितव्यम्। त्वरणीयम्, त्वार्यम्, त्वर्यम्, त्वारकः-रिका, त्वरकः[१]-रिका, त्वरिता-त्री, त्वरयिता-त्री, त्वरयन्[२]-न्ती, त्वरमाणः, त्वरिष्यमाणः, तूः[३]-तूरौ-तूरः, तूर्णम्,[४] (अनेन[५]), तूर्णः[६]-तूर्णवान्-त्वरितम्-तः, त्वरः, त्वरयितव्यम्, त्वर्यमाणः, त्वारः, त्वरितम्, त्वरयितुम्, त्वरा,[७] तूर्तिः, त्वरणा, त्वरणम्, त्वरित्वा, त्वरयित्वा, सन्त्वर्य, प्रत्वरय्य[८]।

---

१ 'घटादयो मितः' (ग.सू. भ्वादौ) इति वचनात् मित्त्वम्। तेन ण्यन्ते, 'मितां ह्रस्वः' (६-४-९२) इति उपधा ह्रस्वः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।

२ 'अणावकर्मकात् चित्तवत्कर्तृकात्' (१-२-८८) इति ण्यन्तात् परस्मैपदम्।

३ क्विपि, 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६-४-२०) उपधावकारयोरूठ्। सवर्णदीर्घः, विसर्गश्च।

४ 'आदितश्च' (७-२-१६) इति सूत्रेण निष्ठायमिण्णिषेधे प्राप्ते, रुष्यमत्वरसंघुषाऽऽस्वनाम्' (७-२-२८) इति निषेधविकल्पः। तेन इड् विकल्पः। इडभावपक्षे 'ज्वरत्वर–' (६-४-२०) इति उपधावकारयोरूढि दीर्घे, 'रदाभ्यां निष्ठातो नः–' (८-२-४२) इति निष्ठानत्वे, णत्वे च तूर्णम् इत्यादिरूपम्। इट्पक्षे त्वरितम् इत्यादि भवति। एतच्च निष्ठायाः भावार्थे बोध्यम्।

५ भावकर्मार्थयोस्तु, 'विभाषा भावादिकर्मणोः' (७-२-१७) इतीण्णिणेधविकल्पः तूर्णमनेन, त्वरितमनेन इति प्रयोगो भवति।

६ 'ञीतः क्तः' (३-२-१८७) इति कर्तरि क्तप्रत्ययः। कर्त्रर्थेऽपि 'रुष्यमत्वर–' (७-२-२८) इति इण्णिषेधविकल्पः। 'अस्य (धातोः) आदित्वम्, सूत्रस्य (७-२-२८) भावादिकर्मणोरप्रवृत्तिज्ञापनार्थम्। तथा च विकल्पप्रवृत्त्या तच्चरितार्थम्। तेनान्येषां तयोर्विकल्पो न' इति वृहच्छब्देन्दुशेखरे व्याख्यातम्।

७ धातोरस्य षित्वात्। 'त्वरत्यन्ता घटादयस्त्रयोदश षितः' (सि.कौ. भ्वादि) इति वचनात्, 'षिद् भिदादिभ्योऽङ्' (३-३-१०४) इति स्त्रियां भावादावङ्। प्रयोगबाहुल्यात् क्तिनि, ऊठि तूर्तिरित्यपि भवति। प्रक्रियाकौमुद्यां तु स्त्रियां भावादौ निप्रत्यये तूर्णिः इति रूपमित्युक्तम्। 'बाहुलकात् ऊठ्' इति तद्व्याख्याने।

८ ण्यन्ताल्ल्यपि 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।

सुभ्रूः-सुभ्रुवौ-सुभ्रुवः, भ्रमिः[१], उरभ्रः[२], भृमिः[३], भ्रमरः,[४] भ्रमिता-त्री, भ्रमयिता-त्री, भ्राम्यन्-भ्रमयन्-न्ती, भ्रमिष्यन्-न्ती-ती, भ्रमयिष्यन-न्ती-ती, भ्रान्तम्, भ्रमनीयम्-भ्रम्यम्, भ्रान्तिः, भ्रमयित्वा, सम्भ्रम्य ।

(८५१) **क्षर—सञ्चलने** । (टपकना, चूना, झरना), **सम्**—बहना । अकर्म.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | क्षरति | क्षरतः | क्षरन्ति | प्र. |
| | क्षरसि | क्षरथः | क्षरथ | म. |
| | क्षरामि | क्षरावः | क्षरामः | उ. |
| लिट् | चक्षार | चक्षरतुः | चक्षरुः | प्र. |
| | चक्षरिथ | चक्षरथुः | चक्षर | म. |
| | चक्षार-चक्षर | चक्षरिव | चक्षरिम | उ. |
| लुट् | क्षरिता | क्षरितारौ | क्षरितारः | प्र. |
| | क्षरितासि | क्षरितास्थः | क्षरितास्थ | म. |
| | क्षरितास्मि | क्षरितास्वः | क्षरितास्मः | उ. |
| लृट् | क्षरिष्यति | क्षरिष्यतः | क्षरिष्यन्ति | प्र. |
| | क्षरिष्यसि | क्षरिष्यथः | क्षरिष्यथ | म. |
| | क्षरिष्यामि | क्षरिष्यावः | क्षरिष्यामः | उ. |
| लोट् | क्षरतु-क्षरतात् | क्षरताम् | क्षरन्तु | प्र. |
| | क्षर-क्षरतात् | क्षरतम् | क्षरत | म. |
| | क्षराणि | क्षराव | क्षराम | उ. |
| लङ् | अक्षरत् | अक्षरताम् | अक्षरन् | प्र. |
| | अक्षरः | अक्षरतम् | अक्षरत | म. |
| | अक्षरम् | अक्षराव | अक्षराम | उ. |
| वि. लि. | क्षरेत् | क्षरेताम् | क्षरेयुः | प्र. |
| | क्षरेः | क्षरेतम् | क्षरेत | म. |
| | क्षरेयम् | क्षरेव | क्षरेम | उ. |
| आ. लि. | क्षर्यात् | क्षर्यास्ताम् | क्षर्यासुः | प्र. |
| | क्षर्याः | क्षर्यास्तम् | क्षर्यास्त | म. |
| | क्षर्यासम् | क्षर्यास्व | क्षर्यास्म | उ. |

१ 'इक् कृष्यादिभ्यः' (वा. ३-३-१०८) इति भावे स्त्रियामिक् प्रत्ययः ।

२ उरसा भ्रमतीति उरभ्रः = मेषः । 'अन्येष्वपि दृश्यते' (३-२-१०१) इति डप्रत्यये पृषोदरादित्वात् (६-३-१०९) उरसशब्दसकारस्य लोपे च रूपमेवम् ।

३ 'भ्रमेः सम्प्रसारणं च' (द.उ. १-४९) इतीन् प्रत्यये, प्रत्ययस्य कित्वेन सम्प्रसारणे च रूपमेवम् । भृमिः = वायुः ।

४ 'अर्तिकमिभ्रमि–' (द.उ. ८-६२) इत्यरन् प्रत्यये रूपमेवम् । भ्रमरः = अलिः ।

| | | | | |
|---|---|---|---|---|
| लुङ् | अक्षारीत् | अक्षारिष्टाम् | अक्षारिषुः | प्र. |
| | अक्षारीः | अक्षारिष्टम् | अक्षारिष्ट | म. |
| | अक्षारिषम् | अक्षारिष्व | अक्षारिष्म | उ. |
| लृङ् | अक्षरिष्यत् | अक्षरिष्यताम् | अक्षरिष्यन् | प्र. |
| | अक्षरिष्यः | अक्षरिष्यतम् | अक्षरिष्यत | म. |
| | अक्षरिष्यम् | अक्षरिष्याव | अक्षरिष्याम | उ. |

**भावे**—क्षर्यते। **णिचि**—क्षरयति। **सनि**—चिक्षरिषति। **यङि**—चाक्षर्यते। **यङ्लुकि**—चाक्षरीति-चाक्षर्ति। **कृत्सु**—क्षारकः-रिका, क्षरिता-त्री, क्षारयिता-त्री, क्षरन्-न्ती, क्षरिष्यन्-न्ती-ती, चिक्षरिषन्-न्ती, क्षारयन्-क्षारयिष्यन्-न्ती-ती, क्षारयमाणः-क्षारयिष्यमाणः, विक्षः-विक्षरौ-विक्षरः, क्षरितम्-तः, क्षारितम्, क्षरः, क्षारः, क्षारी-क्षरणः, अक्षरम्, क्षरितव्यम्, क्षारयितव्यम्, क्षरणीयम्, क्षारणीयम्, क्षार्यम्, ईषत्क्षरः-दुःक्षरः-सुक्षरः, क्षर्यमाणः, क्षार्यमाणः, क्षरितुम्, क्षारयितुम्, क्षर्तिः, क्षारणा, क्षरणम्, क्षारणम्, क्षरित्वा, क्षारयित्वा, विक्षर्य विक्षार्य।

**(८५२) षह—(सह) मर्षणे**। (क्षमा करना, सहन करना)। सक.। सेट्। आत्मने.।

१ सहते '**धात्वादेः षः सः**' इति षस्य सः। २ सेहे सहाते सेहिरे। ३ **प्र.** सहिता-सोढा '**तीषसहलुभरुषरिषः**' इच्छत्यादेः परस्य तासेरार्धधातुकस्य इड्वा स्यात्। **म.** सहितासे-सोढासे। ४ सहिष्यते। ५ सहताम्। ६ असहत। ७ सहेत। ८ सहिषीष्ट। ९ असहिष्ट।

**कर्मणि**—सह्यते। **णिचि**—साहयति-ते। **सनि**—सिसहिषते। **यङि**—सासह्यते। **यङ्लुकि**—सासहीति-सासोढि। परिसोढि। **कृत्सु**—साहकः-हिका, सिसहिषकः[१]-षिका, सासहकः-हिका, सोढा-सोढ्री[२]-सहिता-त्री, साहयिता-त्री, परिषहमाणः[३]-निषहमाणः-विषहमाणः, विसहनेकृत्य,[४] साह्वान्[५], सह्यम्[६], पृतनाषाट्[७]-ऋताषाट्-तुराषाट्,

१ अत्र उत्तरखण्डस्य षत्वं क्षीरतरङ्गिणीटिप्पणकार अभिप्रैति। तत्र निदानं न पश्यामः। प्रत्युत 'स्तौतिण्योरेव—' (८-३-६१) इति नियमात् षत्वनिषेध एवं प्रामाणिकः।

२ तासेरार्धधातुकस्य 'तीषसह—' (७-२-४८) इती विकल्पः। इट्पक्षे सहिता। इडभावपक्षे। 'सहिवहोरोद् अर्वस्य' (६-३-१२) इत्योकारः। 'हो ढः' (८-२-३१) इति ढत्वम्। तकारस्य धत्वम्, तस्य ष्टुत्वेन ढकारः। 'ढो ढे लोंपः (८-३-१३) इति पूर्वढकारस्य लोपः। पर्जन्यवल्लक्षणं प्रवर्तते (परि. १२०) इति न्यायेन ओकारस्य 'ढ्रलोपे—' (६-३-१११) इति दीर्घः। एवं तव्यदादिष्वपि ज्ञेयम्।

३ 'परिनिविभ्यः सेवसितसयसिवुसह—' (८-३-७०) इति षत्वम्।

४ 'विसहने' इति साक्षात्प्रभृतिषु (१-४-७४) पाठात् विपूर्वकत्वेऽपि 'परिनिविभ्यः—' (८-३-७०) इति षत्वं न। विपूर्वकात् सहतेः ल्युटि साक्षात् प्रमृतिषु पाठात् कृञो योगे गतिसंज्ञायाम्, 'समासेऽनञ्पूर्वे—' (७-१-३६) इति क्त्वाप्रत्ययस्य ल्यबादेशे, गणे निपातनादेव एदन्तत्वम्। सिहनेकृत्य = क्षान्त्वा इत्यर्थः।

५ दाश्वान् साह्वान् मीढ्वांश्च' (६-१-१२) इत्यत्र निपातनाद् छन्दसि लोके च सहतेः क्वसौ परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनम्, अनिट्त्वं च। 'साह्वान् = वलाहकः' इति काशिका।

६ 'शकिसहोश्च' (३-१-९९) इति यत्। ण्यतोऽपवादः।

७ 'छन्दसि सहः' (३-२-६३) इति ण्विप्रत्ययः। णित्वादुपधावृद्धिः। प्रत्ययः सर्वलोपी। 'अन्येपामपि दृश्यते' (६-३-१३६) इति पूर्वपदस्य दीर्घः। 'सहेः साढः सः (८-३-५६) इति मूर्धन्यादेशः। द्वितीयादिषु तु 'सहेः पूर्वपतनाभ्यां च' (८-३-१०९) इति षत्वम्। एलं जलापाट् इत्यादिषु चेति बोध्यम्।

सहन,[१] सहमानः,[२] सहिष्णुः,[३] साहयः,[४] सर्वसहः[५]- शत्रुंसहः, सर्वसहा,[६] भोक्तुं सहमानः[७], सासहिः[८], साहः-,[९] सहः, उत्साही,[१०] सहित्रम्[११], सिसाहयिषुः[१२], षट्[१३], सहसान,[१४] साहयित्वा, सहितुम्, साहयितुम्, सहन्-न्ती, विसह्य, सह्यमानः, सह्यम्, सोढुम्, सोढ्वा।

(८५३) **रमु—क्रीडायाम्।** (रमन करना, क्रीडा करना, खेलना)। **आ**—(पर.) **उप**—(उभय.) **वि**—(पर.) विराम करना, स्थिर रहना, आराम करना)। अकर्म.। अनिट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | रमते | रमेते | रमन्ते | प्र. |
| | रमसे | रमेथे | रमध्वे | म. |
| | रमे | रमावहे | रमामहे | उ. |
| लिट् | रेमे | रेमाते | रेमिरे | प्र. |
| | रेमिषे | रेमाथे | रेमिध्वे | म. |
| | रेमे | रेमिवहे | रेमिमहे | उ. |
| लुट् | रन्ता | रन्तारौ | रन्तारः | प्र. |
| | रन्तासे | रन्तासाथे | रन्ताध्वे | म. |
| | रन्ताहे | रन्तास्वहे | रन्तास्महे | उ. |
| लृट् | रंस्यते | रंस्येते | रंस्यन्ते | प्र. |
| | रंस्यसे | रंस्येथे | रंस्यध्वे | म. |
| | रंस्ये | रंस्यावहे | रंस्यामहे | उ. |

१ 'अनुदात्तेतश्च हलादेः' (३-२-१४९) इति ताच्छीलिको युच्।
२ सोढुं शक्नोतीत्यर्थे, 'ताच्छील्यवयोवचनशक्तिषु–' (३-२-१२९) इती चानश्।
३ तच्छीलादुषु कर्तृषु 'अलंकृञ्–' सहचर इष्णुच्' (३-२-१३६) इतीष्णुच् प्रत्ययः।
४ ण्यन्तात् कर्तरि 'अनुपसर्गात् सहिभ्यश्च' (३-१-१३८) इति श प्रत्ययः। प्रत्ययस्य शित्वात् 'कर्तरिशप्' (३-१-६८) इति शप्। साहयतीति साहयः।
५ सर्वं सहते इति सर्वसहः। 'संज्ञायां भृतृवृजिधारिसहि–' (३-२-४६) इति खच् प्रत्ययः। 'अरुर्द्विषत्–' (६-३-६७) इति पूर्वपदस्य मुमागमः। सर्वसहः = अतीव सूक्ष्मबुद्धिः। एवं शत्रुंसह इत्याद्यपि।
६ 'पूः सर्वयोर्दारिसहोः' (३-२-४१) इति खच्। 'पूर्ववत् नुम्। सर्वसहा = वसुमती। संज्ञाऽत्र।
७ 'शकधृषज्ञाग्लाघटरभलभक्रमसह–' (३-४-६५) इति सहधातौ उपपदे धातोस्तुमुन्।
८ 'सहिवहिचलिपतिवदिभ्यो यङन्तेभ्यः–' (वा. ३-२-१७१) इति किः किन् वा प्रत्ययः। प्रत्ययस्य लिड्वद् भावात् द्विर्वचनादिकम् इति केचित्। वस्तुतो यङन्तादेव विधानात् 'सन्यङो' (६-१-९) इति द्विर्वचमिति न्याय्यम्।
९ ज्वलादित्वात् (३-१-१४०) कर्तरि ण प्रत्ययः। तस्य वैकल्पिकत्वात् पक्षे पचाद्यच्।
१० उत्पूर्वकादस्माद् ग्रह्यादि (३-१-१३४) पाठात् कर्तरि णिनिः।
११ 'अर्तिलूधूसूखनसह–' (३-२-१८४) इति करणे इत्र प्रत्ययः।
१२ ण्यन्तात् सनि उप्रत्यये रूपमेंवम्। उत्तरखण्डे 'सः स्विदिस्वदिसहीनां च' (८-३-६२) इति सत्वम्, 'स्तौति–' (८-३-६१) इति नियमस्य बाधकोऽयम्।
१३ सहेः षष् लुक् च' (द.उ. ९-७) इति धातोः षषादेशः, कनिन्प्रत्ययस्य लुक् च। षट् = संख्याविशेषः।
१४ औणादिके (द.उ. ५-३०) असानच् प्रत्यये रूपम्। सहसानः = क्षमावान्।

| | | | | |
|---|---|---|---|---|
| लोट् | रमताम् | रमेताम् | रमन्ताम् | प्र. |
| | रमस्व | रमेथाम् | रमध्वम् | म. |
| | रमै | रमावहै | रमामहै | उ. |
| लङ् | अरमत | अरमेताम् | अरमन्त | प्र. |
| | अरमथाः | अरमेथाम् | अरमध्वम् | म. |
| | अरमे | अरमावहि | अरमामहि | उ. |
| वि. लि. | रमेत | रमेयाताम् | रमेरन् | प्र. |
| | रमेथाः | रमेयाथाम् | रमेध्वम् | म. |
| | रमेय | रमेवहि | रमेमहि | उ. |
| आ. लि. | रंसीष्ट | रंसीयास्ताम् | रंसीरन् | प्र. |
| | रंसीष्ठाः | रंसीयास्थाम् | रंसीध्वम् | म. |
| | रंसीय | रंसीवहि | रंसीमहि | उ. |
| लुङ् | अरंस्त | अरंसाताम् | अरंसत | प्र. |
| | अरंसथाः | अरंसाथाम् | अरन्ध्वम्-अरन्द्ध्वम् | म. |
| | अरंसि | अरंस्वहि | अरंस्महि | उ. |
| लृङ् | अरंस्यत | अरंस्यताम् | अरंस्यत | प्र. |
| | अरंस्यथाः | अरंस्येथाम् | अरंस्यध्वम् | म. |
| | अरंस्ये | अरंस्यावहि | अरंस्यामहि | उ. |

**कर्मणि**—रम्यते। **णिचि**—रमयति-ते। अरीरमत्-त। **सनि**—रिरंसते। **यङि**—रंरम्यते। **यङ्लुकि**—रंरन्ति रंरमीति। **कृत्सु**—रामकः[1]-मिका, रमकः[2]-मिका, रिरंसकः[3]-सिका, रंरमकः[4]-मिका, रन्ता[5]-रन्त्री, रमयिता-त्री, रिरंसिता-त्री, रंरमिता-त्री, विरमन्[6]-आरमन्-परिरमन्-न्ती, देवदत्तम्[7] उपरमन्, यावद्भुत्तम्[8] उपरमन्, रमयन्-न्ती,

१ उदात्तोपदेशाभावात् वृद्धिनिषेधो नात्र प्रवर्तते। एवमेव बुद्धियोग्येषु धञादिषु सर्वत्र बोध्यम्।

२ अमन्तत्वेन 'अनीजृषक्नसुरञ्जोऽमन्ताश्च' (ग.सू. भ्वादिषु) इति मित्संज्ञायाम्, 'मितां ह्रस्वः' (६-४-९२) इति णौ उपधाया ह्रस्वः। एवं ण्यन्ते सर्वत्र बोध्यम्।

३ 'यमिर्त्रमन्तेष्वनिडेक इष्यते रमिश्च' (व्याघ्रभूतिकारिका (७-२-१०) इति वचनात् अनिट्त्वम्। सनि परतो मकारस्यानुस्वारे रूपमेवं सर्वत्रेति बोध्यम्।

४ यङन्ते सर्वत्र 'नुगतोऽनुनासिकान्तस्य' (७-४-८५) नुमागमः।

५ धातोरनिड्त्वात् धातुमकारस्यानुस्वारे परसवर्णे च रूपमेवम्।

६ 'व्याङ्परिभ्यो रमः' (१-३-८३) इति वचनात् वि, आङ् परिपूर्वकादस्माच्छता।

७ 'उपाच्च' (१-३-८४) इति परस्मैपदं शता। न च उपपूर्वकस्य रमेरकर्मकत्वात् कथं 'देवदत्तमुपरमन्' इति सकर्मकप्रयोगोपपत्तिरिति वाच्यम्। 'अन्त' भावितण्यर्थोऽत्र सकर्मकः।' इति क्षीरतरङ्गिण्याद्युक्तेः देवदत्तमुपरमयन् इत्यर्थकत्वादिति ज्ञेयम्। 'अन्तर्भावितः = बुध्याऽनु प्रवेशितो ण्यर्थः = प्रयोज्यप्रयोजकभावो यस्य स तथोक्तः। एवं विधस्य तस्य प्रयोज्येन कर्मणा सकर्मकत्वमुपपद्यत एव।' इति न्यासोक्तिरहप्यवधार्या।

८ 'विभाषाऽकर्मकात्' (१-३-८५) इति परस्मैपदं, शता। मोजनाद् भोजनान्निवर्तते इत्यर्थः। पक्षे यथाप्राप्तमात्मनेपदमपि साधु।

विरिरंसन्[१]-आरिरंसन्-परिरंसन्- देवदतम् उपरिरंसन्-न्ती, विरंस्यन्-न्ती-ती, आरंस्यन्, परिरंस्यन्, देवदत्तम् उपरंस्यम्, रमयिष्यन्-न्ती-ती, रममाणः, यावद्भुक्तमुपरममाणः, रमयमाणः, रिरंसमानः, रंरम्यमाणः, रंस्यमानः, उपरंस्यमानः, रमयिष्यमाणः, रिरंसिष्यमाणः, रंरमिष्यमाणः, सुरत्[२]-सुरतौ-सुरतः, रतम्[३]-रतः-रतवान्, रमितः, रिरंसितः, रंरमितः-तवान्, रमः[४]-रमा, रामः-रामा, रामः[५], रम्यः,[६] रमणीयः, रेमिः,[७] रन्तिः,[८] रतिः, रमणः,[९] स्तम्बेरमः,[१०] मनोरमा[११], रिरंसुः-रिरमयिषुः, रंरमः, रन्तव्यम्, रमयितव्यम्, रिरंसितव्यम्, रंरमितव्यम्, रमणीयम्, रिरंसनीयम्, रंरमणीयम्, रम्यम्, रिरंस्यम्, रंरम्यम्, ईषद्रमः, दुरमः-सुरमः, रम्यमाणः, रिरंस्यमानः, रंरम्यमाणः, उपरमम्ः[१२], आरामः[१३], रिरंसः, रंरमः, रन्तुम्, रमयितुम्, रिरंसितुम्, रंरमितुम्, रतिः, रमणा, रिरंसा-रिरमयिषा, रंरमा, रमणम्, रिरंसनम्, रंरमणम्, रत्वा[१४], रमयित्वा, रिरंसित्वा,

१ 'पूर्ववत् सनः' (१-३-६२) इति सन्नन्ताच्छतुरुपपत्तिर्ज्ञेया ।

२ 'गमादीनामिति वक्तव्यम्' (६-४-४०) इति वचनात् क्विपि अनुनासिकलोपः । तुक् च भवति ।

३ निष्ठायाम्, 'अनुदात्तोपदेशवनतितनोत्यादीनाम् अनुनासिकलोपो झलि क्ङिति' (६-४-३७) इत्यनुनासिकलोपः । एवमेव क्त्वाक्तिन् प्रभृतिष्वपीति ज्ञेयम् ।

४ 'ज्वलितिकसन्तेभ्यो णः' (३-१-१४०) इति कर्तरि णप्रत्ययो विकल्पेन । णप्रत्ययपक्षे रामः इति भवति । पक्षे पचादित्वादौत्सर्गिकेऽच् प्रत्यये रमः इति भवति । स्त्रियां टापि रमा, रामा इति भवति ।

५ 'हलश्च' (३-३-१२१) इति संज्ञायं घञि रूपमिति केचित् । अन्ये तु 'रमन्ते योगिनो यास्मन् चिदानन्दे परमात्मनि ।' इत्यादिवचनानुसारेणाधिकरणे, 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इति घञ् इति साधयन्ति ।

६ 'पोरदुपधात्' (३-१-९८) ण्यदपवादो यत्प्रत्ययः । अयं च बाहुलकात् कर्तरि भवति । एवमेव रमणीयः इत्यत्रापि बाहुलकादेवानीयरिति प्रक्रियासर्वस्वम् ।

७ 'उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्' (वा. ३-३-१७१) इति वचनात् कि प्रत्ययोऽथवा किन् प्रत्ययः । छन्दसि विषये 'सेदिः, मेनिः, 'रेमिः–' इत्यादीनां किकिन्नन्तानां बहूनां शब्दानां दर्शनात् 'आदृगमहनजनः किकिनौ लिट् च' (३-२-१७१) इत्यत्र परिगणनं मास्तु । किं तु औत्सर्गित्वं किकिनोः इति प्रकृतवार्तिकार्थः । किकिनोः प्रत्यययोर्लिड्वद् भावातिदेशात् द्विर्वचनम् । एत्वाभ्यासलोपौ च भवतः ।

८ 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति क्तिच् । 'न क्तिचि दीर्घश्च' (६-४-३९) इति दीर्घानुनासिकलोपनिषेधः ।

९ रतिरिति मन्मथपत्न्युच्यते । अत्र बाहुलकात् 'स्त्रियां क्तिन्' (३-३-९४) इति संज्ञायां क्तिन् । अनुनासिकलोपः । 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इत्यतोऽत्र (३-३-९४) 'संज्ञायाम्' इत्यनुवर्तने । 'संज्ञायाम्' (३-३-१०९) इति प्राप्तस्य ण्वुलोऽपवादः । नन्द्यादित्वात् (३-१-१३४) ण्यन्तात् कर्तरि ल्युः । रमणी इति तु गौरादि (४-१-४१) पाठात् ङीषि साधुः ।

१० 'स्तम्बकर्णयो रमिजपोः' (३-२-१३) इति स्तम्बरूपे सुबन्ते उपपदे रमेरच् प्रत्ययः । स च 'हस्तिसूचकयोरिति वक्तव्यम्' (वा. ३-२-१३) इति नियमात् गजविषय एव । स्तम्बे रमत इति स्तम्बेरमः = हस्ती । 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६-३-९) इति, 'तत्पुरुषे कृति बहुलम्' (६-३-१४) इति वा सप्तम्या अलुक् ।

११ मनांसि रमयतीति 'मनोरमा' ण्यन्तात् कर्मण्यणि, बाहुलकत्वेन अजादिषु (४-१-४) पाठात् ङीपं बाधित्वा टाप् । प्रौढमनोरमा, बालमनोरमा इत्याद्यभिधानमेव टाबन्ते, तत्रापि बाहुलकाश्रयणे बीजमिति ज्ञेयम् । 'अभिधानलक्षणाः कृत्तद्धितसमासान्ताः' इति भाष्ये सकृदुक्तमिहावधेयम् ।

१२ 'यम उपरमे' इति धातुकोशेषु निर्देशात् बाहुलकात् भावेऽप् प्रत्ययोऽत्र घञपवाद इति ज्ञेयम् ।

१३ आरमन्त्यस्मिन् इत्यारामः = उपवनम् । 'अकर्तरि च कारके–' (३-३-१९) इति संज्ञायाम् घञ् ।

१४ ये तु 'रमु–' इति धातुममुं पठन्ति, तेषां, 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पे रमित्वा-रत्वा इति रूपद्वयं भवति । परं तु 'तत्' (=उदित्वम्) महान्तो न सहन्ते । इति माधावाद्युक्तेः उदित्त्वमस्यापाणिनीयमिति ज्ञेयम् ।

रंमित्वा, विरम्य-विरत्य, विरमय्य,[1] विरिरंत्य, विरंरम्य, रमतिः,[2] रण्डा,[3] रत्नम्,[4] सुरतः-सूरतः,[5] रथः,[6] रमण्यम्,[7] रहः[8]।

**(८५४) षद्लृ—विशरणगत्यवसादनेषु**। (जाना, चलना, शक्तिहीन होना, म्लान होना, सूखना, मुर्झाना, नष्ट करना)। **अव**—थकना, बलहीन होना। **समा**—प्राप्त होना। **उत्**—ऊपर चढ़ना। **उप**—पास जाना। **प्र**—सुखी होना। **वि**—अशान्त चित्त होना, दुखी होना, श्रान्त होना। **सम्**—इच्छितार्थ की प्राप्ति होना। गतौ सकर्म.। अनिट्। परस्मै.।

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां-पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छ-धौशीयसीदाः**। पादीनां पिबादयःस्युःइत्संज्ञक शकारादौ प्रत्यये परे।

| | | | | |
|---|---|---|---|---|
| लट् | सीदति | सीदतः | सीदन्ति | प्र. |
| | सीदसि | सीदथः | सीदथ | म. |
| | सीदामि | सीदावः | सीदामः | उ. |
| लिट् | ससाद | सेदतुः | सेदुः | प्र. |
| | सेदिथ-ससत्थ | सेदुथः | सेद | म. |
| | ससाद-ससद | सेदिव | सेदिम | उ. |

इत्संज्ञकशकारादिप्रत्ययाभावात् न सीदादेशः।

| | | | | |
|---|---|---|---|---|
| लुट् | सत्ता | सत्तारौ | सत्तारः | प्र. |
| | सत्तासि | सत्तास्थः | सत्तास्थ | म. |
| | सत्तास्मि | सत्तास्वः | सत्तास्मः | उ. |
| लृट् | सत्स्यति | सत्स्यतः | सत्स्यन्ति | प्र. |
| | सत्स्यसि | सत्स्यथः | सत्स्यथ | म. |
| | सत्स्यामि | सत्स्यावः | सत्स्यामः | उ. |
| लोट् | सीदतु-सीदतात् | सीदताम् | सीदन्तु | प्र. |
| | सीद-सीदतात् | सीदतम् | सीदत | म. |
| | सीदानि | सीदाव | सीदाम | उ. |

---

१ 'वा ल्यपि' (६-४-३८) इति अनुनासिकलोपविकल्पः। तत्र 'वाऽमः' (वा. ६-४-३७) इति वचनात् अमन्तानाम-नुदात्तोपदेशानां धातूनां विकल्पेनानुनासिकलोप इति विज्ञायते। एतदेव व्यवस्थितविभाषात्वेन तत्र तत्रोच्यते।

२ 'रमेर्नित्' (द.उ. १-३२) इत्यतिप्रत्यये रूपम्। रमन्यस्यामिति रमतिः = क्रीडा। यद्यपि 'इक्श्तिपौ धातुनिर्देशे' (वा. ३-३-१०८) इति श्तिपि, शित्वाच्छपि रमतिः इति सिद्ध्यति, तथापि तत्र भावार्थकत्वात् अधिकरणार्थत्वलाभाय दशपाद्युणादिषु पाठ इति बोध्यम्।

३ 'ममन्ताड्डः' (द.उ. ५-७), इति डप्रत्ययः। बाहुलकात् 'चुटू' (१-३-७) इति डकारस्येत्संज्ञा न। 'ञम्' इति 'ञमङणनम्' इत्यस्य प्रत्याहारः उणादिषु दृश्यते।

४ 'रमेस्त च' (द.उ. ५-४६) इति न प्रत्ययः, तकारश्चान्तादेशः। रमन्तेस्मिन् इति रत्नम् = वैडुर्यादिः।

५ 'सो रमे क्तो दमे पूर्वपदस्य च दीर्घः' (द.उ. ६-२३) इति क्तप्रत्यये पाक्षिके पूर्वपददीर्घे च सुरतः-सूरतः इति सिध्यतः। सूरतः = बुधः।

६ 'हनिकुषिनीरमि–' (द.उ. ६-२७) इत्यादिना क्थन्- प्रत्ययः। उपधानकारलोपश्च।

७ 'शृरम्योश्चः। (द.उ. ८-८) इति अन्य प्रत्ययः। रमण्यम् = शोभनम्।

८ 'रमेदेशे हश्च' (द.उ. ९-७४) इति असुन् प्रत्ययो देशे गम्यमाने हकारश्चान्तादेशः। रमन्ते स्मिन् इति रहः = विविक्तदेशः।

| | | | | |
|---|---|---|---|---|
| लङ् | असीदत् | असीदताम् | असीदन् | प्र. |
| | असीदः | असीदतम् | असीदत | म. |
| | असीदम् | असीदाव | असीदाम | उ. |
| वि. लि. | सीदेत् | सीदेताम् | सीदेयुः | प्र. |
| | सीदेः | सीदेतम् | सीदेत | म. |
| | सीदेयम् | सीदेव | सीदेम | उ. |
| आ. लि. | सद्यात् | सद्यास्ताम् | सद्यासुः | प्र. |
| | सद्याः | सद्यास्तम् | सद्यास्त | म. |
| | सद्यासम् | सद्यास्व | सद्यास्म | उ. |
| लुङ् | असदत् | असदताम् | असदन् | प्र. |
| | असदः | असदतम् | असदत | म. |
| | असदम् | असदाव | असदाम | उ. |
| लृङ् | असत्स्यत् | असत्स्यताम् | असत्स्यन् | प्र. |
| | असत्स्यः | असत्स्यतम् | असत्स्यत | म. |
| | असत्स्यम् | असत्स्याव | असत्स्याम | उ. |

**कर्मणि**—सद्यते। **णिचि**—सादयति-ते। **सनि**—निषिषत्सति। **यङि**—सासद्यते। **यङ्लुकि**—सासदीति-सासत्ति। **कृत्सु**—सदनीयम्, सदनम्, सादकः-दिका, सन्नः-सन्नवान्, सत्तिः, सत्तव्यम्, सत्तुम्, सत्त्वा, प्रसद्य, साद्याम्, सीदन्, सत्स्यन्, सद्यमानः, सत्स्यमानः, मनिनि-सद्म, प्रसन्नः, अवसन्नः, अवसादः, उत्सन्नः, उत्सादः, आसन्नः, आसत्तिः, सत्ता[१]-सत्री, सादयिता-त्री, सिषत्सिता-त्री, सासदिता-त्री, निषीदन्-प्रतिसीदन्[२]-न्ती, निषादः[३], सादः-सदः, प्रासाद[४]:, उपनिषत्[५]-परिषत्-शुचिषत्-द्युसत्-दिविषत्, बृसी[६], विषण्णः[७]-विषण्णवान्, निषिषत्सुः,[८]

---

१ धातोरनिट्त्वम्। दकारस्य चर्त्वेन तकारः। एवं तव्यदादिष्वपि।

२ शर्तरि 'पाघ्राध्मा–' (७-३-७८) इति सीद इति सर्वादेशः। 'सदिरप्रतेः' (८-३-६६) इति इणन्तादुपसर्गात् परस्य सदिसकारस्य षत्वे रूपमेवम्। 'अप्रतेः' इत्युक्तत्वात् प्रतिसीदन् इत्यत्र न षत्वम्। उपसर्गप्रकरणात् 'नि' इति कर्मप्रवचनीयस्य न षत्वम्।

३ 'ज्वलितिकसन्तेभ्यः–' (३-१-१४०) इति कर्तरि णः। निषादः = वन्यजातिविशेषः।

४ 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इत्यधिकरणे घञ्। प्रसीदन्ति धनिनोऽस्मिन् इति प्रासादः = धनिनां वासः। 'उपसर्गस्य घञि–' (६-३-१२२) इति 'प्र' इत्यस्य दीर्घः। संज्ञायामेव मनुष्यभिन्नेऽपि स्थले दीर्घः, अन्यत्र न, ततश्च 'प्रसादः' इत्यत्र न।

५ उप निषीदन्ति, उप निषादयन्ति वा इति उपनिषत्। स्त्रियां सम्पदादित्वात् (वा. ३-३-१०८) क्विपि षत्वे च रूपमेवम्।

६ बुवन्तः सीदन्त्यस्यामिति बृसी = मुनीमासनम्। पृषोदरादित्वात् बुवच्छब्दस्य 'बृ' इत्यादेशः। सदेरधिकरणे डट्प्रत्ययः। टित्वात् स्त्रियां ङीप्।

७ 'रदाभ्यां–' (८-२-४२) इति निष्ठातकारस्य धातुदकारस्य च नकारः। षत्वम् णत्वञ्च।

८ सन्नन्तादुप्रत्ययः। 'स्थादिष्वभ्यासेन–' (८-३-६४) इति पूर्वोत्तरखण्डयोः षत्वम्।

सेदिवान्,[1] सद्रुः,[2] निषद्या[3], सादी,[4] सेदिः[5], सदः,[6] निषिद्वरः,[7] सादिः,[8] सत्रम्[9]।

(८५५) **शद्लृ—शातने**। (जीर्ण होना। धीरे-धीरे कम होना, मुरझाना, गिरना, नीचे फेंकना)। अक.। अनिट्। परस्मै.। पाघ्राध्मेति शीयादेशः। '**शदेःशितः**' इत्यात्मनेपदम्।

| | | | | |
|---|---|---|---|---|
| लट् | शीयते | शीयेते | शीयन्ते | प्र. |
| | शीयसे | शीयेथे | शीयध्वे | म. |
| | शीये | शीयावहे | शीयामहे | उ. |
| लिट् | शशाद | शेदतुः | शेदुः | प्र. |
| | शेदिथ-शसत्थ | शेदथुः | शेद | म. |
| | शशाद-शशद | शेदिव | शेदिम | उ. |
| लुट् | शत्ता | शत्तारौ | शत्तारः | प्र. |
| | शत्तासि | शत्तास्थः | शत्तास्थ | म. |
| | शत्तास्मि | शत्तास्वः | शत्तास्मः | उ. |
| लृट् | शत्स्यति | शत्स्यतः | शत्स्यन्ति | प्र. |
| | शत्स्यसि | शत्स्यथः | शत्स्यथ | म. |
| | शत्स्यामि | शत्स्यावः | शत्स्यामः | उ. |
| लोट् | शीयताम् | शीयेताम् | शीयन्ताम् | प्र. |
| | शीयस्व | शीयेथाम् | शीयध्वम् | म. |
| | शीयै | शीयावहै | शीयामहै | उ. |
| लङ् | अशीयत | अशीयेताम् | अशीयन्त | प्र. |
| | अशीयथाः | अशीयेथाम् | अशीयध्वम् | म. |
| | अशीये | अशीयावहि | अशीयामहि | उ. |
| वि. लि. | शीयेत | शीयेयाताम् | शीयेरन् | प्र. |
| | शीयेथाः | शीयेयाथाम् | शीयेध्वम् | म. |
| | शीयेय | शीयेवहि | शीयेमहि | उ. |
| आ. लि. | शद्यात् | शद्यास्ताम् | शद्यासुः | प्र. |
| | शद्याः | शद्यास्तम् | शद्यास्त | म. |
| | शद्यासम् | शद्यास्व | शद्यास्म | उ. |

१ लिटः 'भाषायां सदवस–' (३-२-१०८) इति क्वसुप्रत्ययः, एत्वाभ्यासलोपः। 'वस्वेकाच्–' (७-२-६८) इतीडागमः।

२ 'दाघेट्–' (३-२-१५९) इति तच्छीलादिषु कर्तृषु रुप्रत्ययः।

३ स्त्रियां 'संज्ञायां समजनिषद–' (३-३-९९) इत्यादिना अकर्तरि क्यप्प्रत्ययः। निषद्या = वासस्थानम्।

४ साधुकारिणि णिनिप्रत्ययः। सादी = अश्वोपरि स्थित्वा युध्यमानः।

५ 'सदादिभ्यो दर्शनात्' (वा. ३-२-१७१) इति वचनात् भाषायां किप्रत्ययः। छन्दस्येवायम्। प्रत्ययस्य लिङ्वद् भावाद् एत्वाभ्यासलोपौ।

६ औणादिकेऽसुन् प्रत्यये रूपम्। सदः = सभा।

७ 'नौ सदेः' (द.उ. ८-४८) इति वरच्प्रत्ययः। निषद्वरः = कामः, कर्दमश्च।

८ 'इण् अजादिभ्यः' (वा. ३-३-१०८) इति इण्। सादिः = अश्वस्थो योद्धा।

९ औणादिके (द.उ. ८-८९) त्र प्रत्यये रूपम्। धातुदकारस्य चर्त्वेन तकारः। सत्त्रम् = यागविशेषः, अन्नशाला च।

| | | | | |
|---|---|---|---|---|
| लुङ् | अशदत | अशदताम् | अशदन् | प्र. |
| | अशदः | अशदतम् | अशदत | म. |
| | अशदम् | अशदाव | अशदाम् | उ. |
| लृङ् | अशत्स्यत | अशत्स्यताम् | अशत्स्यन् | प्र. |
| | अशत्स्यः | अशत्स्यतम् | अशत्स्यत | म. |
| | अशत्स्यम् | अशत्स्याव | अशत्स्याम | उ. |

**भावे**—शद्यते। **णिचि**—शादयति-शातयति- **'शदेरगतौ तः'** (७-३-४२) शदेर्णौ तोऽन्तादेशः स्यान्नतु गतौ। शायति =नाशयतीत्यर्थः। शादयति गमयतील्यर्थः। **सनि**—शिशत्सति। **यङि**—शाशद्यते। **यङ्लुकि**—शाशत्ति-शाशदीति। **कृत्सु**—शादकः-दिका, शता-शत्री, शादयिता-त्री, शत्तव्यम्, शदनीयम्, शाद्यम्, शन्नः, शीयमानः,[१] शत्तुम्, शदनम्, शत्त्वा, विशद्य, शदन्-न्ती, शादयन्-न्ती, शदिष्यन्-न्ती, शादयिष्यन्-न्ती-ती, शदमानः, शादयमानः, शदिष्यमाणः, शादयिष्यमाणः, शादः[२], शदः, शाद्वलम्, शद्रुः, शत्रुः[३]।

**(८५६) क्रुश—आह्वाने रोदने च।** (पुकारना। रोना)। **अनु**—दया करना। **आ**—निन्दा करना। गाली देना। **उप**—दाग लगाना, दोष देना। **प्र**—जोर से पुकारना आद्ये सकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | क्रोशति | क्रोशतः | क्रोशन्ति | प्र. |
| | क्रोशसि | क्रोशथः | क्रोशथ | म. |
| | क्रोशामि | क्रोशावः | क्रोशामः | उ. |
| लिट् | चुक्रोश | चुक्रुशतुः | चुक्रुशुः | प्र. |
| | चुक्रोशिथ | चुक्रुशथुः | चुक्रुश | म. |
| | चुक्रोश | चुक्रुशिव | चुक्रुशिम | उ. |
| लुट् | क्रोष्टा | क्रोष्टारौ | क्रोष्टारः | प्र. |
| | क्रोष्टासि | क्रोष्टास्थः | क्रोष्टास्थ | म. |
| | क्रोष्टास्मि | क्रोष्टास्वः | क्रोष्टास्म | उ. |
| लृट् | क्रोक्ष्यति | क्रोक्ष्यतः | क्रोक्ष्यति | प्र. |
| | क्रोक्ष्यसि | क्रोक्ष्यथः | क्रोक्ष्यथ | म. |
| | क्रोक्ष्यामि | क्रोक्ष्यावः | क्रोक्ष्यामः | उ. |
| लोट् | क्रोशतु-तात् | क्रोशताम् | क्रोशन्तु | प्र. |
| | क्रोश-तात् | क्रोशतम् | क्रोशत | म. |
| | क्रोशानि | क्रोशाव | क्रोशाम | उ. |

१ 'शदेः शितः' (१-३-६०) इति आत्मनेपदम्। शिद्भावी यः शदिधातुः स तङं लभते इति निष्कृष्टोऽर्थः। विस्तरस्तु न्यासपदमञ्जर्यो र्दृष्टव्यः। 'पाघ्राध्मास्थाम्नादाण् दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छ-पश्यर्च्छधौशीयसीदाः' (७-३-७८) इति शिति प्रत्यये परे प्रकृतेः 'शीय' इति सर्वादेशः। एवञ्चास्य धातोः शता नेति अवधेयम्।

२ संज्ञायाम् घञ्। शादः = तृणविशेषः।

३ शातयतीति शत्रुः = अरिः। णिजन्तात् गतिभिन्नार्थे तकारान्तात् धातोः। 'रुशदिभ्यां त्रुन् (द.उ. १-१५९) इति त्रुन् प्रत्ययः। बाहुलकात् णेर्लोपः, वृद्ध्यभावश्च। प्रत्ययलक्षणेन णिजाश्रिता वृद्धिः। इत्यादिकमुह्यम्।

| | | | | |
|---|---|---|---|---|
| लङ् | अक्रोशत् | अक्रोशताम् | अक्रोशन् | प्र. |
| | अक्रोशः | अक्रोशतम् | अक्रोशत | म. |
| | अक्रोशम् | अक्रोशाव | अक्रोशाम | उ. |
| वि. लि. | क्रोशेत् | क्रोशेताम् | क्रोशेयुः | प्र. |
| | क्रोशेः | क्रोशेतम् | क्रोशेत | म. |
| | क्रोशेयम् | क्रोशेव | क्रोशेम | उ. |
| आ. लि. | क्रुश्यात् | क्रुश्यास्ताम् | क्रुश्यासुः | प्र. |
| | क्रुश्याः | क्रुश्यास्तम् | क्रुश्यास्त | म. |
| | क्रुश्यासम् | क्रुश्यास्व | क्रुस्यास्म | उ. |
| लुङ् | अक्रुक्षत् | अक्रुक्षताम् | अक्रुक्षन् | प्र. |
| | अक्रुक्षः | अक्रुक्षतम् | अक्रुक्षत | म. |
| | अक्रुक्षम् | अक्रुक्षाव | अक्रुक्षाम | उ. |
| लृङ् | अक्रोक्ष्यत् | अक्रोक्ष्यताम् | अक्रोक्ष्यन् | प्र. |
| | अक्रोक्ष्यः | अक्रोक्ष्यतम् | अक्रोक्ष्यत | म. |
| | अक्रोक्ष्यम् | अक्रोक्ष्याव | अक्रोक्ष्याम | उ. |
| | अनुक्रोशति | आक्रोशति | उपक्रोशति | |

**कर्मणि**—क्रुश्यते। **णिचि**—क्रोशयति-ते। **सनि**—चुक्रुक्षति। **यङि**—चोक्रुश्यते। **यङ्लुकि**—चोक्रुशीति चोक्रोष्टि। **कृत्सु**—क्रोशकः-शिका, चुक्रुक्षकः-क्षिका, चोक्रुशकः-शिका, क्रोष्टा-ष्ट्री, क्रोशयिता-त्री, क्रोशन्-न्ती, क्रोशयन्-न्ती, चुक्रुक्षन्-न्ती, क्रोक्ष्यन्-न्ती-ती, क्रोशयिष्यन्-न्ती-ती, चुक्रुक्षिष्यन्-न्ती-ती, व्यतिक्रोशमानः, क्रोशयमानः, चोक्रुश्यमानः, व्यतिक्रोक्ष्यमाणः,क्रोशयिष्यमाणः,चोक्रुशिष्यमाणः,क्रुट्-ड्-क्रुशौ-क्रुशः,क्रुष्टम्-क्रुष्टः,क्रुष्टवान्, क्रोशितः, चुक्रुक्षितः, चोक्रुशितः-तवान्, क्रुशः, क्रोशः, बान्धवक्रोशी, आक्रोशकः, उष्ट्रक्रोशी, क्रोष्टव्यम्, क्रोशयितव्यम्, चुक्रुक्षितव्यम्, चोक्रुशितव्यम्, क्रोश्यम्, क्रुश्यमानः, क्रोश्यमानः, चुक्रुक्ष्यमाणः, चोक्रुश्यमाणः, क्रोष्टुम्, क्रोशयितुम्, चुक्रुक्षितुम्, चोक्रुक्षितुम्, आक्रुष्टिः, क्रोशनम्, चुक्रुक्षणम्, चोक्रुशनम्, क्रुष्ट्वा, क्रोशयित्वा, चोक्रुक्षित्वा, चोक्रुशित्वा। क्रोशनीयम्, क्रोश्यः, क्रुष्टः, क्रोशनम्, क्रोष्टुम्, उपक्रुश्य, आक्रुश्य, उपक्रोशः।

**(८५७) कुच—सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु**। (सम्पर्क करना, स्वच्छ करना, स्पर्श करना, टेढा होना, लिखना, रेखा खींचना)। **सम्**—संकुचित होना। सक.। सेट्। पर.। कोचति २ चुकोच। ३ कोचिता। इत्यादि 'शोचति' (१८२) वत्।

**कृत्सु**—कोचकः-चिका, कोचिता-त्री, कोचयिता-त्री, कोचन्-न्ती, कोचयन्-न्ती, कोचिष्यन्-न्ती-ती, कोचयिष्यन्-न्ती-ती, कोचयमानः, कोचयिष्यमाणः, चोकुच्यमाणः, चोकुचिष्यमाणः, कुचितम्-कोचितम्, कुचः-कोचः, कोचितव्यम्, कोचयितव्यम्, कोचनीयम्, कोच्यम्, कुच्यमानः, कोच्यमानः, सङ्कोचः, कोचितुम्, कोचयितुम्, कुक्तिः, कोचना, कोचनम्, कुचित्वा-कोचित्वा, कोचयित्वा।

(८५८) **बुध—अवगमने**। (जानना, समझना)। **प्रति**—किसी को जगाना, जागना, **सम्**—अच्छी प्रकार से जानना)। सकर्म.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | बोधति | बोधतः | बोधन्ति | प्र. |
| | बोधसि | बोधथः | बोधथ | म. |
| | बोधामि | बोधावः | बोधामः | उ. |
| लिट् | बुबोध | बुबुधतुः | बुबुधुः | प्र. |
| | बुबोधिथ | बुबुधथुः | बुबुध | म. |
| | बुबोध | बुबुधिव | बुबुधिम | उ. |
| लुट् | बोधिता | बोधितारौ | बोधितारः | प्र. |
| | बोधितासि | बोधितास्थः | बोधितास्थ | म. |
| | बोधितास्मि | बोधितास्वः | बोधितास्म | उ. |
| लृट् | बोधिष्यति | बोधिष्यतः | बोधिष्यन्ति | प्र. |
| | बोधिष्यसि | बोधिष्यथः | बोधिष्यथ | म. |
| | बोधिष्यामि | बोधिष्यावः | बोधिष्यामः | उ. |
| लोट् | बोधतु-तात् | बोधताम् | बोधन्तु | प्र. |
| | बोध-तात् | बोधतम् | बोधत | म. |
| | बोधानि | बोधाव | बोधाम | उ. |
| लङ् | अबोधत् | अबोधताम् | अबोधन् | प्र. |
| | अबोधः | अबोदतम् | अबोधत | म. |
| | अबोधम् | अबोधाव | अबोधाम | उ. |
| वि. लि. | बोधेत् | बोधेताम् | बोधेयुः | प्र. |
| | बोधेः | बोधेतम् | बोधेत | म. |
| | बोधेयम् | बोधेव | बोधेम | उ. |
| आ. लि. | बुध्यात् | बुध्यास्ताम् | बुध्यासुः | प्र. |
| | बुध्याः | बुध्यास्तम् | बुध्यास्त | म. |
| | बुध्यासम् | बुध्यास्व | बुध्यास्म | उ. |
| लुङ् | अबोधीत् | अबोधिष्टाम् | अबोधिषुः | प्र. |
| | अबोधीः | अबोधिष्टम् | अबोधिष्ट | म. |
| | अबोधिषम् | अबोधिष्व | अबोधिष्म | उ. |
| लृङ् | अबोधिष्यत् | अबोधिष्यताम् | अबोधिष्यन् | प्र. |
| | अबोधिष्यः | अबोधिष्यतम् | अबोधिष्यत | म. |
| | अबोधिष्यम् | अबोधिष्याव | अबोधिष्याम | उ. |

**कर्मणि**—बुध्यते। **णिचि**—बोधयति। **सनि**—बुबुधिषति-बुबोधिषति। **यङि**—बोबुध्यते। **यङ्लुकि**—बोबुधीति-बोबोद्धि। **कृत्सु**—बुधितम्-तः, बोधितम्, बोधितव्यम्, बोधयित्वयम्, बोधनीयम्, बोध्यम्, बुध्यमानः, बोध्यमानः, बोधितुम्, बोधयितुम्, बोधनम्,

बुधित्वा, बोधित्वा, प्रबुध्य, बोधकः-धिका, बोधिता-त्री, बोधयिता-त्री, बुबोधिषकः बुबुधिषकः-षिका, बोबुधकः-धिका। बोधयन् शिष्यं धर्मम्। प्रबोधी-प्रतिबोधी, राज्ञां बोधितः-बुधितो वा, विबुधः-बोधः, अबिबोधयन्।

(८५९) **रुह—बीजजन्मनि = प्रादुर्भावे च**। (बीज से उत्पन्न होना, बीज का उगना, जन्म होना, जन्म लेना)। **अति**—ऊपर चढ़ना, चढ़ना, **अव**—उतरना, नीचे आना, **आ**—आरूढ़ होना, ऊपर बैठना, ऊपर चढ़ना, **प्र**—ऊगना, अङ्कुर उत्पन्न होना। अक.। अनिट्। पर.। ज्वलादिः।

| | | | | |
|---|---|---|---|---|
| लट् | रोहति | रोहतः | रोहन्ति | प्र. |
| | रोहसि | रोहथः | रोहथ | म. |
| | रोहामि | रोहावः | रोहामः | उ. |
| लिट् | रुरोह | रुरुहतुः | रुरुहुः | प्र. |
| | रुरोहिथ | रुरुहथुः | रुरुह | म. |
| | रुरोह | रुरुहिव | रुरुहिम | उ. |
| लुट् | रोढा | रोढारौ | रोढारः | प्र. |
| | रोढासि | रोढास्थः | रोढास्थ | म. |
| | रोढास्मि | रोढास्वः | रोढास्म | उ. |
| लृट् | रोक्ष्यति | रोक्ष्यतः | रोक्ष्यन्ति | प्र. |
| | रोक्ष्यसि | रोक्ष्यथः | रोक्ष्यथ | म. |
| | रोक्ष्यामि | रोक्ष्यावः | रोक्ष्यामः | उ. |
| लोट् | रोहतु-तात् | रोहताम् | रोहन्तु | प्र. |
| | रोह-तात् | रोहतम् | रोहत | म. |
| | रोहाणि | रोहाव | रोहाव | उ. |
| लङ् | अरोहत् | अरोहताम् | अरोहन् | प्र. |
| | अरोहः | अरोहतम् | अरोहत | म. |
| | अरोहम् | अरोहाव | अरोहाम | उ. |
| वि. लि. | रोहेत् | रोहेताम् | रोहेयुः | प्र. |
| | रोहेः | रोहेतम् | रोहेत | म. |
| | रोहेयम् | रोहेव | रोहेम | उ. |
| आ. लि. | रुह्यात् | रुह्यास्ताम् | रुह्यासुः | प्र. |
| | रुह्याः | रुह्यास्तम् | रुह्यास्त | म. |
| | रुह्यासम् | रुह्यास्व | रुह्यास्म | उ. |
| लुङ् | अरुक्षत् | अरुक्षताम् | अरुक्षन् | प्र. |
| | अरुक्षः | अरुक्षतम् | अरुक्षत | म. |
| | अरुक्षम् | अरुक्षाव | अरुक्षाम | उ. |
| लृङ् | अरोक्ष्यत् | अरोक्ष्यताम् | अरोक्ष्यन् | प्र. |
| | अरोक्ष्यः | अरोक्ष्यतम् | अरोक्ष्यत | म. |
| | अरोक्ष्यम् | अरोक्ष्याव | अरोक्ष्याम | उ. |

**भावे**—रुह्यते। **णिचि**—रोहयति[१]-रोपयति। रुहः पोऽन्यतरस्याम्। **सनि**—रुरुक्षति। **यङि**—रोरुह्यते। **यङ्लुकि**—रोरोढि-रोरुहीति। **कृत्सु**—रोहकः-हिका, रोपकः[२]-पिका, रुरुक्षकः-क्षिका, रोरुहकः-हिका, रोढा-रोढ्री, रोपयिता-रोहयिता-त्री, रुरुक्षिता-त्री, रोरुहिता-त्री, रोहन्-न्ती, रोपयन्-रोहयन्-न्ती, रुरुक्षन्-न्ती, रोक्ष्यन्-न्ती-ती, रोपयिष्यन्-रोहयिष्यन्-न्ती-ती, रुरुक्षिष्यन्-न्ती-ती, रोपयमाणः-रोहमाणः, रोरुह्यमाणः, रोपयिष्यमाणः-रोहयिष्यमाणः, रोरुहिष्यमाणः, अम्बुरुट्-रुड्-रुहौ-रुहः, रुढम्-रुढः-रुढवान्, आरुढो वृक्षम्-आरुढो वृक्षः, रुढः, रोपितः-रोहितः, रोहितः, लोहितः-लोहिताया, रोहितकः, रोहितकं मुखम्, रुरुक्षितः, रोरुहितः-तवान् रुहः-रोहः, प्ररुह-प्ररोहः, पाणिरुहः-भूरुहः-उर्बीरुहः-शिरोरुहः-सरोरुहम्, न्यग्रोधः,[३] वीरुत्[४], विरोही[५]-रोहिणी, रोहणः,[६] रोपः-रोहः धान्यरोपी[७]-रुरुक्षुः-रोरोहः, रोढव्यम्, रोपयितव्यम्-रोहयितव्यम्, रुरुक्षितव्यम्, रोरुहितव्यम्, रोहणीयम्, रोपणीयम्, रोहणीयम्, रुरुक्षणीयम्, रोरुहणीयम्, रोह्यम्, रोप्यम्-रोह्यम्, रुरुक्ष्यम्, रोरुह्यम्, रुह्यमाणः, रोप्यमाणः-रोह्यमाणः, रुरुक्ष्यमाणः, रोरुह्यमाणः, रोहः, आरोपः-रोहः, रुरुक्षः, रोरुहः, रोढुम्, रोपयितुम्, रोहयितुम्, रुरुक्षितुम्, रोरुहितुम्, रुढिः,[८] बीजरुहा-कुर्वन्, प्राजरुहाकुर्वन्, रोपणा-रोहणा, आरुरुक्षा, रोरुहा, रोहणम्, रोपणम्-रोहणम्, रुरुक्षणम्, रोरुहणम्, रुढ्वा, रोपयित्वा-रोहयित्वा, रुरुक्षित्वा, रोरुहित्वा, आरुह्य, आरोप्य-आरोह्य, आरुरुक्ष्य, आरोरुह्य, रोहिः,[९] रोहित्,[१०] रोहितः[११]-लोहितः, रौहिषः[१२]।

**(८६०) कस—गतौ।** **(जाना)**। सक.। सेट्। परस्मै.। कसति। 'गदति' (५२) वत्।

**(८६१) हिक्क—अव्यक्ते शब्दे।** (अस्पष्ट बोलना, हिचकी आना)। अकर्म.। सेट्। उभय.।

---

१ 'रुहः पोऽन्यतरस्याम्' (७-३-४३) इति विकल्पेन हकारस्य पकारः।
२ ण्यन्ते सर्वत्र 'रुहः पोऽन्यतरस्याम्' (७-३-४३) इति विकल्पेन हकारस्य पकारः। तेन रूपद्वयम्।
३ न्यक् रोहतीति न्यग्रोधः = वटवृक्षः। बाहुलकात् कर्तरि घञ्। न्यङ्क्वादिषु (७-३-५३) पाठात् धातुहकारस्य धकारः।
४ विविधं रोहतीति वीरुत् = लता। 'अन्येभ्योऽपि दृश्यते' (३-२-१७८) इति क्विपि, न्यङ्क्वादित्वात् (७-३-५३) हकारस्य धकारः। अन्येषामपि दृश्यते' (६-३-१३६) इति दीर्घः।
५ विशेषेण रोहतीति विरोही तृणादयः। तद्धर्मिणि णिनिः। केवलाण्णिनिप्रत्ययेऽपि रोही इति भवति। तदन्तात् स्त्रियां नान्तत्वेन ङीषि रोहिणी इति।
६ नन्द्यादित्वात् (३-१-१३४) कर्तरि ल्युः। रोहणः = रत्नपर्वतः।
७ धान्यानि रोपयातीति धान्यरोपी। ण्यन्तात् णिनिः।
८ संज्ञायां क्तिच्। ढत्वष्टुत्वढलोपदीर्घाः यथालक्षणमिह बोध्याः।
९ 'तृपिशिरुहि—' (द.उ. १-४७) इतीन् प्रत्ययः रोहतीति रोहिः = जन्म।
१० 'हृसृरुहि—' (द.उ. ६-३) इतीतिप्रत्ययः। रोहित् = वीरुत्प्रकारः, सूर्योऽग्निश्च।
११ 'रुहे रश्च लो वा' (द.उ. ६-१३) इतीतन् प्रत्ययः रेफस्य लकारश्च वा भवति।
१२ 'रुहे वृद्धिश्च' (द.उ. ९-४) इति टिषच् प्रत्यये धातोर्वृद्धौ च रोहिषः इति भवति। रौहिषः = तृणजातिः, स्त्रियां षित्वात् ङीषि रोहिषी = दुर्वा।

१ हिक्कति-ते। २ जिहिक्क-जिहिक्के। ३ हिक्किता। ४ हिक्किष्यति-ते। ५ हिक्कतु-हिक्कताम्। ६ अहिक्कत्। ७ हिक्केत्-त। ८ हिक्क्यात्-हिक्किषीष्ट। ९ अहिक्कीत्-अहिक्किष्ट। १० अहिक्किष्यत्-त। सर्वं 'शिक्षति' (६०५) तथा 'रक्षति' (६५८) वत्।

**कृत्सु**—हिक्ककः-क्किका, हिक्किता-त्री, हिक्कयिता-त्री, हिक्कन्-न्ती, हिक्कयन्-न्ती, हिक्किष्यन्-न्ती-ती, हिक्कयिष्यन्-न्ती-ती, हिक्कयमानः, हिक्कयिष्यमाणः, हिक्कितम्-तः, हिक्कितव्यम्, हिक्कयितव्यम्, हिक्कयमानः, हिक्कितुम्, हिक्कयितुम्, हिक्कनम्, हिक्कित्वा, हिक्कयित्वा, प्रहिक्कय, हिक्का—**गुरोश्च हलः** (३-३-१०३) इति अप्रत्ययः स्त्रियाम्। वायोः बलात्कारेण मुखात् निस्सारणम् इति हिक्का।

**(८६२) अञ्चु—गतौ, याचने च।** (जाना, मांगना)। सक.। सेट्। उभय.। **परस्मैपदे**—अञ्चतीत्यादि (१८८) वत्। **आत्मनेपदे**—अञ्चते– इत्यादि 'अङ्कति' (८६) वत्। **सनि**—अञ्चिचिषति-ते।

**(८६३) टुयाचृ—याञ्चायाम्।** (याचना करना, मांगना)। सकर्म.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | याचति | याचतः | याचन्ति | प्र. |
| | याचसि | याचथः | याचथ | म. |
| | याचामि | याचावः | याचामः | उ. |
| लिट् | ययाच | ययाचतुः | ययाचुः | प्र. |
| | ययाचिथ | ययाचथुः | ययाच | म. |
| | ययाच | ययाचिव | ययाचिम | उ. |
| लुट् | याचिता | याचितारौ | याचितारः | प्र. |
| | याचितासि | यचितास्थः | यचितास्थ | म. |
| | याचितास्मि | याचितास्वः | याचितास्म | उ. |
| लृट् | याचिष्यति | याचिष्यतः | याचिष्यन्ति | प्र. |
| | याचिष्यसि | याचिष्यथः | याचिष्यथ | म. |
| | याचिष्यामि | याचिष्यावः | याचिष्यामः | उ. |
| लोट् | याचतु-तात् | याचताम् | याचन्तु | प्र. |
| | याच-तात् | याचतम् | याचत | म. |
| | याचानि | याचाव | याचाम | उ. |
| लङ् | अयाचत् | अयाचताम् | अयाचन् | प्र. |
| | अयाचः | अयातम् | अयाचत | म. |
| | अयाचम् | अयाचाव | अयाचाम | उ. |
| वि. लि. | याचेत् | याचेताम् | याचेयु: | प्र. |
| | याचेः | याचेतम् | याचेत | म. |
| | याचेयम् | याचेव | याचेम | उ. |

| | | | | |
|---|---|---|---|---|
| आ. लि. | याच्यात् | याच्यास्ताम् | याच्यासुः | प्र. |
| | याच्याः | याच्यास्तम् | याच्यास्त | म. |
| | याच्यासम् | याच्यास्व | याच्यास्म | उ. |
| लुङ् | अयाचीत् | अयाचिष्टाम् | अयाचिषुः | प्र. |
| | अयाचीः | अयाचिष्टम् | अयाचिष्ट | म. |
| | अयाचिषम् | अयाचिष्व | अयाचिष्म | उ. |
| लृङ् | अयाचिष्यत् | अयाचिष्यताम् | अयाचिष्यन् | प्र. |
| | अयाचिष्यः | अयाचिष्यतम् | अयाचिष्यत | म. |
| | अयाचिष्यम् | अयाचिष्याव | अयाचिष्याम | उ. |

**आत्मनेपदे**—१ याचते। २ ययाचे, ययाचाते, ययाचिरे। ३ याचिता। ४ याचिष्यते। ५ याचताम्। ६ अयाचत। ७ याचेत। ८ याचिषीष्ट। ९ अयाचिष्ट। १० अयाचिष्यत। **कर्मणि**—याच्यते। **णिचि**—याचयति-ते। **सनि**—यियाचिषति। **यङि**—यायाच्यते।

**कृत्सु**—याचकः-चिका, यियाचिषकः-षिका, यायाचकः-चिका, याचिता-त्री, याचयिता-त्री, यियाचिषिता-त्री, यायचिता-त्री, याचन्-न्ती, याचमानः, याचितव्यम्, याचयितव्यम्, याचनीयम्, याचनम्, याची, याचितः, याचितुम्, याचित्वा-याचयित्वा, उपयाच्य, याच्यमानः, याचयिष्यन्-ष्यमाणः, याचथुः, ड्वित्-याचित्रम्, याचित्रिमम्, याच्ञा, अयाची, याच्यम्, याचितम्-याचितकम्, याचा।

(८६४) **रेटृ—परिभाषणे**। परिभाषणं श्वरवः। (पक्षियों का बोलना)। सक.। सेट्। उभय.। रेटति-ते। रिरेट-रिरेटे। इत्यादि। 'केलति' वत्।

**कृत्सु**—रेटकः-टिका, रिरेटिषकः-षिका, रेरेटकः-टिका, रेटिता-त्री, रेटयिता-त्री, रिरेटिषिता-त्री, रेरेटिता-त्री, शतरि-रेटन्। इत्यादि।

(८६५-८६६) **चते-चदे—याचने**। (मांगना)। सक.। सेट्। उभ.। एदित्। चतति-ते। चदति-ते। इत्यादि परस्मैपदे 'चरति' (५५९) वत्। **आत्मनेपदे**- 'कलति' (४९७) वत्।

(८६७) **प्रोथृ—पर्याप्तौ**। (शक्तिमान् होना, योग्य होना, पूर्ण होना)। अकर्म.। सेट्। उभय.। ऋदित्।

१ प्रोथति-ते। २ पुप्रोथ-पुप्रोथे। ३ प्रोथिता। ४ प्रोथिष्यति-ते। ५ प्रोथतु-प्रोथताम्। ६ अप्रोथत्-त। ७ प्रोथेत्-त। ८ प्रोथ्यात्-प्रोथिषीष्ट। ९ अप्रोथीत्-अप्रोथिष्ट। १० अप्राथिष्यत्-त।

**कृत्सु**—प्रोथकः-थिका, पुप्रोथिषकः-पुप्रुथिषकः-षिका, पोप्रुथकः-थिका, प्रोथः-अश्वादीनां नासारज्जुः (**'हलश्च'** (३-३-१२१) इति संज्ञायां करणे घञ)। प्रोथिता-त्री, प्रोथयिता-त्री, प्रोथयन्-न्ती, प्रोथयिष्यन्-न्ती-ती, प्रोथमानः, प्रोथिष्यमाणः, प्रोथितम्, प्रोथितव्यम्, प्रोथनीयम्, प्रोथयितव्यम्, प्रोथ्यम्, प्रोथ्यमानः, प्रोथित्वा, प्रोथयित्वा, आप्रोथ्य।

**(८६८) मिदृ—मेधाहिंसनयोः** । (समझना, जानना, पीडा देना, दुःख देना, हानि करना)। हिंसने सकर्म.। सेट्। उभय.। मेदति-ते। इत्यादि।

**कृत्सु**—मेदकः-दिका, मिमेदिषकः-मिमिदिषकः-षिका, मेमिदकः-दिका, मेदिता-त्री, मेदयिता-त्री, मिमेदिषिता- मिमिदिषिता-त्री, मेमिदिता-त्री, इत्यादि 'केटति' वत्।

**(८६९) मेदृ—मेधा-हिंसनयोः** । (समझना, हिंसा करना)। हिंसने सकर्म.। सेट्। उभय.। मेदति-ते। २ मिमेद इत्यादि।

**(८७०) मेधृ—मेधाहिंसनयोः सङ्गमे च** । (इकट्ठा करना, संगति करना, मेल करना, समझना, मारना, दुख देना)। अकर्म.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | मेधति | मेधतः | मेधन्ति | प्र. |
| | मेधसि | मेधथः | मेधथ | म. |
| | मेधामि | मेधावः | मेधामः | उ. |
| लिट् | मिमेध | मिमेधतुः | मिमेधुः | प्र. |
| | मिमेधिथ | मिमेधथुः | मिमेध | म. |
| | मिमेध | मिमेधिव | मिमेधिम | उ. |
| लुट् | मेधिता | मेधितारौ | मेधितारः | प्र. |
| | मेधितासि | मेधितास्थः | मेधितास्थ | म. |
| | मेधितास्मि | मेधितास्वः | मेधितास्मः | उ. |
| लृट् | मेधिष्यति | मेधिष्यतः | मेधिष्यन्ति | प्र. |
| | मेधिष्यसि | मेधिष्यथः | मेधिष्यथ | म. |
| | मेधिष्यामि | मेधिष्यावः | मेधिष्यामः | उ. |
| लोट् | मेधतु-मेधतात् | मेधताम् | मेधन्तु | प्र. |
| | मेध-मेधतात् | मेधतम् | मेधत | म. |
| | मेधानि | मेधाव | मेधाम | उ. |
| लङ् | अमेधत् | अमेधताम् | अमेधन् | प्र. |
| | अमेधः | अमेधतम् | अमेधत | म. |
| | अमेधम् | अमेधाव | अमेधाम | उ. |
| वि.लि. | मेधेत् | मेधेताम् | मेधेयुः | प्र. |
| | मेधेः | मेधेतम् | मेधेत | म. |
| | मेधेयम् | मेधेव | मेधेम | उ. |
| आ.लि. | मेध्यात् | मेध्यास्ताम् | मेध्यासुः | प्र. |
| | मेध्याः | मेध्यास्तम् | मेध्यास्त | म. |
| | मेध्यासम् | मेध्यास्व | मेध्यास्म | उ. |
| लुङ् | अमेधीत् | अमेधिष्टाम् | अमेधिषुः | प्र. |
| | अमेधीः | अमेधिष्टम् | अमेधिष्ट | म. |
| | अमेधिषम् | अमेधिष्व | अमेधिष्म | उ. |

| | | | | |
|---|---|---|---|---|
| लृङ् | अमेधिष्यत् | अमेधिष्यताम् | अमेधिष्यन् | प्र. |
| | अमेधिष्यः | अमेधिष्यतम् | अमेधिष्यत | म. |
| | अमेधिष्यम् | अमेधिष्याव | अमेधिष्याम | उ. |

**आत्मनेपदे**—१ मेधते। २ मिमेधे। ३ मेधिता। ४ मेधिष्यते। ५ मेधताम्। ६ अमेधत। ७ मेधेत। ८ मेधिषीष्ट। ९ अमेधिष्ट। १० अमेधिष्यत।

**भावे**—मेध्यते। **णिचि**—मेधयति-ते। **कृत्सु**—मेधकः-धिका, मिमेधिषकः-षिका, मेमेधकः-धिका, मेधिता-त्री, मेधयिता-त्री, मिमेधिषिता-त्री, मेमेधिता-त्री, मेध्यः = पशुः, मेधयन्-न्ती, मेधयिष्यन्, मेधितम्, मेधः, मेधितव्यम्, मेधयितव्यम्, मेधनीयम्, मेध्यम्, मेध्यमानः, मेधितुम्, मेधित्वा, मेधयित्वा, प्रमेध्य, मेधा, गृहमेधी, अश्वमेधः, मेधिः, प्रमेधितः-तम्-तवान्।

**(८७१-८७२) णिदृ-णेदृ—कुत्सासन्निकर्षयोः**। (दोष लगाना। निन्दा करना। समीप जाना या आना)। सक.। सेट्। उभय.। **लट्**—नेदति-ते। **लिट्**—निनेद, निनिदतुः निनिदे, निनिदाते। **लृट्**—नेदिष्यति-ते। **वि.लिङ्**—निद्यात्। निद्यास्ताम्। नेदिषीष्ट नेदिषीयास्ताम्। **लुङ्**—अनेदीत्-अनेदिष्ट। इत्यादि।

**(८७३-८७४) शृधु-मृधु—उन्दने**। (मार डालना या दुख देना. आर्द्र करना, गीला करना या होना)। अक.। सेट्। उभयपदी.। उदित्। मर्धति। शर्धति। मर्धते। शर्धते। ममर्ध-शशर्ध। इत्यादि 'वर्षति' (७०६) वत्।

**(८७५) बुधिर्—बोधने**। (जानना, समझना)। **प्रति**—किसी को जानना, जागना, बाट जोहना, **सम्**—अच्छी तरह से जानना, **अव**—जानना। सक.। सेट्. उभय.। बोधति इत्यादि 'शोधति' (१८३) वत्। **आत्मनेपदे**—'द्योतति' (७४१) वत्।

**(८७६) उबुन्दिर्—(बुन्द्) निशामने**। (जानना, समझना, सूक्ष्मदृष्टि से जानना)। सक.। सेट्। उभय.।

१ बुन्दति। २ **प्र.** बुबुन्द बुबुन्दतुः बुबुन्दुः। **म.** बुबुन्दिथ बुबुन्दथुः बुबुन्द। **उ.** बुबुन्द बुबुन्दिव बुबुन्दिम। ३ बुन्दिता। ४ बुन्दिष्यति। ५ बुन्दतु-बुन्दतात्। ६ अबुन्दत्। ७ बुन्देत्। ८ बुद्यात् बुद्यास्ताम् बुद्यासुः। ८ **प्र.** अबुन्दीत् अबुन्दिष्टाम् अबुन्दिषुः। **म.** अबुन्दीः अबुन्दिष्टम् अबुन्दिष्ट। **उ.** अबुन्दिषम् अबुन्दिष्व अबुन्दिष्म। पक्षे—**प्र.** अबुदत् अबुदताम् अबुदन्। **म.** अबुदः अबुदतम् अबुदत। **उ.** अबुदम् अबुदाव अबुदाम। १० अबुन्दिष्यत्। **आत्मनेपदे**—१ बुन्दते। २ बुबुन्दे। ३ बुन्दिता। ४ बुन्दिष्यते। ५ बुन्दताम्। ६ अबुन्दत। ७ बुन्देत। ८ बुन्दिषीष्ट। ९ **प्र.** अबुन्दिष्ट अबुन्दिषाताम् अबुन्दिषत। **म.** अबुन्दिष्ठाः अबुन्दिषाथाम् अबुन्दिड्ढ्वम्-ध्वम्। **उ.** अबुन्दिषि अबुन्दिष्वहि अबुन्दिष्महि। १० अबुन्दिष्यत।

**कृत्सु**—बुन्दकः-दिका, बुबुन्दिषकः-षिका, बोबुदकः-दिका, बुन्दिता-त्री, बुन्दयिता-त्री, बुन्दन्-न्ती, बुन्दयन्-न्ती, बुन्दिष्यन्-न्ती-ती, बुन्दयिष्यन्-न्ती-ती, बुन्दमानः, बुन्दयिष्यमाणः, बुन्दितव्यम्, बुन्दयितव्यम्, बुन्दनीयम्, बुन्द्यम्, बुन्द्यमानः, बुन्दितुम्, बुन्नम्-बुन्नः-बुन्नवान्, बुन्दित्वा-बुत्त्वा, बुद्बुदः, प्रबुन्द्यः।

**( ८७७ ) वेणृ—गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु**। (जाना, समझना, जानना, स्मरण करना, याद करना, विचार करना, तारतम्य देखना, वाद्ययन्त्र बजाना, वाद्ययन्त्र हाथ में लेना)। सकर्म.। सेट्। उभय.। वेणति-ते। इत्यादि। 'णेदृ' (८७२) धातुवत्।

**कृत्सु**—वेणकः-णिका, विवेणिषकः-षिका, वेवेणकः-णिका, वेणिता-त्री, वेणयिता-त्री, विवेणिषिता-त्री, वेवेणिता-त्री, वेणितुम्, वेणयितुम्, वेणिका, वेणिः, वेणी, वीणा। इत्यादि 'केलति' वत्।

**( ८७८ ) खनु—अवदारणे**। (खोदना)। सक.। सेट्.। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | खनति | खनतः | खनन्ति | प्र. |
| | खनसि | खनथः | खनथ | म. |
| | खनामि | खनावः | खनामः | उ. |
| लिट् | चखान | चख्नतुः | चख्नुः | प्र. |
| | चखनिथ | चख्नथुः | चख्न | म. |
| | चखान-चखन | चखनिव | चखनिम | उ. |
| लुट् | खनिता | खनितारौ | खनितारः | प्र. |
| | खनितासि | खनितास्थः | खनितास्थ | म. |
| | खनितास्मि | खनितास्वः | खनितास्म | उ. |
| लृट् | खनिष्यति | खनिष्यतः | खनिष्यन्ति | प्र. |
| | खनिष्यसि | खनिष्यथः | खनिष्यथ | म. |
| | खनिष्यामि | खनिष्यावः | खनिष्यामः | उ. |
| लोट् | खनतु-खनतात् | खनताम् | खनन्तु | प्र. |
| | खन-खनतात् | खनतम् | खनत | म. |
| | खनानि | खनाव | खनाम | उ. |
| लङ् | अखनत् | अखनताम् | अखनन् | प्र. |
| | अखनः | अखनतम् | अखनत | म. |
| | अखनम् | अखनाव | अखनाम | उ. |
| वि. लि. | खनेत् | खनेताम् | खनेयुः | प्र. |
| | खनेः | खनेतम् | खनेत | म. |
| | खनेयम् | खनेव | खनेम | उ. |
| आ. लि. | खन्यात् | खन्यास्ताम् | खन्यासुः | प्र. |
| | खन्याः | खन्यास्तम् | खन्यास्त | म. |
| | खन्यासम् | खन्यास्व | खन्यास्म | उ. |
| लुङ् | अखानीत् | अखानिष्टाम् | अखानिषुः | प्र. |
| | अखानीः | अखानिष्टम् | अखानिष्ट | म. |
| | अखानिषम् | अखानिष्व | अखानिष्म | उ. |

पक्षे—अखनीत् अखनिष्टाम् अखनिषुः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृङ् | अखनिष्यत् | अखनिष्यताम् | अखनिष्यन् | प्र. |
| | अखनिष्यः | अखनिष्यतम् | अखनिष्यत | म. |
| | अखनिष्यम् | अखनिष्याव | अखनिष्याम | उ. |

**आत्मनेपदे**—१ खनते। २ **प्र.** चखने चख्नाते चख्निरे। **म.** चख्निषे चख्नाथे चख्निध्वे। उ. चख्ने चख्निवहे चख्निमहे। ३ खनिता। ४ खनिष्यते। ५ खनताम्। ६ अखनत। ७ खनेत। ८ **प्र.** खनिषीष्ट खनिषीयास्ताम् खनिषीरन्। **म.** खनिषीष्ठाः खनिषीयास्थाम् खनिषीध्वम्। उ. खनिषीय खनिषीवहि खनिषीमहि। ९ अखनिष्ट अखनिषाताम् अखनिषत। १० अखनिष्यत।

**कर्मणि**—खायते-खन्यते। **णिचि**—खानयति। **सनि**—चिखनिषति। **यङि**—चङ्खन्यते चाखयते। **यङ्लुकि**—चङ्खनीति-चाङ्खन्ति। **कृत्सु**—खानकः-निका, खनिता-त्री, खानयिता-त्री, खनन्-न्ती, खानयन्-न्ती, प्रनिखनमानः, खानयमानः, प्रनिखनिष्यमाणः, खानयिष्यमाणः, चिखनिष्यमाणः, चाखयिष्यमाणः, चङ्खनिष्यमाणः, सुखा-सुखौ-सुखाः, खातम्-खातः, खातवान्, खनितः, चिखनिषितः, चाखयितः, चङ्खनितः-तवान्, खनः, खनित्रम्, परिखा, खम्, कूपखानः, खनकः, खनिकी, खानः, चिखनिषुः, चङ्खानः, खनितव्यम्, खानयितव्यम्, चिखनिषितव्यम्, खननीयम्, खाननीयम्, खेयम्, खान्यम्, चिखनिष्यम्, खायमानः, खन्यमानः, खान्यमानः, आखानः, आखः-आखरः, आखनिकः, खनितुम्, खानयितुम्, खाजिः, खानना, खननम्, खानम्, खनित्वा-खात्वा, खानयित्वा, प्रखाय, प्रखन्य, प्रखान्य, आखुः, मुखम्, खानः।

**(८७९) चीवृ—आदानसंवरणयोः**। (लेना, पहना, पकड़ना)। सक.। सेट्। उभय.। ऋदित्। चीवति-ते। चिचीव-वे। 'जीवति' (५६२) वत्।

**(८८०) चायृ—पूजानिशामनयोः**। (पूजा करना, जानना समझना)। सक.। सेंट्। उभय.। ऋदित्। चायति। चचाय। 'खादति' ९४९) वत्। **आत्मनेपदे**—चायते। चचाये। 'गाधति' (४) वत्।

**(८८१) व्यय—गतौ**। (जाना, खर्च करना)। सकर्म.। सेट्। पर.। अयं वित्तत्यागे नित्यमात्मनेपदी।

| | | | | |
|---|---|---|---|---|
| लट् | व्ययते | व्ययेते | व्ययन्ते | प्र. |
| | व्ययसे | व्ययेथे | व्ययध्वे | म. |
| | व्यये | व्ययावहे | व्ययामहे | उ. |
| लिट् | वव्यये | वव्ययाते | वव्ययिरे | प्र. |
| | वव्ययिषे | वव्ययाथे | वव्ययिध्वे | म. |
| | वव्यये | वव्ययिवहे | वव्ययिमहे | उ. |
| लुट् | व्ययिता | व्ययितारौ | व्ययितारः | प्र. |
| | व्ययितासे | व्ययितासाथे | व्ययिताध्वे | म. |
| | व्ययिताहे | व्ययिस्वहे | व्ययितास्महे | उ. |

| | | | | |
|---|---|---|---|---|
| लृट् | व्ययिष्यते | व्ययिष्येते | व्ययिष्यन्ते | प्र. |
| | व्ययिष्यसे | व्ययिष्येथे | व्ययिष्यध्वे | म. |
| | व्ययिष्ये | व्ययिष्यावहे | व्ययिष्यामहे | उ. |
| लोट् | व्ययताम् | व्ययेताम् | व्ययन्ताम् | प्र. |
| | व्ययस्व | व्ययेथाम् | व्ययध्वम् | म. |
| | व्ययै | व्यावहै | व्ययामहै | उ. |
| लङ् | अव्ययत | अव्ययेताम् | अव्ययन्त | प्र. |
| | अव्ययथाः | अव्ययेथाम् | अव्ययध्वम् | म. |
| | अव्यये | अव्ययावहि | अव्ययामहि | उ. |
| वि. लि. | व्ययेत | व्ययेयाताम् | व्ययेरन् | प्र. |
| | व्ययेथाः | व्ययेयाथाम् | व्ययेध्वम् | म. |
| | व्ययेय | व्ययेवहि | व्ययेमहि | उ. |
| आ. लि. | व्ययिषीष्ट | व्ययिषीयास्ताम् | व्ययिषीरन् | प्र. |
| | व्ययिषीष्ठाः | व्ययिषीस्थाम् | व्ययिषीध्वम्-ध्वम् | म. |
| | व्ययिषीय | व्ययिषीवहि | व्ययिषीमहि | उ. |
| लुङ् | अव्ययिष्ट | अव्ययिषाताम् | अव्ययिषत | प्र. |
| | अव्ययिष्ठाः | अव्ययिषाथाम् | अव्ययिड्ढ्वम्-ध्वम् | म. |
| | अव्ययिषि | अव्ययिष्वहि | अव्ययिष्महि | उ. |
| लृङ् | अव्ययिष्यत | अव्ययिष्येताम् | अव्ययिष्यन्त | प्र. |
| | अव्ययिष्यथाः | अव्ययिष्येथाम् | अव्ययिष्यध्वम् | म. |
| | अव्ययिष्ये | अव्ययिष्यावहि | अव्यामहि | उ. |

**परस्मैपदे**—१ व्ययति। २ वव्याय। ३ व्ययिता। ४ व्ययिष्यति। ५ व्ययतु। ६ अव्ययत्। ७ व्ययेत्। ८ व्यय्यात्। ९ अव्ययीत्। १० अव्ययिष्यत्।

**कर्मणि**—व्यय्यते। **णिचि**—व्याययति-ते। **यङि**—वाव्यय्यते। **यङ्लुकि**—वाव्ययीत्-वाव्यति। **लोपोव्यो**—इति य लोपः। **कृत्सु**—व्यायकः-यिका, विव्ययिषिकः-षिका, वाव्ययकः-यिका, व्ययिता-त्री, व्याययिता-त्री, विव्ययिषिता-त्री, वाव्ययिता-त्री, व्ययन्-न्ती, व्यायन्-न्ती, विव्यमिषन्-न्ती, वाव्ययन्-न्ती, व्ययिष्यन्-न्ती-ती, व्यायायिष्यन्-न्ती-ती, विव्ययिषिष्यन्, व्ययमानः, व्यायमानः, विव्ययिषमाणः, वाव्यय्यमानः, व्ययिष्यमाणः, व्याययिष्यमाणः, व्यत्-व्ययौ-व्ययः, व्ययितम्-तः, व्यायितम्-तः, व्ययः, प्रव्ययी, विव्ययिषुः, वाव्ययः, व्ययितव्यम्, व्याययितव्यम्, व्ययनीयम्, व्याय्यम्, व्यय्यमानः, व्याय्यमानः, विव्ययिष्यमाणः, वाव्यय्यमाणः, व्ययितुम्, व्याययितुम्, विव्ययिषितुम्, वाव्ययितुम्, व्यतिः, व्यायना, व्ययनम्, व्यायनम्, व्ययित्वा, व्याययित्वा।

**(८८२) दाशृ—दाने**। (देना, आहुति देना)। सक.। सेट्। उभय.। ऋदित्। दाशति-ते। ददाश-शे। इत्यादि 'काशति' (६२३) वत्।

**(८८३) भेषृ—भये**। गतावित्येके। (डरना। जाना)। अक.। सेट्। उभय.। भेषति। भेषते। सर्वं णेदृ धातुवत्।

**(८८४-८८५) भ्रेषृ-भ्लेषृ—गतौ**। (जाना)। अक.। सेट्। उभय.। ऋदित्। भ्रेषति। भ्लेषति। णेदृधातु वत्।

**(८८६) अस—गतिदीप्त्यादानेषु**। **अष** इत्येके। (जाना, चमकना, लेना)। दीप्तावकर्म.। सेट्। उभय.। परस्मै.-असति-अषति। इत्यादि 'अटति' (२९५) वत्। **आत्मनेपदे**—असते-अषते। इत्यादि 'अयति' (४७४) वत्।

**(८८७) स्पश—बाधनस्पर्शनयोः**। (अवरोध करना, रोकना, एकत्र करना, स्पर्श करना, छूना)। सक.। सेट्। उभय.। स्पशति-स्पशते इत्यादि।

**(८८८) लष—कान्तौ**। कान्तिरिच्छा। (इच्छा करना, चाहना)। अक.। सेट्।उ.।

१ लष्यति[१]-ते, लषति-ते। २ ललाष लेषतुः। ५ लष्यतु-लषतु-तात्। ६ अलष्यत्-त। अलषत्-त। ७ लषेत्-त।

**कृत्सु**—लषकः-षिका, लषिता-त्री, लाषयिता-त्री, लष्यन्[२]-लषन्-न्ती, लाषयन्-न्ती, लिलषिषन्-न्ती, लषिष्यन्-न्ती-ती, लाषयिष्यन्-न्ती-ती, लषमाणः, लष्यमाणः, लाषयमाणः, लषिष्यमाणः, लाषयिष्यमाणः, अभिलाषुकः,[३] लषणः,[४] विलाषी,[५] अपलाषिणः[६], लशुनम्[७], लिष्वः[८]।

**(८८९) चण—भक्षणे**। (खाना, स्वाद लेना)। सक.। सेट्। उभय.। चषति-ते। २ चचाष-षे। ३ चषिता। ४ चषिष्यति-ते। ५ चषतु-तात्, चषताम्। ६ अचषत्-त। ९ अचाषीत्-अचषीत्। इत्यादि 'रदति' (५३) वत्। **आत्मनेपदे**– दधति (८) वत्।

**कृत्सु**—चाषकः-षिका, चषिता-त्री, चाषयिता-त्री, चषन्-न्ती, चाषयन्-न्ती, चिचाषिषन्-न्ती, चाषिष्यन्-न्ती-ती, चषमाणः, चषिष्यमाणः, सञ्चट्-सञ्चाषौ-सञ्चषः, चषितम्-तः, चाषः, चषितव्यम्, चाषयितव्यम्, चष्यमाणः, चाष्यमाणः, चषितुम्, चाषयितुम्, चष्टिः, चाषणः, चषणम्, चाषणम्, चषित्वा, चाषयित्वा, विचष्य, विचाष्य।

**(८९०) छष—हिंसायाम्**। (मारना)। सक.। सेट्। उभय.। छषति-ते। चच्छष-चच्छषे। इत्यादि 'चषति' वत्।

---

१ 'वा भ्राशभ्लाशभ्रमुक्लमुत्रसि त्रुटि लषः। इति वा श्यन्।
२ शतरि 'वा भ्राशभ्लाश–' (३-१-७०) इति श्यन् विकल्पेन भवति। तेन रूपद्वयम्।
३ 'लषपतपद–' (३-२-१५४) इत्यादिनां तच्छीलादुषि कर्तृषु उकञ्प्रत्यये एवं रूपम्।
४ 'जुचङ्क्रम्य–' (३-२-१५०) इति तच्छीलादिषु कर्तृषु युच् प्रत्यये रूपमेवम्।
५ 'वि, अप' इत्युपसर्गयोः उपपदयोः 'अपे च लषः' (३-२-१४४) इति घिनुण् प्रत्यये रूपमेवम्।
६ 'प्रलापिनो भविष्यन्ति कदान्वेतेऽपलाषिणः।' (भ.का. ७-१२)।
७ 'लषेः श च' (द.उ. ५-५४) इति उनन् प्रत्ययो भवति। शश्चान्तादेशः। लशुनम् = पलाण्डुजातिः।
८ औणादिके (द.उ. ८-१२) वन् प्रत्यये, उपधाया इत्वं निपात्यतेऽगुणत्वं च। तेन लिष्वः इति रूपम्। कान्तिरित्यर्थः।

**( ८९१ ) झष—आदानसंवरणयोः** । (ग्रहण करना, लेना, वस्त्रादि धारण करना, वस्त्र पहनना)। सक.। सेट्। उभय.। झषति-ते। इत्यादि। 'जपति' (३९७) वत्।

**( ८९२-८९३ ) भ्रक्ष-भ्लक्ष—अदने** । (खाना)। भक्ष इति मैत्रेयः। सक.। सेट्। उभय.।

१ भ्रक्षति-ते। २ बभ्रक्ष-बभ्रक्षे। ३ भ्रक्षिता। ४ भ्रक्षिष्यति-ते। ५ भ्रक्षतु-ताम्। ६ अभ्रक्षत्-त। ८ भ्रक्ष्यात्-भ्रक्षिषीष्ट। ९ अभ्रक्षीत्- अभ्रक्षिष्ट। १० अभ्रक्षिष्यत्-त। एवं भ्लक्षति-ते इत्यादि।

**( ८९४ ) दासृ—दाने** । (देना, सौंपना)। सक.। सेट्। उभय.। १ दासति-ते। २ ददास-से। ३ दासिता। ९ अदासीत्-अदासिष्ट। **कर्मणि**—दास्यते। अन्यत्सर्वं 'काशति' (६४७) वत्।

**( ८९५ ) माहृ—माने** । (नापना, गिनना, तौलना)। सक.। सेट्। उभय.। माहति-ते। ममाह-हे। चातृधातुवत्।

**( ८९६ ) गुहू—संवराणे** । इह-संवरणं गोपनम्, आच्छादनम् अपह्नवः। (छिपाना। वस्त्रादि से ढँकना)। सक.। सेट्। उभय.।

**उदुपधाया गोहः**—ग्रह उपधाया ऊत्स्यात् गुणहेतावजादौ प्रत्यये परे।

| | | | | |
|---|---|---|---|---|
| लट् | गूहति | गूहतः | गूहन्ति | प्र. |
| | गूहसि | गूहथः | गूहथ | म. |
| | गूहामि | गूहावः | गूहामः | उ. |
| लिट् | जुगूह | जुगुहतुः | जुगुहुः | प्र. |
| | जुगूहिथ | जुगुहथुः | जुगुह | म. |
| | जुगूह | जुगुहिव | जुगुहिम | उ. |
| लुट् | गूहिता | गूहितारौ | गूहितारः | प्र. |
| | गूहितासि | गूहितास्थः | गूहितास्थ | म. |
| | गूहितास्मि | गूहितास्वः | गूहितास्मः | उ. |

पक्षे—**प्र.** गोढा गोढारौ गोढारः। **म.** गोढासि गोढास्थः गोढास्थ। **उ.** गोढास्मि गोढास्व गोढास्मः।

| | | | | |
|---|---|---|---|---|
| लृट् | गूहिष्यति | गूहिष्यतः | गूहिष्यन्ति | प्र. |
| | गूहिष्यसि | गूहिष्यथः | गूहिष्यथ | म. |
| | गूहिष्यामि | गूहिष्यावः | गूहिष्यामः | उ. |

पक्षे—**प्र.** घोक्ष्यति घोक्ष्यतः घोक्ष्यन्ति। **म.** घोक्ष्यसि घोक्ष्यथः घोक्ष्यथ। **उ.** घोक्ष्यामि घोक्ष्यावः घोक्ष्यामः।

| | | | | |
|---|---|---|---|---|
| लोट् | गूहतु-गूहतात् | गूहताम् | गूहन्तु | प्र. |
| | गूह-गूहतात् | गूहतम् | गूहत | म. |
| | गूहानि | गूहाव | गूहाम | उ. |

क्षीरपायिका[१], पायना, पिपासा, पेपीया, क्षीरपाणाः[२], सुरापाणाः, सौवीरपाणाः, कषायपाणाः (वा उशीनरादयः), मधुपानम्,[३] क्षीरपाणम्[४]-क्षीरपानम्, सुरापाणः-सुरापानः, पयःपानम्[५], (सुखम्), पाय़नम्, पिपासनम्, पेनीयनम्, पीत्वा, पाययित्वा, पिपासित्वा, पेपीयित्वा, निपीय[६], प्रपाय्य, प्रपिपास्य, प्रपेपीय्य, पायुः[७], पाकः,[८] पीथः[९], पम्पा,[१०] पात्रम्[११], पयः[१२], पेरुः[१३]।

**(९२६) घ्रा—गन्धोपादाने**। (सूंखना)। सकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | जिघ्रति | जिघ्रतः | जिघ्रन्ति | प्र. |
| | जिघ्रसि | जिघ्रथः | जिघ्रथ | म. |
| | जिघ्रामि | जिघ्रावः | जिघ्रामः | उ. |
| लिट् | जघ्रौ | जघ्रतुः | जघ्रुः | प्र. |
| | जघ्राथ-जघ्रिथ | जघ्रिथुः | जघ्र | म. |
| | जघ्रौ | जघ्रिव | जघ्रिम | उ. |
| लुट् | घ्राता | घ्रातारौ | घ्रातारः | प्र. |
| | घ्रातासि | घ्रातास्थः | घ्रातास्थ | म. |
| | घ्रातास्मि | घ्रातास्वः | घ्रातास्मः | उ. |
| लृट् | घ्रास्यति | घ्राष्यतः | घ्रास्यन्ति | इत्यादि। |
| लोट् | जिघ्रतु-जिघ्रतात् | जिघ्रताम् | जिघ्रन्तु | प्र. |
| | जिघ्र-जिघ्रतात् | जिघ्रतम् | जिघ्रत | म. |
| | जिघ्राणि | जिघ्राव | जिघ्राम | उ. |

१ 'पर्यायार्हणोत्पत्तिषु ण्वुच्' (३-३-१११) इति अर्हार्थे ण्वुच्। 'शायिकाद्य तव प्रापद्, अर्हसि क्षीरपायिकाम्' इति प्र. सर्वस्वे।

२ 'पाने देशे' (८-४-९) इति णत्वम्। अत्र क्षीरं पानं येषां ते क्षीरपाणाः इति वृत्तिः। क्षीरपाणादयः शब्दाः देशविशेषवाचकाः। क्षीरपाणा उशीनराः। सुरापाणः प्राच्याः। सौवीरपाणा वाहीकाः। कषायपाणा गन्धाराः।

३ देशविशेषाभिधानाभावादत्र णत्वं न।

४ 'वा भावकरणयोः' (८-४-१०) इति णत्वविकल्पः। भावार्थे— क्षीरपाणम्-क्षीरपानम् इति, करणार्थे— सुरापाणः-सुरापानः इति चोदाहरणमिति ज्ञेयम्।

५ 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्' (३-३-११६) इति ल्युट्। अत्र पयः पानेन पयः पानकर्तुः शरीरसुखसद्भावादीदृशस्थलेषु ल्युट् इति ज्ञेयम्।

६ 'न ल्यपि' (६-४-६९) इति ईत्वनिषेधः।'निपीय—' नैषधे (१-१) इत्यादयः प्रयोगाः 'पीङ् पाने' इत्यस्माल्ल्यपि साधव इति ज्ञेयम्॥

७ कृवापा (द.उ. १-८६) इत्यादिना उण्प्रत्यये रूपम्।

८ 'इण्भीकापा—' (द.उ. ३-२१) इत्यादिना कन् प्रत्ययः। पाकः = असुर विशेषः, अर्भकश्च।

९ 'पातृ—' (द.उ. ६-३२) इत्यादिना थक् प्रत्यये, ईत्वे च रूपम्। पिबति तेजांसि इति पीथः = आदित्यः मकरश्च।

१० औणादिके (द.उ. ७-७) पप्रत्यये बाहुलकात् ह्रस्वनुमागमयोः निपातितयो रूपमेवम्। पिबन्त्यस्यामिति पम्पा = सरोविशेषः।

११ औणादिके त्रप्रत्यये (द.उ. ८-९०) रूपम्। पिबन्त्यनेनेति पात्रम् = भाजनम्।

१२ 'पिबतेरि च' (द.उ. ९-५०) इत्यसुन्प्रत्यये इकारश्चान्तादेशः। पयः = जलं क्षीरं च।

१३ औणादिके रुप्रत्यये, धात्वन्तस्य एकारे च रूपम्। पेरुः = आदित्यः।

| | | | | |
|---|---|---|---|---|
| लङ् | अजिघ्रत् | अजिघ्रताम् | अजिघ्रन् | प्र. |
| | अजिघ्रः | अजिघ्रतम् | अजिघ्रत | म. |
| | अजिघ्रम् | अजिघ्राव | अजिघ्राम | उ. |
| वि. लि. | जिघ्रेत् | जिघ्रेताम् | जिघ्रेयुः | प्र. |
| | जिघ्रेः | जिघ्रेतम् | जिघ्रेत | म. |
| | जिघ्रेयम् | जिघ्रेव | जिघ्रेम | उ. |
| आ. लि. | घ्रेयात् | घ्रेयास्ताम् | घ्रेयासुः | प्र. |
| | घ्रेयाः | घ्रेयास्तम् | घ्रेयास्त | म. |
| | घ्रेयासम् | घ्रेयास्व | घ्रेयास्म | उ. |

पक्षे—घ्रायात् घ्रायास्ताम् घ्रायासुः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लुङ् | अघ्रात् | अघ्राताम् | अघ्रुः | प्र. |
| | अघ्राः | अघ्रातम् | अघ्रात | म. |
| | अघ्राम् | अघ्राव | अघ्राम | उ. |

पक्षे—**प्र.** अघ्रासीत् अघ्रासिष्टाम् अघ्रासिषुः। **म.** अघ्रासीः अघ्रासिष्टम् अघ्रासिष्ट। **उ.** अघ्रासिषम् अघ्रासिष्व अघ्रासिष्म।

| | | | | |
|---|---|---|---|---|
| लृङ् | अघ्रास्यत् | अघ्रास्यताम् | अघ्रास्यन् | प्र. |
| | अघ्रास्यः | अघ्रास्यतम् | अघ्रास्यत | म. |
| | अघ्रास्यम् | अघ्रास्याव | अघ्रास्याम | उ. |

**कर्मणि**—घ्रायते। **णिचि**—घ्रापयति-ते। ९ अजिघ्रिपत्-अजिघ्रपत्। **सनि**—जिघ्रासति। **यङि**—जेघ्रीयते। **यङ्लुकि**—जाघ्रेति-जाघ्राति। **कृत्सु**—घ्रातव्यम्, घ्राणीयम्, घ्रेयम्, घ्रातः-घ्राणः, जिघ्रन्, घ्रातुम्, घ्रात्वा, आघ्राय, घ्रातिः, घ्रेयः, घ्राणम्, जिघ्रः, वि + आ जिघ्रतीति व्याघ्रः, घ्रायकः, घ्रायी, घ्राता-त्री, घ्रास्यन्।

**(९२७) ध्मा—शब्दाग्निसंयोगयोः।** अग्निसंयोगो नाम मुखवायुनाग्निसंयोगः। (फूंकना, आग सुलगाना, प्रदीप्त करना, जलाना, मुंह से बंशी आदि वाद्य बजाना)।सकर्म.। अनि.। परस्मै.।

१ धमति। २ **प्र.** दध्मौ दध्मतुः दध्मुः। **म.** दध्माथ-दध्मिथ पध्मथुः दध्म। **उ.** दध्मौ दध्मिव दध्मिम। ३ ध्माता। ४ ध्मास्यति। ५ धमतु। ६ अधमत्। ७ धमेत्। ८ ध्मेयात्-ध्मायात्। ९ अध्मासीत्। १० अध्मास्यत्। सर्वं 'जिघ्रति' (९२६) वत्।

**कृत्सु**—ध्मायकः-यिका, ध्मापकः-पिका, दिध्मासकः-सिका, देध्मीयकः-यिका, ध्माता-त्री, ध्मापयिता-त्री, धमन्-न्ती, ध्मापयन्-न्ती, ध्मास्यन्-न्ती-ती, ध्मापयिष्यन्-न्ती-ती, व्यतिधममानः, ध्मापयमानः, व्यतिध्मास्यमानः, ध्मापयिष्यमाणः, शङ्खध्मा-ध्मौ-ध्मः, ध्मातम्-तः-तवान्, ध्मापितः, उद्धमः[1]-धमः, नासिकन्धमः[2],

१ 'पाघ्राध्माधेट्दृशः शः' (३-१-१३७) इति उपसृष्टान्निरुपसृष्टादपि शप्रत्यये धमादेशे च रूपम्।

२ 'नासिकास्तनयोर्ध्माधेटोः' (३-२-२९) इति खश् प्रत्ययः। 'खित्यनव्ययस्य' (६-३-६६) इति मुम्। शूत्कारैः नासिकां शब्दयतीति नासिकान्धमः वराहः।

नाडिन्धमः[१]-मुष्टिन्धमः, पाणिन्धमः,[२] शुनिन्धमः,[३] करन्धमः[४]-घटिन्धमः-खारिन्धमः-खरिन्धमः, ध्मापः, दिध्मासुः, दीध्माः, ध्मातव्यम्, ध्मापयित्वयम्, ध्मानीयम्, ध्मापनीयम्, ध्मेयम्, ध्माप्यम्, ध्मायमानः, ध्माप्यमानः, ध्मायः, ध्मापः, ध्मातुम्, ध्मापयितुम्, ध्मातिः, आध्मा,[५] ध्मानम्, ध्मात्वा, आध्माय, धमकः[६], धमनिः[७]।

**(९२८) ष्ठा—गतिनिवृत्तौ।** (स्थिर होना, ठहरना), **अधि**—पदारुढ़ होना, अधिकारारुढ होना, ऊपर रहना, ऊपर बैठना, **अनु**—यथा शास्त्र वर्तना, उपयोग में लाना, सटे रहना, लटकना, चिपक रहना, **अव**—सेवा करना, थमना, स्थिर रहना, **आ**—(आ.) अधिरुढ होना, ऊपर बैठना, **उत्**—खड़ा होना, आसन से उठना, (आ.) **उप**—(आ.) प्राप्ति की इच्छा करना, पास से जाना, समीप में रहना, **नि**—रखना, स्थापित करना, **पर्यव**—अचल होना, स्थिर होना, **प्र**—जाना, आगे जाना, स्थापित करना, **प्रोत्**—आसन पर से उठना, खड़ा रहना, **प्रति**—देव के समान हाथ जोड़ कर खड़ा होना, परमेश्वरार्पित होना, **वि**—अलग खड़ा होना, दूर खड़ा रहना, बाट जोहना, **व्यव**—आज्ञा मानना, **सम्**—(आ.) अच्छा होना, पास होना, पूर्ण होना, एकमत होना, **समा**—करना, आचरण करना, वर्तना, **सम्प्र**—प्रवास करना, परदेश जाना, आगे जाना। अक.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | तिष्ठति | तिष्ठतः | तिष्ठन्ति | प्र. |
| | तिष्ठसि | तिष्ठथः | तिष्ठथ | म. |
| | तिष्ठामि | तिष्ठावः | तिष्ठामः | उ. |
| लुट् | अधितष्ठौ तस्थौ | तस्थतुः | तस्थुः | प्र. |
| | तस्थाथ-तस्थिथ | तस्थथुः | तस्थ | म. |
| | तस्थौ | तस्थिव | तस्थिम | उ. |
| लुट् | स्थाता | स्थातारौ | स्थातारः | प्र. |
| | स्थातासि | स्थातास्थः | स्थातास्थ | म. |
| | स्थातास्मि | स्थातास्वः | स्थातास्मः | उ. |
| लृट् | स्थास्यति | स्थास्यतः | स्थास्यन्ति | प्र. |
| | स्थास्यसि | स्थाष्यथः | स्थाष्यथ | म. |
| | स्थास्यामि | स्थास्याव | स्थास्यामः | उ. |

१ 'नाडीमुष्ट्योश्च' (३-२-३०) इति खश्, ह्रस्वः, मुम्। नाडिन्धमः = स्वर्णकारः।
२ 'उग्रम्पश्येरम्मदपाणिन्धमाश्च' (३-३-३७) इति सूत्रेण निपातनात् साधुः। पाणयः ध्मायन्ते एषु इति पाणिन्धमः = पन्थाः।
३ 'नाडीमुष्ट्योश्च' (३-२-३०) इत्यत्र चकारात् अत्रापि खश्। एवं घटिन्धमः, खारिन्धमः, खरिन्धमः, वातन्धमः इत्यादिष्वपि खश् ज्ञेयः। वातन्धमः = पर्वतः। घटिन्धमः = आमः।
४ 'उग्रम्पश्य—' (३-३-३७) इत्यत्र पाणिपदेन पर्यायस्यपि ग्रहणमिति प्रक्रियाकौमुद्याशयात् तन्मते करन्धमः इत्यपि साधुः।
५ स्त्रियाम्, 'आतश्चोपसर्गे' (३-३-१०६) इत्यङ।
६ 'ध्मो धम च' (द.उ. ३०७) क्वुन् प्रत्यये धमादेशे च रूपम्। धमतीति धमकः = अग्निशामकः।
७ '[illegible]' (द.उ. [illegible]-२) इति अनिप्रत्यये बाहुलकात् धमादेशे च धमनिः = नाडी।

| | | | | |
|---|---|---|---|---|
| लोट् | तिष्ठतु-तिष्ठतात् | तिष्ठताम् | तिष्ठन्तु | प्र. |
| | तिष्ठ-तिष्ठतात् | तिष्ठतम् | तिष्ठत | म. |
| | तिष्ठानि | तिष्ठाव | तिष्ठाम | उ. |
| लङ् | अतिष्ठत् | अतिष्ठताम् | अतिष्ठन् | प्र. |
| | अतिष्ठः | अतिष्ठातम् | अतिष्ठत | उ. |
| | अतिष्ठम् | अतिष्ठाव | अतिष्ठाम | उ. |
| वि. लि. | तिष्ठेत् | तिष्ठेताम् | तिष्ठेयुः | प्र. |
| | तिष्ठेः | तिष्ठेतम् | तिष्ठेत | म. |
| | तिष्ठेयम् | तिष्ठेव | तिष्ठेम | उ. |
| आ. लि. | स्थेयात् | स्थेयास्ताम् | स्थेयासुः | प्र. |
| | स्थेयाः | स्थेयास्तम् | स्थेयास्त | म. |
| | स्थेयासम् | स्थेयास्व | स्थेयास्म | उ. |
| लुङ् | अध्यष्ठात् | अध्यष्ठाताम् | अध्यष्ठुः | प्र. |
| | अध्यष्ठाः | अध्यष्ठातम् | अध्याष्ठात | म. |
| | अध्यष्ठाम् | अध्याष्ठाव | अध्याष्ठाम | उ. |

पक्षे—**प्र.** अस्थात् अस्थाताम् अस्थुः । **म.** अस्थाः अस्थातम् अस्थात । **उ.** अस्थाम् अस्थाव अस्थाम ।

| | | | | |
|---|---|---|---|---|
| लृङ् | अस्थास्यत् | अस्थास्यताम् | अस्थास्यन् | प्र. |
| | अस्थास्यः | अस्थास्यतम् | अस्थास्यत | म. |
| | अस्थास्यम् | अस्थास्याव | अस्थास्याम | उ. |

१ संतिष्ठते[1] । २ संतस्थे । ३ संस्थाता । ४ संस्थास्यते । ५ संतिष्ठताम् । ६ समतिष्ठत । ७ संतिष्ठेत । ८ संस्थासीष्ट । ९ समस्थित । १० समस्थास्यत । एवं अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । अतिष्ठते[2] । तिष्ठते[3] कन्या छात्रेभ्यः, उपतिष्ठते[4] सूर्यम् । उत्तिष्ठते[5] ।

**भावे**—स्थीयते । **णिचि**—स्थापयति-ते । ९ अतिष्ठिपत्[6] । **सनि**—तिष्ठासति । **यङि**—तेष्ठीयते । **यङ्लुकि**—तास्थेति-तास्थाति । **कृत्सु**—स्थायकः[7]-यिका, स्थापकः[8]-पिका,

१ 'समवप्रविभ्यः स्थः' (१-३-२२) इत्यात्मनेपदम् ।
२ आङः 'प्रतिज्ञायामुपसंख्यानम्' । इत्यात्मनेपदम् ।
३ 'प्रकाशनस्थेयाख्ययोश्च' (१-३-२४) इत्यात्मनेपदम् ।
४ उपान्मन्त्रकरणे ।
५ 'उदोनूर्ध्वकर्मणि' (१-३-२४) कुटुम्बे उत्तिष्ठते तदर्थं घटत इत्यर्थ ।
६ निष्ठतेरित् ।
७ 'धात्वादेः षः सः' (६-१-६४) इति सकारादेशः सर्वत्र । 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमः । एवं णिनिप्रत्यये, णमुल्यपि ज्ञेयम् ।
८ 'अर्तिहीब्ली–' (७-३-३६) इत्यङ्गस्य पुगागमः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।

तिष्ठासकः[१]-सिका, तेष्ठीयकः[२]-यिका, स्थाता[३]-त्री, उत्थाता:, (वैकुण्ठस्य) अतिष्ठाता[४]-त्री, स्थापयिता-त्री, तिष्ठासिता-त्री, तेष्ठीयिता-त्री, तिष्टन्[५]-अधितिष्ठन्[६] (वैकुण्ठं) न्ती, (ग्रामात्[७] शतं) उत्तिष्ठत्, (आसनात्) उत्तिष्ठन्[८], (यौवनेन भर्तारं[९]) उपतिष्ठन्, (याचकः प्रभुं) उपतिष्ठन्[१०], स्थापयन्-न्ती, तिष्ठासन्-न्ती, स्थास्यन्-अतिष्ठास्यन्[११]-न्ती-ती, स्थापयिष्यन्-न्ती-ती, तिष्ठासिष्यन्-न्ती-ती, सन्तिष्ठमान[१२]:-अवतिष्ठमानः-प्रतिष्ठमानः, वितिष्ठमानः[१३], (शब्दं नित्यं) आतिष्ठमानः[१४], (गोपी कृष्णाय) तिष्ठमाना[१५], धर्माध्यक्षे तिष्ठमानः[१६], (मुक्तौ) उत्तिष्ठमानः[१७], (ऐन्द्र्या गार्हपत्यं) उपतिष्ठमानः,[१८] (आदित्यं) उपतिष्ठमानः[१९], (गङ्गा यमुनां) उपतिष्ठमाना, (रथिकान्), उपतिष्ठमानः, (याचकः प्रभुं) उपतिष्ठमानः,[२०] (यावद्भुक्तं) उपतिष्ठमानः[२१], स्थापयमानः, सन्तिष्ठासमानः[२२]-अवतिष्ठासमानः,

---

१ धातोनुदात्तत्वात् सन इण्णिषेधे, द्वित्वे, अभ्यासे, शर्पूर्वाः खयः' (७-४-६१) इति खयः शेषः। अभ्यासस्य 'सन्यतः' (७-४-७९) इतीत्वम्, 'आदेशप्रत्यययोः' (८-३-५९) इत्युत्तरखण्डे षत्वम्। ष्टुत्वम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
२ 'घुमास्था–' (६-४-६६) इति इत्वे, द्वित्वे, अभ्यासस्य गुणः।
३ उदः स्थास्तम्भोः पूर्वस्य (८-४०-६१) इति सकारस्य पूर्वसवर्णः थकारो भवति। तस्य 'झरो झरि सवर्णे' (८-४-६५) इति पाक्षिको लोपः। लोपाभावपक्षे चकारस्यैव श्रवणम्, न तु 'खरि च' (८-४-५५) इति चर्त्वम्। पूर्वसर्वस्यासिद्धत्वात्।
४ अधिपूर्वकस्य स्थाधातोः प्रयोगे 'अधिशीङ्स्थाऽऽसां कर्म' (१-४-४६) इति कर्मसंज्ञायाम् कर्तृकर्मणोः कृति' (२-३-६५) इति षष्ठी। उपसर्गात् 'सुनोतिसुर्वात–' (८-३-६५) इति षत्वम्।
५ 'पाघ्राध्मास्था–' (७-३-७८) इति तिष्ठादेशः शिति प्रत्यये परे।
६ 'अधिशीङ्स्थासां कर्म' (१-४-४६) इति वैकुण्ठस्य कर्मसंज्ञायां द्वितीया।
७ 'इहायामेव' (वा. १-३-२४) इति, 'उदोऽनूर्ध्वकर्मणि' (१-३-२४) इत्यत्रोक्तत्वात् न शानच्। किन्तु शत्रादेशः। शतस्य विशेष्यत्वात् उत्तिष्ठत् इत्यत्र क्लीवत्वम्।
८ '–अनूर्ध्वकर्मणि' (१-३-२४) इति निषेधात् अत्र शानच्।
९ 'उपान्मन्त्रकरणे' (१-३-२५) इत्यत्र 'मन्त्रकरणे' इति विशेषणात् अत्र न शानच्।
१० 'वा लिप्सायाम्' (वा. १-३-२५) इति आत्मनेपदविकल्पनात् पक्षे शता।
११ 'संग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम्।' (भ.का. ९-७२)।
१२ समवप्रविभ्यः स्थः (१-३-२२) समादिपूर्वकेषु क्रमेण शानच्।
१३ 'सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम्। शिशु. ४-४।
१४ 'आङः प्रतिज्ञायाम्। (वा. १-३-२२) इति वार्तिकात् शानच्।
१५ 'प्रकाशनस्थेयाख्ययोश्च' (१-३-२३) इति प्रकाशने शानच्। 'श्लाघह्नु–' (१-४-३४) इति कृष्णशब्दात् चतुर्थी।
१६ 'प्रकाशनस्थेयाख्ययोश्च' (१-३-२३) इत्यनेन स्थेयाख्यायाम् शानच्। स्थेयः = विवादपदनिर्णेता। धर्माध्यक्षं निर्णेतृत्वेनोपसर्पतीत्यर्थः।
१७ 'उदात्तोऽनूर्ध्वकर्मणि' (१-३-२४) इति शानच्।
१८ 'उपामन्त्रकरणे' (१-३-२५) इति शानच्।
१९ 'उपाद् देवपूजा सङ्गतिकरणमित्रकरणपथिषु (वा. १-३-२५) इत्यनेन क्रमेण चतुर्ष्वर्थेषु गम्यमानेषु शानच् भवति। आदित्यमुपतिष्ठमानः = स्तुवन् इत्यर्थः। गङ्गा यमुनामुपतिष्ठमाना = उपाश्लिष्यमाणा इत्यर्थः। रथिकान् उपतिष्ठमानः = मित्रीकरोति इत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठमानः = प्राप्नोतीत्यर्थः।
२० 'वा लिप्सासायाम्' (वा. १-३-२५) इत्यात्मनेपदविकल्पः।
२१ 'अकर्मकाच्च' (१-३-२६) इति शानच्। भोजने भोजने उपतिष्ठत इत्यर्थः।
२२ 'पूर्ववत् सनः' (१-३-६२) इत्यात्मनेपदम्।

तेष्ठीयमानः, संस्थास्यमानः,[१] अवस्थास्यमानः- प्रस्थास्यमानः[२]-विष्ठास्यमानः, स्थापायिष्यमाणः, सन्तिष्ठासिष्यमाणः, तेष्ठीयिष्यमाणः, संस्था[३]-संस्थौ-संस्थाः, सव्येष्ठाः[४], उपस्थितः[५]-स्थितम्[६]-स्थितवान्, समुत्थितवती[७], स्थापितः, तिष्ठासितः, तेष्ठीयितः-तवान्, स्थायी,[८] दुःस्थः[९], ककुत्स्थः,[१०] तपस्स्थः[११], प्रस्थः-प्रष्ठः,[१२] समस्थः[१३]-विषमस्थः, अम्बष्ठः[१४]-आम्बष्ठः, गोष्ठः[१५] भूमिष्ठः[१६]-सव्येष्ठः[१७]-अपष्ठः[१८]-द्विष्ठः-त्रिष्ठः-कुशेष्ठः-कुष्ठः-सङ्कुष्ठः-अङ्गुष्ठः- मञ्जिष्ठः-पुञ्जिष्ठः-परमेष्ठः-वर्हिष्ठः-दिविष्ठः[१९]-अग्निष्ठः, आखूत्थः[२०]-शलमोत्थः, अश्वत्थामा[२१], शंस्थः,[२२] शंस्था, चिरस्थायी[२३], स्थास्नु,[२४] स्थायुकः,[२५] स्थावरः[२६], तस्थिवान्ः[२७],

१ आत्मनेपदनिमित्तेषु सत्सु लृडादेशः । शानच् सर्वत्र बोध्यः ।
२ 'प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान्' (भ.का. ३-१२)।
३ क्विपि, 'घुमास्थागापा–' (६-४-६६) इतीत्वं भाष्यकारप्रयोगात् न । न च प्रत्ययलक्षणाभावः शङ्क्यः, तस्य निषेधस्य वर्णप्राधान्यविषयत्वात् । अत्र च प्रत्ययप्राधान्यात् ।
४ 'स्थास्थि– (वा. ८-३-९७) इति षत्वम् ।
५ 'गत्यर्थाकर्मक–' (३-४-७२) इति कर्तरि क्तप्रत्ययः । 'द्यतिस्यतिमास्थामित्ति किति' (७-४-४०) इति इत्वम् ।
६ 'आशितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितम् । (भ.का. ६-१०७)
७ 'भूयः समुत्थितवती घृतपुण्डरीका भोगाय सागरगृहाद् भुवनैकयूनः ।' (यादवाभ्युदये १९-७०)
८ ग्रह्यादिपाठात् (१-३-१३४) इति कर्तरि णिनिः । युगागमः ।
९ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः । 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः ।
१० 'वह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ।' (भ.का. ६-१०७)
११ 'स्थे च भाषायाम्' (६-३-२०) इति सप्तम्या अलुक्निषेधः । 'हलदन्तात्–' (६-३-९) इत्यस्यापवादः ।
१२ कर्तरि कप्रत्यये, 'प्रष्ठोऽग्रगामिनी' (८-३-९२) इति षत्वं निपात्यते ।
१३ 'सुपि स्थः' (३-२-४) इति कर्तरि कप्रत्ययेः ।
१४ 'अम्बाम्ब–' (८-३-९७) इति षत्वम् । एवं अग्निष्ठः इति पर्यन्तं षत्वमनेन सूत्रेण ज्ञेयम् । अम्बेब तिष्ठतीति अम्बष्ठः । 'ङ्यापोः संज्ञाच्छन्दसो र्बहुलम्' (६-३-६३) इति पूर्वपदस्य ह्रस्वः । रूढशब्दश्चायम् ।
१५ गावः तिष्ठन्त्यत्रेत्यकरणे क प्रत्ययः ।
१६ 'युवजानिधनुष्पाणिभूमिष्ठः खाविचारिणः' (भ.का. ५-१३)।
१७ सूत्रे (८-३-९७) कुशे, सव्ये, परमे, दिवि इति चतुर्षु स्थलेषु निपातनात् सप्तम्या अलुक् ।
१८ 'अपाष्ठः इति क्वचिद् दृश्यते तदानीं' 'अन्येषामपि–' (६-३-१३७) इति पूर्वपदस्य दीर्घः- इति न्यासे" इति माधवधातुवृत्तौ ।
१९ 'शयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ।' (भ.का. ९-८४)।
२० आदन्तत्वादेव कप्रत्यये सिद्धे पुनः 'सुपि स्थः' (३-२-४) इति सूत्रारम्भसामथर्यात् भावेऽपि कप्रत्ययो भवति । आखूनामुत्थानम् = आखूत्थः । पृष्टोदणदित्वात् सकारस्य थकारः ।
२१ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति मनिन् प्रत्ययः । पृषोदरादित्वात् आदेः सकारस्य थकादेशः । अश्वस्येव स्थाम = बलं यस्य, सोऽश्वत्थामा । उपपदसमासे स्वभावात् इवार्थो लभ्यते ।
२२ 'स्थः क च' (३-२-७७) कर्तरि कः । चकारात् क्विवपि । 'शमिधातोः संज्ञायाम्' (३-२-१४) इत्यचोऽपवादः ।
२३ सुप्यजातौ णिनिस्ताच्छील्ये (३-२-७८) इति णिनिः । युगागमः ।
२४ 'ग्लाजिस्थश्चग्स्नुः' इति ग्स्नुप्रत्ययः ताच्छीलिक 'वस्नोः शित्वाननस्थ ईकारः किडितोरीत्वशासनात् । गुणाभावस्त्रिषु स्मार्थः, श्र्युकोऽनिट्त्वं गकोरितोः ।' इति भाष्यम् (३-३-१३९)
२५ 'लखपतपदस्था–' (३-२-१५४) इति ताच्छीलादिषु कर्तृषु उकञ् प्रत्ययः युगागमः ।
२६ 'स्थेशभप्सपिसको । वरच्' (३-२०-१७५) इति ताच्छीलिको वरच्प्रत्ययः ।
२७ 'छान्दसा अपि क्वचिद् भाषायाम्' इति न्यायेन लिटः क्वसुः । द्वित्वे, आकारलोपे, 'नेड् वशिकृति' (७-२-८) इतीण्निषेधे प्राप्ते, 'वस्वेकाजाद्घसाम्' (७-२-६७) इतीट् ।

प्रस्थात्री,[१] (चेत्रो गुरोः) उपस्थानीयः[२], स्थापः, प्रतिष्ठासुः,[३] तिष्ठापयिषुः, तेष्ठियः[४], स्थातव्यम्, स्थापयितव्यम्, तिष्ठासितव्यम्, तेष्ठीयितव्यम्, स्थानीयम्,[५] स्थापनीयम्, तिष्ठासनीयम्, तेष्ठीयनीयम्, स्थेय[६]:, स्थेयम्, स्थाप्यम्, तिष्ठास्यम्, तेष्ठीय्यम्, ईषत्स्थानः[७]-दुःस्थानः-दुरुपस्थानः[८]-सुस्थानः, उपस्थीयमानः,[९] स्थाप्यमानः, तिष्ठास्यमानः, तेष्ठीय्यमानः, प्रस्थः,[१०] माहिकप्रस्थः-इन्द्रप्रस्थः-मालाप्रस्थः, स्थापः, तिष्ठासः, तेष्ठीयः, स्थातुम्, उत्थातुम्, स्थापयितुम्, तिष्ठासितुम्, तेष्ठीयितुम्, प्रस्थितिः,[११] संस्था[१२]-आस्था-अन्यदास्था[१३]- अन्यास्था, व्यवस्था, स्थापना, तिष्ठासा, तिष्ठापयिषा, तेष्ठीया, स्थानम्, उत्थानम्, उधिष्ठानम्, भीरुष्ठानम्[१४], स्थापनम्, तिष्ठासनम्, तेष्ठीयनम्, स्थित्वा, स्थापयित्वा, तिष्ठासित्वा, तेष्ठीयित्वा, प्रस्थाय[१५]-उत्थाय, प्रस्थाप्य, उपतिष्ठास्य, प्रतेष्ठीय्य, शय्योत्थाय[१६] (धावति), स्थाणुः,[१७] स्थूणा,[१८] स्थविरः[१९],

---

१ 'भविष्यति गम्यादयः' (३-३-३) इति भविष्यदर्थे णिनिः। पुगागमः। 'गमी गामी तथाऽऽगामी प्रयायिप्रतियायिनौ। प्रबोधी प्रतिबोधी च भावी प्रस्थाय्यमी नव।' इति प्रक्रियासर्वस्वम्।

२ 'भव्यगेयप्रवचनीयोप्रस्थानीय–' (३-४-६८) इत्यनीयरन्तो विकल्पेन निपातितः। पक्षे भावकर्मणोरनीयर्। उपस्थानीयः = उपस्थानकर्ता, उपस्थानकर्मभूतश्च।

३ अभिचैद्यं प्रतिष्ठासुरासीत् कार्यद्वयाकुलः' (शुशुपालवधे २-१)।

४ 'यङोऽचि च' (२-४-७४) इति यङोलुकि, संयोगपूर्वकत्वात् 'अचिश्नुधातु–' (६-४-७७) इतीयङादेशः।

५ तिष्ठन्त्यस्मिन् इत्यधिकरणे 'कृत्यल्युटो बहुलम्' (३-३-११३) इति बाहुलकात् अनियर्। स्थानीयम् = नगरम्।

६ 'ईद्यति' (७-४-६५) इतीत्वे गुणः। स्थेयः = विवादपदनिर्णेता। 'प्रकाानस्थेयाख्ययोश्च' (१-३-२३) इति सूत्रे निपातनात् बाहुलकात् अधिकरणे यत्।

७ 'आतो युच्' (३-३-१२८) इति युच्। अङपवादः।

८ 'के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्धनि।' (भ.का. ७-८५)।

९ यकि, घुमास्था– (६-४-६६) इति ईत्वम्।

१० घञर्थे कविधानम्– स्थास्नापाहनिव्यधियुध्यर्थम्' (वा. ३-३-५८) इति कः। 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः। प्रतिष्ठतेऽस्मिन् इति प्रस्थः = सानुः। माहिकप्रस्थः - इन्द्रप्रस्थः - मालाप्रस्थः - एते देशविशेषः।

११ 'स्थागापापचो भावे' (३-२-९५) इति अङपवादः क्तिन्। 'द्यतिस्यतिमास्थामित् ति किति' (७-४-४०) इति इत्वम्।

१२ बाहुलकात् '–व्यवस्थायामसंज्ञायम्' (१-१-६१) इति निर्देशात् वा अङपि साधुः। एवं यत्रापवादेषु सङ्करो दृश्यते क्तिनः।

१३ अन्या च सा आस्था च अन्यदास्था। 'अषष्ठ्यतृतीयास्थस्या–' (६-३-९९) इति दुगागमः।

१४ 'समासे भीरोः स्थानम्' (८-३-८१) इति षत्वम्।

१५ 'न ल्यपि' (६-४-६९) इति ईत्वनिषेधः।

१६ 'अपादाने परीप्सायाम्' (३-४-५२) इति णमुल्। परीप्सा = त्वरा। 'एवं नाम त्वरते यदवश्यं कर्तव्यमपि नापक्षते, शय्योत्थानमात्रमाद्रियते' इति काशिका (३-४-५२)।

१७ 'स्थो णुः' (द.उ. १-१४७) इति णुप्रत्ययः। तिष्ठतीति स्थाणुः = ईश्वरः अचलद्रव्यं च।

१८ 'रास्नासास्नास्थूणावीणाः,(द.उ.५-५७) इति सूत्रेण धातोरूकारादेशः, न प्रत्ययः, णत्वम्, गुणाभावश्च निपात्यते। स्थूणा = स्तम्भः।

१९ 'अजिरशिशिरशिविलस्थिरस्फिरस्थविरखदिराः' (द.उ. ८-२७) इत्यनेन स्थाधातोः किरच् प्रत्ययः, ह्रस्वत्वम्, वुगागमश्च निपात्यते। स्थितो विश्रमात् = इति स्थविरः।

स्थिरम्[१]-गविष्ठिरः[२]-युधिष्ठिरः[३], स्थाली[४], स्थूरः[५], परमेष्ठी[६]।

**(९२९) म्ना—अभ्यासे**। (विचार करना, मनन करना)। सकर्म.। अनिट्। परस्मै.। **'पाघ्राध्मास्थाम्ना–'** (७-३-७८) इति मनादेशः। १ मेनति मेनतः। २ मम्नौ। ५ मनतु। ६ अमनत्। ७ मनेत्। इत्यादि 'ग्लायति' (९०३) वत्।

**कृत्सु**—म्नायकः-यिका, म्नापकः-पिका, मिम्नासकः-सिका, माम्नायकः-यिका, म्नाता-त्री, म्नायतिता-त्री, आमनन्[७]-न्ती, व्यत्यासनमानः,[८] निम्नम्,[९] द्युम्नम्,[१०] सुम्नम्,[११] आम्नायः[१२]। इत्यादि।

**(९३०) दाण्—दाने**। (देना)। **आ**—लेना, अङ्गीकार करना, **परि**—देना, सौंपना, **प्र**—देना, **व्या**—उघारना, खोलना, **समा**—पसन्द करके लेना।

| | | | | |
|---|---|---|---|---|
| लट् | यच्छति | यच्छतः | यच्छन्ति | प्र. |
| | यच्छसि | यच्छथः | यच्छथ | म. |
| | यच्छामि | यच्छावः | यच्छामः | उ. |
| लिट् | ददौ | ददतुः | ददुः | म. |
| | ददाथ-ददिथ | ददथुः | दद | म. |
| | ददौ | ददिव | ददिम | उ. |
| लुट् | दाता | दातारौ | दातारः | प्र. |
| | दातासि | दातास्थः | दातास्थ | म. |
| | दातास्मि | दातास्वः | दातास्मः | उ. |
| लृट् | दास्यति | दास्यतः | दास्यन्ति | प्र. |
| | दास्यसि | दास्यथः | दास्यथ | म. |
| | दास्यामि | दास्यावः | दास्यामः | उ. |

१ 'अजिरशि–' (द.उ. ८-२७) इति किरचि, आकारलोपश्च निपात्यते। तिष्ठतीति स्थिरम् = दृढम्।

२ 'गवियुधिभ्यां स्थिरः' (८-३-९५) इति षत्वम्।

३ 'त्रिदण्डकाषायकमण्डलूज्ज्वलो जपस्फुरदन्तपुटो युधिष्ठिरः।' (चम्पूभारते ६-६)।

४ 'स्थावतिभृजे–' (द.उ. १०-१) इति आलप्रत्ययः तिष्ठत्योदनादिकम् इति स्थालम् = भाजनविशेषः। स्थाली, 'गौरादिषु–' (४-१-४१) पाठात् स्त्रियां ङीप्।

५ 'स्थश्च' (द.उ. ८-३५) इति रक् प्रत्यये, ऊकारान्तादेशः। स्थूरः = उच्चः।

६ 'परमेकित्' (द.उ. ६-६१) इति स्थातोः इनि प्रत्ययः, स च कित्। कित्वादाकारलोपः। 'तत्पुरुषे कृति बहुलम्।' (६-३-१४) इत्यलुक्।' स्थास्थिन्स्थृणामिति वक्तव्यम् (८-३-९७) इति षत्वम्।

७ शतरि, शपि, 'पाघ्राध्मा–' (७-३-७८) इत्यादिना मनादेशे पररूपे च रूपमेवम्।

८ 'कर्तरि कर्मव्यतिहारे च' (१-३-१४) इति शानचि, शपि, मनादेशे च रूपमेवम्।

९ नीचभावमभ्यस्तीति निम्नम्। 'सुपि–' (३-२-४) इति योगविभागात्, 'आतश्चोपसर्गे' (३-१-१३९) इति वा कप्रत्यये, 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपे रूपमेवम्।

१० दिने आम्नायते इति द्युम्नन्। द्युशब्दो दिनवचनः। अत्रापि कप्रत्यये रूपम्।

११ सुतरामाम्नायते इति सुम्नम् = सुखम्। 'घञर्थे कविधानम्–' (वा. ३-३-५८) इति घञर्थे कप्रत्यये रूपम्।

१२ आ = समन्तात् म्नायते इति आम्नायः = वेदः। घञि 'आतो युक्–' (७-३-३३) इति युगागमे च रूपमेवम्।

| | | | | |
|---|---|---|---|---|
| लोट् | यच्छतु-यच्छतात् | यच्छताम् | यच्छन्तु | प्र. |
| | यच्छ | यच्छतम् | यच्छत | म. |
| | यच्छानि | यच्छाव | यच्छाम | उ. |
| लङ् | अयच्छत् | अयच्छताम् | अयच्छन् | प्र. |
| | अयच्छः | अयच्छतम् | अयच्छत | म. |
| | अयच्छम् | अयच्छाव | अयच्छाम | उ. |
| वि. लि. | यच्छेत् | यच्छेताम् | यच्छेयुः | प्र. |
| | यच्छेः | यच्छेतम् | यच्छेत | म. |
| | यच्छेयम् | यच्छेव | यच्छेम | उ. |
| आ. लि. | देयात् | देयास्ताम् | देयासुः | प्र. |
| | देयाः | देयास्तम् | देयास्त | म. |
| | देयासम् | देयास्व | देयास्म | उ. |
| लुङ् | अदात्[१] | अदाताम् | अदुः | प्र. |
| | अदाः | अदातम् | अदात | म. |
| | अदाम् | अदाव | अदाम | उ. |
| लृङ् | अदास्यत् | अदास्यताम् | अदास्यन् | प्र. |
| | अदास्यः | अदास्यतम् | अदास्यत | म. |
| | अदास्यम् | अदास्याव | अदास्याम | उ. |

**कर्मणि**—दीयते। **णिचि**—दापयति। **सनि**—दित्सति। **यङि**—देदीयते। **यङ्लुकि**—दादाति-दादेति। **कृत्सु**—दायकः-यिका, दापकः-पिका, दित्सिकः-त्सिका, देदीयकः-यिका, दाता-त्री, दापयिता-त्री, दित्सिता-त्री, देदीयिता-त्री, प्रणियच्छन्[२]-न्ती, (प्राणिना) सम्प्रयच्छन्, (ब्राह्मणीभ्यः) सम्प्रयच्छन्, दापयन्-दित्सन्-न्ती, दास्यन्-न्ती-ती, दापयिष्यन्-न्ती-ती, दित्सिष्यन्-न्ती-ती, (दास्यामालां) संयच्छमानः[३]-सम्प्रयच्छमानः, दापयमानः, (दास्या मालां) सन्दित्समानः[४], देदीयमानः, संदास्यमानः, दापयिष्यमाणः, संदीत्सिष्यमाणः, देदीयिष्यमाणः, धनदः-धनदौ-धनदाः, दत्तम्-दत्तः-दत्तवान्, मनसादत्ता, व्याप्तम्,[५] प्रत्तम्-नीत्तम्, सूत्तम्-मरुतः, अवदत्तम्-प्रदत्तम्-विदत्तम्-सुदत्तम्, अनुदत्तम्-अवदत्तम्-अनूत्तम्, दापितः, दित्सितः, देदीयितः-तवान्, प्रदः, दायः, इष्टदः[६]-नर्मदा, अब्दः, (गवां गोषु वा)

१ 'गातिस्था—' इति सिचो लुक्।

२ शतरि, 'पाघ्राध्मा—' (७-३-७८) इत्यादिना यथासम्भवं शिति प्रत्यये परतः यच्छादेशे, 'नेर्गदनदपतपदघुमा—' (८-४-१७) इत्यादिना णत्वे, च रूपम्।

३ 'दाणश्च सा चेत् चतुर्थ्यर्थे' (१-३-५५) इति शानच्। अनेनैव सूत्रेण चतुर्थ्यन्तस्य 'दास्या' इत्यस्य तृतीया च भवति। अत्र च, 'अशिष्टव्यवहार इति वक्तव्यम्' (वा. १-३-५५) इति वचनात् अशिष्टव्यवहार एवैवं भवति। अशिष्टव्यवहारः = शिष्टसम्मतो यो न भवति, सः।

४ 'पूर्ववत् सनः।' (१-३-६२) इति सन्नन्ताच्छानश्।

५ 'ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजजैर्व्यक्तकर्मा।' (अनर्घराघवे २-५४)।

६ 'तिष्ठान्निहाम्नायगमिष्टदं तमस्तौत् स्फुटेनाहृतधीः स्वरेण।' (धा.का. २-३३)

दायाद:[1], विश्वाप्रद:,[2] उपदा:, सुदामा, सुदीवा, गोदावरी, शर्मदा, शप्पदायी[3], साधुदायी, कर्णदायी, मोक्षदायी, ददिवान्, दाता, दारु:, दायको (व्रजति), भयदाय:,[4] कम्बलदाय:, गोदायो (वाव्रजति), दानीय:, (ब्राह्मण:) दाता, अवश्यंदायी, सहस्रंदायी, प्रदायी, यज्ञदत्त:, अन्तर्दि:, दापदित्सु:, देद्य:, दातव्यम्, दापयितव्यम्, दित्सितव्यम्, देदीयितव्यम्, दानीयम्, दथेलिमम्,[5] दापनीयम्, दित्सनीयम्, देदीयनीयम्, देयम्, दाप्यम्, दित्स्यम्, देदीय्यम्, दीपमान:, दाप्यमान:, दित्स्यमान:, देदीय्यमान:, दाय:, दाप:, दित्स:, देदीय:, दातुम्, दापयितुम्, दित्सितुम्, देदीयितुम्, दत्ति:, प्रदा, दापना, दित्सा, देदेया, प्रणिदानम्, दापनम्, दित्सनम्, देदीयनम्, दत्वा, दापयित्वा, दित्सित्वा, देदीयित्वा, प्रदाय, प्रदाप्य, प्रदित्स्य,प्रदेदीय्य।

**( ९३१ ) ह्वृ—कौटिल्ये।** (वक्र होना, टेढा होना)। अक.। अनिट्। परस्मै.। ह्वरति। जह्वार। 'स्वरति' वत्।

**( ९३२ ) स्वृ—शब्दोपतापयो:।** (शब्द करना, रोगी होना, दुख देना, सताना)। **सम्**—अच्छा शब्द करना। अकर्म.। वेट्[6]। परस्मै.। ऋकारान्त:।

| | | | | |
|---|---|---|---|---|
| लट् | स्वरति | स्वरत: | स्वरन्ति | प्र. |
| | स्वरसि | स्वरथ: | स्वरथ: | म. |
| | स्वरामि | स्वराव: | स्वराम: | उ. |
| लिट् | सस्वार | सस्वरतु:[7] | सस्वरु: | प्र. |
| | सस्वरिथ | सस्वरथु: | सस्वर | म. |
| | सस्वार-संस्वर | सस्वरिव[8] | सस्वरिम | उ. |
| लुट् | स्वर्ता | स्वतारौ | स्वर्तार: | इत्यादि। |

पक्षे—स्वरिता स्वरितारौ स्वरितार: इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृट् | स्वरिष्यति[9] | स्वरिष्यत: | स्वरिष्यन्ति | इत्यादि। |
| लोट् | स्वरतु-तात् | स्वरताम् | स्वरन्तु | इत्यादि। |
| लङ् | अस्वरत् | अस्वरताम् | अस्वरन् | इत्यादि। |

१ 'स्तिथ: प्राप्तस्य दायादै: भ्रातुर्ज्येष्ठस्य शासने।' (किरातार्जुनीय ११-४५)
२ 'विश्वासप्रदवेषोऽसौ पथिप्रज्ञ: समाहित:।' (भ.का. ६-९०)
३ 'कैलासशैलचलनागसि शापदायी नन्दीश्वर: स्वयमुपागत इत्यमंस्त।' (चम्पूरामायणे ५-४७)।
४ 'पूरयन्त: समाजग्मुर्भयदाया दिशो दश' (भ.का. ७-३०)।
५ 'केलिमर उपसंख्यानम्' (वा. ३-१-९६) इति केलिमर् प्रत्यय:। केलिमर् प्रत्ययस्य कित्वात् घुसंज्ञकस्यास्य धातो: 'दो दद्घो:' (७-४-४६) इति 'दथ्' इत्यादेश:। तत्र च 'सान्ते दोषो दीर्घत्वम् स्यात्, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्ति: निर्दोषत्वात् थान्तो ग्राह्य:।' (भाष्यम् ७-४-४६) इत्युक्तत्वात् थकारान्त आदेश इति ज्ञेयम्।
६ 'स्वरतिसूती–' (७-२-४४) ति वेट्।
७ 'ऋतश्च संयोगादेर्गुण:' ऋदन्तस्य संयोगादेरङ्गस्य गुण: स्याल्लिटि।
८ 'श्र्युक: किति (७-२-११) इति नित्यमनिटं 'स्वरतिसूती–' (७-२-४४) ति वैकल्पिकमिटं च बाधित्वा क्रादिनीयमान्नित्यमिट्।
९ ऋद्धनो: स्ये' (७-२-७०) इति नित्यमिट्।

| | | | | |
|---|---|---|---|---|
| वि. लि. | स्वरेत् | स्वरेताम् | स्वरेयुः | इत्यादि। |
| आ. लि. | स्वर्यात्[१] | स्वर्यास्ताम् | स्वर्यासुः | इत्यादि। |
| लुङ् | अस्वारीत् | अस्वारिष्टाम् | अस्वारिषुः | प्र. |
| | अस्वारीः | अस्वारिष्टम् | अस्वारिष्ट | म. |
| | अस्वारिषम् | अस्वारिष्व | अस्वारिष्म | उ. |

पक्षे—**प्र.** अस्वार्षीत् अस्वार्ष्टाम् अस्वार्षुः। **म.** अस्वार्षीः अस्वार्ष्टम् अस्वार्ष्ट। **उ.** अस्वार्षम् अस्वार्ष्व अस्वार्ष्व।

| | | | | |
|---|---|---|---|---|
| लृङ् | अस्वरिष्यत् | अस्वरिष्यताम् | अस्वरिष्यन् | प्र. |
| | अस्वरिष्यः | अस्वरिष्यतम् | अस्वरिष्यत | म. |
| | अस्वरिष्यम् | अस्वरिष्याव | अस्वरिष्याम | उ. |

**भावे**—स्वर्यते। **णिचि**—स्वारयति। **सनि**—सिस्वरिषति-सुसूर्षति। **यङि**—सास्वर्यते[२]। **यङ्लुकि**—सस्वरीति-सरिस्वरीति-सरीस्वरीति। संपूर्वः आत्मनेपदी-संस्वरते। २ संस्वरे। इत्यादि। **कृत्सु**—स्वारकः-रिका, सिस्वरिषकः-सुस्वूर्षकः-र्षिका, सेस्वीयकः-यिका, स्वरिता[३]-स्वर्ता-त्री, स्वारयिता-त्री, सिस्वरिषिता-त्री, सुस्वूर्षिता-त्री, सेस्वीयिता-त्री, स्वृतः-स्वृतम्, निस्वृत्, स्वरितव्यम्, स्वर्तव्यम्, निस्वारी, स्वरः,[४] अनुस्वारः,[५] स्वरितुम्-स्वर्तुम्, स्वरणः,[६] स्वरमाणः,[७] सिस्वरिषुः,[८] सूस्वूर्षुः, स्वरिष्यन्,[९] संस्वरमाणः,[१०] स्वरुः[११]।

**(९३३) स्मृ—चिन्तायाम्**। (स्मरण करना, याद करना), **वि**—भूलना, विस्मृत होना। सकर्म.। अनिट्। परस्मै.।

१ स्मरति। २ **प्र.** सस्मार सस्मरतुः, सस्मरुः। **म.** सस्मर्थः सस्मरथुः सस्मर। **उ.** सस्मार सस्मर सस्मरिव सस्मरिम। ३ स्मर्ता। ४ स्मरिष्यति। ५ स्मरतु। ६ अस्मरत्। ७ स्मरेत्। ८ स्मर्यात्। ९ अस्मार्षीत् अस्मार्ष्टाम् अस्मार्षुः। १० अस्मरिष्यत्।

**कर्मणि**—स्मर्यते। **णिचि**—स्मरयति-ते। **सनि**—सुस्मूर्षते। **यङि**—सास्मर्यते। **यङ्लुकि**—सस्मरीति-सरिस्मरीति-सरीस्मरीति। **कृत्सु**—स्मर्तव्यः, स्मरणीयः, स्मार्यः, स्मृतः,

१ 'गुणोर्तिसंयोगाद्योः' इति गुणः।
२ 'यङि च' (७-४-३०) अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि।
३ 'स्वरतिसूतिसूयति—' (७-२-४४) इतीड्विकल्पे रूपद्वयम्।
४ 'क्षुब्धस्वान्त—' (७-२-१८) इति सूत्रे 'स्वर' इति निर्देशात् अचि रूपमेवम्। (धातु.का. व्या. २-२३)
५ अनूपूर्वकात् अस्मात् घञ्प्रत्यये रूपम्।
६ 'चलनशब्दार्थात्—' (३-२-१४८) इति युचि रूपमेवम्।
७ 'ताच्छील्यवयोवचनशक्तिषु—' (३-२-१७८) इति यथासम्भवं चानश् प्रत्ययः।
८ 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृ—' (७-२-४९) इतीड्विकल्पे रूपमेवम्।
९ 'स्वरतिसूति—' (७-२-४४) इति वैकल्पिकमिटं बाधित्वा, 'ऋद्धनोः स्ये' (७-२-७०) इति नित्यमिडागमोऽत्र। एवं सम्पूर्वकादात्मनेपदेऽपि संस्वरिष्यभाणः इति नित्यमिडागमः।
१० 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' (वा. १-३-२९) इति सम्पूर्वकादात्मनेपदम्।
११ औणादिके (द.उ. १-९५) उप्रत्यये रूपमेवम्। स्वरुः = यूपे छिद्यमाने प्रथमं पतितः शकलः।

स्मृतिः, स्मरन्, स्मर्ता, स्मर्तुम्, स्मरणम्, स्मरः, स्मारकः-रिका, स्मृत्वा, विस्मृत्य। अपस्मारः = रोग। विशेषः, सस्मरिवान्, इत्यत्र **'ऋतश्च संयोगादेः'** (७-४-१०) इति गुणः। विस्मृतिः।

**( ९३४ ) ह्वृ—संवरणे**। सर्वं 'ह्वरति' (९३१) वत्।

**( ९३५ ) सृ—गतौ**। (जाना, सरकना)। **अनु**—पश्चात् गमन करना, पीछे-पीछे जाना, दूसरे को देखकर वैसा करना, **अप**—लौटना, पीछे जाना, **अभि**—चारों ओर फैलना, सहगमन करना, साथ जाना, **उप**—पास जाना, **प्र**—आगे जाना, फैलना, **वि**—आना, अलग-अलग जाना, **निस्**—निकलना, **उत्**—दूर होना। सकर्म.। अनिट्। परस्मै.।

१ सरति। २ **प्र.** ससार सस्रतुः सस्रुः। **म.** ससर्थ सस्रथुः सस्र। **उ.** ससार-ससर ससृव ससृम। ३ सर्ता। ४ सरिष्यति। ५ सरतु। ६ असरत्। ७ सरेत्। ८ स्रियात्। ९ असार्षीत्। १० असरिष्यत्।

**कृत्सु**—सरणीयम्, सरणम्, सरः, सारकः-रिका, सारी, सर्ता-त्री, सृतः, सृतिः, सर्तव्यम्, सर्तुम्, सृत्वा, उपसृत्य, सार्य्यम्, सरन्-न्ती, सरिष्यन्-न्ती, स्रियमाणः, सरिष्यमाणः, सिसीर्षकः[१]-र्षिका, सेस्रीयकः[२]-यिका, सरयिता-त्री, सिसीर्षिता-त्री, सेस्रीयिता-त्री, धावन्[३]-सरन्, सरकः,[४] सूर्यः,[५] पुरःसरः[६]-अग्रेसरः,[७] पूर्वसरः,[८] परिसारी,[९] विसारी,[१०] अनुसारी, प्रसारी,[११] उदासारी,[१२] प्रत्यासारी, सरणः,[१३] सृमरः,[१४] सारणा, सारणी, सृत्वरः[१५]-सृत्वरी, चन्दनसारः,[१६] अतीसारः,

१ 'सनन्ते' अज्झनगवां सनि (६-४-१६) इति दीर्घे, 'सन्यतः' (७-४-७९) इतीत्वे, रपरत्वे 'हलि च' (८-२-७७) इति दीर्घे, द्विर्वचने च रूपमेवम्।
२ यङन्ते 'रीङ् ऋतः' (७-४-२७) इति रीङादेशे रूपमेवम्।
३ शतरि 'पाघ्राध्मा—' (७-३-७८) इत्यादिना प्रकृते धावादेशे धावन् इति भवति।
४ 'सृल्वः समभिहारे वुन्' (३-१-१४९) इति वुन् प्रत्यये रूपमेवम्। साधु सरतीति सरकः। सरकः पानपात्रमिति केचित्।
५ 'राजसूयसूर्य—' (३-१-११४) इति क्यपि उत्वे च रूपम्। अथवा सुवते रुडागमे रूपमेवम्।
६ पुरः सरतीति 'पुरोऽग्रतोऽग्रेषु सर्तेः' (३-२-१८) इति टप्रत्यये रूपम्। एवं अग्रतः सरः, अग्रेसरः इत्यादौ। 'तत्पुरुषे कृति—' (६-३-१४) इति सप्तम्या अलुक्।
७ 'अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम।' (भ.का. ५-९७)।
८ पूर्वः सरतीति कतृवाचिनी पूर्वशब्दे उपपदे 'पूर्वे कर्तरि' (३-२-१९) इति टप्रत्ययो भवति। पूर्वं देशं सरतीति पूर्वसरः। अत्र कर्तृभिन्नार्थे अण्।
९ 'संपृचानुरुध—सृ—' (३-२-१४२) इत्यदिना तच्छीलादिषु कर्तृषु घिनुण् प्रत्ययो भवति। तेन रूपमेवम्।
१० विसरतीति-विसारी। णिनि प्रत्ययः। 'विसारिणो मत्स्ये' (५-४-१६) इति स्वार्थेऽण् प्रत्यये रूपम्। अणन्तस्यैव प्रयोगः।
११ प्रशब्द उपपदे। 'प्रे लपसृ—' (३-२-१४५) इति धिनुण् प्रत्ययः।
१२ 'उत्प्रतिभ्यामाङि सर्तेः—' (वा. ३-२-७८) इति णिनि प्रत्यये रूपमेवम्। एवं प्रत्यासारी इत्यादावपि।
१३ 'जुचङ्क्रम्यदन्द्रम्यसृ—' (३-२-१५०) इति तच्छीलादिषु कर्तृषु युच् प्रत्ययः।
१४ 'सृघस्यदः क्मरच्' (३-२-१६०) इति तच्छीलादिषु कर्तृषु क्मरच् प्रत्यये रूपमेवम्।
१५ 'इण् नशिजिसर्तिभ्यः—' (३-२-१६३) इति तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययः।
१६ 'सृ स्थिरे' (३-३-१७) इति स्थिरे कर्तरि घञ् प्रत्ययः। 'स्थिर इति कालान्तरस्थायी पदार्थ उच्यते। स चिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्ता' इति काशिकायाम् (३-३-१७) इति घञ्। 'उपसर्गस्य घञि—' (६-३-१२२) इति दीर्घश्च। अतिसारः = व्याधि। विविधं सरतीति विसारो = मत्स्यः। सारो बलम्। खतिरं सारयतीति खदिसारः, अन्तर्भावितण्यर्थोऽत्रायम् धातुः इति भाष्ये (३-३-१७) स्पष्टम्।

विसारः, उपसरो[१] गवाम्, उपसर्या[२] गौ, आसार,[३] सारः,[४] प्रसारः, संसारः, परिसर्या,[५] सस्रिः,[६] सारथिः,[७] सृकः,[८] सरण्डः,[९] सृणीकः,[१०] सृमाकुः,[११] सरीमा,[१२] अपसरसः,[१३] सरित्,[१४] सरणिः,[१५] सरट्,[१६] सरटः, सरयुः[१७]-सरयू।

**(९३६) ऋ—गति प्रापणयोः।** (जाना, सम्पादन करना, प्राप्त करना, मिलाना पहुंचाना)। सकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | ऋच्छति[१८] | ऋच्छतः | ऋच्छन्ति | प्र. |
| | ऋच्छसि | ऋच्छतः | ऋच्छथ | म. |
| | ऋच्छामि | ऋच्छावः | ऋच्छामः | उ. |
| लिट् | आर | आरतुः | आरुः | प्र. |
| | आरिथ[१९] | आरथुः | आर | म. |
| | आर | आरिव[२०] | आरिम | उ. |
| लुट् | अर्ता | अर्तारौ | अर्तारः | प्र. |
| | अर्तासि | अर्तास्थः | अर्तास्थ | म. |
| | अर्तास्मि | अर्तास्वः | अर्तास्मः | उ. |
| लृट् | अरिष्यति | अरिष्यतः | अरिष्यन्ति | इत्यादि। |
| लोट् | ऋच्छतु-ऋच्छतात् | ऋछताम् | ऋच्छन्तु | इत्यादि। |

१ 'प्रजने सर्तेः' (३-३-७१) इत्यप्प्रत्ययः। उपसरो गवाम् = प्रथमं स्त्रीगविषु पुंगवानां गर्भाधानाय नियोजनम् उपसरणमुच्यते।
२ 'उपसर्या काल्या प्रजने' (३-१-१०४) इत्युपपूर्वात् यत्प्रत्ययान्तो निपात्यते।
३ 'पुंसि संज्ञायां घः प्रायेण' (३-३-११८) इति करणाधिकरणयोर्घप्रत्ययः।
४ 'भावे' (३-३-१८), 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इति भावे वाच्ये कर्मवर्जिते कारके संज्ञायां विषये च घञ् प्रत्यये रूपम्।
५ परितः सरणः परिसर्या। 'इच्छा' (३-३०१०१) इत्यत्र परिचर्या परिसर्या–' (वा. ३-३-१०१) इति स्त्रियां भावे शे यकि टापि च रूपमेवम्। गुणोऽपि निपात्यते।
६ 'भाषाया धाञ् कृञ्सृ–' (वा. ३-३-१७१) इति तच्छीलादिषु कर्तृषु किकिनौ, लिड्वद्भावात् द्विवचनं च।
७ औणादिके (द.उ. १-४३) णथिन् प्रत्यये रूपमेवम्। णित्वाद् उपधावृद्धिः।
८ 'सृवृ–' (द.उ. ३-१९) इति कप्रत्ययः। किञ्च भवति। सृकः = वायुः।
९ औणादिके (द.उ. ५९) इति अण्डन् प्रत्यये रूपमेवम्। सरण्डः = वायुः भूतसंघातश्च।
१० औणादिके (द.उ. ३-४२) ईकन् प्रत्यये नुगागमे च रूपमेवम्। किञ्च भवति। सृणीकः = वायुः।
११ औणादिके (द.उ. १-१५१) काकुप्रत्यये मुमागमे च रूपमेवम्। सृमाकुः = मृगजातिः।
१२ 'हृमृघृसृ–' (द.उ. ६-७६) इति ईमनिन् प्रत्ययः च्छन्दसि विषये। सरीमा = कालः।
१३ अप्छब्द उपपदे धातोः असुन् प्रत्यये (द.उ. ९-१०१) रूपमेवम्। अद्भ्यः सृता इत्यप्सरसः = देवयोषितः।
१४ 'हृसृ–' (द.उ. ६-३) इति इति प्रत्यये रूपम्।
१५ 'अर्तिसृ–' (द.उ. १-२) इत्यनि प्रत्यये णत्वे च रूपमेवम्। सरणिः = ईषद्गतिः पन्थाः।
१६ औणादिके (द.उ. ५-१०) अडिप्रत्यये रूपम्।
१७ औणादिके (द.उ. १-१३६) अयुप्रत्यये रूपम्, सरति सिसर्ति वा सरयुः = नदी वायुर्वा। सरयूः = इति दीर्घान्तोऽपि।
१८ 'पाघ्राध्मा–' (३-१-१३७) इत्यादिना अच्छादेशः।
१९ 'इडत्यर्तिव्ययतीनाम्' (७-२-६६) इति नित्यमिट्।
२० क्रादिनियमान्नित्यमिट्।

| | | | | |
|---|---|---|---|---|
| लङ् | आर्च्छत् | आर्च्छताम् | अर्च्छन् | प्र. |
| | आर्च्छः | आर्च्छतम् | आर्च्छत | म. |
| | आर्च्छम् | आर्च्छाव | आर्च्छाव | उ. |
| वि. लि. | ऋच्छेत् | ऋच्छेताम् | ऋच्छेयुः | प्र. |
| | ऋछेः | ऋच्छेतम् | ऋच्छेत | म. |
| | ऋच्छेयम् | इच्छेव | ऋच्छेम | उ. |
| आ. लि. | अर्यात् | अर्यास्ताम् | अर्यासुः | प्र. |
| | अर्याः | अर्यास्तम् | अर्यास्त | म. |
| | अर्यासम् | अर्यास्व | अर्यास्म | उ. |
| लुङ् | आर्षीत् | आर्ष्टाम् | आर्षुः | प्र. |
| | आर्षीः | आर्ष्टम् | आर्ष्ट | म. |
| | आर्षम् | आर्ष्व | आर्ष्म | उ. |
| लृङ् | आरिष्यत् | आरिष्यताम् | आरिष्यन् | प्र. |
| | आरिष्यः | आरिष्यतम् | आरिष्यत | म. |
| | आरिष्यम् | आरिष्याव | आरिष्याम | उ. |

समृच्छते[1]। **कर्मणि**—अर्यते। २ आरे। ९ आरि। **णिचि**—अर्पयति[2]-ते। २ अपर्याञ्चक्रे। ९ आर्पिपत्। **सनि**—आरिरिषति[3]। **यङि**—अरार्यते। **यङ्लुकि**—अररीति-अरर्ति-अरियर्ति। इत्यादि। कृत्सु—आरकः[4]-रिका, अर्पकः[5]-र्पिका, अरिरिषकः[6]-षिका, अरारकः[7]-रिका, अर्ता-त्री, अर्पयिता-त्री, ऋच्छन्[8]-न्ती, अर्पयन्-न्ती, अरिरिषन्-न्ती, अरिष्यन्[9]-न्ती-ती, अर्पयिष्यन्-न्ती-ती, समृच्छमानः[10], अर्पयमानः, समरिष्यमाणः, अर्पयिष्यमाणः, समृत्[11]-समृतौ-समृतः, ऋतम्-ऋतः[12]-ऋतवान्,

१ 'समो गम्यृच्छि' (१-३-२९) इत्यात्मनेपदम्।
२ 'अर्तिह्रीब्ली–' (७-३-३६) इत्यादिना पुक्।
३ 'स्मिपूङ्रञ्ज्वशां सनि' (७-३-७४) इति इटि रिस् शब्दस्य द्वित्वे हलादिशेषे षत्वे च रूपम्।
४ 'अचो ञ्णिति' (७-२-११५) इति वृद्धौ, 'उरण् रपरः' (१-१-५१) रपरत्वे रूपम्।
५ 'अर्तिह्रीब्ली–' (७-३-३६) इति णौ पुगागमः। 'पुगन्तलघूपदस्य च' (७-१-८६) इति गुणे रूपम्। एवं सर्वत्र ण्यन्ते ज्ञेयम्।
६ 'स्मिपूङ्रञ्जवशां सनि' (७-२-७४) इति सन इडागमः। गुणः। 'अजादेर्द्वितीयस्य' (६-१-२) इति 'रिस्' इत्यस्य द्वित्वम्। एवं सर्वत्र सन्नन्ते बोध्यम्।
७ 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' (वा. ३-१-२२) इति यङ्। 'यङि च' (७-४-३०) इति गुणे, द्वितीयस्यैकाचः 'र्य' इत्यस्य 'सन्यङोः' (६-१-९) इति द्वित्वे 'हलादिः शेषे' (७-४-६०), 'दीर्घोऽकितः' (७-४-८३) इत्यभ्यासस्य दीर्घे च रूपम्। 'न न्द्राः–' (६-१-३) इति रेफस्य द्वित्वनिषेधस्तु न भवति– 'अरार्यते' इति भाष्योदाहरणात्। एवं सर्वत्र यङन्ते बोध्यम्।
८ शपि, 'पाघ्राध्मा–' (७-३-७८) इत्यादिना ऋच्छादेशः।
९ 'ऋद्धनोः स्ये' (७-२-२०) इति स्यप्रत्ययस्येडागमः।
१० अस्याकर्मकत्वे 'समो गम्यृच्छिभ्याम्' (१-३-२९) इति शानच् प्रत्ययो भवति।
११ 'ह्रस्वस्य पिति कृति–' (६-१-६९) इति तुगागमः।
१२ धातोर्गत्यर्थकत्वात् 'गत्यर्थाकर्मक–' (३-४-७२) इति, 'क्तोऽधिकरणे च–' (३-४-७६) इति च कर्तरि अधिकरणे कर्मणि च क्तप्रत्ययः।

सुखार्तः,[१] ऋणम्,[२] प्रार्णम्[३]-वत्सतरार्णम्-कम्बलार्णम्-वत्सनार्णम्-दशार्णः (देशः) दशार्णा (नदी) ऋणार्णम्, उत्तमर्णः-अधमर्णः, अर्पितम्-तः, अरः, आरिवान्ः,[४] अर्वा,[५] अरित्रम्,[६] अर्पः, अर्तव्यम्, अर्पयितव्यम्, अरणीयम्, अर्पणीयम्, अरिरिषणीयम्, अरारणीयम्, अर्यः[७]-अर्यी-अर्या-अर्याणी, आर्यः-आर्या, अर्प्यम्, अर्यमाणः,[८] अर्प्यमाणः आरः, अर्पः, अरिरिषः, अरारः, अर्तुम्, अर्पयितुम्, ऋतिः, आर्तिः,[९] आरा,[१०] अर्पणा, अरिरिषा, अरणम्, अर्पणम्, ऋत्वा, अर्पयित्वा, समृत्य, समर्प्य, अरुः,[११] अरणिः,[१२] अरुणः,[१३] अरण्यम्,[१४] अर्थः,[१५] अर्भकः,[१६] इरिणम्,[१७] ऋतुः[१८]।

**(९३७) गृ—सेचने**। (सींचना, गीला करना)। सकर्म.। अनिट्। परस्मै.। ऋकारान्तः। गरति। जगार जग्रतुः। गर्ता। 'सरति' (९३५) वत्।

**(९३८) घृ—सेचने**। (सींचना, गीला करना)। सक.। अनि.। पर.। अभिघरति। इत्यादि 'सरति' (९३५) वत्।

**(९३९) ध्वृ—हूर्च्छने**। (टेढा करना, नवाना, वक्र करना)। अकर्म.। अनिट्। परस्मै.। ऋकारान्तः, ध्वरति। 'स्मरति' (९३५) वत्।

---

१ 'ऋते च तृतीया समासे' (वा. ६-१-८९) इति वृद्धिः।

२ 'ऋणमाधमर्ण्ये' (८-२-६०) इति निष्ठातकारस्य नत्वम् आधमर्ण्यव्यवहारे निपात्यते' ऋणं नाम अन्यदीयं द्रव्यं गृहीतं इयता कालेन इयत्या वृद्ध प्रतिदीयते— इति संविद्रपम्।' इति वालमनोरमा। अन्यत्र ऋतम्। सत्यमित्यर्थः।

३ 'प्रवत्सतरकम्बलवसनदशार्णानाम् ऋणे' (वा. ६-१-८९) इति वृद्धौ साधुः। एवं वत्सतरार्णमित्यादिकम्।

४ लिटः क्वस्वादेशे द्वित्वे 'वस्वेकाजाद्घसाम्' (७-२-६७) इति इडागमे च रूपम्।

५ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति वनिप्। अर्वा = सूर्योऽश्वश्च।

६ 'अर्तिलूधू—' (३-२-१८४) इत्यनेन करणे इत्रप्रत्ययः। 'अनित्रं केनिपातकः' इत्यमरः। ऋच्छत्यनेनेत्यरित्रम् = नौकाचालनदण्डविशेषः।

७ 'अर्यः स्वामिवैश्ययोः' (३-१-१०३) इति ण्यपवादे यत् प्रत्ययः। 'अर्यक्षत्रियाभ्यां वा स्वार्थे' (वा. ४-१-४०) इति आनुक् ङीषा सह विकल्पितः। तदानीं अर्याणी अर्या इति रूपद्वयम्। अर्यी इति तु प्रयोगे ज्ञेयम्। स्वामिवैश्याभ्यामन्यत्र आर्यः इति भवति। पूज्य इत्यर्थः। अर्याणी स्वयमर्यास्यात् स्यादर्यी क्षत्रियी तथा' इत्यमरः।

८ 'गुणोऽर्ति संयोगाद्योः (७-४-२९) इति यकि गुणः।

९ आङः ऋतिशब्देन समासः 'उपसर्गादृतिधातोः' (६-४-९१) इति वृद्धिः।

१० 'आरा शस्त्रायाम्' (गणसूत्रं मिदादौ ३-३-१०४) इति पाठात् वृद्धि अङ् च।

११ औणादिके (द.उ. ९-३९) उसि प्रत्यये गुणः। अरुः = प्राणः आदित्यो वा।

१२ औणादिके (द.उ. १-२) अनिप्रत्यये गुणः। अरणिः = अग्नियोनिः काष्ठविशेषः।

१३ औणादिके (द.उ. ५-५९) उनन् प्रत्ययः। अरुणः = वैणतेयः अनूरुः सूर्यसारथिः।

१४ कर्मणि औणादिकः (द.उ. ८-६) अन्य प्रत्ययः। अरण्यम् = निर्जनस्थानम्।

१५ औणादिकः (द.उ. ६-२९) थन् प्रत्ययः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः।

१६ औणादिके (द.उ. ३-५०) अक प्रत्यये भुगागमः वयसि वाच्ये। अर्भकः = बालः।

१७ औणिदिकः (द.उ. ५-१७) इनन् प्रत्ययः। तत्सन्नियोगेन प्रकृतेः इः आदेशः। 'उरण् रपरः' (१-१-५१) इति रपरत्वम्। इरिणम् = अल्पोदकतृणस्थानम्।

१८ औणादिकः (द.उ. १-१२४) तु प्रत्ययः। अस्य च कित्त्वम्। तेन न गुणः। ऋतुः = वसन्तादिः कालविशेषः, स्त्रीणां पुष्पकालः।

**(९४०) स्रु—गतौ।** (जाना, टपकना, झरना, चूना, बहना)। अकर्म.। अनिट्। पर.।

१ स्रवति स्रवतः स्रवन्ति। २ **प्र.** सुस्राव सुस्रुवतुः सुस्रुवुः। **म.** सुस्रोथ-सुस्रुवथुः सुस्रुव। **उ.** सुस्राव-सुस्रव सुस्रुव सुस्रुम। ३ **प्र.** स्रोता स्रोतारौ स्रोतारः। **म.** स्रोतासि स्रोतास्थः स्रोतास्थ। **उ.** स्रोतास्मि स्रोतास्वः स्रोतास्मः। ४ स्रोष्यति स्रोष्यतः स्रोष्यन्ति। ५ **प्र.** स्रवतु-स्रवतात् स्रवताम् स्रवन्तु। **म.** स्रव-स्रवतात् स्रवतम् स्रवत। **उ.** स्रवाणि स्रवाव स्रवाम। ६ **प्र.** अस्रवत् अस्रवताम् अस्रवन्। **म.** अस्रवः अस्रवतम् अस्रवत। **उ.** अस्रवम् अस्रवाव अस्रवाम। ७ **प्र.** स्रवेत् स्रवेताम् स्रवेयुः। **म.** स्रवेः स्रवेतम् स्रवेत। **उ.** स्रवेयम् स्रवेव स्रवेम। ८ **प्र.** स्रूयात् स्रूयास्ताम् स्रूयासुः। **म.** स्रूयाः स्रूयास्तम् स्रूयास्त। **उ.** स्रूयासम् स्रूयास्व स्रूयास्म। ९ **प्र.** असुस्रुवत्, असुस्रुवताम् असुस्रुवन्। **म.** असुस्रुवः असुस्रुवतम् असुस्रवत। **उ.** असुस्रुवम् असुस्रुवाव असुस्रुवाम। १० **प्र.** अस्रोष्यत् अस्रोष्यताम् अस्रोष्यन्। **म.** अस्रोष्यः अस्रोष्यतम् अस्रोष्यत। **उ.** अस्रोष्यम् अस्रोष्याव अस्रोष्याम।

**भावे**—स्रूयते। **णिचि**—स्रावयति। ९ असिस्रवत्-असुस्रवत्। **सनि**—सुस्रूषति। **यङि**—सोस्रूयते। **यङ्लुकि**—सोस्रोति-सोस्रवीति। **कृत्सु**—स्रावकः-विका, सुस्रूषकः-षिका, सोस्रूयकः-यिका, स्रोता-त्री, स्रावयिता-त्री, सुस्रूषिता-त्री, सोस्रूयिता-त्री, स्रवन्-न्ती, स्रावयन्-न्ती, स्रोष्यन्-न्ती, स्रावयिष्यन्-न्ती-ती, सोस्रूयमाणः, स्रुतम्-तः-तवान्, स्रवः, स्रोतव्यम्, स्रावयितव्यम्, स्रवणीयम्, स्रावणीयम्, स्रव्यम्, स्राव्यम्, स्रोतुम्, स्रावयितुम्, स्रुत्वा, स्रावयित्वा, स्रवणम्, प्रस्रुत्य, स्रूः, स्रवः, आस्रावः, संस्रावः, प्रस्रावी, स्रुत्, स्रुतिः, परिस्रुत्, सुस्रावयिषुः-सिस्रावयिषुः, स्रुक्-स्रुवः, स्रोतः।

**(९४१) षु—प्रसवैश्वर्ययोः।** (उत्पन्न करना, पैदा करना, गर्भ धारण करना, अद्भुत सामर्थ्य या अमानवी पराक्रम होना, **प्र**—उत्पन्न करना, प्रसूत होना, जनना, गर्भ धारण करना)। आद्ये सकर्म.। द्वितीये त्वकर्मकः। अनिट् परस्मै.।

१ सवति सवतः सवन्ति। पक्षे–**प्र.** सौति सुतः सुवन्ति। **म.** सौषि सुथः सुथ। **उ.** सौमि सुवः सुमः। २ **प्र.** सुषाव सुषवतुः सुषुवुः। **म.** सुषुविथ सुषोथ सुषुवथुः सुषुव। **उ.** सुषाव-सुषव सुषुविव सुषुविम। ३ सोता। ४ सोष्यति। ५ सौतु-सुतात्। ६ **प्र** असौत् असूताम् असुवन्। **म.** असौः असुतम् असुत। **उ.** असवम् असुव असुम। ७ **प्र** सूयात् सूयाताम् सुयुः। **म.** सूयाः सूयातम् सुयात। **उ.** सुयाम् सुयाव सुयाम। ८ **प्र.** सूयात् सूयास्ताम् सूयासुः। **म.** सूयाः सूयास्तम् सूयास्त। **उ.** सूयासम् सूयास्व सूयास्म। ९ **प्र.** आसावीत् असाविष्टाम् असाविषुः। **म.** असावीः असाविष्टम् असाविष्ट। **उ.** असाविषम् असाविष्म असाविष्म। पक्षे—असौषीत् असौष्टाम् असौषुः। १० असौष्यत् असोष्यताम् असोष्यन्।

**कर्मणि**—सूयते। **णिचि**—सावयति-ते। **सनि**—सुसूषति। **यङि**—सोषूयते। **यङ्लुकि**—सोषोति-सोषवीति। **कृत्सु**— सोतव्यम्, सवनीयम्, साव्यः-सव्यः, सुतः, सवन्, सोतुम्, सवनम्, सुत्वा, अभिषुत्य।

**( ९४२ ) श्रु—श्रवणे**। (सुनना, श्रवण करना)। प्रतिसंश्रृणुते– कबूल करना, मान्य करना, विशृणोति– कीर्तिमान् होना, प्रख्यात होना)। सकर्म.। अनिट्।परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | शृणोति | शृणुतः | शृण्वन्ति | प्र. |
| | शृणोषि | शृणुथः | शृणुथ | म. |
| | शृणोमि | शृणुवः-ण्वः | शृणुम-शृण्मः | उ. |
| लिट् | शुश्राव | शुश्रुवतुः | शुश्रुवुः | प्र. |
| | शुश्रोथ | शुश्रवथुः | शुश्रुव | म. |
| | शुश्राव-शुश्रव | शुश्रुव | शुश्रुम | उ. |
| लुट् | श्रोता | श्रोतारौ | श्रोतारः | प्र. |
| | श्रोतासि | श्रोतास्थः | श्रोतास्थ | म. |
| | श्रोतास्मि | श्रोतास्वः | श्रोतास्मः | उ. |
| लृट् | श्रोष्यति | श्रोष्यतः | श्रोष्यन्ति | प्र. |
| | श्रोष्यसि | श्रोष्यथः | श्रोष्यथ | म. |
| | श्रोष्यामि | श्रोष्यावः | श्रोष्यामः | उ. |
| लोट् | शृणोतु-शृणुतात् | शृणुताम् | शृण्वन्तु | प्र. |
| | शृणु-शृणुतात् | शृणुतम् | शृणुत | म. |
| | शृणवानि | शृणवाव | शृणवाम | उ. |
| लङ् | अशृणोत् | अशृणुताम् | अशृण्वन् | प्र. |
| | अशृणोः | अशृणुतम् | अशृणुत | म. |
| | अशृणवम् | अशृणुव-ण्व | अशृणुम-ण्म | उ. |
| वि. लि. | शृणुयात् | शृणुयाताम् | शृणुयुः | प्र. |
| | शृणुयाः | शृणुयातम् | शृणुयात | म. |
| | शृणुयाम् | शृणुयाव | शृणुयाम | उ. |
| आ. लि. | श्रूयात् | श्रूयास्ताम् | श्रूयासुः | प्र. |
| | श्रूयाः | श्रूयास्तम् | श्रूयास्त | म. |
| | श्रूयासम् | श्रूयास्व | श्रूयास्म | उ. |
| लुङ् | अश्रौषीत् | अश्रौष्टाम् | अश्रौषुः | प्र. |
| | अश्रौषीः | अश्रौष्टम् | अश्रौष्ट | म. |
| | अश्रौषम् | अश्रौष्व | अश्रौष्म | उ. |
| लृङ् | अश्रोष्यत् | अश्रोष्यताम् | अश्रोष्यन् | प्र. |
| | अश्रोष्यः | अश्रोष्यतम् | अश्रोष्यत | म. |
| | अश्रोष्यम् | अश्रोष्याव | अश्रोष्याम | उ. |

**कर्मणि**—श्रूयते। २ शुश्रुवे। ९ अश्रावि। **णिचि**—श्रावयति-ते। ९ अशुश्रवत्-अशिश्रवत्। **सनि**—शुश्रूषते। **यङि**—शोश्रूयते। **यङ्लुकि**—शोश्रवीति-शोश्रोति। **कृत्सु**—श्रावकः-विका, शुश्रूषकः-षिका, शोश्रूयकः-यिका, श्रोता-त्री, श्रावयिता-त्री, शुश्रूषिता-त्री,

शोश्रूयिता-त्री, श्रावयन्-न्ती, श्रोष्यन्-न्ती-ती, श्रुतम्-तः-तवान्, श्रोतव्यम्- श्रावयितव्यम्, श्रवणीयम्, श्रावणीयम्, श्रव्यम्, श्राव्यम्, श्रूयमाणः, श्राव्यमाणः, श्रोतुम्, श्रावयितुम्, श्रवणम्,[१] श्रावणम्, श्रुत्वा, श्रावयित्वा, विश्रुत्य, विश्राव्य, शृण्वन्[२]-न्ती, संशृण्वानः,[३] शुश्रुषमाणः,[४] प्रतिशुश्रुषन्[५]-आशुश्रूषन्, देवतं[६] प्रतिशुश्रूषमाणः, शुश्रुवान्,[७] देवदत्ताय[८] गां प्रतिशृण्वन्-आंशृण्वन् वा, निश्रावी,[९] विश्रावः[१०], प्रतिश्रुत्,[११] श्रुतिः,[१२] सुश्रुतः,[१३] शिश्रावयिषुः[१४]-शुश्रावयिषुः, श्रवणः,[१५] श्रोत्रम्,[१६] श्रवः[१७]-विश्रवः-वैश्रवणः-रावणः, श्रोणिः[१८]।

(९४३) **ध्रु—स्थैर्ये**। (अचल होना, स्थिर होना)। अकर्म.। अनिट्। पर.। ध्रवति। २ दुध्राव। म. दुध्रविथ-दुध्रोथ। दुध्रिविव। 'स्रवति' (९४०) वत्।

(९४४) **दु—गतौ**। (जाना) सक.। अनिट्। पर.। उकारान्तः। १ दवति। २ **प्र.** दुदाव। **म.** दुदोथ-दुदविथ। ३ दोता। ४ दोष्यति। ८ दूयात्। ९ अदोषीत्। दवः, दूतः दूत्यम्।

(९४५) **द्रु—गतौ**। (जाना)। सकर्म.। अनिट्। पर.। उकारान्तः। द्रवति। इत्यादि 'स्रवति' (९४०) वत्। **वि**—विद्रवे, पलायने च = विद्रवति। **उप**—उपद्रवे—उपद्रवति।

---

१ श्रूयतेऽनेनेति संज्ञायां ल्युटि श्रवणम् = श्रोत्रम् वेदो वा।

२ शतरि 'श्रुवः श्रृ च' (३-१-७४) इति श्नु प्रत्ययः, तत्सन्नियोगेन 'श्रृ' इति प्रकृतेरादेशश्च। 'सविधातुकमपित्' (१-२-४) इति श्नुप्रत्ययस्य ङिद्वद्भावात् 'क्ङिति च' (१-१-५) इति गुणनिषेधः। अत्र वदन्ति— भ्वादिषु पठितत्वादस्य धातोः, श्रवति इत्यनेकत्र ऋग्वेदादिषु प्रयोगश्रवणात् च पूर्वं श्रु धातुः श्रवति इत्याद्याकारेण भौवादिकरूपेणापि युक्त इत्यूह्यते, इति। विद्वान्सः प्रमाणमत्र।

३ 'अर्तिश्रुदृशिभ्यश्च' (वा. १-३-२९) इत्यनेन समुपसृष्टादस्मात् आत्मनेपदम्।

४ 'ज्ञाश्रुस्मृदृशां सनः' (१-३-५४) इति सन्नन्तात् नित्यमात्मनेपदम्।

५ 'प्रत्याङ्भ्यां श्रुवः–' (१-३-५९) इति आत्मनेपदनिषेधात् यथा सम्भवं परस्मैपदमत्रेति बोध्यम्।

६ 'प्रत्याङ्भ्यां–' (१-३-५९) इत्यत्र उपसर्गयोरेव ग्रहणम्, प्रकरणात्। अतश्च कर्मप्रवचनीययोः प्रत्याङोग्रहणे तु आत्मनेपदमपि भवति।

७ 'भाषायां सदवसश्रुवः' (३-२-१०८) इति लिटः क्वसुः। द्विर्वचनादिकम्।

८ 'प्रत्याङ्भ्या श्रुवः पूर्वस्य कर्ता' (१-३-५९) इति प्रत्याङ्भ्यामुसृष्टस्य शृणोतेः प्रयोगे देवदत्तस्य सम्प्रदानत्वात् चतुर्थी इति बोध्यम्।

९ 'रक्षश्रुवसवपसां नौ' (ग.सू. ३-१-१३४) इति ग्रह्यादिपाठात् णिनिप्रत्ययः।

१० 'वौ शुश्रुवः' (३-३-२५) इति घञ्। उवर्णान्तत्वलक्षणापोऽपवादः।

११ प्रतिश्रूयते इति प्रतिश्रुत् = प्रतिध्वनिः। स्त्रियां भावे सम्पदादित्वात् (वा. ३-३-१०८) क्विप्। तुक्।

१२ श्रूयतेऽनया इति श्रुतिः = वेदः, श्रोत्रम् वा। 'श्रुयजीषिस्तुभ्यः करणे' (वा. ३-३-९४) इति स्त्रियां ल्युडपवादः क्तिन्।

१३ 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां कर्तरि क्तः। सुश्रुतः = वैधशास्त्रप्रवर्तकः ऋषिविशेषः।

१४ ण्यन्तात् सनि, 'सनाशंसभिक्ष उः' (३-२-१६८) इति ताच्छीलिके उप्रत्यये, 'स्रवतिशृणोति–' (७-४-८१) इत्यादिना अवर्णपरकत्वात् अभ्यासस्येकारविकल्पः।

१५ नन्द्यादित्वात् (ग.सू. ३-१-१३४) कर्तरिल्युः। श्रवणः = नक्षत्रविशेषः। बहुश्रुतः अश्वत्थवृक्षो वा।

१६ औणादिके (द.उ. ९-८४) ष्ट्रन् प्रत्यये रूपमेवम्। श्रूयतनेनेति श्रोत्रम् = श्रवणम्।

१७ औणादिके (द. उ. ९-४९) असुन् प्रत्यये रूपमेवम्। विपूर्वकादस्मात् अप्रत्ययार्थे 'विश्रवसोविश्रवणरवणौ' (ग.सू. ४-१-११२) इति शिवदिपाठात् प्रकृते विश्रवणरवणादेशौ 'तौ च यक्षराजे रक्षोविशेषे च व्यवस्थितौ। तेन वैश्रवणः कुवेरः। रावणः = रक्षोविशेषः लङ्काधिपतिः।

१८ 'वहिश्रियुश्रु–' (द.उ. १-२१) इत्यादिना निप्रत्ययः। श्रोणिः = कटिपश्चाद्भागः।

**(९४६) जि—अभिनवे, जये च।** अभिनवो न्यूनीकरणं भवनं वा (नवीनीकरण होना। सर्वोत्कर्ष से रहना, सबसे बढ़ कर होना, जीतना, पराभव करना)। **वि**—(आ) जीतना, **परा**—पराजित होना, पराजय करना। अकर्म.। अनि.। परस्मै.। जयति। जिगाय। 'जयति' (५६१) वत्।

**(९४७) ज्रि—अभिभवे च।** आद्ये कर्मकः। द्वितीयःसकर्म.। अनि.। पर.। ज्रयति। इत्यादि 'जयति' (५६१) वत्।

**(९४८) ष्मिङ्—इषद्धसने।** (मुसकराना, मन्द हास्य करना)। **वि**—आश्चर्य करना। अकर्म.। अनिट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | स्मयते | स्मयेते | स्मयन्ते | प्र. |
| | स्मयसे | स्मयेथे | स्मयध्वे | म. |
| | स्मये | स्मयावहे | स्मयामहे | उ. |
| लिट् | सिस्मये | सिस्मियाते | सिस्मियिरे | प्र. |
| | सिस्मियिषे | सिस्मियाथे | सिस्मियिढ्वे-ध्वे | म. |
| | सिस्मियिये | सिस्मियिवहे | सिस्मियिमहे | उ. |
| लुङ् | स्मेता | स्मेतारौ | स्मेतारः | प्र. |
| | स्मेतासे | स्मेतासाथे | स्मेताध्वे | म. |
| | स्मेताहे | स्मेतास्वहे | स्मेतास्महे | उ. |
| लृट् | स्मेष्यते | स्मेष्येते | स्मेष्यन्ते | प्र. |
| | स्मेष्यसे | स्मेष्येथे | स्मेष्यध्वे | म. |
| | स्मेष्ये | स्मेष्यावहे | स्मेष्यामहे | उ. |
| लोट् | स्मयताम् | समयेताम् | स्मयन्ताम् | प्र. |
| | स्मयस्व | स्मयेथाम् | स्मयध्वम् | म. |
| | स्मयै | स्मयावहै | स्मयामहै | उ. |
| लङ् | अस्मयत | अस्मयेताम् | अस्मयन्त | प्र. |
| | अस्मयथाः | अस्मयेथाम् | अस्मयध्वम् | म. |
| | अस्मये | असम्यावहि | अस्मयामहि | उ. |
| वि. लि. | स्मयेत | स्मयेयाताम् | स्मयेरन् | प्र. |
| | स्मयेथाः | स्मेयाथाम् | स्मेयेध्वम् | म. |
| | स्मयेय | स्मयेवहि | स्मयेमहि | उ. |
| आ. लि. | स्मेषीष्ट | स्मेषीयास्ताम् | स्मेषीरन् | प्र. |
| | स्मेषीष्ठाः | स्मेषीयास्थाम् | स्मेषीढ्वम् | म. |
| | स्मेषीय | स्मेषीवहि | स्मेषीमहि | उ. |
| लुङ् | अस्मेष्ट | अस्मेषाताम् | अस्मेषत | प्र. |
| | अस्मेष्ठाः | अस्मेषाथाम् | अस्मेड्ढ्वम्-ढ्वम् | म. |
| | अस्मेषि | अस्मेष्वहि | अस्मेष्महि | उ. |

| लृङ् | अस्मेष्यत | अस्मेष्येताम् | अस्मेष्यन्त | प्र. |
|---|---|---|---|---|
| | अस्मेष्यथा: | अस्मेष्येथाम् | अस्मेष्यध्वम् | म. |
| | अस्मेष्ये | अस्मेष्यावहि | अस्मेष्यामहि | उ. |

**भावे**—स्मीयते । २ सिष्मिष्ये । ९ अस्मायि । **णिचि**—विस्मापयते[१] । कुञ्चिकयैनं विस्मापयति[२] । **सनि**—विसिस्मयिषते । यङि यङ्लुकि कृत्सु च- 'क्षयति' वत् । स्मयनीयम्, स्मयनम्, स्मय:,[३] स्मायक:-यिका, स्मयी, विस्मयी, स्मेता, स्मित:, स्मिति:, स्मेतव्यम्, स्मित्वा, विस्मित्य, स्मेयम्, स्मेष्यमाण:, सिस्मयिषक:[४]-षिका, विस्मापयमान:,[५] स्मयमानो,[६] विवक्षति, स्मेर:,[७] स्मितम् ।

( ९४९ ) **गुङ्—अव्यक्ते शब्दे** । (अस्पष्ट बोलना) । अक. । अनि. । आत्मने. । उकारान्त: । ङित् । गवते । जुगुवे इत्यादि 'कुवति' वत् ।

( ९५० ) **गाङ्—गतौ** । (जाना) । सक. । अनि. । आत्मने. । १ **प्र.** गाते[८] गाते[९] गाते[१०] । **म.** गासे गाथे गाध्वे । **उ.** गै[११] गावहै गामहै । २ **प्र.** जगे जगाते जगिरे । **म.** जगिषे जगाथे जगिध्वे । **उ.** जगे जगिवहे जगिमहे । ३ गाता । ४ गास्यते । ५ **प्र.** गाताम् गाताम् गाताम् । **म.** गास्व गाथाम् गाध्वम् । **उ.** गै[१२] गावेहे गामेहे । ६ **प्र.** अगात अगाताम् अगात । **म.** अगाथा: अगाथाम् अगाध्वम् । **उ.** अगे अगावहि अगामहि । ७ **प्र.** गेत गेयाताम् गेरन् । **म.** गेथा: गेयाथाम् गेध्वम् । **उ.** गेय गेवहि गेमहि । ८ **प्र.** गासीष्ट गासीयास्ताम् गासीरन् । **म.** गासीष्ठा: गासीयास्थाम् गासीध्वम् । **उ.** गासीय गासीवहि गासीमहि । ९ **प्र.** अगास्त अगासाताम् अगासत । **म.** अगास्था: अगासाथाम् अगाढ्ध्वम्-ध्वम् । **उ.** अगासि अगास्वहि अगास्महि । १० अगास्यत ।

**सनि**—जिगासते । अन्यत् सर्वं 'गायति' (९१७) वत् ।

( ९५१ ) **कुङ्—शब्दे** (शब्द करना) । अक. । अनि. । आत्म. । उकारान्त: ।

१ 'भीस्म्योर्हेतुभये' (१-३-६८) आभ्या ण्यन्ताभ्यामात्मनेपद स्याद्धेतुत एव चेद् भयस्मयौ । राम विस्मापयेत क: (भट्टि: ५-१८) ।

२ ततोऽन्यत्र परस्मैपदम् ।

३ 'अज्विधौ भयादीनामुपसख्यानम्' (वा. ३-३-५६) इति अच् । अत्र ल्युडपवादोऽप्यमिति केचित् । स्मयनम् इत्यपि लक्ष्येस्ति इति केचित् ।

४ 'स्मिपुङ् रञ्ज्वशां सनि' (७-२-७४) इति सन्नन्ते इडागम: । 'सनि ग्रहगुहोश्च' (७-२-१२) इत्यस्यापवाद: ।

५ 'भीस्म्योहेतुभये' (१-३-६२) इति आत्मनेपदम् । 'नित्यं स्मयते:' (६-४-५७) इति णिजन्ते सर्वत्र आकार: प्रकृते: । आत्वे कृते पुगागमोऽपि भवति ।

६ 'लक्षणहेत्वो: क्रियाया:' (३-४-१२६) इति लक्षणे शानच् ।

७ 'नमिकम्पिस्म्यजसकमहिसदीपो र' इति ताच्छीलिको र प्रत्यय: ।

८ गा + अ + ते = गाते ।

९ गा + अ + आते = गाते ।

१० गा + अ + अते = गाते ।

११ गा + अ + इ = आद् गुण: = गा + ए = वृद्धि: = गै ।

१२ गा + आ + ऐ = वृद्धिरेचि = गै ।

१ कबते। २ चुकुषे। ३ कोता। ४ कोष्यते। ५ कवताम्। ६ अकवत्। ७ कवेत। ८ कोषीष्ट। ९ अकोष्ट। १० अकोष्यत।

**भावे**—कूयते। **णिचि**—कावयति। **सनि**—चूकूषते। **यङि**—कोकूयते। **यङ्लुकि**—चोकवीति-चोकोति। **कृत्सु**—कोतव्यम्, कवनीयम्, कोतुम्, कवनम्, कुत्वा, प्रकुत्य।

**(९५२) घुङ्—शब्दे**। (शब्द करना)। अक.। अनि.। आत्म.। उकारान्तः। घवते। जुघुवे। इत्यादि 'कुङ्' धातु (९५१) वत्

**(९५३) उङ्—शब्दे**। (शब्द करना)। अक.। अनि.। आ.।१ अवते।२ **प्र.** ऊवे ऊवाते। **म.** ऊविषे ऊवाथे ऊविध्वे-ढ्वे। **उ.** ऊवे ऊविवहे ऊविमहे। ३ ओता। ४ ओष्यते। ५ अवताम्। ६ आवत। ७ आवेत। ८ ओषीष्ट। ९ ओष्ट औषाताम्। १० औष्यत।

**भावे**—ऊयते। **णिचि**—आवयति-ते। **सनि**—ऊविषते। **कृत्सु**—ओतव्यम्, अवनीयम्, आव्यम्, अव्यम्, उतम्, उत्वा, प्रोत्य, अवमानः, ओतुम्।

**(९५४) ङुङ्—शब्दे**। अक.। अनि.। आत्म.। ङवसे। इत्यादि 'कवति' (९५१) वत्। खुङ्-गुङ्-शब्दे इत्यन्ये। खवते। गवते। इत्यादि 'कवति' (९५१) वत्।

**(९५५-९५८) च्युङ्-ज्युङ्-प्लुङ्—गतौ**। (जाना) क्लुङ् इत्यन्ये। सक.। अनि.। आत्मने.। च्यवते। ज्यवते। प्लवते। क्लवते। इत्यादि 'कवति' (९५१) वत्।

**(९५९) रुङ्—गतिरेषणयोः**। (जाना, चलना, मारना, दुख देना, क्रोध करना)। गतौ सकर्म.। अनि.। आत्मने.। रवते। रुरुवे। रोता इत्यादि 'कवति' (९५१) वत्।

**(९६०) धृङ्—अवध्वंसने**। (गिर पड़ना, नष्ट होना)। अक.। अनि.। आत्मने.। ऋकारान्तः। ङित्। १ धरते। २ दध्रे। ३ धर्ता। ४ धरिष्यते। ५ धरताम्। ६ अधरत्। ७ धरेत। ८ धृषीष्ट। ९ अधृत अधृषाताम्। १० अधरिष्यत। अन्यत् सर्वम् आत्मनेपदे 'धरति' (९०:) वत्।

**(९६१) मेङ्—प्रणिदाने**। प्रणिदानम् = विनिमयः प्रत्यर्पणञ्च। सक.। अनि.। आत्मने.। एकारान्तः। १ मयते। प्रणिमयते। २ ममे। म. ममिषे। ३ माता। ४ मास्यते। ८ मासीष्ट। ९ अमास्त अमासाताम्।

**कृत्सु**—मायकः-यिका, मापकः-पिका, मित्सकः-त्सिका, मेमीयकः-यिका, माता-मात्री, माययिता-त्री, मित्सिता-त्री, मेमीयिता-त्री, मितः, मातव्यः, मेयः, मानम्, मित्वा, मातुम्, शानचि-मयमानः,[1] प्रणिमयमानः, अपमित्य,[2] अपमाय वा याचते। याचित्वा अपमयते,

१ शानचि, शपि अयादेशे च रूपमेवम्। '—अशिति' (६-१-४५) इत्युक्तत्वात् आत्वं नेति ज्ञेयम्। प्रणिमयमानः इत्यत्र 'नेर्गदनदपतपदघुमा—' (८-४-१७) इत्यादिना नेर्णत्वम्।

२ अपपूर्वकादस्मात् 'उदीचां माङो व्यतिहारे' (३-४-१९) इति क्त्वाप्रत्यये, तस्य सामासिके ल्यपि, 'मयतेरिदन्यतरस्याम्' (६-४-७०) इति इकारेऽन्तादेशे च। अपमित्य इति रूपम्। पक्षे अपमाय इति च। अपूर्वकालार्थवचनमिदम्। अत्र (३-४-१९) 'उदीचाम्' इत्युक्तत्वात्, प्राचां मते तु, याचित्वाऽपमयते' इत्यपि प्रयोगः साधुः। 'उदीयाम्—' (३-४-१९) इति सूत्रे 'माङ्' इति, मेङः कृतात्वस्य निदेशः इति 'दाधा घ्वदाप्' (१-१-२०) सूत्रे भाष्ये स्पष्टम्।

धान्यमात्रः[1] ।

(९६२) **देङ्—रक्षणे**। (रक्षा करना, पोषण करना)। सक.। अनि.। आत्मने.। दयते। **दिग्ये—दयतेर्दिगिलिटि, दाता**। इत्यादि 'मयति' (९६१) वत्।

(९६३) **श्यैङ्—गतौ**। (जाना)। सक.। अनि.। आत्मने.। ऐकारान्तः। श्यायते। शश्ये। 'त्रायति' (९६४) वत्।

(९६४) **प्यैङ्—वृद्धौ**। (बढ़ना, उन्नति होना)। अक.। अनि.। आ.। प्यायते। पप्ये। 'त्रायति' (९६५) वत्।

(९६५) **त्रेङ्—पालने**। (पालन करना, रक्षा करना)। सक.। अनि.। आ.।

| | | | | |
|---|---|---|---|---|
| लट् | त्रायते | त्रायेते | त्रायन्ते | प्र. |
| | त्रायसे | त्रायेथे | त्रायध्वे | म. |
| | त्राये | त्रायावहे | त्रायामहे | उ. |
| लिट् | तत्रे | तत्राते | तत्रिरे | प्र. |
| | तत्रिषे | तत्राथे | तत्रिध्वे | म. |
| | तत्रे | तत्रिवहे | तत्रिमहे | उ. |
| लुट् | त्राता | त्रातारौ | त्रातारः | प्र. |
| | त्रातासे | त्रातासाथे | त्राताध्वे | म. |
| | त्राहे | त्रातास्वहे | त्रातास्महे | उ. |
| लृट् | त्रास्यते | त्रास्येते | त्रास्यन्ते | प्र. |
| | त्रास्यसे | त्रास्येथे | त्रास्यध्वे | म. |
| | त्रास्ये | त्रास्यावहे | त्रास्यामहे | उ. |
| लोट् | त्रायताम् | त्रायेताम् | त्रायन्ताम् | प्र. |
| | त्रायस्व | त्रायेथाम् | त्रायध्वम् | म. |
| | त्रायै | त्रायावहै | त्रायामहै | उ. |
| लङ् | अत्रायत | अत्रायेताम् | अत्रायन्त | प्र. |
| | अत्रायथाः | अत्रायेथाम् | अत्रायध्वम् | म. |
| | अत्राये | अत्रायावहि | अत्रायामहि | उ. |
| वि. लि. | त्रायेत | त्रायेयाताम् | त्रायेरन् | प्र. |
| | त्रायेथाः | त्रायेयाथाम् | त्रायेध्वम् | म. |
| | त्रायै | त्रायावहै | त्रायामहै | उ. |

१ कर्मणि उपपदे आदन्तलक्षणं कप्रत्ययं बाधित्वा 'ह्वावामश्च' (३-२-२) इत्यण्। आत्वे कृते, 'आतो युक् चिण्कृतोः' (७-३-१०३) इति युगागमः।

| | | | | |
|---|---|---|---|---|
| आ. लि. | त्रासीष्ट | त्रासीयास्ताम् | त्रासीरन् | प्र. |
| | त्रासीष्ठाः | त्रासीयास्थाम् | त्रासीध्वम् | म. |
| | त्रासीय | त्रासीवहि | त्रासीमहि | उ. |
| लुङ् | अत्रास्त | अत्रासाताम् | अत्रासत | प्र. |
| | अत्रास्थाः | अत्रासाथाम् | अत्राध्वम् अत्राद्ध्वम् | म. |
| | अत्रासि | अत्रास्वहि | अत्रास्महि | उ. |
| लृङ् | अत्रास्यत | अत्रास्येताम् | अत्रास्यन्त | प्र. |
| | अत्रास्यथाः | अत्रास्येथाम् | अत्रास्यध्वम् | म. |
| | अत्रास्ये | अत्रास्यावहि | अत्रास्यामहि | उ. |

कर्मणि प्रभृतिषु 'गलायति' (९०३) वत्।

**कृत्सु**—त्रायकः[१]-यिका, त्रापकः[२]-पिका, तित्रासकः-सिका, तात्रायकः-यिका, त्राता-त्री, त्रापयिता-त्री, तित्रासिता-त्री, तात्रायिता-त्री, त्रापयन्-न्ती, त्रापयिष्यन्-न्ती-ती, त्रायमाणः,[३] (चोरात्[४]) त्रायमाणः, त्रापयमाणः, तित्रासमानः, तात्राय्यमाणः, त्रास्यमाणः, त्रापयिष्यमाणः, तित्रासिष्यमाणः, तात्रयिष्यमाणः, सुत्राः-सुत्रौ-सुत्राः, त्रातम्[५]-त्राणम्-त्रातः-त्राणः-त्रातवान्-त्राणवान्, देवत्रातः[६]-भवत्त्रातः, त्रापितः, तित्रसितः, तात्रायितः-तवान्, गोत्रः,[७] सुत्रः,[८] आतपत्रम्, अङ्गुलित्रम्,[९] सुत्रायी,[१०] त्रायः,[११] सुत्रामा,[१२] त्रापः, तित्रासुः, तात्रः, त्रातव्यम्, त्रापयितव्यम्, त्राणीयम्, त्रापणीयम्, त्रेयम्,[१३] त्राप्यम्, ईषत्त्राणः,[१४] दुस्त्राणः-सुत्राणः, त्रायमाणः, त्राप्यमाणः, तित्रास्यमाणः, तात्रायमाणः, त्रायः, त्रापः, तित्रासः, तात्रायः, त्रातुम्, त्रापयितुम्, त्रातिः, सुत्रा,[१५] त्रापणा, त्राणम्, त्रापणम्, त्रात्वा, त्रापयित्वा, प्रत्राय, प्रत्राप्य।

---

१ 'आदेच्च उपदेशे शिति' (६-१-४५) इत्यात्वे, 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमः। एवमात्वं सर्वत्र, युगागमस्तु घञादिषु च इति ज्ञेयम्।

२ 'आदन्तलक्षणः युगागमो ण्यन्ते सर्वत्र ज्ञेयः।

३ शानचि, आत्वाभावे, आयादेशे च रूपम्।

४ 'भीत्रार्थानां भयहेतुः' (१-४-२५) इति अपादानसंज्ञा चोरस्य।

५ 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (८-२-५६) इति निष्ठानत्वविकल्पः।

६ 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तप्रत्ययः। 'देवत्रातो गलो ग्राह इति योगे च सद्विदः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः।(भाष्यम् (७-४-४१) इति व्यवस्थित विभाषश्रयणाद् अत्र निष्ठानत्वं न। देवत्रात इत्युपलक्षणम्, संज्ञायामन्योपपदेऽपि भवतीति ज्ञापनाय भवत्रात इत्यप्युक्तम्।

७ 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मण्युपपदेऽणपवादः कप्रत्ययः। 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः। एवम्, पार्ष्णित्रम्, तनुत्रम्, आतपत्रम् इत्यादिकमपि बोध्यम्।

८ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि क प्रत्ययः।

९ व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे कथमपि गुरुशोकान् मा रुदन् माङ्गलिक्यः। (भ.का. १-२६)

१० ताच्छील्ये णिनिप्रत्ययः। युगागमः।

११ 'श्याऽऽद्व्यध–' (३-१-१४१) इति कर्तरि ण प्रत्यये रूपमेवम्।

१२ 'आतो मनिन्–' (३-२-७४) इति मनिन् प्रत्ययः। सुत्रामा = इन्द्रः।

१३ 'अचो यत्' (३-१-९७) इति यत्। 'ईद् यति' (६-४-६५) इति ईत्वे गुणे च रूपम्।

१४ ईषदाद्युपपदेषु खलपवादः 'आतो युच्' (३-३-१२८) इति युच्।

१५ 'आतश्चोपसर्गे' (३-३-१०६) इति स्त्रियां भावादावङ्।

**( ९६६ ) पूङ्—पवने।** (पवित्र कनरा या होना)। सक.। सेट्। आत्म.।

| | | | | |
|---|---|---|---|---|
| लट् | पवते | पवेते | पवन्ते | प्र. |
| | पवसे | पवेथे | पवध्वे | म. |
| | पवे | पवावहे | पवामहे | उ. |
| लिट् | पुपुवे | पुपुवाते | पुवुवुरे | प्र. |
| | पुपुविषे | पुपुवाथे | पुपुविढ्वे-ध्वे | म. |
| | पुपुवे | पुपुविवहे | पुपुविमहे | उ. |
| लुट् | पविता | पवितारौ | पवितारः | प्र. |
| | पवितासे | पवितासाथे | पविताध्वे | म. |
| | पविताहे | पवितास्वहे | पवितास्महे | उ. |
| लृट् | पविष्यते | पविष्येते | पविष्यन्ते | प्र. |
| | पविष्यसे | पविष्येथे | पविष्यध्वे | म. |
| | पविष्ये | पविष्यावहे | पविष्यामहे | उ. |
| लोट् | पवताम् | पवेताम् | पवन्ताम् | प्र. |
| | पवस्व | पवेथाम् | पवध्वम् | म. |
| | पवै | पवावहै | पवामहै | उ. |
| लङ् | अपवत | अपवेताम् | अपवन्त | प्र. |
| | अपवथाः | अपवेथाम् | अपवध्वम् | म. |
| | अपवे | अपवावहि | अपवामहि | उ. |
| वि. लि. | पवेत | पवेताम् | पवेरन् | प्र. |
| | पवेथाः | पवेयाथाम् | पवेध्वम् | म. |
| | पवेय | पवेवहि | पवेमहि | उ. |
| आ. लि. | पविषीष्ट | पविषीयास्ताम् | पविषीरन् | प्र. |
| | पविषीष्ठाः | पविषीयास्थाम् | पविषीढ्वम्-ध्वम् | म. |
| | पविषीय | पविषीवहि | पविषीमहि | उ. |
| लुङ् | अपविष्ट | अपविषाताम् | अपविषत | प्र. |
| | अपविष्ठाः | अपविषाथाम् | अपविड्ढ्वम्-ध्वम् | म. |
| | अपविषि | अपविष्वहि | अपविष्महि | उ. |
| लृङ् | अपविष्यत | अपविष्यताम् | अविष्यन्त | प्र. |
| | अपविष्यः | अपविष्यतम् | अपविष्यत | म. |
| | अपविष्यम् | अपविष्याम | अपविष्याम | उ. |

**कृत्सु**—पावकः-विका, विपविषकः-षिका, पोपूयकः-यिका, पविता-त्री, पावयिता-त्री, पिपविषिता-त्री, पोपूयिता-त्री, पावयन्-न्ती, पावयिष्यन्-न्ती-ती, पवमानः, पावयमानः, पविष्यमाणः, पावयिष्यमाणः, पूः-पुवौ-पुवः, पूतम्[१]-पवितम्-तः-तवान्, पावितः, पिपविषितः,

१ 'पूङश्च' (७-२-५१) इति निष्ठाया इड्विकल्पः। 'पूङ्क्त्वा च' (१-२-२२) इति निष्ठायाः कित्वनिषेधात् गुणावादेशौ। क्त्वायामपि रूपद्वयम्।

पोपूयितः-तवान्, पवः, पवमानः,[१] पवनः,[२] पवित्रम्,[३] (अग्निः देवता वा) पोता,[४] पावः, पिपविषुः-पिपावयिषुः पोपुवः, पवितव्यम्, पावयितव्यम्, प्रपवणीयम्,[५] प्रपवनीयम्, प्रपावणीयम्[६]-प्रपावनीयम्, विपूयः[७]-पव्यम्, अवश्यपाव्यम्,[८] पूयमानः, पाव्यमानः, पवः,[९] निष्पावः,[१०] उत्पावः,[११] पोत्रम्,[१२] वनपोत्रः, पवित्रम्,[१३] पिपविषः, पोपूयः, पवितुम्, पावयितुम्, पूतिः, पावना, पवनम्, पावनम्, पूत्वा-पवित्वा, पावयित्वा, प्रपूय, प्रपाव्य।

**(९६७) मूङ्—बन्धने।** (बांधना, अकड़ना)। सक.। सेट्। आत्मने.। मवते। मुमुवे। मविता। इत्यादि 'पवति' (९६६) वत्।

**(९६८) डीङ्—विहायसा गतौ।** (आकाश में उड़ना), **अव**—आकाश से उतरना, **उत्**—ऊपर उड़ना, **परि**—चक्राकार उड़ना, **प्र**—चपलता से उतरना, **सम्**—समूह के साथ उड़ना, **समुत्**—ठहर-ठहर के उड़ना या धरे-धीरे उड़ना। सकर्म.। सेट्। आत्मन.।

१ डयते। २ **प्र.** डिड्ये। म. डिड्यिषे। **उ.** डिड्ये डिड्यिवहे डिड्यिमहे। ३ **प्र.** डयिता। ४ डयिष्यते। ५ डयताम्। ६ अडयत। ७ डयेत। ९ डयिषीष्ट। ९ अडयिष्ट। १० अडयिष्यत।

**भावे**—डीयते। ९ अडायि। **णिचि**—डाययति-ते। **सनि**—डिडयिषते। **यङि**—डेडीयते। **यङ्लुकि**—डेडयीति-डेडेति। **कृत्सु**—डायकः[१४]-यिका, डाययिता-त्री,

१ कर्तरि 'पूङ्यजोः शानच्' (३-२-१२८) इति शानच् प्रत्ययः। शपि, 'आने मुक्' (७-२-८२) इति मुगागमः।
२ नन्द्यादित्वात् (३-१-१३४) कर्तरि ल्युप्रत्यये, अनादेशे च रूपम्। पवनः = वायुः।
३ 'कर्तरि चर्षिदेवतयोः' (३-२-१८६) इति कर्तरि ऋषौ, देवतायां वा अभिधेये सति इत्र प्रत्ययः। ऋषिः = अग्निः। 'अग्निः पवित्रम्, स मा पुनातु' (आप श्रौ. सू. १२-१९-६) वायुः सोमः सूर्यइन्द्रः पवित्रम् ते मा पुनन्तु (आप. श्रौ. सू. १२-९-६) इत्यादिषु यथा। ऋषौ करणे, देवतायां कर्तरि चायं प्रत्ययो ज्ञेयः।
४ 'तृन्' (३-२-१३५) इति तच्छीलादिषु कर्तृषु तृन् प्रत्ययः। बाहुलकात् इडागमाभावः।
५ 'न भाभूपू—' (८-४-३४) इत्यत्र 'पू' इत्यनेन 'पूञ्' एव ग्रहणम्, न तु पूङः इति काशिकादिषु दृश्यते। तेनात्र णत्वं भवत्येव। क्षीरस्वामी तु अविशेषेण पूङोऽपि प्रकृतसूत्रे ग्रहणं मन्यमानः प्रपवनीयम् इति णत्वाभावघटितं रूपमुदाजहार।
६ 'ण्यन्तभादीनामुपसंख्यानम्' (वा. ८-४-३४) इति णत्वनिषेधोऽपि नास्य धातोरिति पक्षे रूपमेवम्। क्षीरस्वामीमते तु पूर्ववदत्रापि णत्वनिषेधः।
७ विपूयविनीयजित्या मुञ्जकल्पहलिपु (३-१-११६) इत्यनेन मुञ्जेऽभिधेये विपूर्वकादस्मात् क्यपि रूपमेवम्। अन्यत्रार्थे तु 'अचो यत्' (३-१-९७) इति यति, अवादेशे च पव्यम् इति रूपम्।
८ 'ओरावश्यके (३-१-१२५) इति ण्यत्। आवादेशे, अवश्यमो मकारस्य 'लुम्पेदवश्यमः कृत्ये' (काशिका ६-३-१०९) इति लोपः।
९ 'ऋदोरप्' (३-३-५७) इति भावेऽप् प्रत्ययः। घञपवादः।
१० 'निरभ्योः पूल्वोः' (३-३-२८) इति निष्पूर्वकादस्मात् घञ्। निष्पावः = धान्यविशेषः। 'परिमाणाख्यायां सर्वेभ्यः'। इति घञ्यपि पूर्वमेवमेव। तदानीं निष्पावः = परिमाणविशेषः।
११ 'उदि श्रयतियौतिपूद्रुवः' (३-३-४९) इति घञ्।
१२ 'हलसूकरयोः पुवः' (३-२-१८३) इति करणे ष्ट्रन् प्रत्यये रूपम्। पोत्रम् = सूकरस्य, हलस्य वा मुखम्।
१३ 'पुवः संज्ञायाम्' (३-२-१८५) इति करणे इत्र प्रत्ययः। पवित्रम्— दर्भः, चक्रायुधश्च।
१४ 'अचो ञ्णिति' (७-२-११५) इति वृद्धौ आयादेशः।

डाययन्-न्ती, डयमानः, डायमानः, डयिष्यमाणः, डाययिष्यमाणः, उड्डीः[1]-उड्ड्यौ-उड्डयः, डयितः,[2] डियितः-तम्, डायितः, डयः,[3] डायः, डयितव्यम्, डाययितव्यम्, डयनीयम्, डायनीयम्, डाय्यम्, डीयमानः, डाय्यमानः, डायितुम्, डयितुम्, डीतिः[4]-सुडीतिः, डायना, डयनम्, डायनम्, डयित्वा, डाययित्वा, उड्डीय, उड्डाय्य ।

**(९६९) तॄ—प्लवनतरणयोः** । (पार जाना, तैरना, **अव**—उतरना, **आ**– भारा देकर नाव पर चढ़ जाना । **उत्**—ऊपर से जाना, उत्तर देना, जबाव देना, **दुस्**—संकट से छुटकारा पाना, **निस्**—दुःख से तैर जाना, मुक्ति पाना, **प्र**—जीतना, **वि**—बांटना । सकर्म. । सेट् । परस्मै. ।

| | | | | |
|---|---|---|---|---|
| लट् | तरति | तरतः | तरन्ति | प्र. |
| | तरसि | तरथः | तरथ | म. |
| | तरामि | तरावः | तरामः | उ. |
| लिट् | ततार | तेरतुः | तेरुः | प्र. |
| | तेरिथ | तेरथुः | तेर | म. |
| | ततार-ततर | तेरिव | तेरिम | उ. |
| लुट् | तरीता-तरिता | तरीतारौ-तरितारौ | तरीतारः-तरितारः | प्र. |
| | तरीतासि-तरितासि | तरीतास्थः-तरितास्थः | तरीतास्थ-तरितास्थ | म. |
| | तरीतास्मि-तरितास्मि | तरीतास्वः-तरितास्वः | तरीतास्मः-तरितास्मः | |
| लृट् | तरिष्यति | तरिष्यतः | तरिष्यन्ति | प्र. |
| | तरिष्यसि | तरिष्यथः | तरिष्यथ | म. |
| | तरिष्यामि | तरिष्यावः | तरिष्यामः | उ. |

पक्षे—तरीष्यति तरीष्यतः तरीष्यन्ति इत्यादि ।

| | | | | |
|---|---|---|---|---|
| लोट् | तरतु-तात् | तरताम् | तरन्तु | इत्यादि । |
| लङ् | अतरत् | अतरताम् | अतरन् | इत्यादि । |
| वि. लि. | तरेत् | तरेताम् | तरेयुः | प्र. |
| | तरेः | तरेतम् | तरेत | म. |
| | तरेयम् | तरेव | तरेम | उ. |
| आ. लि. | तीर्यात् | तीर्यास्ताम् | तीर्यासुः | प्र. |
| | तीर्याः | तीर्यास्तम् | तीर्यास्त | म. |
| | तीर्यासम् | तीर्यास्व | तीर्यास्म | उ. |

१ क्विपि, द्विवचने, 'एरनेकाचः–' (६-४-८२) इति यणादेशः ।

२ 'निष्ठाशीङ्–' (१-२-१९) इत्यत्र 'निष्ठा' इति योगविभागमभ्युगम्य, अन्यत्रापि क्वचित् सेटो निष्ठायाः कित्वनिषेधात् गुणायादेशयोः सतो' डयतिः - डयितवान् इति रूपं पारायणिका साधयन्ति । योगविभागानभ्युपगमे, 'अचिश्नुधातु–' (६-४-७७) इतीयाङादेशे डियितः - डियिततवान् इति रूपं केचित् साधयन्ति ।

३ 'एरच्' (३-३-५६) इति भावे घञपवादेऽच् प्रत्ययः ।

४ 'तितुत्र–' (७-३-९) इतीण्णिषेधः ।

| | | | | |
|---|---|---|---|---|
| लुङ् | अतारीत् | अतारीष्टाम् | अतरिष्ट | प्र. |
| | अतारीः | अतारिष्टम् | अतारिष्ट | म. |
| | अतारिषम् | अतारिष्व | अतारिष्म | उ. |
| लृङ् | अतरिष्यत् | अतरिष्यताम् | अतरिष्यन् | इत्यादि । |

**कर्मणि**—तीर्यते। २ तेरे। ९ अतारि। **णिचि**—तारयति-ते। **सनि**—तितीर्षति-तितरीषति-तितरिषति। **यङि**—तेतीर्यते। **यङ्लुकि**—तातरीति-तातर्ति। **कृत्सु**—तारकः-रिका, तारका-तारकः-रिका, तितरिषक, तितरीषकः-तितीर्षकः- र्षिका, तेतिरकः-रिका, तरिता-तरीता-त्री, तारयिता-त्री, तरन्[१]-समुत्तरन्-न्ती, तारयन्-न्ती, तितरिषन्-तितरीषन्, तितीर्षन्-न्ती, तरिष्यन्-तरीष्यन्-न्ती-ती, तारयिष्यन्-न्ती-ती, व्यतितरमाणः,[२] तारयमाणः, तारयिष्यमाणः, तेतीर्यमाणः, तेतिरिष्यमाणः, तीः[३]-तिरौ-तिरः, उत्तीर्णम्[४]-तीर्णः-तीर्णवान्, तरितः, तरः, तेरिवान्, सुतर्मा,[५] रथन्तरं (साम), तारः-तितरिषुः-तितरीषुः, तितीर्षुः-तेतिरः, तरितव्यम्-तरीतव्यम्, तारयितव्यम्, तरणीयम्, तारणीयम्, तार्यम्,[६] तीर्यमाणः, तरः,[७] अवतारः,[८] तारः, तरितुम्,-अवतरीतुम्, तारयितुम्, तीर्णिः,[९] तारा,[१०] तारणा, तरणम्, तारणम्, तीर्त्वा, तारयित्वा, वितीर्य, वितार्य, तरणिः,[११] तरुः,[१२] तरीः[१३], तरुणः[१४]।

**( ९७० ) गुप—गोपने**।(बचाना, संरक्षण करना, छिपाना, दोष लगाना, निन्दा करना)। सक.। सेट्। आत्मने.। अयं '**गुप्तिज्किद्भ्यः सन्**' (३-१-५) इति निन्दार्थे नित्यसन्।

| | | | | |
|---|---|---|---|---|
| लट् | जुगुप्सते | जुगुप्सते | जुगुप्सन्ते | प्र. |
| | जुगुप्ससे | जुगुप्सेथे | जुगुप्सध्वे | म. |
| | जुगुप्से | जुगुप्सावहे | जुगुप्सामहे | उ. |
| लिट् | जुगुप्साञ्चक्रे | जुगुप्साञ्चक्राते | जुगुप्साञ्चक्रिरे | प्र. |
| | जुगुप्साञ्चकृषे | जुगुप्साञ्चक्राथे | जुगुप्साञ्चकृढ्वे | म. |
| | जुगुप्साञ्चक्रे | जुगुप्साञ्चकृवहे | जुगुप्साञ्चकृमहे | उ. |

१ शतरि 'कर्तरि शप्' (३-१-६८) इति शपि, शतुः सार्वधातुकत्वेन ङिद्भावात् धातोरित्वे प्राप्ते, 'इत्वोत्वाभ्यां—' (वा. ७-१-१०२) इति गुणे रूपम्।

२ 'कर्तरि कर्मव्यतिहारे' (१-३-१४) इति शानचि, णत्वम्।

३ क्विपि, इत्वे रपरत्वे, 'र्वोरुपधाया दीर्घ इकः' (८-२-७६) इति दीर्घे विसर्गः।

४ सनि विकल्पितेट्कत्वात् निष्ठायाम् 'यस्य विभाषा (७-२-१५) इतीण्णिषेधे, इत्वे रपरत्वे, दीर्घे, निष्ठानत्वे, 'रषाभ्यां नो णः—' (८-४-१) इति णत्वे च रूपम्।

५ 'अन्येभ्योऽपि दृश्यते' (३-२-७५) इति मनिन् प्रत्ययः। नेट् वशि कृति (७-२-८) इतीण्णिषेधः, गुणः।

६ 'ऋहलोर्ण्यत्' (३-१-१२४) इति ण्यत्।

७ 'ऋदोरप्' (३-३-५७) इति भावेऽप् प्रत्ययः। घञोऽपवादः।

८ 'अवे तृस्त्रोर्घञ्' (३-३-१२०) इति करणाधिकरणयोर्घञ्।

९ क्तिनि, इत्वरपरत्वयोः, 'ऋल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. ८-२-४४) इति क्तिनस्तकारस्य नकारणत्वम्।

१० भिदादिषु (३-३-१०४) तारा इति पाठात् ज्योतिषि वाच्ये वृद्धिर्भवति। न तु इत्वामिति ज्ञेयम्।

११ 'अशावतृभ्योऽनिः' (द.उ. १-१) इत्यनिप्रत्यये गुणः। तरणिः = सूर्यः।

१२ 'भृमृशीतृ—' (द.उ. १-९२) इत्युप्रत्ययः। छायापुष्पफलार्थिनोऽमु तरन्तीति तरुः = वृक्षः।

१३ 'अवितृ—' (द.उ. १-८२) इति ईप्रत्ययः। तरीः = प्लवो वायुश्च।

१४ 'कृवृदारिभ्य उनन्' (द.उ. ५-५२) इत्युनन् प्रत्ययः। तरुणः = वायुर्युवा च।

| | | | | |
|---|---|---|---|---|
| लुट् | जुगुप्सिता | जुगुप्सितारौ | जुगुप्सितारः | प्र. |
| | जुगुप्सितासे | जुगुप्सितासाथे | जुगुप्सिताध्वे | म. |
| | जुगुप्सिताहे | जुगुप्सितास्वहे | जुगुप्सितास्महे | उ. |
| लृट् | जुगुप्सिष्यते | जुगुप्सिष्येते | जुगुप्सिष्यन्ते | प्र. |
| | जुगुप्सिष्यसे | जुगुप्सिष्येथे | जुगुप्सिष्यध्वे | म. |
| | जुगुप्सिष्ये | जुगुप्सिष्यावहे | जुगुप्सिष्यामहे | उ. |
| लोट् | जुगुप्सताम् | जुगुप्सेताम् | जुगुप्सन्ताम् | प्र. |
| | जुगुप्सस्व | जुगुप्सेथाम् | जुगुप्सध्वम् | म. |
| | जुगुप्सै | जुगुप्सावहै | जुगुप्सामहै | उ. |
| लङ् | अजुप्सत | अजुप्सेताम् | अजुगुप्सन्त | प्र. |
| | अजुगुप्सथाः | अजुगुप्सेथाम् | अजुगुप्सध्वम् | म. |
| | अजुगुप्से | अजुगुप्सावहि | अजुगुप्सामहि | उ. |
| वि. लि. | जुगुप्सेत | जुगुप्सेयाताम् | जुगुप्सेरन् | प्र. |
| | जुगुप्सेथाः | जुगुप्सेयाथाम् | जुगुप्सेध्वम् | म. |
| | जुगुप्सेय | जुगुप्सेवहि | जुगुप्सेमहि | उ. |
| आ. लि. | जुगुप्सिषीष्ट | जुगुप्सिषीयास्ताम् | जुगुप्सिषीरन् | प्र. |
| | जुगुप्सिषीष्ठाः | जुगुसिषीयास्ताम् | जुगुप्सिषीरन् | प्र. |
| | जुगुप्सिषीय | जुगुप्सिषीवहि | जुगुप्सिषीमहि | इ. |
| लुङ् | अजुगुप्सिष्ट | अजुगुप्सिषाताम् | अजुगुप्सिषत | प्र. |
| | अजुगुप्सिष्ठाः | अजुगुप्सिषाथाम् | अजुगुप्सिड्ढ्वम्-ध्वम् | म. |
| | अजुगुप्सिषि | अजुगुप्सिष्वहि | अजुगुप्सिष्महि | उ. |
| लृङ् | अजुगुप्सिष्यत् | अजुगुप्सिष्येताम् | अजुगुप्सिष्यन्त | प्र. |
| | अजुगुप्सिष्यथाः | अजुगुप्सिष्येथाम् | अजुगुप्सिष्यध्वम् | म. |
| | अजुगुप्सिष्ये | अजुगुप्सिष्यावहि | अजुगुप्सिष्यामहि | उ. |

गर्हाया अन्यत्र सनोभावे अर्थान्तरेऽपि प्रायेण गोपते इत्येव भवति। **कर्मणि**—जुगुप्स्यते। **णिचि**—जुगुप्सयति-ते। **सनि**—जुगुप्सिषते। अनेकाच्त्वाद्यङ्लुकौ न स्तः। **कृत्सु**—जुगुप्सितव्यम्, जुगुप्सनीयम्, जुगुप्स्यम्, जुगुप्सितः, जुगुप्समानः, जुगुप्सितुम्, जुगुप्सित्वा, संजुगुप्स्य, जुगुप्सा (जुगुप्सुः)।

**( ९७१ ) तिज—निशाने**। क्षमायाञ्च। (तीक्ष्ण करना, धार लगाना, चमकाना, क्षमा करना, सहना)। सक.। सेट्। आत्मने.। तिजि क्षमायां नित्यसन्। तितिक्षते। तितिक्षाञ्चक्रे। इत्यादि जिगुप्सति (९७०) वत्। अन्यत्र १ तेजते। २ तितिजे। इत्यादि।

**( ९७२ ) मान—पूजायाम्**। (ज्ञान प्राप्ति की इच्छा करना)। सक.। सेट्। आत्मने.। मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य। एभ्यः सन् स्यात् अभ्यासेकारस्य दीर्घश्च। इति मानेर्जिज्ञायां नित्यसन्। मीमांसते। मीमांसाञ्चक्रे। इत्यादि 'जुगुप्सति' (९७०) वत्।

**( ९७३ ) वध—बन्धने**। निन्दायाञ्च। बांधना, निन्दा करना, द्वेष करना। सक.। सेट्। आत्मने.। निन्दायां नित्यसन्। १ बीभत्सते। २ बीभत्साञ्चक्रे-बभूव-आस।

**कर्मणि**—बीभत्स्यते। **णिचि**—बीभत्सयति-ते। निन्दाभिन्नार्थे तु बधते। बबधे। इत्यादि। **कृत्सु**—बीभत्सनीयम्, बीभत्सनम्, बीभत्सकः, बीभत्सिता, बिभत्सितः, बिभत्सा, बीभत्सुः, बीभत्सितुम्, बीभत्सितव्यम्, बीभत्सित्वा, अबीभत्स्य, बीभत्स्यम्, बीभत्समानः, बीभत्स्यमानः, बीभत्स्यमानः। इत्यादि– 'जुगुप्सति' (९७०) वत्।

**( ९७४ ) रभ—राभस्ये**। (आनन्द करना, प्रसन्न होना, **आ**—आरम्भ करना, शुरूह करना)। प्रायेणयमाङ्पूर्वकः। सक.। अनि.। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | आरभते | आरभेते | आरभन्ते | प्र. |
| | अरभसे | आरभेथे | आरभध्वे | म. |
| | आरभे | आरभावहे | आरभामहे | उ. |
| लिट् | आरेभे | आरेभाते | आरेभिरे | प्र. |
| | आरेभिषे | आरेभाथे | आरेभिध्वे | म. |
| | आरेभे | आरेभिवहे | आरेभिमहे | उ. |
| लुट् | आरब्धा | आरब्धारौ | आरब्धारः | प्र. |
| | आरब्धासे | आरब्धासाथे | आरब्धाध्वे | म. |
| | आरब्धाहे | आरब्धास्वहे | आरब्धास्महे | उ. |
| लृट् | आरप्स्यते | आरप्स्येते | आरप्स्यन्ते | प्र. |
| | आरप्स्यसे | आरप्स्येथे | आरप्स्यध्वे | म. |
| | आरप्स्ये | आरप्स्यावहे | आरप्स्यामहे | उ. |
| लोट् | आरभताम् | आरभेताम् | आरभन्ताम् | प्र. |
| | आरभस्व | आरभेथाम् | आरभध्वम् | म. |
| | आरभै | आरभावहै | आरभामहै | उ. |
| लङ् | आरभत | आरभेताम् | आरभन्त | प्र. |
| | आरभथाः | आरभेथाम् | आरभध्वम् | म. |
| | आरभे | आरभावहि | आरभामहि | उ. |
| वि. लि. | आरभेत | आरभेयाताम् | आरभेरन् | प्र. |
| | आरभेथाः | आरभेयाथाम् | आरभेध्वम् | म. |
| | आरभेय | आरभेवहि | आरभेमहि | उ. |
| आ. लि. | आरप्सीष्ट | आरप्सीयास्ताम् | आरप्सीरन् | प्र. |
| | आरप्सीष्ठाः | आरप्सीयास्थाम् | आरप्सीध्वम् | म. |
| | आरप्सीय | आरप्सीवहि | आरप्सीमहि | उ. |
| लुङ् | आरब्ध | आरप्साताम् | आरप्सत | प्र. |
| | आरब्धाः | आरप्साथाम् | आरब्धम्-आरब्द्-ध्वम् | म. |
| | आरप्सि | आरप्सवहि | आरप्समहि | उ. |

| | | | | |
|---|---|---|---|---|
| लृङ् | आरप्सयत | आरप्स्येताम् | आरप्स्यन्त | प्र. |
| | आरप्स्यथाः | आरप्स्येथाम् | आरप्स्यध्वम् | म. |
| | आरप्स्ये | आरप्स्यावहि | आरप्स्यामहि | उ. |

**कर्मणि**—आरभ्यते। **णिचि**—आरम्भयति। **सनि**—आरिप्सते। **यङि**—अरारभ्यते। **यङ्लुकि**—आरारंभीति-आरारब्धि। **कृत्सु**—आरम्भकः[१]-म्भिका, रम्भकः[२]-म्भिका, रिप्सकः-प्सिका, रारभक-भिका, आरब्धा-ध्री, रम्भयिता-त्री, रिप्सिता-त्री, रारभिता-त्री, रम्भयन्-न्ती, रम्भयिष्यन्-न्ती-ती, आरभमाणः, (भोक्तुम्) आरभमाणः, रम्भयमाणः, रिप्समानः, रारभ्यमाणः, रप्स्यमाणः, रम्भयिष्यमाणः, रिप्सिष्यमाणः, रारभिष्यमाणः, सुरप्-सुरभ्-सुरभौ-सुरभः, आरब्धम्-ब्धः, रम्भितम्-तः, रिप्सितम्, रारभितम्-तः-तवान्, रम्भः[३]-रम्भाः, साध्वारम्भी,[४] रम्भः, रिप्सुः, रारम्भः,[५] आरब्धव्यम्, आरम्भयितव्यम्, रिप्सितव्यम्, रारभितव्यम्, आरम्भणीयम्, रिप्सनीयम्, रारभणीयम्, आरभ्यम्,[६] आरम्भ्यम्, रिप्स्यम्, रारभ्यम्, आरभ्यमाणः, आरम्भ्यमाणः, रिप्स्यमानः, रारभ्यमाणः, आरम्भः, रिप्सः, रारभः, आरब्धुम्, आरम्भयितुम्, रिप्सितुम्, रारभितुम्, रब्धिः, आरम्भणा, रिप्सा, रारभा, आरम्भणम्, रिप्सनम्, रारभणम्, रब्ध्वा, रम्भयित्वा, रिप्सित्वा, रारभित्वा, आरभ्य, आरम्भ्य, आरिप्स्य, आरारभ्य, रभसः[७]।

**(९७५) डुलभष्—प्राप्तौ**। प्राप्त होना, मिलना, **आ**—स्पर्श करना। (हृदयमालभते गृह्यसूत्रम्)। सक.। अनि.। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | लभते | लभेते | लभन्ते | प्र. |
| | लभसे | लभेथे | लभध्वे | म. |
| | लभे | लभावहे | लभामहे | उ. |
| लिट् | लेभे | लेभाते | लेभिरे | प्र. |
| | लेभिषे | लभाथे | लेभिध्वे | म. |
| | लेभे | लेभिवहे | लेभिमहे | उ. |
| लुट् | लब्धा | लब्धारौ | लब्धारः | प्र. |
| | लब्धासे | लब्धासाथे | लब्धाध्वे | म. |
| | लब्धाहे | लब्धास्वहे | लब्धास्महे | उ. |
| लृट् | लप्स्यते | लप्स्येते | लप्स्यन्ते | प्र. |
| | लप्स्यसे | लप्स्येथे | लप्स्यध्वे | म. |
| | लप्स्ये | लप्स्यावहे | लप्स्यामहे | उ. |

१ 'रभेरशब्लिटोः' (७-१-६३) इति अजादिषु प्रत्ययेषु शब्लिड्वर्जं नुमागमः। एवमेव घञादिष्वपि ज्ञेयम्।
२ णयन्ते ण्वुलि 'अत उपधायाः' (७-२-११६) इति प्राप्तां परामपि वृद्धिं बाधित्वा, रभेरशब्लिटोः' (७-१-६३) इति नुम् नित्यत्वाद् भवति।
३ पचाद्यचि नुमि रम्भः। स्त्रियां टापि रम्भा = अप्सरो विशेषः, कदली च।
४ 'साधुकारिण्युपसंख्यानम्' (वा. ३-२-७८) इति णिनिः।
५ यङन्तात् पचाद्यचि यङो लुकि नुमागमे च रूपमेवम्।
६ 'पोरदुपधात्' (३-१-९८) इति यत् प्रत्ययः। हलन्तलक्षणण्यतोऽपवादः।
७ 'अत्यविचमितमिरभि–' (द.उ. ९-४४) इत्यसच् प्रत्यये रूपम्। बाहुलकात् 'राभस्ये' इति निर्देशाद् वा नुम् न।

| | | | | |
|---|---|---|---|---|
| लोट् | लभताम् | लभेताम् | लभन्ताम् | प्र. |
| | लभस्व | लभेथाम् | लभध्वम् | म. |
| | लभै | लभावहै | लभामहै | उ. |
| लङ् | अलभत | अलभेताम् | अलभन्त | प्र. |
| | अलभथाः | अलभेथाम् | अलभध्वम् | म. |
| | अलभे | अलभावहि | अलभामहि | उ. |
| वि. लि. | लभेत | लभेयाताम् | रभेरन् | प्र. |
| | लभेथाः | लभेयाथाम् | लभेध्वम् | म. |
| | लभेय | लभेवहि | लभेमहि | उ. |
| आ. लि. | लप्सीष्ट | लप्सीयास्ताम् | लप्सीरन् | प्र. |
| | लप्सीष्ठाः | लप्सीयास्थाम् | लप्सीध्वम् | म. |
| | लप्सीय | लप्सीवहि | लप्सीमहि | उ. |
| लुङ् | अलब्ध | अलप्साताम् | अलप्सत | प्र. |
| | अलब्धाः | अलप्साथाम् | अलब्ध्वम् | म. |
| | अलप्सि | अलप्स्वहि | अलप्स्महि | उ. |
| लृङ् | अलप्स्यत | अलप्स्येताम् | अलप्स्यन् | प्र. |
| | अलप्स्यथाः | अलप्स्येथाम् | अलप्स्यध्वम् | म. |
| | अलप्स्ये | अलप्स्यावहि | अलप्स्यामहि | उ. |

**कर्मणि**—लभ्यते। **णिचि**—लम्भयति। इत्यादि 'रभति' (९७४) वत्। **आ**—आलभने (स्पर्शने घातने च)। आलभते। **वि + प्र**—विप्रलम्भे (विसंवादे) विप्रलभते। **उप + आ**—उपालम्भे (निन्दापूर्वकदुष्टोक्तो) उपालभते। **कृत्सु**—लम्भकः[1]-म्भिका, लम्भकः-म्भिका, लिप्सकः[2]-प्सिका, लालभकः-भिका, लब्धा-ब्धी, लम्भयिता-त्री, लिप्सिता-त्री, लालभिता-त्री, लभनीयम्, लभनम्, लाभः, आलम्भः, विप्रलम्भः, विप्रलब्धः, उपालम्भः, उपालब्धः, लाभी, लब्धा, लब्धम्, लब्धव्यम्, लब्धिः, लब्धिमम्,[3] लब्ध्वा, आलभ्य, लभ्यम्, आरलभ्यः, दुर्लभः, सुलभः, लभमानः, लभ्यमानः, लप्स्यमानः, षित्-लभा, सन्-लिप्सा, लिप्सुः, आलभ्या गौः, उपालभ्या विद्या, उपलभ्यमस्मान्नीचात्, ईषत्प्रलम्भः-दुष्प्रलम्भः-सुप्रलम्भः, ईषल्लाभः, सुलम्भः।

**( ९७६ ) ष्वञ्ज—परिष्वङ्गे।** (आलिङ्गन करना, गले लगाना)। सक.। अनिट्। आत्मने.। दश सञ्जरस्वञ्जां शपि। एषां शपि न लोपः। इति न लोपः।

१ 'लभेश्च' (७-१-६४) इति अजादौ प्रत्यये (शपं लिटं च वर्जयित्वा) नुमागमः सर्वत्र ज्ञेयम्।

२ 'सनिमीमाघुरभलभ—' (७-४-५४) इत्यादिना अच् इस्। 'स्को—' (८-२-२९) इति सलोपः। 'अत्र लोपोऽभ्यासस्य' (७-४-५८) इत्यभ्यासलोपः।

३ लाभेन निवृत्त लब्धिमम्। 'ड्वितः क्त्रिः' (३-३-८८) इति क्त्रिप्रत्यये, तस्य 'क्त्रेर्मप्—' (४-४-२०) इति नित्य मप् प्रत्ययः।

१ स्वजते २ **प्र.** सस्वजे सस्वञ्जे सस्वजाथे सस्वञ्जाथे सस्वजिरे सस्वञ्जिरे **म.** सस्वजिषे सस्वञ्जिषे इत्यादि। **श्रन्थिग्रन्थिदंभिस्वञ्जीनां लिटः कित्वं वा।** इति कित्वविकल्पात्पक्षे ऽनुनासिकलोपः। ३ स्वङ्क्ता। ४ स्वङ्क्ष्यते। ५ स्वजताम्। ६ अस्वजत। ७ स्वजेत। ८ स्वङ्क्षीष्ट। ९ **प्र.** अस्वङ्क्त अस्वङ्क्षताम् अस्वङ्क्षत। **म.** अस्वङ्थाः अस्वङ्क्षाथाम् अस्वङ्ध्वम्। **उ.** अस्वङ्क्षि अस्वङ्क्ष्वहि अस्वङ्क्ष्महि। १० अस्वङ्क्ष्यत।

**कर्मणि**—स्वज्यते। **णिचि**—स्वञ्जयति-ते। **सनि**—सिस्वङ्क्षते। **यङि**—सास्वज्यते। **यङ्लुकि**—सास्वञ्जीति-सास्वङ्क्ति। **कृत्सु**—स्वङ्क्तव्यम्, स्वञ्जनीयम्, स्वङ्ग्यम्, स्वक्तः, स्वजमानः, स्वङ्क्तुम्, स्वङ्क्त्वा, स्वक्त्वा, परिष्वज्य, प्रायः, परिपूर्व, एवं प्रयुज्यते, यथा-परिष्वजे।

**(९७७) हद—पुरीषोत्सर्गे।** (मल त्याग करना)। अक.। अनि.। आत्म.। १ हदते। २ जहदे। ३ हत्ता। ४ हत्स्यते। ५ हदताम्। ६ अहदत। ७ हदेत। ८ हत्सीष्ट. ९ अहत्त। १० अहत्स्यत।

**णिचि**—१ हादयते। २ हादयाञ्चक्रे। ९ अजीहदत। **सनि**—१ जिहत्सते। २ जिहत्साञ्चक्रे। ९ अजिहत्सिष्ट। **यङि**—जाहद्यते। **यङ्लुकि**—जाहदीति-जाहत्ति।

**(९७८) ञिष्विदा—(स्विद्) अव्यक्ते शब्दे।** (अस्पष्ट शब्द करना)। अक.। सेट्। पर.। स्वेदति। सिष्वेद 'ञिक्षविदा' धातोः पाठान्तरम्। मीत्, आदिच्।

**(९७९) स्कन्दिर्—गतिशोषणयोः।** (जाना, शोषण करना)। सक.। अनि.। पर.। १ स्कन्दति। २ **प्र.** चस्कन्द। **म.** चस्कन्दिथ चस्कन्थ। ३ स्कन्ता। ४ स्कन्त्स्यति। ५ स्कन्दतु। ६ अस्कन्दत। ७ स्कन्देत। ८ स्कद्यात्। ९ अस्कदत् अस्कान्त्सीत्। १० अस्कन्त्स्यत्।

**कृत्सु**—स्कन्नः, स्कन्तुम्, स्कन्त्वा, प्रस्कत्य, विष्कन्ता।

**(९८०) यभ—मैथुने।** (मैथुन करना)। अक.। अनि.। पर.। यभति। ययाभ। येभतुः। इत्यादि 'रदति' (५३) वत्।

**(९८१) णम—(नम) प्रह्वत्वे शब्दे च।** (नमस्कार कनरा, वन्दना करना, सम्मान देना, नमना, शब्द करना)। **अव**—नमस्कार करना, खड़ा करना, जाना, नमाना, झुकाना। सक.। अनि.। पर.।

| | | | | |
|---|---|---|---|---|
| लट् | नमति | नमतः | नमन्ति | प्र. |
| | नमसि | नमथः | नमथ | म. |
| | नमामि | नमावः | नमामः | उ. |
| लिट् | ननाम | नेमतुः | नेमुः | प्र. |
| | नेमिथ-ननन्थ | नेमथुः | नेम | म. |
| | ननाम-ननम | नेमिव | नेमिम | उ. |

| | | | | |
|---|---|---|---|---|
| लुट् | नन्ता | नन्तारौ | नन्तारः | प्र. |
| | नन्तासि | नन्तास्थः | नन्तास्थ | म. |
| | नन्तास्मि | नन्तास्वः | नन्तास्मः | उ. |
| लृट् | नंस्यति | नंस्यतः | नंस्यन्ति | प्र. |
| | नंस्यसि | नंस्यथः | नंस्यथ | म. |
| | नंस्यामि | नंस्यावः | नंस्यामः | उ. |
| लोट् | नमतु-नमतात् | नमताम् | नमन्तु | प्र. |
| | नम-नमतात् | नमतम् | नमत | म. |
| | नमानि | नमाव | नमाम | उ. |
| लङ् | अवनत् | अनमताम् | अनमन् | प्र. |
| | अनमः | अनमतम् | अनमत | म. |
| | अनमम् | अमनाव | अनमाम | उ. |
| वि. लि. | नमेत् | नमेताम् | नमेयुः | प्र. |
| | नमेः | नमेतम् | नमेत | म. |
| | नमेयम् | नमेव | नमेम | उ. |
| आ. लि. | नम्यात् | नम्यास्ताम् | नम्यासुः | प्र. |
| | नम्याः | नम्यास्तम् | नम्यास्त | म. |
| | नम्यासम् | नम्यास्व | नम्यास्म | उ. |
| लुङ् | अनंसीत् | अनंसिष्टाम् | अनंसिषुः | प्र. |
| | अनंसीः | अनंसिष्टम् | अनंसिष्ट | म. |
| | अनंसिषम् | अनंसीष्व . | अनंसिष्म | उ. |
| लृङ् | अनंस्यत् | अनंस्यताम् | अनंस्यन् | प्र. |
| | अनंस्यः | अनंस्यतम् | अनंस्यत | म. |
| | अनंस्यम् | अनंस्याव | अनंस्याम | उ. |

**नमो वरिवश्चित्रङः क्यच्**। नमस्यति।

**कर्मणि**—नम्यते। **णिचि**—नमयति। नामयति। **ज्वलह्वलह्मलनमामनुपसर्गाद्वा**। इति मित्वविकल्पः। **सनि**—निनंसति। **यङि**—नंनम्यते। **यङ्लुकि**—नंनमीति-नंनन्ति। **कृत्सु**—नामकः-मिका, नमकः[१]-नामकः-प्रणमकः[२]-मिका, निनंसकः[३]-सिका, ननमकः,[४] नन्नमकः-मिका,

१ 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' (गण सू-घटादौ) इति उपसर्गसमभिव्याहाराभावे मित्संज्ञा विकल्प्यते, मित्वपक्षे उपधाह्रस्वः। एवं ण्यन्ते सर्वत्र उपसर्गसमभिव्याहाराभावे रूपद्वय ज्ञेयम्।

२ उपसर्गसमभिव्याहारे तु जनीजॄष्क्नसुरञ्जोऽमन्ताश्च (ग.सू. घटादौ) इत्यनेनामन्तत्वात् नित्यं मित्त्वम्। तेन णौ उपधाह्रस्वः। उपसर्गादसमासेऽपि 'णोपदेशस्य' (८-४-१४) इति णत्वम्। एवम् उपसर्गसमभिव्याहारे सर्वत्र ज्ञेयम्।

३ सन्नन्तात् ण्वुलि, 'नश्चापदान्तस्य झलि' (८-३-२४) इति अनुस्वारः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

४ 'नुगतोऽनुनासिकान्तस्य' (७-४-८५) इति नुगागमः अनुकाऽनुस्वारो लक्ष्यते' इति भाष्ये उक्तम्। 'सच पदान्तस्य वाच्यः (वा. ७-४-८५) इति वचनात् पक्षे 'वा पदान्तस्य' (४५५-५९) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र रूपद्वयम्।

नन्ता[१]-त्री, नमयन्-नामयन्-प्रणमयन्-न्ती, उन्नामयन्[२] निनंसन्-न्ती, नंस्यन्-न्ती-ती, नमयिष्यन्-नामयिष्यन्, प्रणमयिष्यन्-न्ती-ती, निनंसिष्यन्-न्ती-ती, नमयमाणः-नामयमाणः-प्रणमयमानः, नंनम्यमानः, नमयिष्यमाणः, नामयिष्यमाणः, प्रणान्[३]-प्रणामौ-प्रणामः, नतम्[४]-नतः, नतवान्, नमितः-नामितः-प्रणमितः-निनंसितः, नंनमितः, तवान्, नमः, नृनमः,[५] प्रणामी,[६] नप्ता,[७] नेमिः,[८] नमम:,[९] नम्रः,[१०] प्रणम्रः, नमः-नामः-प्रणमः, निनंसुः, नंनमः, नन्तव्यम्, नमयितव्यम्, नामयितव्यम्, प्रणमयितव्यम्, निनंसितव्यम्, नंनमितव्यम्, नंमनीयम्, नामनीयम्, प्रणमनीयम्, नम्यम्,[११] नम्यम्-नाम्यम्-, प्रणम्यम्, निनंस्यम्, नंनम्यम्। इषन्नमः[१२]-दुर्नमः-सुनमः, नम्यमानः, नम्यमानः-नाम्यमानः, प्रणम्यमानः, निनंस्यमानः, नंनम्यमानः,[१३] उन्नामः-प्रणामः, नामः, नमः-नामः-प्रणमः, निनंसः, नंनमः, नमनम्, नमयितुम्, नमयितुं-नामयितुम्-प्रणमयितुम्, नमितिः, नमना, नामना-प्रणमना, नमनम्, नृनमनम्, नमनम्-नामनम्, प्रणनमन्, नत्वा, नमयित्वा-नामयित्वा, प्रणत्य[१४]-प्रणम्य, प्रणमय्य,[१५] प्रणिनंस्य, प्रणंनम्य।

(९८२) **गम्लृ—गतौ**। जाना, **अनु**—अनुसरण करना, पीछे-पीछे जाना, **आ**—आना, **अधि**—मिलना, प्राप्त होना, त्यागना, **अप**—लौट जाना, **अव**—जानना, **उत्**—निकलना, ऊपर उठना, **उप**—नजदीक जाना, अनुमोदन करना, **उपा**—नजदीक जाना या आना, **दुर्**—दुःख से जाना, **नि**—ज्ञान प्राप्ति करना, **निर्**—आगे जाना, बाहर जाना,

---

१ अस्य धातोरनुदात्तत्वात् 'एकाच उपदेशेऽनुदात्तात्' (७-२-८५) इतीण्णिषेधः। वलाद्यार्धधातुके सर्वत्र एवं बोध्यम्।

२ उपसर्गसमभिव्याहारे नित्यं मित्वात्, उन्नामयन् इत्यस्य साधुत्वाय घञन्तादुन्नामशब्दात् 'तत्करोति तदाचष्टे' (वा. ३-१-२६) इति णिजन्तात् शता कल्पनीय इति (सि.कौ.)

३ क्विपि, 'अनुनासिकस्य क्विझलोः—' (६-४-१५) इति उपधादीर्घे, 'मो नो धातोः' (८-२-६४) इति नत्वे, णत्वे च रूपम्।

४ 'अनुदात्तोपदेशवनतितनोत्यादीनाम्—' (६-४-३७) इत्यनुनासिकलोपः। एवं नतिः नत्वा इत्यत्रापि न लोपो बोध्यः।

५ नृन् नमयतीति नृनमः। ण्यन्तात्, अन्तर्भावितण्यन्तात् शुद्धाद्वा धातोः पचाद्यच्। 'क्षुभ्नादिषु च' (८-४-३९) इत्यत्र पाठात् णत्वं न। एवं नृनमनमित्यत्रापि ज्ञेयम्।

६ ताच्छील्ये णिनिः। णत्वम्।

७ 'तृन्' (३-२-१३५) इति ताच्छीलिके तृनि; 'अप्तृन्तृच्—।(६-४-११) इति सूत्रे निपातनात् मकारस्य पकारः इति माधवधातुवृत्तिः। संज्ञाशब्दत्वान्नावयवार्थेऽभिनिवेशः कार्यः। पौत्रस्य अपत्यम् = नप्ता।

८ 'भाषायां धाञ् कृञ् सृजनिगमिनमिभ्यः—' (वा. ३-२-११) इति किः किन् वा प्रत्ययः। तस्य लिड्वद् भावातिदेशात् द्वित्वे, एत्वाभ्यासलोपयो रूपम्। नेमिः = रथनाभिः।

९ शब्दार्थकत्वात् अस्य 'चलनशब्दार्थादकर्मकात्—इति ताच्छीलिको युच्।

१० 'नमिकम्पि—' (३-२-१६७) इति ताच्छीलिको रप्रत्ययः।

११ 'पोरदुपधात्' (३-१-९८) इति यत्।

१२ 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधः—' (वा. १-४-६०) इति वचनान्न णत्वम्।

१३ 'नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः।' (भ.का. २-२५)

१४ 'वा ल्यपि' (६-४-३८) इति अनुनासिकलोपविकल्पः। अनुनासिकलोपपक्षे '**ह्रस्वस्य पिति—**' (६-१-७१) इति तुक्।

१५ 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।

**पर्युत्**—ऊपर उठाना, **पारि**—घेर लेना, बाहर जाना, **प्रत्या**—लौट जाना, **वि**—शत्रु की ओर चढ़ जाना, **समा**—मिलना, एकत्र होना, **समुप**—स्वीकार करना, मान्य करना, **सु**—आनन्द से या खुशी से जाना, सम्—(आ) साथ जाना, मिलना, एकत्र होना, जाना। सकर्म.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | गच्छति[१] | गच्छतः | गच्छन्ति | प्र. |
| | गच्छसि | गच्छथः | गच्छथ | म. |
| | गच्छामि | गच्छावः | गच्छामः | उ. |
| लिट् | जगाम | जग्मतुः | जग्मुः | प्र. |
| | जगमिथ-जगन्थ | जगमथुः | जग्म | म. |
| | जगाम-जगम | जग्मिव | जग्मिम | उ. |
| लुट् | गन्ता | गन्तारौ | गन्तारः | प्र. |
| | गन्तासि | गन्तास्थः | गन्तास्थ | म. |
| | गन्तास्मि | गन्तास्वः | गन्तास्मः | उ. |
| लृट् | गमिष्यति | गमिष्यतः | गमिष्यन्ति | प्र. |
| | गमिष्यसि | गमिष्यथः | गमिष्यथ | म. |
| | गमिष्यामि | गमिष्यावः | गमिष्यामः | उ. |
| लोट् | गच्छतु-तात् | गच्छताम् | गच्छन्तु | प्र. |
| | गच्छ-तात् | गच्छतम् | गच्छत | म. |
| | गच्छानि | गच्छाव | गच्छाम | उ. |
| लङ् | अगच्छत् | अगच्छताम् | अगच्छन् | प्र. |
| | अगच्छः | अगच्छतम् | अगच्छत | म. |
| | अगच्छम् | अगच्छाव | अगच्छाम | उ. |
| वि. लि. | गच्छेत् | गच्छेताम् | गच्छेयुः | प्र. |
| | गच्छेः | गच्छेतम् | गच्छेत | म. |
| | गच्छेयम् | गच्छेव | गच्छेम | उ. |
| आ. लि. | गम्यात् | गम्यास्ताम् | गम्यासुः | प्र. |
| | गम्याः | गम्यास्तम् | गम्यास्त | म. |
| | गम्यासम् | गम्यास्व | गम्यास्म | उ. |
| लुङ् | अगमत् | अगमताम् | अगमन् | प्र. |
| | अगमः | अगमतम् | अगमत | म. |
| | अगमम् | अगमाव | अगमाम | उ. |
| लृङ् | अगमिष्यत् | अगमिष्यताम् | अगमिष्यन् | प्र. |
| | अगमिष्यः | अगमिष्यतम् | अगमिष्यत | म. |
| | अगमिष्यम् | अगमिष्याव | अगमिष्याम | उ. |

१ 'इषुगमियमां छः' (७-३-७७) इति छकारः।

**कर्मणि**—गम्यते। ९ अगामि। **णिचि**—गमयति-ते। ९ अजीगमत्-त। **सनि**—जिगमिषति। **यङि**—जङ्गम्यते। **यङ्लुकि**—जङ्गमीति-जङ्गन्ति। **कृत्सु**—गन्तव्यम्, गमनीयम्, गम्यम्, गतः, गतवान्, गच्छन्, गन्तुम्, गमनम्, गत्वा, संगत्य, सँगम्य, गज्वरः, जगत्, पन्नगः, सर्वत्रगः, गमः, हृदयङ्गमः, विहङ्गमः, भुजङ्गमः, भुजगः, विहगः, पुरोगः, अन्तगः, गमः, गामी, गन्ता, गतिः, गम्यमानः, गमिष्यन्, गंस्यमानः।

**(९८३) सृप्लृ—गतौ**। (जाना)। **अप**—हटना, **उत्**—उल्लङ्घन करना, **उप**—समीप आना)। सकर्म.। अनिट्। परस्मै.।

१ सर्पति। २ **प्र.** ससर्प ससृपतुः ससृपुः। **म.** ससर्पिथ-ससृपिथ ससृपथुः ससृप। **उ.** ससर्प ससृपिव ससृपिम। ३ सर्प्ता-स्रप्ता। ४ सप्सर्यति स्रप्स्यति। ५ सर्पतु। ६ असर्पत्। ७ सर्पेत्। ८ सृप्यात् सृप्यास्ताम् सृप्यासुः। ९ **प्र.** असृपत् असृपताम् असृपन्। **म.** असृपः असृपतम् असृपत। **उ.** असृपम् असृपाव असृपाम। १० असप्र्स्यत्-अस्रप्स्यत्।

**कर्मणि**—सृप्यते। **णिचि**—सर्पयति-ते। **सनि**—सिसृप्सति। **यङि**—सरीसृप्यते। **यङ्लुकि**—सरीसृपीति-सर्सृपीति-सरिसृपीति। **कृत्सु**—सर्पकः-र्पिका, सिसृप्सकः-प्सिका, सरीसृपकः-पिका, सर्प्ता-त्री, स्रप्ता-प्त्री, सर्पयिता-त्री, सर्प्तव्यम्, स्रप्तव्यम्, सृप्तः, सर्पणम्, स्रप्तुम्-सर्प्तुम्, सृप्त्वा, संसृप्य, सृप्यम्, सर्पन्, स्रप्स्यन्-सर्प्स्यन्, सृप्यमानः, स्रप्स्यमानः-सर्प्स्यमानः, सरीसृपः,[1] सृप्यः,[2] सर्पः,[3] पीठसर्पी,[4] सर्पिः,[5] प्रियसर्पिष्कः, सृपः[6]।

**(९८४) यम—उपरमे**। (प्रतिबन्ध करना, रोकना)। **नि**—नियम में बांधना, **उत्**—ऊपर चढ़ना, यत्न करना, **व्या**—कष्ट करना, व्यवहार करना, मेहनत करना, **सम्**—एकत्र करना, मेल करना, **उप**—विवाह करना)। अकर्म.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | यच्छति | यच्छतः | यच्छन्ति | प्र. |
| | यच्छसि | यच्छथः | यच्छथ | म. |
| | यच्छामि | यच्छावः | यच्छामः | उ. |
| लिट् | ययाम | येमतुः | येमुः | प्र. |
| | येमिथ-ययन्थ | येमथुः | येम | म. |
| | ययाम-ययम | येमिव | येमिम | उ. |
| लुट् | यन्ता | यन्तारौ | यन्तारः | प्र. |
| | यन्तासि | यन्तास्थः | यन्तास्थ | म. |
| | यन्तास्मि | यन्तास्वः | यन्तास्मः | उ |

१ 'यङोऽचि च' (२-४-७४) इति यङो लुकि, 'न धातुलोपः—' (१-१-४) इति निषेधात् लघूपधगुणाभावः
२ 'ऋदुपधाच्च—' (३-१-११०) इति क्यपि रूपमेवम्।
३ सर्पतीति सर्पः। पचाद्यचि रूपमेवम्।
४ पीठेन स्रप्तं शीलमस्येति 'सुप्यजातौ णिनिः—' (३-२-७८) इति ताच्छील्ये णिनिप्रत्यये रूपमेवम्।
५ औणादिके (द.उ. ९-३०) इसि प्रत्यये रूपमेवम्। सर्पिः = घृतम्।
६ 'ऋज्रेन्द्र—' (द.उ. ९-३१) इत्यादिना रक् प्रत्यये रूपमेवम्। सृप्रम् = मधु। सृपा = नदी।

| | | | | |
|---|---|---|---|---|
| लृट् | यंस्यति | यंस्यतः | यंस्यन्ति | प्र. |
| | यंस्यसि | यंस्यथः | यंस्यथ | म. |
| | यंस्यामि | यंस्यावः | यंस्यामः | उ. |
| लोट् | यच्छतु-तात् | यच्छताम् | यच्छन्तु | प्र. |
| | यच्छ-तात् | यच्छतम् | यच्छत | म. |
| | यच्छानि | यच्छाव | यच्छाम | उ. |
| लङ् | अयच्छत् | अयच्छताम् | अयच्छन् | प्र. |
| | अयच्छः | अयच्छतम् | अयच्छत | म. |
| | अयच्छम् | अयच्छाव | अयच्छाम | उ. |
| वि. लि. | यच्छेत् | यच्छेताम् | यच्छेयुः | प्र. |
| | यच्छेः | यच्छेतम् | यच्छेत | म. |
| | यच्छेयम् | यच्छेव | यच्छेम | उ. |
| आ. लि. | यम्यात् | यम्यास्ताम् | यम्यासुः | प्र. |
| | यम्याः | यम्यास्तम् | यम्यास्त | म. |
| | यम्यासम् | यम्यास्व | यम्यास्म | उ. |
| लुङ् | अयंसीत् | अयंसिष्टाम् | अयंसिषुः | प्र. |
| | अयंसीः | अयंसिष्टम् | अयंसिष्ट | म. |
| | अयंसिषम् | अयंसिष्व | अयंसिष्म | उ. |
| लृङ् | अयंस्यत् | अयंस्यताम् | अयंस्यन् | इत्यादि । |

**भावे**—यम्यते । **णिचि**—यमयति, आयामयति । **सनि**—यियंसति । **यङि**—यंयम्यते । **यङ्लुकि**—यंयमीति-यंयन्ति । **कृत्सु**—यामकः-मिका, यमकः-मिका, आयामकः-मिका, यियंसकः[१]-सिका, यंयमकः[२]-यंयय्यमकः-मिका, यन्ता[३]-यन्त्री, यमयिता-आयामायिता-त्री, यच्छन्[४]-न्ती, नियमयन्-यामयन्-न्ती, यियंसन्, यंस्यमन्-न्ती-ती, नियमयिष्यन्-यामयिष्यन्-न्ती-ती, आयच्छमानः,[५] उपयच्छमानः, यमयमानः, आयंस्यमानः, आयामयिष्यमाणः, रिपुयत्[६]-रिपुयतौ-रिपुयतः, वियत्[७]-वियतौ-वियतः, यतम्-यतः-यतवान्, नियमितः- आयामितः, यमः,[८]

१ सन्नन्तात् द्वित्वादिके मकारस्य नत्वे, 'नश्चापदान्तस्य' (८-३-२४) इति अनुस्वारे च रूपम् ।

२ यङन्तात् 'नुगतोऽनुनासिकान्तस्य' (७-४-८५) इति नुगागमः तस्य पदान्तवद् भावेन परसवर्णविकल्पः ।

३ तुजादिषु 'यमिर्जमन्तेष्वनिडेक इष्यते' (व्याघ्रभूतिकारिका, भाष्ये ७-२-१०) इतिवचनात् धातोरनिट्त्वम् । मकारस्यानुसारे परसवर्णे चैव रूपम् ।

४ शतरि 'इषगमियमां छः' (७-३-७७) इति छकारेऽन्तादेशे तुकि, तस्य श्चुत्वेन चकारे च रूपमेवम् । एवं शानजन्तेष्वपि प्रक्रियोह्या ।

५ 'आङो यमहनः' (१-३-२८) इति अकर्मकादस्मादाङ्पूर्वकादात्मनेपदं शानच् । अकर्मकादित्युक्तत्वात् आयच्छन् कूपाद् रज्जुम् इत्यत्र शतैव ।

६ रिपून् यच्छति = उपरतं करोति इत्यर्थे कर्मण्युपपदे, 'क्विप् च' (३-२-७६) इति क्विप् । 'गमादीनाम्—' (वा. ६-४-४०) इति वचनादनुनासिकलोपे तुकि रूपमेवम् ।

७ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति क्विपि रूपमेवम् । वियत् = विष्णुपदम् ।

८ यच्छतीति यमः । कर्तरि पचाद्यच् ।

वाचंयमः,[१] यतिः,[२] आयामी,[३] वाग्यामः,[४] यमः, नियमः आयामः, संयमनः,[५] यन्तव्यम्, यमयितव्यम्, आयामयितव्यम्, यमनीयम्, यमनीयम्-यामनीयम्, यम्यम्,[६] अनियम्यम्[७]-विनियम्यम्, नियाम्यम्, यम्यमानः, यम्यमानः-आयाम्यमानः, आयामः, उद्यमः,[८] संयामः,[९] उपयमः, उपयामः, नियमः-नियामः, यन्तुम्, यमनियुतम्, आयामयितुम्, यतिः,[१०] संयुत्,[११] यमना-आयामना, यत्वा,[१२] यमयित्वा-यामयित्वा, प्रयत्य[१३]-प्रयम्य, प्रयमय्य[१४]-प्रयाम्य, यमनम्, यमनम्-आयामनम्, यमुना,[१५] यन्त्रम्,[१६] यमकम्[१७]।

(९८५) **तप—संतापे**। (संताप्त होना, जलना, जलाना, तप्त करना, मन में या शरीर में जलना)। **अनु**—पश्चात्ताप करना, **परि**—**सम्**—पश्चात्ताम करना। अक.। अनि.। पर.।

१ तपति। २ **प्र.** तताप तेपतुः तेपुः। **म.** तेपिथ-ततप्थ तेपथुः तेप। **उ.** तताप-ततप तेपिव तेपिम। ३ तप्ता। ४ तप्स्यति। ५ तपतु-तपतात्। ६ अतपत्। ७ तपेत्। ८ तप्यात्।

१ 'वाचि यमो व्रते' (३-२-४०) इति वाग् रूपे कर्मण्युपपदे खच् प्रत्ययः। 'वाचंयमपुरन्दरौ च' (६-३-६९) इत्यनेनामन्तत्वं निपात्यते। निपातनाद् द्वितीयायाः अलुक्। वाचयमः = मौनव्रती।
२ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति कर्तरि संज्ञायां क्तिच् प्रत्यय, बाहुलकात् 'न क्तिचि दीर्घश्च' (६-४-३९) इति प्रवर्तते। नितरां मन आदिकं यच्छतीति यतिः। अनुनासिकलोपोऽपि बाहुलकादेवेति ज्ञेयम्। केचित्तु 'स्त्रियां क्तिन्' (३-३-९४) इति क्तिन्, बाहुलकात् पुंल्लिङ्गत्वमिति वदन्ति।
३ तच्छीलादिषु कर्तृषु, 'सम्पृचानुरुधाङ्यमः—' (३-२-१४२) इत्यादिना, आङ्पूर्वकादस्माद् घिनुण्प्रत्यये रूपमेवम्।
४ व्रतभिन्नार्थे विवक्षिते, वाच यच्छतीत्यर्थे 'कर्मण्यण्' (३-२-१) इत्यण् प्रत्यये रूपमेवम्।
५ ण्यन्तात्, नन्द्यादित्वात् (३-१-१३४) कर्तरि ल्युप्रत्यये अनादेशे च रूपम्।
६ 'गदमदचरयमश्चानुपसर्गे' (३-१-१००) इति हलन्तलक्षणण्यदपवादतया यत् प्रत्ययः।
७ '—अनुपसर्गे' (३-१-१००) इत्युक्तत्वात्, कथमत्र सोपसर्गस्थले यत् प्रत्ययस्योपपत्तिरिति शङ्कित्वा, 'तेन न तत्र भवेद् विनियम्यम्।' इति व्याघ्रभूतिकारिकायां 'विनियम्यम्' इत्युक्तत्वात्, विपूर्वकात्, निपूर्वकाच्च यदेवेति व्याख्यातारः समर्थयन्ति।
८ उत्पूर्वकादस्माद् घञि, यद्यपि वृद्धौ सत्याम्—उद्यामः इति न्याय्यम्; तथापि 'अड उद्यमे' (भ्वादिः अक. सेट्) इत्यादि निर्देशबलादत्र भावेऽबेवेति व्याख्यानेषु समर्थितम्।
९ 'यमः समुपनिविषु च' (३-३-६३) इति वैकल्पिकोऽप्प्रत्ययः। पक्षे घञ्।
१० स्त्रियां भावादौ क्तिन् प्रत्ययेऽनुनासिकलोपे च रूपमेवम्। यतिः = वृत्तेषु विच्छित्ति विशेषद्योतकोऽवसान विशेषः।
११ 'सम्पदादिभ्यः—' (वा. ३-३-१०८) इति भावे स्त्रियां क्विपि, गमादीनामिति वक्तव्यम्' (वा. ६-४-४०) इत्यनुनासिकलोपे तुकि च रूपमेवम्। बाहुलकादत्र क्विबिति ज्ञेयम्। संयत् = युद्धम्। सुरूपिणी कन्या च।
१२ क्त्वायामनुनासिकलोपे रूपमेवम्। 'उदिदिति श्रीभोजः। यत्वा, यमित्वा' इति क्षीरस्वामी। तन्मते धातोरस्य वलाद्यार्धधातुकेषु सर्वत्र यमिता यन्ता इत्यादिकानि रूपाणि ज्ञेयानि।
१३ 'वा ल्यपि' (६-४-३८) इत्यत्र व्यवस्थितविभाषा श्रयणात् मकारान्तानामनिटां विकल्पेनानुनासिकलोपः। तेनानु नासिक लोपपक्षे तुकि, तदभावपक्षे च रूपद्वयमत्रेति ज्ञेयम्।
१४ ण्यन्ताल्ल्यपि, मित्वपक्षे उपधाह्रस्वे, 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।
१५ अजियमिशीङ्भ्यश्च' (द.उ. ५-६१) इत्युनन् प्रत्ययः। यमुना = नदीविशेषः।
१६ 'गृधृवीपचिवचियमि—' (द.उ. ८-८९) इति त्र प्रत्ययः। यन्त्रम् = शरीरसाधनम्, पीडनञ्च।
१७ 'क्वुन् शिल्पिसंज्ञयोः—' (द.उ. ३-५) इति संज्ञायां क्वुनि रूपमेवम्। यमकम् = शब्दालङ्कारविशेषः।

९ **प्र.** अताप्सीत् अताप्ताम् अताप्सुः। **म.** अताप्सीः अताप्तम् अताप्त। **उ.** अताप्तम् अताप्स्व अताप्स्म। १० अतप्स्यत्।

**कर्मणि**—तप्यते। २ तेपे। **णिचि**—तापयति-तापयते। **सनि**—तितप्सति। **यङि**—तातप्यते। **यङ्लुकि**—तातपीति-तातप्ति। **कृत्सु**—तापकः-पिका, तितप्सकः[१]-प्सिका, तातपकः-पिका, तप्ता[२]-निष्टप्ता-निस्तप्ता-त्री, तापयिता-त्री, तितप्सिता-त्री, तातपिता-त्री, उत्तपन्[३]-निष्टपन् (वा सुवर्णम्) न्ती, तापयन्-न्ती, तितप्सन्-न्ती, तप्स्यन्-न्ती-ती, तापयिष्यन्-न्ती-ती, उत्तपमानः[४]-वितपमानः, उत्तपमानः,[५] (पृष्ठम्) तापयमानः, तातप्यमानः, उत्तप्स्यमानः-वितप्स्यमानः, तापयिष्यमाणः, तातपिष्यमाणः, संतप्-संतापौ-संतापः, तप्तः-सन्तप्तः, तप्तम्, तापितः, तिताप्सितः, तातपितः-तवान्, तपनः,[६] ललाटन्तपः[७] (आदित्यः) द्विषतापः,[८] द्विषतीतापः, परन्तपः, शत्रुन्तपः,[९] अभितापी,[१०] तापः, तितप्सुः, तातपः, तप्तव्यम्, निष्टप्तव्यम्, तापयितव्यम्, तितप्सितव्यम्, तापयितव्यम्, तपनीयम्, तापनीयम्, तिप्सनीयम्, तातपनीयम्, तप्यम्,[११] ताप्यम्, तितप्स्यम्, तातप्यम्, ईषत्तपः-दुस्तपः, सुतपः, तप्यमानः, ताप्यमानः, तितप्स्यमानः, तातप्यमानः, तापः-संतापः, आतपः,[१२] तितप्सः, तातपः, तप्तुम्, तापयितुम्, तिताप्सितुम्, तातपितुम्, तप्तिः-तपस्या,[१३] तपना, तितप्सा, तातपा, तपनम्, तापनम्, तितप्सनम्, तातपनम्, तप्त्वा, तापयित्वा, तितप्सित्वा, तातपित्वा, सन्तप्य, सन्ताप्य, संतितप्स्य, संतातप्य, संतापी,[१४] द्विषन्तपः[१५]।

१ 'हलन्ताच्च' (१-२-१०) इति सनः कित्वात् न गुणः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

२ 'निसस्तपतावनासेवने' (८-३-१०२) इति षत्वम्। आसेवनम् = पुनः पुनः करणम्। 'निष्टप्तं रक्षो निष्टप्ता आरातयः।' इत्यत्र सदस्यासेवने न विवक्ष्यते। छान्दसे वा वर्णविकारः।' इति काशिका (८-३-१०२) आसेवने तु निस्तप्ता इत्येव।

३ 'उद्विभ्यां तपः' (१-३-२७) इत्यत्र 'अकर्मकाच्च' (१-३-२६) इत्यनुवृत्तेः सकर्मकात् परस्मैपदमेव।

४ 'उद् विभ्यां तपः' (१-३-२७) इति शानच्।

५ 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' (वा. १-३-२७) इत्युक्तेरत्रापि शानच्।

६ 'सहितपिदमेः संज्ञायाम्' (ग.सू. ३-१-१३४) इति नन्द्यादिषु पाठात् कर्तरि ल्युः। तपनः = सूर्यः।

७ 'असूर्यललाटयो दृशि तपोः' (३-२-३६) इति खश्। 'अरुर्द्विषयजन्तस्य—' (६-३-६७) इति मुम्। ललाटं तपतीति ललाटन्तपः = सूर्यः।

८ असंज्ञायां द्विषन्तं तपतीति विग्रहे शुद्धाद्धातोः 'कर्मण्यण्' (३-२-१) इत्यणि रूपम्।

९ 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (३-२-४६) इति खच् प्रत्ययः संज्ञायाम्। शत्रून् तापयतीति विग्रहे, खचि, मुमागमे, णिलोपे, खचि ह्रस्वः' (६-४-९४) इति उपधायाः ह्रस्वे रूपम्।

१० 'बहुलमाभीक्ष्ण्ये' (३-२-८१) इति णिनिः। असकृत् अभितपतीत्यर्थः।

११ 'पोरदुपधात्' (३-१-९८) इति यत् प्रत्ययः।

१२ आः समन्तात् तपतीति आतपः = सूर्य प्रभा। 'पुंसि संज्ञायां घः प्रायेण' (३-३-११८) इति घः। यद्वा, पचाद्यच्।

१३ 'असुन्' (द.उ. ९-४९) इत्यसुन् प्रत्यये। तपः = तपति शरीरमिति कायक्लेशात्मकः शुद्धाचारः। 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (३-१-१५) इति क्यङ्। 'सनाद्यन्ता धातवः' (३-१-३२) इति धातुसंज्ञा। 'अ प्रत्ययात्' (३-३-१०२) इति स्त्रियां भावादौ अकारप्रत्ययः। टाप्। तपस्या = तपः।

१४ सम्यक् तप्तु शीलमस्येति सन्तापी। ताच्छील्ये णिनिः।

१५ द्विषन्तं तापयतीति विग्रहे 'द्विषत्परयोस्तापेः' (३-२-३९) इति खच् प्रत्ययः। खचि 'णेरनिटि' (६-४-५१) णिलोपे, 'खचि ह्रस्वः' (६-४-९४) इति उपधायाः ह्रस्वः। द्विषतस्तकारस्य मुमि संयोगान्तलोपः। एवं परं तापयतीति विग्रहे परन्तपः इति भवति।

(९८६) **त्यज—हानौ।** हानिः उत्सर्ग इति बालमनोरमा। त्यागः इति क्षीरस्वामी। (छोड़ना, त्यागना, देना, दान करना)। सक.। अनि.। पर.।

| | | | | |
|---|---|---|---|---|
| लट् | त्यजति | त्यजतः | त्यजन्ति | प्र. |
| | त्यजसि | त्यजथः | त्यजथ | म. |
| | त्यजामि | त्यजावः | त्यजामः | उ. |
| लिट् | तत्याज | तत्यजतुः | तत्यजुः | प्र. |
| | तत्यजिथ-तत्यक्थ | तत्यजथुः | तत्यज | म. |
| | तत्याज-तत्यज | तत्यजिव | तत्यजिम | उ. |
| लुट् | त्यजिता | त्यजितारौ | त्यजितारः | प्र. |
| | त्यजितासि | त्यजितास्थः | त्यजितास्थ | म. |
| | त्यजितास्मि | त्यजितास्वः | त्यजितास्मः | उ. |
| लृट् | त्यजिष्यति | त्यजिष्यतः | त्यजिष्यन्ति | प्र. |
| | त्यजिष्यसि | त्यजिष्यथः | त्यजिष्यथ | म. |
| | त्यजिष्यामि | त्यजिष्यावः | त्यजिष्यामः | उ. |
| लोट् | त्यजतु-त्यजतात् | त्यजताम् | त्यजन्तु | प्र. |
| | त्यज-त्यजतात् | त्यजतम् | त्यजत | म. |
| | त्यजानि | त्यजाव | त्यजाम | उ. |
| लङ् | अत्यजत् | अत्यजताम् | अत्यजन् | प्र. |
| | अत्यजः | अत्यजतम् | अत्यजत | म. |
| | अत्यजम् | अत्यजाव | अत्यजाम | उ. |
| वि. लि. | त्यजेत् | त्यजेताम् | त्यजेयुः | प्र. |
| | त्यजेः | त्यजेतम् | त्यजेत | म. |
| | त्यजेयम् | त्यजेव | त्यजेम | उ. |
| आ. लि. | त्यज्यात् | त्यज्यास्ताम् | त्यज्यासुः | प्र. |
| | त्यज्याः | त्यज्यास्तम् | त्यज्यास्त | म. |
| | त्यज्यासम् | त्यज्यास्व | त्यज्यास्म | उ. |
| लुङ् | अत्याक्षीत् | अत्याक्ताम् | अत्याक्षुः | प्र. |
| | अत्याक्षीः | अत्याक्तम् | अत्याक्त | म. |
| | अत्याक्षम् | अत्याक्ष्व | अत्याक्ष्म | उ. |
| लृङ् | अत्यजिष्यत् | अत्यजिष्यताम् | अत्यजिष्यन् | इत्यादि। |

**कर्मणि**—त्यज्यते। **णिचि**—त्याजयित-ते। **सनि**—तित्यक्षति। **यङि**—तात्यज्यते। **यङ्लुकि**—तात्यजीति-तात्यक्ति। **कृत्सु**—त्याजकः-जिका, णिचि—त्याजकः-जिका, तित्यक्षकः-क्षिका, तात्यजकः-जिका, त्यक्ता-त्री, त्याजिता-त्री, तित्यक्षिता-त्री, तात्यजिता-त्री, त्यजन्-न्ती, त्याजयन्-न्ती, तित्यक्षन्-न्ती, त्यक्ष्यन्-न्ती-ती, त्याजयिष्यन्-न्ती-ती, तित्यक्षिष्यन्-न्ती-ती, व्यतित्यजमानः, त्याजयमानः, त्याजयिष्यमाणः, त्यक्-त्यग्-त्यजौ-त्यजः, व्यक्तम्-क्तः-क्तवान्, त्याजितः, तित्यक्षितः, तात्यजितः-तवान्, त्यजः, त्यागी, संत्याजी, त्याजः,

तित्यक्षुः, तात्यजः, त्यक्तव्यम्, त्याजयितव्यम्, तित्यक्षितव्यम्, तात्यजितव्यम्, त्याजनीयम्, णिचि—त्याजनीयम्, त्याज्यम्, णिचि- त्याज्यम्, त्यज्यमानः, त्याज्यमानः, त्यागः, त्याजः, तित्यक्षः,तात्यजः,त्यक्तुम्,त्याजयितुम्,त्यक्तिः,त्याजना,तित्यक्षा,तात्यजा,व्यजनम्,त्याजनम्, त्यक्त्वा, त्याजयित्वा, परित्यज्य, प्रत्याजयिष्यः।

**(९८७) षञ्ज—संगे।** (आलिङ्गन करना, गले लगाना, सटे रहना, चिपके रहना)। **अव**—लटकना, हिलना, **आ**—अनुरक्त होना, आसक्त होना, **व्या**—झगड़ना, हाथापाई करना। सक.। अनि.। पर.।

१ सजति। **दंशसञ्जस्वञ्जां शपि**—इति न लोपः। २ **प्र.** ससञ्ज। ससञ्जतुः। ससञ्जुः। **म.** ससञ्जिथ ससङ्थ। ३ सङ्क्ता। ४ सङ्क्ष्यति। ५ सजतु-सजतात्। ६ असजत्। ७ सजेत्। ८ सज्यात्। ९ असाक्षीत्। **वदव्रजेति**—वृद्धिः। १० असक्ष्यत्।

**कर्मणि**—सज्यते। **णिचि**—सञ्जयति-ते। **सनि**—सिसङ्क्षति। **यङि**—सासज्यते। **यङ्लुकि**—सासञ्जीति-सासङ्क्ति। **कृत्सु**—सङ्क्तव्यम्, सञ्जनीयम्, सक्तम्, सञ्जनम्, सङ्क्त्वा, सक्त्वा। **जान्तनशां विभाषा।** जान्तानां नशेश्च न लोपो वा स्यात् क्त्वपरे। संसज्य। अवसजति। अनुषजति। अभिषजति।

**(९८८) दृशिर्—प्रेक्षणे।** देखना। सक.। अनि.। परस्मै.। **पाघ्राध्मा**—इति सूत्रेण पश्यादेशः।

| | | | | |
|---|---|---|---|---|
| लट् | पश्यति | पश्यतः | पश्यन्ति | प्र. |
| | पश्यसि | पश्यथः | पश्यथ | म. |
| | पश्यामि | पश्यावः | पश्यामः | उ. |
| लिट् | ददर्श | ददृशतुः | ददृशुः | प्र. |
| | दद्रष्ठ-ददर्शिथ | ददृशथुः | ददृश | म. |
| | ददर्श | ददृशिव | ददृशिम | उ. |
| लुट् | द्रष्टा | द्राष्टारौ | द्रष्टारः | प्र. |
| | द्रष्टासि | द्रष्टास्थः | द्रष्टास्थ | म. |
| | द्रष्टास्मि | द्रष्टास्वः | द्रष्टास्मः | उ. |
| लृट् | द्रक्ष्यति | द्रक्ष्यतः | द्रक्ष्यति | प्र. |
| | द्रक्ष्यसि | द्रक्ष्यथः | द्रक्ष्यथ | म. |
| | द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः | उ. |
| लोट् | पश्यतु-तात् | पश्यताम् | पश्यन्तु | प्र. |
| | पश्य-तात् | पश्यतम् | पश्यत | म. |
| | पश्यानि | पश्याव | पश्याम | उ. |
| लङ् | अपश्यत् | अपश्यताम् | अपश्यन् | प्र. |
| | अपश्यः | अपश्यतम् | अपश्यत | म. |
| | अपश्यम् | अपश्याव | अपश्याम | उ. |

| | | | | |
|---|---|---|---|---|
| वि. लि. | पश्येत् | पश्येताम् | पश्येयुः | प्र. |
| | पश्येः | पश्येतम् | पश्येत | म. |
| | पश्येयम् | पश्येव | पश्येम | उ. |
| आ. लि. | दृश्यात् | दृश्यास्ताम् | दृश्यासुः | प्र. |
| | दृश्याः | दृश्यास्तम् | दृश्यास्त | म. |
| | दृश्यासम् | दृश्यास्व | दृश्यास्म | उ. |
| लुङ् | अदर्शत् | अदर्शताम् | अदर्शन् | प्र. |
| | अदर्शः | अदर्शतम् | अदर्शत | म. |
| | अदर्शम् | अदर्शव | अदर्शम | उ. |

**इरितो वा**—इति विकल्पेन अङ्पक्षे रूपम् । **ऋदृशोऽङि गुणः** । ऋवर्णान्तानां दृशेश्च गुणः स्यादङि ।

पक्षे—**प्र.** अद्राक्षीत् अद्राष्टाम् अद्राक्षुः । **म.** अद्राक्षीः अद्राक्षिष्टम् अद्राक्षिष्ट । उ. अद्राक्षम् अद्राक्ष्व अद्राक्ष्म ।

| | | | | |
|---|---|---|---|---|
| लृङ् | अद्रक्ष्यत् | अद्रक्ष्यताम् | अद्रक्ष्यन् | प्र. |
| | अद्रक्ष्यः | अद्रक्ष्यतम् | अद्रक्ष्यत | म. |
| | अद्रक्ष्यम् | अद्रक्ष्याव | अद्रक्ष्याम | उ. |

**कर्मणि**—दृश्यते । ५ ददृशे । ९ अदर्शि । **णिचि**—दर्शयति-ते । **सनि**—दिदृक्षते । **यङि**—दरीदृश्यते । **यङ्लुकि**—दरीदृशीति-दरिदृशीति **कृत्सु**—दर्शकः-र्दिका, **णिचि**—दर्शकः-दर्शिका, दिदृक्षकः[१]-क्षिका, दरीदृशकः[२]-शिका, द्रष्टा[३]-द्रष्टी, दर्शयिता-त्री, दिदृक्षिता-त्री, दरीदृशिता-त्री, पश्यन्[४]-न्ती, दर्शयन्-न्ती, सन्दिदृक्षन्[५]-न्ती, द्रक्ष्यन्-न्ती-ती, दर्शयिष्यन्-न्ती, सन्दिदृक्षिष्यन्-न्ती-ती, संपश्यमानः[६] दर्शयमानः, दिदृक्षमाणः[७] दरीदृश्यमानः, सन्द्रक्ष्यमाणः, दर्शयिष्यमाणः, दिदृक्षिष्यमाणः, दरीदृशिष्यमाणः, तादृक्-तादृशौ[८]-तादृशः, दृष्टम्-दृष्टः-दृष्टवान्, दर्शितः, दिदृक्षितः, दरीदृशितः-तवान्, पश्यः[९] उत्पश्यः, तादृशः,[१०] यादृशः,

१ सन्नन्तान् ण्वुलि, सनो झलादित्वेन् 'हलन्ताच्च' (१-२-१०) इति कित्वेन्, अमभावे, द्वित्वादिषु कृतेषु 'व्रश्च—' (८-२-३६) इत्यादिना धातुशकारस्य पकारे, 'षढोः कः सि' (८-२-४१) इति तस्य ककारे, षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

२ यङन्ते सर्वत्र 'रीगृदुपधस्य च' (७-४-९०) इत्यभ्यासे रीगागमः ।

३ तृचि, सृजिदृशो झल्यमकिति' (६-१-५८) इति अमागमे, यणादेशे च रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् ।

४ शतरि, शपि, 'पाध्रा—' (७-३-७८) इति पश्यादेशे, पररूपे च रूपमेवम् । एवं शानजन्तेऽपि ज्ञेयम् ।

५ 'दृशेश्च—' (वा. १-३-२९) इत्यत्र 'अकर्मकात्' इत्युक्त्या, सकर्मकादस्मात् सम्पूर्वकात् तु यथा प्राप्तं परस्मैपदमेव भवतीति, तदन्तादस्मात् सनि परस्मैपदमेव, नात्मनेपदमिति बोध्यम् ।

६ सम्पूर्वकादस्मात् 'दृशेश्चेति वक्तव्यम्' (वा. १-३-२९) इति शानच् ।

७ 'शाश्रुस्मृदृशां सनः' (१-३-५७) इति सन्नन्तात् आत्मनेपदमेव ।

८ 'त्यदादिषु दृशोऽनालोचने कञ् च' (३-२-६०) इत्यनेन किन् कञ् इत्युभौ प्रत्ययौ भवतः । तत्र क्विनि, 'त्यदादीनाम्' दीनाम् उपपदभूतानां 'आ सर्वनाम्नः' (६-३-९१) इत्यनेन दृग् दृशवतुषु परेषु आत्वे, 'क्विन् प्रत्ययस्य कुः' (८-२-६२) इति कुत्वे च रूपम् । एवं तादृक्, ईदृक् इत्यादयोऽपि ज्ञेयम् ।

९ कर्तरि, 'पाध्राध्माधेट्दृशः शः' (३-१-१३७) इति शप्रत्यये, शपि, 'पाध्राध्मा—' (७-३-७८) इत्यादिना पश्यादेशे, पररूपे पश्यः इति भवति ।

१० 'त्यदादिषु दृशोऽनालोचने कश्च' (३-२-६०) इत्यनेन कनि प्रत्यये सर्वनाम्नो दृग् दृश् वस्तुषु दीर्घे रूपम् । स्त्रियाम्, 'टिड्ढाणञ्—' (४-१-१५) इत्यादिना ङीप् ।

सदृक्[१]-सदृशः, अन्यादृक्-अन्यादृशः, ईदृक्-कीदृक्-ईदृशः- किदृशः-ईदृक्षः-कीदृक्षः, तादृक्षः, यादृक्षः, सदृक्षः, अन्यादृक्षः, सदृशी, तादृशी, पापदृष्वा,[२] पारदृश्वरी, विवेकदृश्वा, यमास्यदृश्वरी,[३] असूयम्पश्याः[४] (राजदाराः), उग्रम्पश्यः,[५] कश्यपः,[६] सुदर्शनः,[७] ददृशिवान्[८]-ददृश्वान्, मार्गदर्शी, दर्शः, दिदृक्षुः,[९] सन्दिदर्शयिषुः,[१०] दरीदर्शः, द्रष्टव्यम्, दर्शयितव्यम्, दिदृक्षितव्यम्, दरीदृशितव्यम्, दर्शनीयम्, **णिचि**—दर्शनीयम्, दिदृक्षणीयम्, दरीदृशनीयम्, दृश्यम्, दर्श्यम्, दिदृक्ष्यम्, दरीदृश्यम्, दृश्यमानः, दर्श्यमानः, दिदृक्ष्यमाणः, दरीदृश्यमानः, दर्शः, आदर्शः,[११] दिदृक्षः, दरीदृशः, द्रष्टुम्,[१२] द्रष्टुम्, दर्शयितुम्, दिदृक्षितुम्, दरीदृशितुम्, दृक्,[१३] दृष्टिः,[१४] दर्शना, दिदृक्षा, दरीदृशा, पश्यः,[१५] दर्शनम्, दिदृक्षणम्, दरीदृशनम्, दृष्ट्वा, दर्शयित्वा, दिदृक्षित्वा, दरीदृशित्वा, सन्दृश्य, प्रदर्श्य, प्रदिदृक्ष्य, प्रदरीदृश्य, कन्यादर्शः[१६] (वरयति), मांसशोणितसन्दर्शः,[१७] विप्रदर्शनम्, पशुः[१८]।

**(९८९) दंश—दशने**। (काटना, डसना, दंश मारना)। सकर्म.। अनिट्। परस्मै.।

१ दशति '**दंशसञ्जस्वञ्जां शपि**' ( ) इति न लोपः। २ **प्र.** ददंश दशंशतुः ददंशुः।

---

१ 'समानान्ययोश्च' (वा. ३-२-६०) इति क्विन् क्वञौ प्रत्ययौ भवतः। तत्र 'दृग्दृशवतुषु' (६-३-८९) इत्यनेन समानशब्दस्य सभावे सदृक् सदृशः सदृक्षः इति भवति। ईदृक् इत्यादिषु क्विन् क्वञोः प्रत्ययोः 'इदं किमोरीश्की' (६-३-९०) इत्यनेन प्रकृतेः ई की इत्येतौ आदेशौ भवत इति विशेषः।

२ 'दृशेः क्वसश्च वक्तव्यः' (३-२-६०) इति क्वसप्रत्यये रूपम्।

३ 'यमास्यदृश्वरी तस्य ताटका वेत्ति विक्रमम्।' (भ.का. ५-३४)

४ 'असूर्यललाटयोर्दृशितपोः'(३-२-३६)इति खश्। शित्वात् पश्यादेशः। खित्वात् नुम्। असूर्य इति निपातनात् नञोऽसमर्थसमासः।

५ 'उग्रमाश्येरम्मदपाणिन्धमाश्च' (३-२-३७) इत्यनेन खश् प्रत्ययान्तो निपातितः। उग्रमिति क्रियाविशेषणम्। 'उग्रपश्यः क्रूरदृष्टिरुग्रं पापं विदन्नपि' इति प्र. सर्वस्वे।

६ पश्यतीति पश्यः। स एव पश्यकः—स्वार्थे कन्। 'पश्यकः कश्यपोऽभवत्' इति पौराणिकवचनात् पृषोदरादित्वात् कल्पशम्-कश्मलम् इत्यादेष्विव वर्णप्रत्ययः।

७ सुष्ठु दर्शयतीति सुदर्शनः। नन्द्यादित्वात् (३-१-१३४) कर्तरिल्युः।

८ क्वसौः, 'दृशेश्चेति वक्तव्यम्' (वा. ७-२-६८) इति इड्विकल्पे रूपद्वयम्।

९ संकथेच्छुरभिधातुमनीशा सम्मुखी न च बभूव दिदृक्षुः। (शि.व. १०-४१)

१० सन्दिदर्शयिषुः साम निजुह्नुषुः क्षपाटताम्। (भ.का. ५-६४)

११ करणेऽधिकरणे चार्थे पुंसि संज्ञायां घः—' (३-३-११४) इति घप्रत्ययः। आदर्शः = दर्पणम्।

१२ 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' (३-३-१०) इति क्रियार्थक्रियायां तुमुन्।

१३ स्त्रियाम्, सम्पदादित्वात् (वा. ३-३-९४) भावे क्विप्। 'क्तिन्नपीष्यते' (वा. ३-३-९४) इत्युक्त्या दृष्टि रित्यपि साधुः।

१४ क्तिच् क्तौ च संज्ञायाम् (३-३-१७४) इति संज्ञायां क्तिच्। दृष्टिः = नेत्रम्।

१५ यद्यपि 'पश्यार्थैश्चानालोचने' (८-१-२५) इत्यत्र निर्देशवलात् दर्शनम् = पश्यः, भावे शप्रत्ययोऽयम्। ल्युडपवादोऽयमिति प्रतीयते, तथापि 'अदर्शनं लोपः' (१-१-६०) इति ल्युडन्तस्यापि सूत्रकारनिर्देशात् ल्युडपि भवति।

१६ कर्मण्युपपदे 'कर्मणिदृशिविदोः साकल्ये' (३-४-२९) इति णमुल्। यां यां कन्यां पश्यति तास्सर्वा अपि वरयतीति भावः।

१७ 'मांसशोणितसन्दर्शं तुण्डवातमयुध्यत। (भ.का. ५-१०१)

१८ 'अर्जिदृशि—' (द.उ. १-११२) इति कुप्रत्यये, यथाक्रमं पश्वादेशे च रूपम्। पशुः = मन्त्रबाह्यो जनः।

**म.** ददंशिथ-ददंष्ट ददंशथुः ददंश। **उ.** ददंश ददंशिव ददंशिम। ३ **प्र.** दंष्टा। दंष्टारौ दंष्टारः। **म.** दंष्टासि दंष्टास्थः दंष्टास्थ। **उ.** दंष्टास्मि दंष्टास्वः दंष्टास्मः। ४ **प्र.** दङ्क्ष्यति दङ्क्ष्यतः दङ्क्ष्यन्ति। ५ दशतु-तात् दशताम् दशन्तु। ६ अदशत् अदशताम् अदशन्। **म.** अदशः **उ.** अदशम्। ७ दशेत् दशेताम् दशेयुः। **म.** दशेः दशेतम् दशेत। **उ.** दशेयम् दशेव ददेम। ८ **प्र.** दश्यात् दश्यास्ताम् दश्यासुः। ९ **प्र.** अदाङ्क्षीत् अदाष्टाम् अदाङ्क्षुः। **म.** अदाङ्क्षीः अदांष्टम् अदांष्ट। **उ.** अदाङ्क्षम् अदाङाक्ष्व अदाङ्क्ष्म। १० अदङ्क्ष्यत् अदङ्क्ष्यताम् अदङ्क्ष्यन् इत्यादि।

**कर्मणि**—दश्यते। **णिचि**—दंशयति-ते। **सनि**—दिदङ्क्षति। **यङि**—दंदश्यते। **यङ्लुकि**—दंदशीति-दंदष्टि। **कृत्सु**—दंशकः[१]-शिका, दिदङ्क्षकः[२]-क्षिका, ददंशकः[३]-दन्दशकः-शिका, दंष्टा[४]-दंष्ट्री, दंशयिता-त्री, दंशन्[५]-न्ती, दंशयन्-न्ती, दङ्क्ष्यन्-न्ती-ती, दंशयिष्यन्, दंशयमानः, दंशयिष्यमाणः, दष्टम्-दष्टः-दष्टवान्, दंशितः, दंशः, दशनः,[६] वृषदंशः,[७] दंदशः,[८] दन्दशूकः,[९] दंष्टव्यम्, दंशयितव्यम्, दंशनयीम्, दंश्यम्, दश्यमानः, दंश्यमानः, दंष्टुम्, दंशयितुम्, दशा[१०]-दष्टिः, दशना, दंशनम्,[११] दशनम्, दंष्ट्रः-दंष्ट्रा, दष्ट्वा, दंशयित्वा, विदश्य, विदंश्य, मूलकोपदंशम्।

**( ९९० ) कृष—विलेखने।** विलेखनम् = आकर्षणम्। (कृषिकर्म करना, जोतना, हल चलाना)। **अप**—बहना, **आ**—आकर्षण करना, खींचना, **उत्**—उठाना, **सम्**—आकुञ्चित करना, समेटना, **सन्नि**—खैंचकर समीप में लाना। सक.। अनिट्। परस्मै.।

१ 'नकारजावनुस्वारपञ्चमौ झलि धातुषु।' इति रचनात् नोपधोऽयं धातुः। नकारस्य 'नश्चापदान्तस्य झलि' (८-३-२४) इत्यनुस्वारः। एवं सर्वत्र ज्ञेयम्।

२ सनि 'व्रश्चभ्रश्च—' (८-२-३६) इत्यादिना शकारस्य षकारे, 'षढोः कः सि' (८-२-४१) इति षकारस्य ककारे, षत्वे, अनुस्वारे च रूपमेवम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

३ लुप सदचरजपजभदहदशगृभ्यो भावगर्हायाम्'(३-१-२४) इति भावगर्हायां यङ्। 'अनिदिताम्—'(६-४-२४) इति नकारलोपः। 'जपजभ—'(७-४-८६) इति अभ्यासस्य नुगागमः। 'स च पदान्तवद्वाच्यः'(वा. ७-४-८५) इत्यनेन पदान्तवद् भावः। 'वा पदान्तस्य' (८-४-५९) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र रूपद्वयम्।

४ तृचि, शकारस्य 'व्रश्च—' (८-२-३६) इत्यादिना षत्वे नकारस्यानुस्वारे, ष्टुत्वे च रूपम्। एवं तव्यदादिष्वपि ज्ञेयम्।

५ शपि, 'दशसञ्जस्वजां शपि' (६-४-२५) इत्युपधानकारस्य लोपः।

६ 'कृत्यल्युटो बहुलम्'(३-३-११३) इति बाहुलकात् कर्तरि ल्युट्। यद्वा, नन्द्यादेराकृतिगणत्वात्। (३-१-१३४) कर्तरि ल्युः।

७ वृषं दशतीति वृषदंशः = मार्जारः। कर्मण्यण्' (३-२-१) इत्यण्।

८ यङन्तात् पचाद्यचि, यङो लुकि, उपधानकारलोपाभावे रूपमेवम्।

९ 'वाऽसरूपोऽस्त्रियाम्' (३-१-९४) इत्यनेन असरूपापवादप्रत्ययत्वात् उत्सर्गस्य वा बाधकः, यङन्तात् 'यजजपदशां यङः' (३-२-१६६) इत्युक प्रत्ययः। दन्दशूकः = सर्पः।

१० भिदादेराकृतिगणत्वेन, तत्र (३-३-१०४) पाठादङि, उपधानकारलोपे दशा इति क्षीरतरङ्गिणी। दशा = वर्तिरवस्था वस्त्रान्तावयवश्च। भिदादिष्वस्यादर्शनात् क्तिनि = दृष्टि रिति रूपमिति।

११ करणे ल्युटि, 'दंश दशने' इति धातुपाठबलात् नकारलोपे रूपमेवम् दंशेः करणे ल्युटि नलोपो वाच्यः, इति न लोपः। इति धा. का. व्याख्याने (२-४०) दृश्यते।

१ कर्षति। २ प्र. चकर्ष चकृषतुः चकृषुः। म. चकर्षिथ चकृषथुः चकृष। उ. चकर्ष चकृषिव चकृषिम। ३ प्र. कर्ष्टा कर्ष्टारौ कर्ष्टारः। पक्षे—क्रष्टा[1] क्रष्टारौ क्रष्टारः इत्यादि। ४ प्र. कर्क्ष्यति कर्क्ष्यतः कर्क्ष्यन्ति। पक्षे—क्रक्ष्यति क्रक्ष्यतः क्रक्ष्यन्ति इत्यादि। ५ कर्षतु-कर्षतात्। उ. कर्षाणि। ६ प्र. अकर्षत्। म. अकर्षः। उ. अकर्षम्। ७ प्र. कर्षेत् कर्षेताम् कर्षेयुः। म. कर्षेः कर्षेतम् कर्षेत। उ. कर्षेयम् कर्षेव कर्षेम। ८ प्र. कृष्यात् कृष्यास्ताम् कृष्यासुः। म. कृष्याः कृष्यास्तम् कृष्यास्त। उ. कृष्यासम् कृष्यास्व कृष्यास्म। ९ प्र. अकृक्षत्[2] अकृक्षताम् अकृक्षन्। म. अकृक्षः अकृक्षतम् अकृक्षत। उ. अकृक्षम् अकृक्षाव अकृक्षाम। पक्षे– अक्राक्षीत्[3] अक्राष्टाम् अक्राक्षुः। म. अक्राक्षीः अक्राष्टम् अक्राष्ट। उ. अक्राक्षम् अक्राक्ष्व अक्राक्ष्म। पक्षे– प्र. अकार्क्षीत्[4] अकार्ष्टाम् अकार्क्षुः। म. अकार्क्षीः अकार्ष्टम् अकार्ष्ट। उ. अकार्क्षम् अकार्क्ष्व अकार्क्ष्म। १० प्र. अक्रक्ष्यत् अक्रक्ष्यताम् अक्रक्ष्यन्। अकर्क्ष्यत् अकर्क्ष्यताम् अकर्क्ष्यन इत्यादि।

**कर्मणि**—कृष्यते। **णिचि**—कर्षयति-ते। **सनि**—चिकृक्षति। **यङि**—चरीकृष्यते। **यङ्लुकि**—चरीकृषीति-चर्कृषीति चर्कष्टि। **कृत्सु**—क्रष्टव्यः-कर्ष्टव्यः, कर्षनीयः, कृष्यः, कृष्टः, कर्षन्, क्रक्ष्यन्-कर्क्ष्यन्-न्ती-ती, कर्ष्टुम्-क्रष्टुम्, कृष्ट्वा, विकृश्य, सङ्कर्षणः, कृषिः, प्रकर्षः, निष्कर्षः।

**(९९१) दह—भस्मीकरणे।** (जलाना, नष्ट करना, दुख देना)। **परि**—पूरी तरह जला देना। सक.। अनि.। परस्मै.।

१ दहति। २ प्र. ददाह देहतुः देहुः। म. देहिथ-ददग्ध **अकारत्वात् भारद्वाजनियमात्थलि विकल्पेन इति रूपम्।** अनिट् पक्षे **दादेर्धातोर्घः।** उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च। इति ददघ् थ इति जाते **झषस्तथो**—रिति थस्य धकारे, घस्य जश्त्वेन गकारे च रूपम्। उ. ददाह-ददह देहिव देहिम। ३ दग्धा। ४ धक्ष्यति। ५ दहतु। ६ अदहत्। ७ दहेत्। ८ दह्यात्। ९ प्र. अधाक्षीत् अदाग्धाम् अधाक्षुः। म. अधाक्षीः अदाग्धम् अदाग्ध। उ. अधाक्षम् अधाक्ष्व अधाक्ष्म। १० प्र. अधक्ष्यत् म. अधक्ष्यः उ. अधक्ष्यम्।

**कर्मणि**—दह्यते। २ देहे। **णिचि**—दाहयति-ते। **सनि**—दिधक्षति। **यङि**—दंदह्यते। **यङ्लुकि**—दंदग्धि-दंदहीति। **कृत्सु**—दाहकः-हिका, **णिचि**—दाहकः-हिका, दिधक्षकः-क्षिका, दन्दहकः-दंदहकः-हिका, दग्धा[5]-दग्ध्री, दाहयिता-त्री, दिधक्षिता-त्री, दन्दहिता-त्री, दहन्-न्ती, दाहयन्-न्ती, दिधक्षन्-न्ती, दिधक्षयन्, धक्ष्यन्[6]-न्ती-ती, दाहयिष्यन्-न्ती-ती,

१ कृष + ता इति स्थिते 'अनुदात्तस्य चर्दुपधस्य' (६-१-५९) इति कृ + अ + ष + ता इति जाते 'इको यणचि' इति यणि कृष् ता इति जाते, ष्टुत्वेन क्रष्टा इति रूपम्। अमागमाभावे लघूपगुणे कर्ष्टा इति रूपम्।
२ शल इगुपधादनिटः। (३-१-४५) इति क्सादेशे पञ्चमो लुङ्।
३ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति सिचि, अनुनासिकस्येत्यमागमे रूपम्।
४ अमागमाभावे रूपम्। 'धनुर्व्यकार्क्षीदगुरुबाणगर्भम्' (भट्टिः २।५३)
५ तृचि, घत्वधत्वजश्त्वानि भवन्ति। एवमेव तव्यदादिष्वपि प्रक्रियोह्या।
६ भत्वचर्त्वभष्भावषत्वेषु रूपम्।

दिधक्षिष्यन्-न्ती-ती, व्यतिदहमानः, दाहयमानः, दन्दह्यमानः, व्यतिधक्ष्यमाणः, दाहयिष्यमाणः, दन्दहिष्यमाणः, प्रधक्[1]-प्रधग्-प्रदहौ-प्रदहः, दग्धम्, दग्धः, दग्धवान्, दाहितः, दिधक्षितः, दन्दहित-तवान् दहनः[2]। परिदाही,[3] दाहः, दिधक्षु, दन्दहः, दग्धव्यम्, दाहयितव्यम्, दिधक्षितव्यम्, दन्दहितव्यम्, दहनीयम्, दहेलिमः,[4] दाहनीयम्, दिधक्षणीयम्, दन्दहनीयम्, दाह्यम्, **णिचि**– दाह्यम्, दिधक्ष्यम्, दन्दह्यम्, दह्यमानः, दाह्यमानः, दिधक्ष्यमाणः, दन्दह्यमानः, निदाघः,[5] अवदाघः, दिधक्षः, दन्दहः, दग्धुम्, दाहयितुम्, दिधक्षितुम्, दन्दहितुम्, दन्धिः, दाहना, दिधक्षा, दन्दहा, दहनम्, दाहनम्, दिधक्षणम्, दन्दहनम्, दग्ध्वा, दाहयित्वा, दिधक्षित्वा, दन्दहित्वा, प्रदह्य, प्रदाह्य, प्रदिधक्ष्य, प्रदन्दह्य, दह्रः[6]।

(९९२) **मिह–सेचने**। (सींचना, गीला करना, प्रोक्षण करना, पेशाब करना)। सकर्म.। अनिट्। परस्मै.।

१ मेहति। २ **प्र.** मिमेह मिमिहतुः। **म.** मिमेहिथ। **उ.** मिमिहिव। ३ मेढा मेह्ता इति स्थिते। **होढः** इति ढत्वे धकारे ष्टुत्वे ढलोपे च रूपम्। ४ मेक्ष्यति। हस्य ढत्वे तस्य। **षढो**–रिति कत्वे धकारे ष्टुत्वे च रूपम्। ८ मिह्यात् मिह्यास्ताम्। ९ अमिक्षत् अमिक्षताम्। १० अमेक्ष्यत्।

**कर्मणि**–मिह्यते। **णिचि**–मेहयति। **सनि**–मिमिक्षति। **यङि**–मेमिह्यते। **यङ्लुकि**–मेमिहीति-मेमेढि। **कृत्सु**–मेढव्यम्, मेहनीयम्, मेह्यम्, मीढः, मेहन्, मेढुम्, मीढम्, मेहनम्, मेढुम्, मीढ्वा, अवमिह्य, मेघः, मिहिरः = सूर्यः।

(९९३) **कित–निवासे रोगापनयने च**। (निवास करना। रोग का प्रतिकार करना, चिकित्सा करना)। सक.। सेट्। पर.। '**गुप्तिज्किद्भ्यः**' इति नित्यसन्। १ चिकित्सति। २ चिकित्साञ्चकार। ३ चिकित्सिता। ४ चिकित्सिष्यति। ५ चिकित्सतु-तात्। ६ अचिकित्सत्। ७ चिकित्सेत्। ८ चिकित्स्यात्। ९ अचिकित्सीत्। १० अचिकित्सिष्यत्। निवासे तु केतयति।

**कर्मणि**–चिकित्स्यते। **णिचि**–चिकित्सयति-ते। **सनि**–चिकित्सिषति। अनेकाच्त्वात् न यङ्लुकौ। **कृत्सु**–चिकित्सितव्यम्, चिकित्सनीयम्, चिकित्स्यम्, चिकित्सितः, चिकित्सकः, चिकित्सितुम्, चिकित्सित्वा, विचिकित्स्य, चिकित्सा, विचिकित्सा-संशयः।

(९९४) **दान–खण्डने**। (खण्डन करना, तोड़ना)। सकर्म.। सेट्। उभय.।

---

१ क्विपि धत्वभष्भावचर्त्वजश्त्वेषु रूपम्।

२ नन्द्यादेः (३-१-१३४) आकृतिगणत्वात् कर्तरि ल्युः। दहनः = अग्निः।

३ 'सम्पृचानुरुधा–' (३-२-१४२) इत्यादिना तच्छीलादिषु कर्तृधिनुण् प्रत्ययो भवति।

४ केलिमर उपसंख्यानम्' (वा. ३-१-९६) इति भावकर्मणोः केलिमर प्रत्ययः।

५ नितरां दहतीति निदाघः। घञि न्यङ्क्वादिषु (७-३-५३) 'संज्ञायां मेघनिदाघावदाघार्घाः' (ग.सू. ७-३-५३) इति वचनात् कुत्वम्। निदाघः = ग्रीष्मः। अवदाघः = भक्ष्यविशेषः। असंज्ञायां तु निदाहः, अवदाहः इत्येव भवति।

६ 'स्फायितञ्चि–' (द.उ. ८-३१) इत्यादिना रक्प्रत्ययः। दह्रः = अग्निः सूर्यो वा।

नित्यसन्नन्तः। दीदांसति-ते। 'मीमांसति' (९७२) वत्।

( ९९५ ) **शान—तेजने**। (तेज करना, तीक्ष्ण करना, पैना करना)। सकर्म.। सेट्। उभय.। '**मान्बधदान्शान्भ्यः**' इति नित्यं सन् अभ्यासस्य दीर्घश्च। १ शीशांसति-ते। २ शीशांसाञ्चकार चक्रे। ३ शीशांसिता। ४ शीशांसिष्यति-ते। ५ शीशांसतु-ताम्। ६ अशीशांसत्-त। ७ शीशांसेत्-त। ८ शीशांस्यात्-शीशासिषीष्ट। ९ असीशांसीत्-अशीशांसीष्ट। शेषं (९७२) वत्।

( ९९६ ) **डुपचष्—पाके**। (पकाना)। सक.। अनि.। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | पचति | पचतः | पचन्ति | प्र. |
| | पचसि | पचथः | पचथ | म. |
| | पचामि | पचावः | पचामः | उ. |
| आत्म | पचते | पचेते | पचन्ते | प्र. |
| | पचसे | पचेते | पचध्वे | म. |
| | पचे | पचावहे | पचामहे | उ. |
| लिट् | पपाच | पेचतुः | पेचुः | प्र. |
| | पेचिथ-पपक्थ | पेचथुः | पेच | म. |
| | पपाच-पपच | पेचिव | पेचिम | उ. |
| आत्मने. | पेचे | पेचाते | पेचिरे | प्र. |
| | पेचिषे | पेचाथे | पेचिध्वे | म. |
| | पेचे | पेचिवहे | पेचिमहे | उ. |
| लुट् | पक्ता | पक्तारौ | पक्तारः | प्र. |
| | पक्तासि | पक्तास्थः | पक्तास्थ | म. |
| | पक्तास्मि | पक्तास्वः | पक्तास्मः | उ. |
| आत्मने. | पक्ता | पक्तारौ | पक्तारः | प्र. |
| | पक्तासे | पक्तासाथे | पक्ताध्वे | म. |
| | पक्ताहे | पक्तास्वहे | पक्तास्महे | उ. |
| लृट् | पक्ष्यति | पक्ष्यतः | पक्ष्यन्ति | प्र. |
| | पक्ष्यसि | पक्ष्यथः | पक्ष्यथ | म. |
| | पक्ष्यामि | पक्ष्यावः | पक्ष्यामः | उ. |
| आत्मने. | पक्ष्यते | पक्ष्येते | पक्ष्यन्ते | प्र. |
| | पक्ष्यसे | पक्ष्येथे | पक्ष्यध्वे | म. |
| | पक्ष्ये | पक्ष्यावहे | पक्ष्यामहे | उ. |
| लोट् | पचतु-तात् | पचताम् | पचन्तु | प्र. |
| | पच-तात् | पचतम् | पचत | म. |
| | पचानि | पचाव | पचाम | उ. |
| आत्मने. | पचताम् | पचेताम् | पचन्ताम् | प्र. |
| | पचस्व | पचेथाम् | पचध्वम् | म. |
| | पचै | पचावहै | पचामहै | उ. |

| | | | | |
|---|---|---|---|---|
| लङ् | अपचत् | अपचताम् | अपचन् | प्र. |
| | अपच: | अपचतम् | अपचत | म. |
| | अपचम् | अपचाव | अपचाम | उ. |
| आत्मने. | अपचत | अपेताम् | अपचन्त | प्र. |
| | अपचथा: | अपेथाम् | अपचध्वम् | म. |
| | अपचे | अपचावहि | अपचामहि | उ. |
| वि. लि. | पचेत् | पचेताम् | पचेयु: | प्र. |
| | पचे: | पचेतम् | पचेत | म. |
| | पचेयम् | पचेव | पचेम | उ. |
| आत्मने. | पचेत | पचेयाताम् | पचेरन् | प्र. |
| | पचेथा: | पचेयाथाम् | पचेध्वम् | म. |
| | पचेय | पचेवहि | पचेमहि | उ. |
| आ. लि. | पच्यात् | पच्यास्ताम् | पच्यासु: | प्र. |
| | पच्या: | पच्यास्तम् | पच्यास्त | म. |
| | पच्यासम् | पच्यास्व | पच्यास्म | उ. |
| आत्मने. | पक्षीष्ट | पक्षीयास्ताम् | पक्षीरन् | प्र. |
| | पक्षीष्ठा: | पक्षीयास्थाम् | पक्षीध्वम् | म. |
| | पक्षीय | पक्षीवहि | पक्षीमहि | उ. |
| लुङ् | अपाक्षीत् | अपाक्ताम् | अपाक्षु: | प्र. |
| | अपाक्षी: | अपाक्तम् | अपाक्त | म. |
| | अपाक्षम् | अपाक्ष्व | अपाक्ष्म | उ. |
| आत्मने. | अपक्त | अपक्षाताम् | अपक्षत | प्र. |
| | अपक्था: | अपक्षाथाम् | अपग्ध्वम् | म. |
| | अपक्षि | अपक्ष्वहि | अपक्ष्महि | उ. |
| लृङ् | अपक्ष्यत् | अपक्ष्यताम् | अपक्ष्यन् | प्र. |
| | अपक्ष्य: | अपक्ष्यतम् | अपक्ष्यत | म. |
| | अपक्ष्यम् | अपक्ष्याव | अपक्ष्याम | उ. |
| आत्मने. | अपक्ष्यत | अपक्ष्येताम् | अपक्ष्यन्त | प्र. |
| | अपक्ष्यथा: | अपक्ष्येथाम् | अपक्ष्यध्वम् | म. |
| | अपक्ष्ये | अपक्ष्यावहि | अपक्षयामहि | उ. |

**कर्मणि**—पच्यते। **णिचि**—पाचयति-ते। **सनि**—पिपक्षति-ते। **यङि**—पाचच्यते। **यङ्लुकि**—पापक्ति-पापचीति। **कृत्सु**—पाचक:-चिका, **णिचि**—पाचक:-चिका, पिपक्षक:[1]-क्षिका, पापचक:[2]-चिका, पक्ता[3]-त्री, पाचयिता-त्री, पिपक्षिता-त्री, पापचिता-त्री, पचन्-न्ती, पाचयन्-न्ती, पिपक्षन्-न्ती, प्रणिपक्ष्यन्[4]-प्रनिपक्ष्यन्-न्ती-ती, पाचयिष्यन्-न्ती-ती, पिपक्षिष्यन्-

१ सन्नन्ताण्ण्वुलि, 'चो: कु:' (८-२-३०) इति कुत्वे, षत्वे, च रूपम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

२ यङन्ते सर्वत्र, 'दीर्घोऽकित:' (७-४-८३) इत्यभ्यासदीर्घ:।

३ तृचादिषु सर्णत्र 'चो: कु:' (८-२-३०) इति कुत्वं ज्ञेयम्।

४ 'लृट् शेषे च' (३-३-१३) इति लृडत्र भविष्यति काले 'पक्ष्यामीति व्रजति' इत्यर्थ:। शेषे विभाषा (८-४-१८) इति नेर्णत्वविकल्प:।

न्ती-ती, पचमानः, पाचयमानः, पिपक्षमाणः, पापच्यमानः, पक्ष्यमाणः, पाचयिष्यमाणः, ओदनपक्[१]-पचौ-पचः, पक्वम्[२]-पक्वः-पक्वान्, प्रपक्वानि[३] (फलानि), पाचितः, पिपक्षितः, पापचितः-तवान्, पचः,[४] श्वपचः,[५] श्वपाकः[६]-मांसपाकः, ओदनपाचः, कपोतपाकः, दूरेपाकः[७]-अक्षेपाकः-फलेपाकः, क्षणेपाकः-का, दूरेपाकुः[८]-फलेपाकुः, उत्पचिष्णुः[९], पचेलिमाः,[१०] (शालयः), किम्पचानः,[११] पेचिवान्,[१२] पाचः, पिपक्षुः, पापचः, पक्तव्यम्, पाचयितव्यम्, पिपक्षितव्यम्, पापचितव्यम्, पचनीयम्, पाचनीयम्, पिपक्षणीयम्, पापचनीयम्, पाक्यम्,[१३] कृष्टपच्यम्, कृष्टपाक्यम्,[१४] अवश्यपाक्यम्,[१५] पाच्यम्, पच्यमानः, पाकयमानः, पिपक्ष्यमाणः, पापच्यमाणः, पाकः,[१६] पक्त्रिमम्,[१७] पाचः, पिपक्षः, पापचः, पक्तुम्, पाचयितुम्, पिपक्षितुम्, पाचितुम्, पचा,[१८] पक्तिः,[१९] पाचिका,[२०] पाचना, पिपक्षा, पापचा, पचनम्, पाचनम्, पक्त्वा, पाचयित्वा, पिपक्षित्वा, पापचित्वा, विपच्य, प्रापच्य।

---

१ आदेनं पचतीति ओदनपक्। 'क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विप्। 'अनुनासिकस्य क्विझलोः—' (६-४-१६) इत्यत्र काशिकायामुदाहृतमेवम्

२ 'पचो वः' (८-२-५२) इति निष्ठातकारस्य ककारः। वकारस्यासिद्धत्वात् झल्परत्वम्। तेन, 'चोः कुः' (८-२-३०) इति कुत्वं भवतीति ज्ञेयम्।

३ 'प्रपक्वानि' इत्यत्र 'कुमति च' (८-४-१३) इति प्राप्तं णत्वम्, युवादीनां प्रतिषेधः' (वा. ८-४-११) इत्यनेन न भवति।

४ 'नन्दिग्रहिपचादिभ्यः—' (३-१-१३४) इतिं अच् प्रत्ययः।

५ पचादिषु (३-१-१३४) पाठादत्र कर्मण्यण बाधित्वा कर्तरि अच् प्रत्ययः।

६ 'अणपीष्यते' इति क्षीरतरङ्गिण्यलुक्तः। तदानीमत्र कुत्वं न्यङ्क्वादित्वात् ज्ञेयम्।

७ अत्र सर्वत्र, पचादिषु पाठादचि, वृद्धौ तथा न्यङ्क्वादिषु (७-३-५३) पाठात् कुत्वे च रूपम्।

८ न्यङ्क्वादिषु (७-३-५३) पाठात् कुत्वम्, पचादिष्वेव पाठादुप्रत्ययश्च।

९ 'अलङ्कृञ् निराकृञ्प्रजनोत्पच—' (३-२-१३६) इत्यादिना तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययः।

१० 'केलिमर उपसंख्यानम्' (वा. ३-१-९६) इति केलिमर् प्रत्यये रूपम्। कर्मकर्तर्येवार्यप्रत्यय इति वृत्तिकारादयः। अविशेषात् भावकर्मणोरेवेति दीक्षितादयः।

११ किम्शब्दे उपपदे, 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३-२-१२९) इति चानशि, बाहुलकात् मुमागमाभाव इति अमरव्याख्यायां भानुजीदीक्षितः।

१२ कर्तरि लिटः क्वसौ, 'वस्वेकाजाद् घसाम्' (७-२-६७) इतीडागमे, 'अत एकहल्मध्येऽनादेशादेर्लिटि' (६-४-१२०) इत्येत्वाभ्यासलोपयो रूपम्।

१३ निष्ठायामस्य धातोरनिट्त्वेन ण्यति, 'चजोः कु घिण्ण्यतोः (७-३-५२) इत्यनेन कुत्वम्।

१४ 'राजसूर्यमृषोद्यरुच्यकृष्टपच्याव्यथ्याः' (३-१-११४) इत्यनेन यत्प्रत्यये कर्मकर्तरि कृष्टपच्यः इति निपात्यते। कृष्टे ये स्वयमेव पच्यन्ते केचन व्राहिविशेषाः ते कृष्टपच्याः। अन्यत्र कृष्टपाक्यः इत्येव।

१५ 'ण्य आवश्यके' (७-३-६५) इति निषेधात् आवश्यकार्ये तु ण्यत्प्रत्यये कुत्वं न भवति।

१६ घञि, 'चजोः कु—' (७-३-५२) इति कुत्वम्।

१७ 'ड्वितः क्त्रिः' (३-३-८८) इति क्त्रि प्रत्यये 'तेन' इत्यधिके निकृतार्थे। 'क्त्रेर्मम्नित्यम्' (४-४-२०) इति नित्यं मप् प्रत्यये रूपम्।

१८ षित्वात् 'षिद् भिदादिभ्यः—' (३-३-१०४) इत्यङ् भवति।

१९ 'स्थागापापचो भावे' (३-३-९५) इति वचनात् पक्षे क्तिन्नपि भावे भवति।

२० 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (३-३-१११) इति ऋणे ण्वुच्। शायिकाऽद्य तव प्रापदर्हसि क्षीरपायिकाम्। पाचिका मे त्वया देया प्रोत्पन्ना मेऽन्नभोजिका। इति (प्र. सर्वस्वे)।

**( ९९७ ) षच (सच)** —समवाये। (अच्छी तरह समझना, सम्बन्धी होना, संसर्गी होना)। सकर्म.। अनिट्। उभय.। सचति-ते। 'पचति' (९९६) वत्।

**( ९९८ ) भज—सेवायाम्।** (भजना, भजन करना)। सक.। अनिट्। उभय.।

१ भजति-ते। २ **प्र.** बभाज भेजतुः भेजुः। **म.** भेजिथ-बभक्थ भेजथुः भेज। **उ.** बभाज-बभज भेजिव भेजिम। **आ.प्र.** भेजे भेजाते भेजिरे। ३ भक्ता। ४ भक्ष्यति-ते। ५ भजतु-तात् भजताम्। ६ अभजत-त। ७ भजेत्-त। ८ भज्यात्। **आ.-प्र.** भक्षीष्ट भक्षीयास्ताम् भक्षीरन्। **म.** भक्षीष्ठाः भक्षीयास्थाम् भक्षीध्वम्। **उ.** भक्षीय भक्षीवहि भक्षीमहि। ९ **प्र.** अभाक्षीत् अभाक्ताम् अभाक्षुः। **म.** अभाक्षीः अभाक्तम् अभाक्त। **उ.** अभाक्षम् अभाक्ष्व अभाक्ष्म। **आ.-प्र.** अभक्त अभक्षाताम् अभक्षत। **म.** अभक्थाः अभक्षाथाम् अभग्ध्वम्। **उ.** अभक्षि अभक्ष्वहि अभक्ष्महि। १० अभक्ष्यत्-त।

**कर्मणि**—भज्यते। **णिचि**—भाजयति-ते। **सनि**—बिभक्षति-ते। **यङि**—बाभज्यते। **यङ्लुकि**—बाभजीति-बाभक्ति। **कृत्सु**—भाजकः-जिका, बिभक्षकः[१]-क्षिका, बाभजकः[२]-जिका, भक्ता[३]-भक्त्री, भाजयिता-त्री, बिभक्षिता-त्री, बाभजिता-त्री, भजन्-न्ती, भाजयन्-न्ती, बिभक्षन्-न्ती, भक्ष्यन्-न्ती, भाजयिष्यन्-न्ती-ती, भजमान, भाजयमानः, बिभक्षमाणः, बाभज्यमानः, भक्ष्यमाणः, भाजयिष्यमाणः, देहभाक्[४]-देहभाग्-देहभाजौ- देहभाजः, विभक्तम्, भक्तवान्, भाजितः, विभक्षितः, बाभजितः-तवान्, भजः, भागी,[५] भक्तम्-[६] भक्तः, राज्यभाक्[७]-प्रभाक्, भेजिवान्[८], भ्राता,[९] धनभाजी,[१०] विभक्तिः,[११] भजमानः,[१२]

१ सन्नन्ताण्वुलि, धातोरनिट्त्वादिडागमाभावे, चत्वषत्वयोश्च रूपम्। एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
२ यङन्ते सर्वत्र, अभ्यासे दीर्घः, जश्त्वं चेति ज्ञेयम्।
३ धातोरनिट्त्वात् चत्वे रूपमेवम्। एवं तव्यदादिष्वदि ज्ञेयम्।
४ 'भजो ण्विः' (३-२-६२) इति कर्तरि ण्विप्रत्ययः। प्रत्ययस्य णित्वादुपधावृद्धिः। क्विबादिवदयं प्रत्ययः सर्वलोपी। कर्तरि क्विपोऽपवादोऽयम्।
५ तच्छीलादिषु कर्तृषु, 'सम्पृचानु—' (३-२-१४२) इत्यादिना घिनुण् प्रत्ययः। णित्वादुपधावृद्धिः। घित्वात् 'चजोः कु घिण्ण्यतोः' (७-३-५२) इति कुत्वमिति च ज्ञेयम्।
६ 'आशीरर्थे, क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तप्रत्ययः। भक्तम् = अन्नम्। भजतीति भक्तम् = उपासकः।
७ 'भजो ण्विः' (३-२-६२) इत्यत्र उपसर्गे सुपि च उपपदे प्रत्ययविधानाश्रयणादत्र, प्रभाक् इत्यत्र च कर्तरि ण्विप्रत्यय इति ज्ञेयम्।
८ कर्तरि भूतसामान्ये लिटः क्वसौ, 'तृफलभजत्रपश्च' (६-४-१२२) इति एत्वाभ्यासलोपयोः 'वस्वेकाजाद्घसाम्' (७-२-६७) इतीडागमे च रूपमेवम्।
९ 'तृन्' (३-२-१३५) इति ताच्छीलिके तृन् प्रत्यये नप्तृनेष्टृ—' (द.उ. २-३) इतिवन्निपातनात् भ्रादेशे च भ्राता इति सिद्धयति मा.धा. वृत्तावुक्तम्।
१० ताच्छीलिके णिनि प्रत्यये रूपमेवम्।
११ 'क्तिच् क्तौ च—' (३-३-१७४) इत्यनेन संज्ञायां क्तिचि रूपम्। विभक्तिः = प्रथमाद्या विभक्तिः। अत्र सूत्रे (३-३-१७४) आशिषि गम्यमान एवं प्रत्यय इत्युक्तम्, अविवक्षितमिति केचित्।
१२ 'ताच्छील्यवयोवचनशक्तिषु—' (३-२-१२९) इत्यनेन ताच्छील्ये गम्ये चानश् प्रत्ययः शित्वाच्छबादिकं भवति।

भाजः, विभक्षुः, बाभजः, भक्तव्यम्, भाजयितव्यम्, भजनीयम्, भाजनीयम्, विभज्यम्,[१] विभाग्यम्,[२] भाज्यम्, विभक्ष्यम्, बाभज्यम्, भज्यमानः, भाज्यमानः, बिभक्ष्यमाणः, बाभज्यमानः, भागः, भगः,[३] भाजः, बिभक्षः, बाभजः, भक्तुम्, भक्तिः,[४] दृढ़भक्तिः, भाजना, विभक्षा, बाभजा, भजनम्[५], भाजनम्, बिभक्षणम्, बाभजनम्, भक्त्वा, भाजयित्वा, विभज्य, विभाज्य।

**(९९९) रञ्ज—रागे**। (रंग देना। रंगना)। **अनु**—किसी वस्तु में अनुरक्त होना, मोहित होना, **वि-अप**—विरक्त होना, तिरस्कार करना। अक.। अनि.। उभय.।

रञ्जेश्च। इति शपि नकार लोपः। १ रजति-ते। २ **प्र.** ररञ्ज ररञ्जतुः ररञ्जुः। **म.** ररञ्जिथ-ररङ्क्थ। **उ.** ररञ्जिव। **आ. प्र.** ररञ्जे। **म.** ररञ्जिषे। **उ.** ररञ्जिवहे। ४ रङ्क्ता। ४ रङ्क्ष्यति-ते।५ रजतु-तात्।६ अरजत्-त।७ रजेत्-त।८ रज्यात्-रङ्क्षीष्ट।९ **प्र.** अराङ्क्षीत् अराङ्क्ताम् अराङ्क्षुः। **आ.** अरङ्क्त दशमो लुङ्। **झलो झलि**। इति सलोपः। अरङ्क्षाताम् अरङ्क्षत। १० अरङ्क्ष्यत्-त।

**भावे**—रज्यते। **णिचि**—रञ्जयति रजयति। '**रञ्जेर्णौ मृगरमणे**' इति न लोपः। **सनि**—रिरङ्क्षति-ते। **यङि**—रारज्यते। **यङ्लुकि**—रारञ्जीति-रारङ्क्ति। **कृत्सु**—रञ्जकः[६]-ज्जिका, **णिचि**—रञ्जकः-रञ्जिका, रजकः-जिका, रिरङ्क्षकः[७]क्षिका, रारजकः[८]-जिका, रङ्क्ता-रङ्क्त्री, रञ्जयिता-रजयिता-त्री, रजन्[९]-रञ्जयन्-न्ती, रञ्जयिष्यन्-रजयिष्यन्-न्ती-ती, रजमानः, रञ्जयमानः, रजयमानः, रिरङ्क्षमाणः, रारज्यमाणः, रङ्क्ष्यमाणः, रञ्जयिष्यमाणः, रजयिष्यमाणः, अनुरक्[१०]-अनुरग्-अनुरजौ-अनुरजः, रक्तम्-रक्तः-रक्तवान्, विरक्तः,[११]

---

१ 'द्विवचनविभज्योपपदे—' (३-३-५७) इति सूत्रे विभज्य इतिं निर्देशात् हलन्तलक्षणण्यपवादो यत् प्रत्ययोऽत्रेति ज्ञेयम्।

२ 'अवाधकान्यपि निपातनानि' (परिभाषा १२०) इति दर्शने ण्यत् प्रत्यये कुत्वे च रूपमेवम्। विभाज्यम् इति कुत्वाभावरूपं तु सर्वथा अप्रमाणिकमेव। स्पष्टमिदं प्रकृतसूत्रे (५-३-५७) पदमञ्जर्याम् उद्योते च।

३ 'खनो घ च' (३-३-१२५) इत्यत्र चकाराद् धात्वन्तेभ्योऽपि घप्रत्ययो भवतीत्यतोऽत्र घप्रत्यये, घित्वेन कुत्वे च रूपमेवम्। 'तृद्भग—' (७-३-१९) इत्यत्र 'भग—' इति निर्देश एवात्र निदानम्।

४ भजनम् = भक्तिः। भावे क्तिन्। दृढभक्तिरित्यत्र दृढा भक्तिरस्येति विग्रहे 'स्त्रियाः पुंवत्—' (६-३-३४) इति पूर्वपदस्यं पुंवद् भावे रूपमेवम्। प्रियादिषु (६-३-३४) कर्मसाधनस्यैव भक्तिशब्दस्य पाठः, न तु भावसाधनस्य। अतः पुंवद्भावः कथमत्रेति न शङ्क्यम्।

५ ल्युटि, अनादेशे रूपमवेम्। स्त्रियां टित्वेन ङीपि भजनी इत्येव भवति। भजना इति टाबन्तप्रयोगे लोके दृश्यते। तस्य शास्त्रं मृग्यमेव। ण्यन्तात् स्त्र्यधिकारीये युच् प्रत्ययेऽपि भाजना इत्येव स्यात्, न तु भजना इति।

६ 'नकारजावनुस्वारपञ्चमौ झलि धातुषु।' इत्यभियुक्ते यं धातुरुपदेशे नकारोपधः। सन्धिवशाच्चकार इति बोध्यम्।

७ सन्नन्ते सर्वत्र धातुजकारस्य कुत्वेन गकारे, उपधानकारस्यानुस्वारपरसवर्णयोः, सनः सकारस्य षकारे, चर्त्वे च रूपमेवम्।

८ यङ्निमित्तक उपधानकारलोपे, अभ्यासे दीर्घे च रूपमेवम्।

९ शतरि शपि, 'रञ्जेश्च' (६-४-२६) इत्युपधानकारलोपः।

१० क्विपि, उपधानकारलोपे कुत्वे चर्त्वविकल्पे च रूपमेवम्।

११ विरक्तः, रक्तम् इत्यत्र 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तः।

रञ्जितः-रजितः, रञ्जः, रागी, रञ्जनः, मनोऽनुरञ्जनः, रजकः[१]-रजकी, रज्यन्[२]-न्ती-ती, रज्यमानः, रञ्ज-रजः, रिरङ्क्षुः, रिरञ्जयिषुः-रिरजयिषुः, रारञ्जनः, रक्तव्यम्, रञ्जयितव्यम्, रजयितव्यम्, रञ्जनीयम्, रञ्जनीयम्-रजनीयम्, रङ्ग्यम्[३], रञ्ज्यम्-रज्यम्, रज्यमानः[४], रञ्जयमानः-रज्यमानः, विरागः[५]-वैरङ्गिकः-आश्चर्योरागः,[६] रङ्गः,[७] रञ्जः-रजः, रङ्क्तुम्, रञ्जयितुम्-रजयितुम्, विरक्तिः, रञ्जना-रजना, रिरङ्क्षा, रिरञ्जयिषा-रिरजयिषा, रारजा, रञ्जनम्, रञ्जनम्-रञ्जनी, रजनम्-रजनी, रक्त्वा, रञ्जयित्वा-रजयित्वा, विरज्य, विरञ्ज्य-विरजय्य,[८] रजकः[९]-रजकी, रजनः[१०]-रजनी, रजतम्,[११] रजः[१२]।

**( १००० ) शप—आक्रोशे**। (शपथ करना, सौगन्ध खाना, प्रतिज्ञा करना, श्राप देना, गाली देना)। सक.। अनि.। उभय.।

१ शपति-ते। २ **प्र.** शशाप शेपतुः शेपुः। **म.** शेपिथ शशप्थ। **उ.** शशाप-शशप, शेपिव, शेपमिम। शप्ता। शप्स्यति-ते। शेपिभ। **आ.**—शेपे शेपाते। ३ शप्ता। ४ शप्स्यति-ते। ५ शप्यतु-तात्। शप्यताम्। ६ अशप्यत्-त। ७ शप्येत्-त। ८ शप्यात् शप्यस्ताम्-शप्सीष्ट शप्सीयास्ताम्। अशाप्सीत् अशाप्ताम् अशाप्सुः। अशप्त अशप्साताम् अशप्सत।

**कर्मणि**—शप्यते। **णिचि**—शापयति-ते। **सनि**—शिशप्सति-ते। **यङि**—शाशप्यते। **यङ्लुकि**—शाशपीति-शाशप्ति। **कृत्सु**—शप्तव्यम्, शपनीयम्, शाप्यम्, शप्तः, शप्तवान्,

१ 'शिल्पिनि ष्वुन्' (३-१-१४५) इत्यत्र, 'नृपतिखनिरञ्जिभ्य इति वक्तव्यम्' इति भाष्यात् कर्तरि ष्वुन्।

२ कुषिरचोः प्राचां श्यन् परस्मैपदं च' (३-१-९०) इति कर्मकर्तरि विकल्पेन श्यन् प्रत्ययः परस्मैपदं च। यगात्मनेपदयोरपवादौ। एतच्च व्यवस्थिता विभाषेति काशिकादिषु स्पष्टम्। श्यनः अपित् सार्वधातुकत्वेन ङिद् वद् भावः तेन 'अनिदिताम्—' (६-४-२४) इति उपधानकारलोपः स्त्रियाम् 'आच्छीनद्योर्नुम्' (७-१-८०) इति नुम् विकल्पः।

३ 'निष्ठयाम् अनिट्त्वात् ण्यति', चजोः कु घिण्ण्यतोः (७-३-५२) इति कुत्वे रूपमेवम्।

४ रगात्मनेपदयोरपवादत्वेन श्यन् परस्मैपदयोर्विहितयोरपि, 'कुषि रजोः प्राचाम्—' (३-१-९०) इत्यत्र 'प्राचां' ग्रहणात् पक्षे यगात्मनेपदे भवत इति रूपस्यापि साधुत्वं बोध्यम्।

५ विपूर्वकादस्माद् भावे घञि, 'घञि च भावकरणयोः' (६-४-२७) इति उपधानकारलोपे, 'अत उपधायाः' (७-२-११६) इत्युधाभूताकारस्य वृद्धौ, 'चजोः—' (७-३-५२) इति कुत्वे च विरागः इति जायते।

६ रज्यतेऽनेनेति रागः करणे घञि 'घञि च भावकरणयोः' (६-४-२७) इत्युधानकारलोपे, उपधाभूताकारस्य वृद्धौ कुत्वे च रूपमेवम्।

७ रञ्जयति प्रेक्षकाणां मनांस्यत्रेत्यर्थेऽन्तर्भावितण्यर्थाद्धातोरधिकरणे घञि कुत्वे रूपमेवम्। रङ्ग = नाटकादीनां प्रेक्षणस्थानम्।

८ ण्यन्तात् क्त्वो ल्यपि मृगरमणार्थे नकारलोपे, मित्वसंज्ञकत्वात् उपधाह्रस्वे च 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशे रूपमेवम्।

९ 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (द.उ. ३-५) इति क्वुन् प्रत्ययः। प्रत्ययस्य कित्वादुपधानकारस्य लोपः।

१० 'रजः क्युन्' (द.उ. ५-२४) इति क्युन् प्रत्ययः। रजति रज्यतेऽवा नैनेति रजनः = रजकः रागश्च। 'स च बाहुलकात् टिद् द्रष्टव्यः इति कैयटोक्तेः (६-४-२४) स्त्रियां ङीपि रजनी रात्रिः हरिद्रा च।

११ पृषिरञ्जिभ्यां कित् (द.उ. ६-१५) इति अतच् प्रत्यये कित्वेनानुनासिकं च रूपम्। रजन्तेऽस्मिन् जना इति रजतम् = लोहविशेषः।

१२ 'भूरञ्जिभ्यां कित्' (द.उ. ९-७६) इत्यसुन् प्रत्ययः. स च किच्च भवति। रजः = अशुमम्, रेणुश्च।

शपन्, शपमानः, शप्तुम्, शपनम्, शापः, अभिशापः, शप्त्वा, संशाप्य, शपथार्थोयमात्मनेपदी। शपते। शापकः-पिका, शिशप्सकः-सिका, शाशपः-पिका, शप्ता-त्री, शापयिता-त्री, शिशप्सिता-त्री, शाशपिता-त्री, शप्यन्-न्ती, शापयन-न्ती, शिशप्सन्-त्री, शापयन्-न्ती, शापयिष्यन्-न्ती-ती, शाप्यम्[१] शपथः[२] शब्दः[३], शबलः[४] शप्वः[५]।

**(१००१) त्विष—दीप्तौ**। (प्रकाशित होना, चमकना) अक.। अनिट्। उभय.। त्वेषति-ते। २ तित्वेष-तित्विषे। ३ त्वेष्टा। ४ त्वेक्ष्यति-ते। ८ विष्यात्-त्विक्षीष्ट। ९ अत्विक्षत्-त।

**(१००२) यज—देवपूजासङ्गतिकरणदानेषु**। (यज्ञ करना, हवन करना, देवपूजा करना, संगति करना, देना)। सक.। अनि.। उभय.।

१ यजति-ते। २ **प्र.** इयाज ईजतुः ईजुः। **म.** इयजिथ-इयष्ठ ईजथुः ईज। **उ.** इयाज-इयज ईजिव ईजिम। **आ. प्र.** इजे इजाते ईजिरे। **म.** ईजिषे ईजाथे ईजिध्वे। **उ.** ईजे ईजिवहे ईजिमहे। ३ **प्र.** यष्टा यष्टारौ यष्टारः। ४ यक्ष्यति-ते यक्ष्यतः यक्ष्यन्ति। ५ यजतु-तात् यजताम्। ६ अयजत्-त। ७ यजेत्-त। ८ इज्यात् इज्यास्ताम् इज्यासुः। **आ. प्र.** यक्षीष्ट यक्षीयास्ताम् यक्षीरन्। **म.** यक्षीष्ठाः यक्षीयास्थाम् यक्षीध्वम्। **उ.** यक्षीय यक्षीवहि यक्षीमहि। ९ **प्र.** अयाक्षीत् अयाष्टाम् अयाक्षुः। **म.** अयाक्षीः अयाष्टम् अयाष्ट। **उ.** अयाक्षम् अयाक्ष्व अयाक्ष्म। **आ. प्र.** अयष्ट अयक्षताम् अयक्षत। **म.** अयष्ठाः अयक्षाथाम् अयड्ढ्वम्। **उ.** अयक्षि अयक्ष्वहि अयक्ष्महि। १० अयक्षत्-त।

**कर्मणि**—इज्यते। **णिचि**—याजयति-ते। **सनि**—यियक्षति-ते। **यङि**—यायज्यते। **यङ्लुकि**—यायाजीति यायाष्टि। **कृत्सु**—याजकः-जिका, **णिचि**—याजकः-जिका, यियक्षकः[६] -क्षिका, यायजकः-जिका, याष्ट्रा[७]-याष्ट्री, याजयिता-त्री, यियक्षिता-त्री, यायजिता-त्री, यजन्-न्ती, याजयन्-न्ती, यियक्षन्-न्ती, यक्ष्यन्-न्ती-ती, याजयिष्यन्-न्ती-ती, यजमानः, याजयमानः, यियक्षमाणः, यायज्यमाणः, यक्ष्यमाणः, याजयिष्यमाणः, देवेट्[८]-देवेड्- देवेजौ-देवेजः, इष्टम्[९]-

१ 'पोरदुपधात्' (३-१-९८) इति ण्यदपवादो यत् प्रत्ययः।
२ 'शीङ्शपि–' (द.उ. ६-३८) इत्यथप्रत्ययः। शपथः = प्रतिज्ञा।
३ 'शाशपिभ्यां–' (द.उ. ६-४८) इति दन् प्रत्ययः। 'शब्दवैर–' (३-१-१७) इति निपातनात् पकारस्य दकारः।
४ 'शपेर्वश्च' (द.उ. ८-१०८) इति कलप्रत्ययः पकारस्य वकारश्च।
५ 'शपेर्वन्' (द.उ. ८-१३१) इति वन् प्रत्ययः। शप्यते इति शप्वः = आक्रोशः।
६ सनन्ते सर्वत्र, 'व्रश्चभ्रस्जसृजमृजयज–' (८-२-३६) इति षत्वे, 'षढोः कः सि' (८-२-४१) इति ककारे, षत्वे च रूपमेवम्।
७ तृजादिषु, 'व्रश्च–' (८-२-३६) इति षत्वे, ष्टुत्वे च रूपम्। एवं तव्यदादिष्वपि प्रक्रिया ज्ञेया।
८ देवान् यजतीति देवेट्। कर्मण्युपपदे, 'क्विप्' (३-२-७६) इति 'वचिस्वपियजादीनां किति' (६-१-१५) इति यकारस्य सम्प्रसारणे, 'सम्प्रसारणाच्च' (६-१-१०८) इति पूर्वरूपे, जश्त्वे च रूपमेवम्।
९ निष्ठायाम् यजादित्वेन सम्प्रसारणे पूर्वरूपे, षत्वे ष्टुत्वे च रूपमेवम्। 'इष्टादिभ्यश्च' इतीन् प्रत्यये इष्टी इति रूपम्। एवमेव क्त्वाप्रभृतीष्वपि प्रक्रिया ज्ञेया।

इष्टः, इष्टवान्-इष्टी, याजितः, याजः, सोमयाजी[१]-हविर्याजी, यज्वा[२], यजमानः[३] ऋत्विक्,[४] उपयट्,[५] साधुयाजी,[६] याजः, यियक्षुः, यायजूकः,[७] यायजः, यष्टव्यम्, याजयितव्यम्, यजनीयम्, याजनीयम्, याज्यम्,[८] देवयज्या,[९] याज्या, याज्यम्, इज्यमानः,[१०] याज्यमानः, यागः,[११] अनुयागः-प्रयागः, प्रयाजः[१२]-अनुयाजः, उपांशुयाजः[१३]-पत्नीसंयाजः, यज्ञः,[१४] याजः, यष्टुम्, यष्टुं,[१५] याजको। (वा याति) याजयितुम्, इष्टिः[१६]-इज्या,[१७] यष्टिः,[१८] याजना, यजनम्, याजनम्, इष्ट्वा, याजयित्वा, अन्विज्य, प्रयाज्य, यजेणुः,[१९] यज्युः,[२०] यजत्रम्,[२१] यजुः[२२]।

**(१००३) डुवप्**—बीजसन्ताने। छेदनेऽपि। (बीज बोना, बोना, अन्नादि काटना, केश काटना)। सक.। अनि.। उभय.।

---

१ 'भूते' (३-२-८४) इत्यधिकारे 'करणे यजः' (३-२-८५) इति णिनिप्रत्यये रूपमेवम्। सोमेन इष्टवान् सोमयाजी। एवमेव अग्निष्टोमयाजी इत्यादिसिद्धिर्ज्ञेया।

२ भूतार्थे सुयजो ङ्वनिप् (३-२-१०३) इति ङ्वनिप् प्रत्यये प्रथमेकवचने उपधादीर्घे नकार लोपे च यज्वा इति रूपम्।

३ तच्छीलादिषु कर्तृषु 'पूङ् यजोः शानच्' (३-२-१२८) इति शानच् प्रत्ययः शित्वात् शपि, 'आने मुक्' (७-२-८२) इति मुगागमे, यजमानः इति रूपम्।

४ ऋतौ यजते, ऋतुं यजते, ऋतु प्रयुक्तो व यजतीत्यर्थे धातोरस्मात् ऋतुशब्द उपपदे, 'ऋत्विक्-' (३-२-५९) इत्यादिना क्विन्। सम्प्रसारणे, पूर्वरूपे च कृते, निपातनात्, व्रश्चादिषत्वापवादतया 'क्विन् प्रत्ययस्य कुः' (८-२-६२) इति कुत्वे च 'ऋत्विक्' इति रूपम्।

५ 'विजुपे छन्दसि' (३-२-७३) इति छन्दसि विषये उपेपपदे धातोरस्य विच् प्रत्यये षत्वे जश्त्वे च रूपमेवम्।

६ 'साधुकारिण्युपसंख्यानम्' (वा. ३-२-७८) इति णिनिप्रत्यये रूपमेवम्।

७ 'यजजपदशां यङ्' (३-२-१६६) इति यङन्तादूक् प्रत्यये, 'दीर्घोऽकितः' (७-४-८३) इत्यभ्यासदीर्घे च रूपम्।

८ ण्यति, 'यजयाचरुच–' (७-३-६६) इति कुत्व निषेधः।

९ देवशब्द उपपदे छन्दसि विषये कर्मणि यत् प्रत्यये रूपमेवम्। निपातनात् स्त्रीलिङ्गत्वम्।

१० कर्मणि, यगन्ताच्छानचि सम्प्रसारणे पूर्वरूपे च रूपम्।

११ 'हलश्च' (३-३-१२१) इति संज्ञायां घञि, 'चजोः कु घिण्ण्यतोः' (७-३-५२) इति कुत्वे च रूपमेवम् अनुयागः = भोजनम्, उपसर्गवशाद्धातोरर्थान्तरे वृत्तिः। प्रयागः = क्षेत्रविशेषः। अत्र सङ्गतिकरणं धातोरर्थः। नदीत्रयसङ्गतिकरणं ह्यत्र देशे वदन्ति।

१२ घञि, 'प्रयाजानुयाजौ यज्ञाङ्गे' (७-३-६२) इति निपानात् यज्ञाङ्गविषये कुत्वं न। पञ्च प्रयाजाः। त्रयोऽनुयाजा। 'उपसर्गस्य घञि–' (६-३-१२२) इति दीर्घे अनुयाज इत्यपि भवति।

१३ प्रयाजानुयाजग्रहणं प्रदर्शनार्थम् अन्यत्रापि एवं प्रकारे कुत्वं न भवति। 'एकादश उपयाजाः' उपांशुयाजमन्तरा यजति' 'अष्टौ पत्नीसंयाजा भवन्ति' 'ऋतुयाजैश्चरन्ति' इत्येवमादि सिद्ध भवति।'

१४ भावे 'यजयाच–' (३-३-९०) इत्यादिना नङ् प्रत्यये, जकारस्य श्चुत्वे च रूपमेवम्।

१५ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३-३-१०) इति क्रियार्थक्रियायां तुमुन् ण्वुल् च भवतः। यष्टुं याति = यगाय यातीत्यर्थः।

१६ 'श्रुयजीषिस्तुभ्यः–' (वा. ३-३-९५) इति करणे क्तिन् प्रत्यये सम्प्रसारणादिके च रूपम्।

१७ 'व्रजयजोर्भावे क्यप्' (३-३-९८) इति स्त्रियां भावे क्यपि, कित्वेन सम्प्रसारणादिकेषु चैव रूपम्।

१८ बाहुलकात् औणादिके (द.उ. १-७४) ति प्रत्यये रूपमेवमिति क्षीरतरङ्गिणी।

१९ बाहुलकादौणादिके (द.उ. (१-१३३) एणुप्रत्यये रूपम्। यजेणुः = याजकः, ऋत्विक्।

२० 'यजिमनि–' (द.उ. १-१३४) इति युच् प्रत्यये, प्रत्ययस्यानुनासिकत्वेनानादेशाभावे च रूपम्। यज्युः = अध्वर्युः।

२१ 'अभिनक्षियजि–' (द.उ. ८-५६) इत्यत्रन् प्रत्ययः। इज्यन्तेऽस्मिन् देवता इति यजत्रम् = यज्ञस्थानम्। अग्निहोत्रमिति केचित्।

२२ 'अर्तिपृवपियजि–' (द.उ. ९-३९) इत्युसि प्रत्ययः। यजुः = वेदः।

| | | | | |
|---|---|---|---|---|
| लट् | वपति | वपतः | वपन्ति | प्र. |
| | वपसि | वपथः | वपथ | म. |
| | वपामि | वपावः | वपामः | उ. |
| लिट् | उवाप | ऊपतुः | ऊपुः | प्र. |
| | उवपिथ-उवाथ | ऊपथुः | ऊप | म. |
| | उवाप-उवप | ऊपिव | ऊपिम | उ. |
| लुट् | वप्ता | वप्तारौ | वप्तारः | प्र. |
| | वप्तासि | वप्तास्थः | वप्तास्थ | म. |
| | वप्तास्मि | वप्तास्वः | वप्तास्मः | उ. |
| लृट् | वप्स्यति | वप्स्यतः | वप्स्यन्ति | प्र. |
| | वप्स्यसि | वप्स्यथः | वप्स्यथ | म. |
| | वप्स्यामि | वप्स्यावः | वप्स्यामः | उ. |
| लोट् | वपतु-वपतात् | वपताम् | वपन्तु | प्र. |
| | वप-वपतात् | वपतम् | वपत | म. |
| | वपानि | वपाव | वपाम | उ. |
| लङ् | अवपत् | अवपताम् | अवपन् | प्र. |
| | अवपः | अवपतम् | अवपत | म. |
| | अवपम् | अवपाव | अवपाम | उ. |
| वि.लि. | वपेत् | वपेताम् | वपेयुः | प्र. |
| | वपेः | वपेतम् | वपेत | म. |
| | वपेयम् | वपेव | वपेम | उ. |
| आ.लि. | उप्यात् | उप्यास्ताम् | उप्यासुः | प्र. |
| | उप्याः | उप्यास्तम् | उप्यास्त | म. |
| | उप्यासम् | उप्यास्व | उप्यास्म | उ. |
| लुङ् | अवाप्सीत् | अवाप्ताम् | अवाप्सुः | प्र. |
| | अवाप्सीः | अवाप्तम् | अपाप्त | म. |
| | अपाप्सम् | अपाप्स्व | अवाप्स्म | उ. |
| लृङ् | अवाप्स्यत् | अवप्स्यताम् | अवप्स्यन् | प्र. |
| | अवप्स्यः | अवप्स्यतम् | अवप्स्यत | म. |
| | अवप्स्यम् | अवप्स्याव | अवप्स्याम | उ. |

**आत्मनेपदे**—१ वपते। २ **प्र.** ऊपे ऊपाते ऊपिरे। **म.** ऊपिषे ऊपाथे ऊपिध्वे। **उ.** ऊपे ऊपिवहे ऊपिमहे। ३ वप्ता। **म.** वप्तासे। ४ वप्स्येत। ५ वपताम्। ६ अवपत। ७ वपेत। ८ **प्र.** वप्सीष्ट वप्सीयास्ताम् वप्सीरन्। **म.** वप्सीष्ठाः वप्सीयास्थाम् वप्सीध्वम्। उ.वप्सीय वप्सीवहि वप्सीमहि। ९ **प्र.** अवप्त अवप्साताम् अवप्सत। **म.** अवप्थाः अवप्साथाम् अवब्ध्वम्-ब्द् ध्वम्। **उ.** अवप्सि अवप्स्वहि अवप्स्महि। १० अपप्स्यत।

**कर्मणि**—उप्यते। **णिचि**—वापयति-ते। **सनि**—विवप्सति-ते। **यङि**—वावप्यते। **यङ्लुकि**—वावपीति-वावप्ति। **कृत्सु**—प्रणिवापकः-पिका, **णिचि**—वापकः-पिका, विवप्सकः-सिका, वावपकः-पिका, प्रणिवप्ता-त्री, प्रणिवयन्-आवपन्-न्ती, वापयन्-न्ती, विवप्सन्-न्ती, वस्यन्-न्ती, वापयिष्यन्-न्ती-ती, विवप्सिष्यन्-न्ती-ती, वपमानः, वापयमानः, वप्स्यमानः, वापयिष्यमाणः, यवोप्,[१] यवोब्-यवोपौ-यवोपः, उप्तम्[२]-उप्तः-उप्तवान्, वापितः, विवप्सितः, वावपितः-तवान्, वपः, वपन्,[३] प्रवापी,[४] धान्यवापी, वापः, विवाप्सुः, वावपः, प्रणिवप्तव्यम्, वापयितव्यम्, प्रणिवपनीयम्, वापनीयम्, वाप्यम्,[५] उप्यमानः, वाप्यमानः, उप्त्रिमम्,[६] वप्तुम्, वापयितुम्, उप्तिः, वपा,[७] वापना, प्रणिवपनम्, वापनम्, उप्त्वा, वापयित्वा, प्रवोप्य, प्रवाप्य, वप्रिः,[८] वपिः,[९] वप्रः,[१०] वपुः[११]।

**(१००४) वह—प्रापणे**। प्रापणे = धारणे। (बहना, झरना, ढोना, ढो ले जाना)। सकर्म.। अनि.। उभय.।

१ वहति-ते। २ **प्र.** उवाह ऊहतुः ऊहुः। **म.** उवहिथ-उवोढ। थलि भारद्वाजनियमादिडभावपक्षे ढत्वधत्वष्टुत्वढलोपाः। **सहिवहो** इति ओत्वं च। ऊहथुः। ऊह। **उ.** उवाह उवह ऊहिव ऊहिम। **आत्म.** ऊहे ऊहाते ऊहिरे। ३ वोढा। **साहिवहो**—रिति ओत्वम्। वोढासि-से। **म.** वोढास्मि-वोढाहे। ४ वक्ष्यति-ते। ५ वहतु-ताम्। ६ अवहत्-त। ७ वहेत्-त। ८ उह्यात् उह्यास्ताम्। वक्षीष्ट वक्षीयास्ताम्। ९ **प्र.** अवाक्षीत् अवोढाम् अवाक्षुः। **म.** अवाक्षीः अवोढम्। अवोढ। **उ.** अवाक्षम् अवाक्ष्व अवाक्ष्म। आत्म.। अवोढ अवक्षताम् अवक्षत। **म.** अवोढाः अवक्षाथाम् अवोढ्वम्। **उ.** अवक्षि अवक्ष्वहि अवक्ष्महि। १० अवक्ष्यत्-त।

**कर्मणि**—उह्यते। **णिचि**—वाहयति। **सनि**—विवक्षति-ते। **यङि**—वावह्यते। **यङ्लुकि**—वावहीति-वावोढि। **कृत्सु**—वाहकः-हिका, **णिचि**—वाहकः-हिका,

१ यवान् वपतीत्यर्थः। 'वपोदेस्तु यवोब् विश्वोट् दोषवीश्च पटोत् तुकि।' इति प्रक्रिया सर्वस्वे।
२ निष्ठायां यजादित्वात् 'वचिस्वपि—' (६-१-१५) इति सम्प्रसारणे रूपमेवम् एवं यक्क्त्वाक्तिन्नादिष्वपि।
३ नन्द्यादिषु (३-१-१३४) पाठात् कर्तरि ल्युप्रत्ययः इति केचित्।
४ 'रक्षश्रुवपीनाम्' (वा. ३-१-१३४) इति ग्रहादिपाठाण्णिनिप्रत्ययः।
५ 'आसुयुवपि—' (३-१-१२६) इति ण्यत् प्रत्ययः। पोरदुपधात्' (३-१-९८) इति यतोऽपवादः।
६ ड्वितः क्त्रिः (३-३-८८) इति क्त्रिप्रत्यये 'क्त्रेर्मन्नित्यम्' (४-४-२०) इति नित्यं मप् प्रत्यये च रूपम्।
७ भिदादि (३-३-१०४) पाठात् स्त्रियाम् अङि रूपमेवम्। वपा = नाभे श्वेतं मांसम्।
८ 'वङ् क्रयादयश्च' (द.उ. १-३५) इति क्रिन् प्रत्यये रूपम्। वप्रिः = क्षेत्रम्।
९ वसिवपिवदि— (द.उ. १-५३) इति इञ् प्रत्यये वृद्धौ च रूपमेवम्। वपति अस्यामिति वापिः = पुष्करिणी। कृतसोनकः कूपः।
१० 'वृभिवपिभ्यां रन्' (द.उ. ८-४५) इति रन् प्रत्यये रूपमेवम्। उप्यते स्मिन् बीजमिति वप्रम् = क्षेत्रम् प्राकारजातिर्वा। 'वप्रो स्त्रीसानुमानयोः' इति कोशः।
११ 'अर्तिपृवपियजि—' (द.उ. ९-३९) इति उसि प्रत्ययः। उप्यते प्राक्कर्मभिरिति वपुः = शरीरं तेजश्च।

विवक्षकः-क्षिका, वावहकः-हिका, वोढा[१]-ढ्री, वाहयिता-त्री, विवक्षिता-त्री, वावहिता-त्री, परिवहन्, उद्वहन्-न्ती, व्यतिवहन्-न्ती, वाहयन् भारं देवदत्तेन, वाहयन् यवान् वलिवर्दान्, विवक्षन्-न्ती, वक्ष्यन्-न्ती-ती, वाहयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती, वहमानः, वाहयमानः, विवक्षमाणः, वावह्यमानः, वक्ष्यमाणः, वाहयिष्यमाणः, विवक्षिष्यमाणः, वावहिष्यमाणः विश्वोट्,[२] अनड्वान्,[३] अनड्वाहौ-अनड्वाहः। ऊढम्[४]-कल्पनापोढः-प्रौढः[५]-ऊढवान्, वहितः विवक्षितः, वहः[६]-वहनः-वाहः, कूलमुद्वहः,[७] भारवाही,[८] प्रवाहणः, ऋषीवहः,[९] वावहिः, विवक्षुः, वावहः, प्रणिवोढव्यम्, वाहयितव्यम्, प्रणिवहनीयम्,[१०] वाहनीयम्, वह्यम्,[११] (शकटम्), वाह्यम्, उह्यमानः, वाह्यमानः, वहः,[१२] वाहः, परिवाहः, परीवाहः, प्रणिवोढुम्, वाहयितव्यम्, प्रौढिः,[१३] वहा, वाहना, विवक्षा, वावहा, वहनम्, इक्षुवाहणम्,[१४] वाहनम्, उढ्वा, वाहयित्वा, प्रवह्य, प्रवाह्य, पुरुषवाहं[१५] (वहति) वह्निः,[१६] वधूः[१७]।

**(१००५) वस**—निवासे। (निवास करना, टिकना)। सकर्म.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | वसति | वसतः | वसन्ति | प्र. |
| | वससि | वसथः | वसथ | म. |
| | वसामि | वसावः | वसामः | उ. |

१ तृचि, 'वहिवहोरोद् अवर्णस्य' (६-३-११२) इत्युपधाकारस्य ओकारे ढत्वष्टुत्वढलोपदीर्घेषु रूपमवेम्। एव तव्यदादिष्वपि ज्ञेयम्।

२ विश्वं वहतीत्यर्थे क्विपि सम्प्रसारणपूर्वरूपगुणढत्वादिकेषु रूपमेवम्।

३ अनः वहतीत्यर्थे 'अनसि वहेः' इति क्विपि, 'डश्चानसः' (द.उ. ९-१०९) इति अनश्शब्दान्त्यवर्णस्य उकारे रूपमेवम्। 'सावनडुहः' (७-१-८२) इति नुम्।

४ क्तप्रत्यये सम्प्रसारणढत्वष्टुत्वढलोपदीर्घादिषु रूपमेवम्। एवं क्त्वाक्तिन् प्रभृतिषु।

५ 'प्रादूहोढोढ्येषैष्येषु' वा. (६-१-८९) इति वृद्धिः। एवं प्रौढिः इति क्तिन् नन्तेऽपि ज्ञेयम्।

६ वह इत्यत्र पचाद्यच्। वहनः इति तु सारथ्यादिवाचकं पदं 'कृत्यल्युटो बहुलम्' (३-३-११३) इति बहुलग्रहणात् कर्तरि ल्युटि बोध्यम्।

७ कुलमुद् वहतीति वृत्तौ उत्पूर्वात् वहेः 'उदि कूले रुजिवहोः' (३-३-३१) इति खश्। खित्वात् नुम्। शित्वात् शपि तस्य 'अतो गुणे' (६-१-९६) इति पररूपम्।

८ भारं वहतीति भारवाही। णिनि प्रत्ययान्तमिदम्।

९ 'इको वहेऽपीलोः' (६-३-१२१) इति इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वहे उत्तरपदे दीर्घो भवति।

१० 'नेर्गदनदपत—' (८-४-१७) इत्यादिना उपसर्गस्थात् नेः णत्वं बोध्यम्।

११ वहत्यनेनेति करणार्थे शकटादिके विवक्षिते 'वह्यं करणम्' (३-१-१०२) इति निपातनात् यत्प्रत्ययान्ता। ण्यतोऽपवादः। करणभिन्नयोः भावकर्मणोरर्थयोः विवक्षितयोस्तु वाह्यम् इति ण्यदन्तत्वमेव।

१२ वहन्त्यनेन वलीवर्दादयः भारमिति वहः = स्कन्धः। करणे 'गोचरसञ्चरवह—' (३-३-११९) इति घप्रत्ययान्तो निपातितः। हलन्तलक्षणघञोऽपवादः। वाहः = अश्वः। अत्र तु वहतीति वाहः इति वा, उह्यतेऽनेनेति वा वृत्तिर्बोध्यम्।

१३ प्रौढिरित्यत्र 'प्रादुहोढोढ्येषैष्येषु' (वा. ६-१-८९) इति वृद्धिः। इयं क्तिनन्त एव; क्तिजन्ते नेत्याहुः।

१४ अत्र 'वाहनम् आहितात्' (८-४-८) इति णत्वम्। वाहने यत् आरोपितं तत् आहितम्, उपरि निपतितेक्षुकं वाहनमित्यर्थः। दाक्षिवाहनम् इन्द्रवाहनम् इत्यादिषु तु आहितार्थकत्वाभावात् न णत्वम्।

१५ 'कत्रोर्जीवपुरुषयोर्नशिवहोः' इति कर्तृवाचिनि पुरुषशब्दे उपपदे वहेः णमुल्। पुरुषप्रेष्यो भूत्वा वहतीत्यर्थः।

१६ 'वहिश्रि—' (द.उ. १-२१) इति निप्रत्ययः। वहति उह्यते वा वह्निः = अग्निः।

१७ 'वहेर्धश्च' (द.उ. १-१६६) इति ऊप्रत्ययः, धात्वन्तस्य धकारादेशश्च। वहति गृह्यकार्यमिति वधूः = स्नुषा।

| | | | | |
|---|---|---|---|---|
| लिट् | उवास | ऊषतुः[१] | ऊषुः | प्र. |
| | उवस्थ-उवसिथ | ऊषथुः | ऊष | म. |
| | उवास-उवस | ऊषिव | ऊषिम | उ. |
| लुट् | वस्ता | वस्तारौ | वस्तारः | प्र. |
| | वस्तासि | वस्तास्थः | वस्तास्थ | म. |
| | वस्तास्मि | वस्तास्वः | वस्तास्मः | उ. |
| लृट् | वत्स्यति[२] | वत्स्यतः | वत्स्यन्ति | प्र. |
| | वत्स्यसि | वत्स्यथः | वत्स्यथ | म. |
| | वत्स्यामि | वत्स्यावः | वत्स्यामः | उ. |
| लोट् | वसतु-वसतात् | वसताम् | वसन्तु | प्र. |
| | वस-वसतात् | वसतम् | वसत | म. |
| | वसानि | वसाव | वसाम | उ. |
| लङ् | अवसत् | अवसताम् | अवसन् | प्र. |
| | अवसः | अवसतम् | अवसत | म. |
| | अवसम् | अवसाव | अवसाम | उ. |
| विलि. | वसेत् | वसेताम् | वसेयुः | प्र. |
| | वसेः | वसेतम् | वसेत | म. |
| | वसेयम् | वसेव | वसेम | उ. |
| आलि. | उष्यात् | उष्यास्ताम् | उष्यासुः | प्र. |
| | उष्याः | उष्यास्तम् | उष्यास्त | म. |
| | उष्यासम् | उष्यास्व | उष्यास्म | उ. |
| लुङ् | अवात्सीत् | अवात्ताम्[३] | अवात्सुः | प्र. |
| | अवात्सीः | अवात्तम् | अवात्त | म. |
| | अवात्सम् | अवात्स्व | अवात्स्म | उ. |
| लृङ् | अवत्स्यत् | अवत्स्यताम् | अवत्स्यन् | प्र. |
| | अवत्स्यः | अवत्स्यतम् | अवत्स्यत | म. |
| | अवत्स्यम् | अवत्स्याव | अवत्स्याम | उ. |

**भावे**—उष्यते। **णिचि**—वासयते। **सनि**—विवत्सति। **यङि**—वावस्यते। **यङ्लुकि**—वावसीति-वावस्ति। **कृत्सु**—वसकः-सिका, विवसयिषकः-षिका, वसयिता-त्री, विवसयिषिता-त्री, निर्वसितम्-त्तः, वस्तव्यम्, वसनीयम्, वास्यम्, उषितः, वसन्, उषित्वा, व्युष्य, ऊषिवान्, वसनम्, वासः, वासी, वासिता, वस्ता, उष्टिः, वसितुम्-वस्तुम्, वसितव्यम्, वसितुम्, वस्तुम्, अनूष्यमाणः, वत्स्यन्, अनुवत्स्यमामः। **अनु, अधि-उप, आङ्पूर्वोऽयं सकर्मकः।** अनुवसति गृहम् इत्यादि। **प्र**—विदेशगमने प्रवसति। **नि**—निर्वासनम्।

१ 'शासिवसिघसीनां च' (८-३-६०) इणकुभ्यां परस्यैषां सस्य षः स्यात्। इति षत्वम्।

२ 'सः स्यार्धधातुके' सस्य तः

३ अवा स् ताम् इति स्थिते वृद्धौ 'झलो झलि' इति सिचः सकारस्य लोपे अवस् ताम् इति जाते प्रत्ययलक्षणमाश्रित्य 'सः स्यार्धधातुके' (८-४-७९) इति सस्य तः।

(१००६) **वेञ्**—तन्तुसन्ताने। (बुनना, बटना)। सकर्म.। अनिट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | वयति | वयतः | वयन्ति | प्र. |
| | वयसि | वयथः | वयथ | म. |
| | वयामि | वयावः | वयामः | उ. |
| लिट् | उवाय | ऊवयतुः | ऊयुः | प्र. |
| | उवयिथ | ऊयथुः | ऊय | म. |
| | उवाय-उवय | ऊवयिव | ऊवयिम | उ. |

पक्षे—**प्र.** ववौ ऊवतुः ऊवुः। **म.** ववथ-ववाथ ऊवथुः ऊव। **उ.** ववौ ऊविव ऊविम।
पक्षे—**प्र.** ववौ ववतुः ववुः। **म.** ववथ-ववाथ ववथुः वव। **उ.** ववौ वविव वविम।

| | | | | |
|---|---|---|---|---|
| लुट् | वाता | वातारौ | वातारः | प्र. |
| | वातासि | वातास्थः | वातास्थ | म. |
| | वातास्मि | वातास्वः | वातास्मः | उ. |
| लृट् | वात्स्यति | वात्स्यतः | वात्स्यन्ति | प्र. |
| | वात्स्यसि | वात्स्यथः | वात्स्यथ | म. |
| | वात्स्यामि | वात्स्त्यावः | वात्स्यामः | उ. |
| लोट् | वयतु-वयतात् | वयताम् | वयन्तु | प्र. |
| | वय-वयतात् | वयतम् | वयत | म. |
| | वयानि | वयाव | वयाम | उ. |
| लङ् | अवयत् | अवयताम् | अवयन् | प्र. |
| | अवयः | अवयतम् | अवयत | म. |
| | अवयम् | अवयाव | अवयाम | उ. |
| वि॰लि. | वयेत् | वयेताम् | वयेयुः | प्र. |
| | वयेः | वयेतम् | वयेत | म. |
| | वयेयम् | वयेव | वयेम | उ. |
| आ॰लि. | ऊयात् | ऊयास्ताम् | ऊयासुः | प्र. |
| | ऊयाः | ऊयास्तम् | ऊयास्त | म. |
| | ऊयासम् | ऊयास्व | ऊयास्म | उ. |
| लुङ् | अवासीत् | अवासिष्टाम् | अवासिषुः | प्र. |
| | अवासीः | अवासिष्टम् | अवासिष्ट | म. |
| | अवासिषम् | अवासिष्व | अवासिष्म | उ. |
| लृङ् | अवास्यत् | अवास्यताम् | अवास्यन् इत्यादि। | |

**आत्मनेपदे**—१ वयते। २ **प्र.** ऊये ऊयाते ऊयिरे। **म.** ऊयिषे ऊयाथे ऊयिध्वे-ढ्वे। **उ.** ऊये ऊयिवहे ऊयिमहे। पक्षे—**प्र.** ववे ववाते वविरे। **म.** वविषे ववाथे वविध्वे-ढ्वे। **उ.** ववे वविवहे वविमहे। पक्षे—**प्र.** ऊवे ऊवाते ऊविरे। **म.** ऊविषे ऊवाथे ऊविध्वे-ढ्वे। **उ.** ऊवे ऊविवहे ऊविमहे। ३ वाता। ४ वात्स्यते। ५ वयताम् वयेताम् वयन्ताम्। ६ अवयत। ७ वयेत। ९ **प्र.** वासीष्ट वासीयास्ताम् वासीरन्। **म.** वासीष्ठाः वासीयास्थाम्

वासीध्वम् । **उ.** वासीय वासीवहि वासीमहि । ८ **प्र.** अवास्त अवासाताम् अवासत । **म.** अवास्थाः अवासाथाम् अवाद्ध्वम्-ध्वम् । **उ.** अवासि अवास्वहि अवास्महि । १० अवास्यत ।

**कर्मणि**—ऊयते । २ ऊये-ऊवे । **णिचि**—वाययति-ते । **सनि**—विवासति-ते । **यङि**—वावायते । **यङ्लुकि**—वावाति-वावेति । **कृत्सु**—वातव्यम्, वानीयम्, वेयम्, वयन्, वातुम्, वायनम्, वायः, वयमानः, वायकः[१]-यिका, णिचि—वायकः[२]-यिका, विवासकः[३]-सिका, वावायकः[४]-यिका, वाता-त्री, वाययिता-त्री, विवासिता-त्री, वावायिता-त्री, वयन्[५]-न्ती, वायन्-न्ती, विवासन्-न्ती, तन्तुवायः,[६] प्रवाणी[७]-निष्प्रवाणिः, उतम्-[८]उतः-उतवान्, प्रोतः, प्रवयणम्,[९] उत्वा, प्रवाय,[१०] ऊतिः,[११] विः[१२] = पक्षी, वेमा, आवायः,[१३] पटोत्[१४] ।

**(१००७) वेञ्—संवरणे** । (आच्छादन करना, ढकना, सीना) । सकर्म. । अनिट् । उभय. ।

१ व्ययति-ते । २ **प्र.** विव्याय विव्यतुः विव्युः । **म.** विव्ययिथ विव्ययथुः विव्य । **उ.** विव्याय-विव्यय विव्यिव विव्यिम । ३ व्याता । ४ व्यास्यति । ५ व्ययतु-तात् । ६ अव्ययत् । ७ व्ययेत् । ८ वीयात् वीयास्ताम् वीयासुः । ९ **प्र.** अव्यासीत् । अव्यासिष्टाम् अव्यासिषुः । **म.** अव्यासीः अव्यासिष्टम् अव्यासिष्ट । **उ.** अव्यसिषम् अव्यासिष्व अव्यसिष्म । १० अव्यस्यत् । **आत्मनेपदे**—१ व्ययते । २ **प्र.** विव्ये विव्याते विव्यिरे । **म.** विव्यिषे विव्याथे विव्यिध्वे-ढ्वे । **उ.** विव्ये विव्यिवहे विव्यिमहे । ३ व्याता । ४ व्यास्यते । ५ व्ययताम् ।

---

१ 'आदेच्च च उपदेशे–' (६-१-४५) इत्याकारः । 'आतोयुक्–' (७-३-३३) इति युगागमः ।

२ ण्यन्ते सर्वत्रादन्तलक्षणयुगपवादः 'शाच्छासाह्वावेपां युक्' (७-७-३६) इति युगागमः ।

३ धातोरनिट्त्वात् रूपाण्येवम् । सन्नन्तेऽभ्यासस्येकारः ।

४ यङन्ते सर्वत्र औपदेशिकस्य एकारस्य आकार इति विशेषः ।

५ '–अशिति' (६-१-४५) इत्युक्तत्वात् शतरि न आकारः । अयादेशः ।

६ तन्तून् वयति इति तन्तुवायः । 'ह्वावामश्च' (३-२-२) इति कर्मणि उपपदे अण् प्रत्ययः । 'आतोऽनुपसर्गे कः' (३-२-३) इत्यस्यापवादः । 'आत्वभाविन एजन्तात् आकारान्तनिमित्तकः । प्रत्ययो ज्ञायते सर्वो 'ह्वावामश्चे' त्यणा पुनः ।' इति पदमञ्जरी (६-१-४५)

७ नवं वासः प्रवयन्त्यस्यामिति प्रवाणी तन्तुवायशलाका । 'ल्युट् च' (३-३-११५) इति अधिकरणे ल्युट् । टित्वात् स्त्रियां ङीप् ।

८ निष्ठायां 'वचिस्वपियजादीनाम् किति' (६-१-१५) इति सम्प्रसारणे, पूर्वरूपे च रूपमेवम् । एवं क्त्वाप्रभृतिष्वपि ज्ञेयम् ।

९ प्रवयणम् इत्यत्र ल्युट् । 'कृत्यचः' (८-४-२९) इति णत्वम् ।

१० 'न ल्यपि' (६-१-४९) इति सम्प्रसारणनिषेधः ।

११ 'ऊतियूति–' (३-३-९७) इति क्तिन्नन्तो निपातितः । ऊतिः = वयनम् इति क्षीरस्वामी । काशिकादिषु तु अवतेरूठि स्वरार्थनिपातन इत्युक्तम् ।

१२ 'वेञो डित्' (द.उ. १-६२) इति इण् प्रत्ययः । प्रत्ययस्य डित्वात् टिलोपः । नीडं वयतीति विः = पक्षी, तन्तुवायो वा ।

१३ 'अवहाराधारावायानामुपंसख्यानम्' (वा. ३-३-१२२) इति आङ् पूर्वात् अस्मात् घापवादो घञ् । आवयन्ति अस्मिन् इति आवायः = तन्तुवायवाटिका ।

१४ पटं वयतीति पटोत् । 'क्विप् च' (३-२-७६) इति क्विप् । सम्प्रसारणे पूर्वरूपे च 'ह्रस्वस्यपितिकृति–' इति तुक् । इति प्रक्रियासर्वस्वम् ।

९ अव्ययत। ७ व्ययेत। ८ व्यसीष्ट व्यासीयास्ताम् व्यासीरन्। **म.** व्यासीष्ठाः। **उ.** व्यासीय। ९**प्र.** अव्यास्त अव्यासाताम् अव्यासत। **म.** अव्यास्थाः अव्यासाथाम् अव्याद् ध्वम्-ध्वम्। **उ.** अव्यासि अव्यास्वहि अव्यास्महि। १० अव्यास्यत।

**कर्मणि**—वीयते। **णिचि**—व्याययति-ते। **सनि**—विव्यासति-ते। **यङि**—वेवीयते। **यङ्लुकि**—व्याव्येति-वाव्याति। **कृत्सु**—व्यातव्यम्, व्यानीयम्, व्येयम्, वातम्, व्ययन्, व्ययमानः, व्यातुम्, व्यानम्, वीत्वा, संव्याय, परिवीय-परिवाय, नीविः, नीवी।

**(१००८) ह्वेञ्—स्पर्धायां शब्दे च**। (स्पर्धा करना, बड़ावरी करना, बुलाना, पुकारना, **आ**—बुलाना, **उप-वि-सम्**—(आ) युद्ध के लिए बुलाना। शब्दार्थे सकर्म.। अन्यत्राऽकर्मकः अनिट् उभय.।

१ ह्वयति-ते। २ **प्र.** जुहाव जुहुवतुः जुहुवुः। **म.** जुहविथ-जुहाथे जुहुवथुः जुहुव। **उ.** जुहाव-जुहव जुहुविव जुहुविम। **आत्म. प्र.** जुहुवे जुहुवाते जुहुविरे। म. जुहुविषे जुहुवाथे जुहुविढ्वे-ध्वे। **उ.** जुहुवे जुहुविवहे जुहुविमहे। ३ ह्वाता। ४ ह्वास्यति-ते। ५ ह्वयतु-तात्-ह्वयताम्। ६ अह्वयत्-त। ७ ह्वयेत्-त। ८ हूयात्-ह्वासीष्ट। ९ अह्वत् अह्वताम् अह्वन्। **आत्म.** अह्वत अह्वेताम् अह्वन्त। पक्षे—अह्वास्त अह्वासाताम् अह्वासत। १० अह्वास्यत्-त।

**कर्मणि भावे च**—हूयते। **णिचि**—ह्वाययति-ते। **सनि**—जुहूषति-ते। **यङि**—जोहूयते। **यङ्लुकि**—जोहवीति जोहोति। **कृत्सु**—ह्वातव्यः, ह्वानीयः, ह्वेयः, हूतः, हूतिः, ह्वयन्, ह्वयमानः, ह्वानम्, हूत्वा, आहूय, ह्वायकः-यिका, णिचि—ह्वायकः[१]-यिका, जुहूषकः[२]-षिका, जोहूयकः-[३] यिका, ह्वाता-ह्वात्री, ह्वाययिता-त्री, जुहूषिता-त्री, जोहूयिता-त्री, जुहावयिषुः,[४] निह्वयमानः,[५] सह्वमानः-उपह्वयमानः-विह्वयमानः, आह्वयमानो[६] मल्लो मल्लम्, आह्वः[७]-प्रह्वः, आहूयमानः,[८]

१ 'आदेचः—' (६-१-४५) इत्यात्वे, 'शाच्छासाह्वा—' (७-३-३७) इति णिजन्ते सर्वत्र युगागमः। आदन्तलक्षणपुकोऽपवादः।

२ 'अभ्यस्तस्य च'(६-३-३३) इति सम्प्रसारणम् पूर्वरूपम् 'हलः'(६-४-२) इति दीर्घः। आतोरधुना उकारान्तत्वात् 'इको झल्' (१-२-९) इति सनः। कित्वम् तेन गुणो न। एवमेव सन्नन्ते सर्वत्र प्रक्रिया।

३ यङन्तेऽपि 'अभ्यस्तस्य च' (६-३-३३) इति सम्प्रसारणादिकं बोध्यम्। उत्तरखण्डे 'अकृत् सार्वधातुकयोः—(७-४-२५) इति दीर्घः।

४ ण्यन्तात् सनि उप्रत्यये 'ह्वः सम्प्रसारणम्' (६-१-३२) इति सम्प्रसारणे च रूपमेवम्।

५ निसमुपविभ्यो ह्वः (१-३-३०) इत्यात्मनेपदम्।

६ 'स्पर्धायामाङः'(१-३-३१) इत्यात्मनेपदम्। स्पर्धमनि आह्वानं करोतीत्यर्थः। 'अत्र स्पर्धा धात्वर्थस्य शब्दनस्य हेतुतया विषय' इति काशिकादिषु स्पष्टम्।

७ 'सर्वत्र प्रसारणिभ्यो डः' (वा. ३-२-४८) इति वचनात् कर्तरि आदन्तत्वलक्षणकप्रत्यापवादो डप्रत्ययः। डित्वात् टिलोपः। भाष्ये तु आतोऽनुपसर्गे कः (३-२-३) इत्यत्र कप्रत्यये सम्प्रसारणे, यणि आह्वः इत्यादि साधितम्।

८ यङन्ताच्छानचि 'वचिस्वपियजादीनां किति'(६-१-१५) इति सम्प्रसारणे 'हलः'(६-४-२) इति दीर्घे च रूपम्। एवं क्त्वा-ल्यप्-क्तादिष्वपि प्रक्रिया ज्ञेया।

आहूतः-आहूतवान्, स्वर्गाह्वायः,[1] आह्वायः, निहवः[2]-अभिहवः-विहवः, आहवः,[3] हवः,[4] आहावः,[5] आह्वा,[6] आहूतिः[7]-संहूतिः।

( १००९ ) **वद—व्यक्तायां वाचि**। (कहना, स्पष्ट बोलना)। **अनु**—पीछे से बोलना। **अप**—निन्दा करना। अपकार कारक भाषण करना। **अभि**—सत्कार पूर्वक अभिनन्द करना। **परि**—विरूद्ध बोलना। **प्रति**—ऊत्तर देना। **वि**—वाद विवाद करना। **विप्र**—बकवाद करना। सक.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | वदति | वदतः | वदन्ति | प्र. |
| | वदसि | वदथः | वदथ | म. |
| | वदामि | वदावः | वदामः | उ. |
| लिट् | उवाद | ऊदतुः | ऊदुः | प्र. |
| | उवदिथ | ऊदथुः | ऊद | म. |
| | उवाद-उवद | ऊदिव | ऊदिम | उ. |
| लुट् | वदिता | वदितारौ | वदितारः | प्र. |
| | वदितासि | वदितास्थः | वदितास्थ | म. |
| | वदितास्मि | वदितास्वः | वदितास्मः | उ. |
| लृट् | वदिष्यति | वदिष्यतः | वदिष्यन्ति | प्र. |
| | वदिष्यसि | वदिष्यथः | वदिष्यथ | म. |
| | वदिष्यामि | वदिष्यावः | वदिष्यामः | उ. |
| लोट् | वदतु-तात् | वदताम् | वदन्तु | प्र. |
| | वद-तात् | वदतम् | वदत | म. |
| | वदानि | वदाव | वदाम | उ. |
| लङ् | अवदत् | अवदताम् | अवदन् | प्र. |
| | वदतः | अवदतम् | अवदत | म. |
| | अवदम् | अवदाव | अवदाम | उ. |
| वि.लि. | वदेत् | वदेताम् | वदेयुः | प्र. |
| | वदेः | वदेतम् | वदेत | म. |
| | वदेयम् | वदेव | वदेम | उ. |

१ 'ह्वावामश्च' (३-२-२) इति कर्मण्युपपदेऽण् प्रत्ययः। आदन्तलक्षणकप्रत्ययापवादः।
२ 'ह्वः सम्प्रसारणं च न्युभ्युपविषु' (३-३-७२) इति भावेऽप्रत्यये सम्प्रसारणादिकम्।
३ अप् प्रत्यये, 'आङि युद्धे' (३-३-७३) इति सम्प्रसारणम्। आहवः = युद्धः।
४ 'भावेऽनुपसर्गस्य' (३-३-७५) इति सम्प्रसारणम्। अप्।
५ 'निपानमाहावः' (३-३-७४) निपातनात् साधुः। उपकूपं जलाशये विवाक्षते भावेऽप् प्रत्यये सम्प्रसारणवृद्धौ निपातनात्। आहावः = यत्र गावो जलाशये पानार्थमाहूयन्ते स प्रदेशः।
६ 'आतश्चोपसर्गे' (३-३-१०६) इत्यङि 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः। आह्वा नाम।
७ अत्र बाहुलकात् स्त्रियां क्तिन्। 'आतश्चोपसर्गे' (३-३-१०६) इत्यडोपवादः।

| | | | | |
|---|---|---|---|---|
| आ. लि. | उद्यात् | उद्यास्ताम् | उद्यासुः | प्र. |
| | उद्याः | उद्यास्तम् | उद्यास्त | म |
| | उद्यासम् | उद्यास्व | उद्यास्म | उ. |
| लुङ् | अवादीत् | अवादिष्टाम् | अवादिषुः | प्र. |
| | अवादीः | अवादीष्टम् | अवादिष्ट | म. |
| | अवादिषम् | अवादिष्व | अवादिष्म | उ. |
| लृङ् | अवादिष्यत् | अवादिष्यताम् | अवदिष्यन् | प्र. |
| | अवदिष्यः | अवदिष्यतम् | अवदिष्यत | म. |
| | अवदिष्यम् | अवदिष्याव | अवदिष्याम | उ. |

**कर्मणि**—उद्यते। **णिचि**—वादयते। **सनि**—विवदिषति। **यङि**—वावद्यते। **यङ्लुकि**—वावदीति-वावत्ति। **कृत्सु**—वादकः-दिका, **णिचि**—वादकः-परिवादकः-दिका, विवदिषकः-षिका, वावदकः-दिका, वदिता-त्री, वादयिता-त्री, विवदिषिता-त्री, वावदिता-त्री, वदन्-न्ती, वादयन्-न्ती, विवदिषन्-न्ती, वदिष्यन्-न्ती-ती, वादयिष्यन्-न्ती-ती, विवदिषिष्यन्-न्ती-ती, शास्त्रे वदमानः, कर्मकरान् उपवदमानः, न्यायम् अववदमानः,[१] गेहे विवदमानः,वादयमानः,वदिष्यमाणः,वादयिष्यमाणः,उदितम्[२]-तः-तवान्,वादितः,विवदिषितः, वावदितः-तवान्, वदः,[३] अवादी, वदावदः, वावदूकः,[४] प्रवावदूकः, कद्वदः,[५] साधुवादी, परिवादिनी,[६] प्रियंवदः[७]-प्रियंवदा, वशंवदः, प्रवादी,[८] ब्रह्मवादी,[९] परिवादकः,[१०] वादः, विवदिषुः, वावदः, वदितव्यम्, वादयितव्यम्, वदनीयम्, वादनीयम्, अवद्यम्,[११] ब्रह्मोद्यम्[१२]-ब्रह्मवद्यम्, मृषोद्यम्, सत्यवद्यः, अनृतोद्यम्, वाद्यम्[१३]-प्रवाद्यम्, विवदिष्यम्, वावद्यम्,उद्यमानः,वाद्यमानः,विविदिष्यमाणः,वावद्यमानः,वादः,विवदिषः,वदितुम्,वादयितुम्,

१ 'अपाद् वदः' (१-३-७३) इति तङ्। एतदपि व्यक्तवाग् विषयकमेव।
२ निष्ठायाम् 'वचिस्वपियजादीनाम्' (६-१-१५) इति सम्प्रसारणम्। तेन पूर्वरूपम्।
३ 'याचिव्याहृवजवदवसां प्रतिषिद्धानाम्' (ग.सू. ३-१-१३४) इति नञि उपपदे ग्रह्यादित्वात् कर्तरिणिनिः।
४ चरिचलिपतिवदीनां द्वित्वम् अचि आक् च अभ्यासस्य' (वा. ६-१-१२) इति वचनेन पचाद्यचि द्वित्वम् अभ्यासस्य आक् च भवतः
५ पचाद्यचि 'रथवदयोश्च' (६-३-१०२) इति वदशब्दे कोः क्त् आदेशः।
६ 'सुप्यजातौ णिनिः—' (३-२-७८) इति णिनिः तद्धर्मेऽयं प्रत्ययः। सप्तभिः 'परिवादिनी' इति वीणाविशेषः।
७ 'प्रियवशे वदः खच्' (३-२-३८) इति खच्। खित्वात् नुम्।
८ 'तच्छीलादिषु कर्तृषु प्रे लपसृद्रुमथवदवसः' (३-२-१४५) इति घिनुण् प्रत्ययः।
९ 'ब्रह्मणि वदः' (वा. ३-२-७८) इति णिनि प्रत्ययः। अताच्छीलिकोऽयम्।
१० तच्छीलादिषु कर्तृषु 'निन्दहिस—' (३-२-१४६) इत्यादिना वुञ् प्रत्ययः।
११ गर्ह्यामित्यर्थे 'अवद्यपण्यवर्याः' (३-१-१०१) इत्यनेन वदतेः क्यप्। कित्वात् सम्प्रसारणम्।
१२ 'वदः सुपि क्यप् च' (३-१-१०६) इति अनुपसर्गे सुपि उपपदे क्यब्विकल्पः। पक्षे यत्। क्यपि ब्रह्मोद्यम्। यति ब्रह्मवद्यम्।
१३ 'वदः सुपि—' (३-१-१०६) इत्यत्र। 'सुपि' इत्युक्तत्वात् सोपसर्गात् निरुपसृष्टाच्च ण्यदेव। तेन वाद्यम् प्रवाद्यम् इति सिध्यतः।

विवदिषितुम्, वावदितुम्, उदिति[1] उत्तिः, वादना, विवदिषा, वावदा, वदनम्, वादनम्, उदित्वा,[2] वादयित्वा, प्रोद्य, अच्छोद्य, अनुवाद्य, वादिः,[3] वदान्य,[4] वादित्रम्,[5] वत्सः[6] ।

**( १०१० ) टु ओश्वि**—गतिवृद्धयोः । (जाना, बढ़ना, सफेद होना) । अक. । सेट् । परस्मै. ।

१ श्वयति । २ **प्र.** शुशावं शुशुवतुः शुशुवुः । **म.** शुशविथ शुशुवथुः शुशुव । **उ.** शुशाव शुशुव शुशुविव शुशुविम । **सम्प्रसारणभावपक्षे**—**प्र.** शिश्वाय शिश्वियतुः शिश्वियुः । **म.** शिश्वयिथ शिश्वियथुः शिश्विय । **उ.** शिश्वाय-शिश्वय शिश्वियिव शिश्वियिम । ३ श्वयिता । ४ श्वयिष्यति । ५ श्वयतु । ६ अश्वयत् । ७ श्वयेत् । ८ शूयात् । ९ अश्वत्, अश्वताम्, अश्वन्, अशिश्वियत्-अश्वयीत् । १० अश्वयिष्यत् ।

**भावे**—शूयते । **णिचि**—श्वाययति-ते । **सनि**—शिश्वयिषति । **यङि**—शेश्वीयते-शोशूयते । **यङ्लुकि**—शेश्वयीति-शेश्वेति । **कृत्सु**—श्वयितव्यम्, श्वयनीयम्, श्वेयम्, शूनः, श्वयितुम्, श्वयनम्, श्वयित्वा, उच्छूय, श्वयथुः, व्ययन्, उदाश्वित्, श्वा, मातरिश्वा ।

इति भ्वादयः ॥ १ ॥

---

१ स्त्रिया क्तिनि 'तितुत्रेष्वग्रहादीनाम्–' (वा. ७-२-९) इति वचनादिटि उदिति । क्षीरस्वामी तु उत्तिः इतीडागमाभावपक्षे मुख्यं रूपं साधयित्वा 'इडपीष्यते उदितिः इत्याह ।

२ 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति सेटः क्त्वायाः कित्वात् सम्प्रसारणम् ।

३ 'वसिवपिवदि–' (द.उ. १-५३) इतीत्रप्रत्ययः । वदति तस्यामिति वादिः = वीणा ।

४ 'वदेरान्यः' (द. उ. ८-९) इत्यान्यप्रत्ययः । वदान्यो दाता । वदान्योनान्योऽस्ति त्रिजति समो 'रुद्रनृपतेः–' प्रतापरुद्रिये १७ श्लो. ।

५ 'भूवादि–' (द.उ. ८-९१) इति णिजन्तात् णित्रन् प्रत्ययः । वाद्यते इति वादित्रम् = मृदङ्गपणवादिकम् ।

६ 'वृतृवदि–'(द.उ. ९-२१) इति सप्रत्ययः । 'तितुत्रस–'(७-२-९) इतीण्निषेधः । वत्सः = कुमारः, गोबालश्च ।

# अथ अदादय: ( २ )

**( १०११ ) अद**—**भक्षणे**। (खाना)। **अव**—तृप्त होना, मुंह बन्द हो जाना, खाना छोड़ देना, **आ**—खाना, **प्र**—खाना, **सम्**—खाना, **वि**—काटना, कतर देना, चबाना। सक.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | अत्ति | अत्तः | अदन्ति | प्र. |
| | अत्सि | अत्थः | अत्थ | म. |
| | अद्मि | अद्वः | अद्मः | उ. |
| लिट् | जघास | जक्षतुः | जक्षुः | प्र. |
| | जघसिथ | जक्षथुः | जक्ष | म. |
| | जघास-जघस | जक्षिव | जक्षिम | उ. |
| पक्षे– | आद | आदतुः | आदुः | प्र. |
| | आदिथ | आदथुः | आद | म. |
| | आद | आदिव | आदिम | उ. |
| लुट् | अत्ता | अत्तारौ | अत्तारः | प्र. |
| | अत्तासि | अत्तास्थः | अत्तास्थ | म. |
| | अत्तास्मि | अत्तास्वः | अत्तास्मः | उ. |
| लृट् | अत्स्यति | अत्स्यतः | अत्स्यन्ति | प्र. |
| | अत्स्यसि | अत्स्यथः | अत्स्यथ | म. |
| | अत्स्यामि | अत्स्यावः | अत्स्यामः | उ. |
| लोट् | अत्तु-अत्तात् | अत्ताम् | अदन्तु | प्र. |
| | अद्धि-अत्तात् | अत्तम् | अत्त | म. |
| | अदानि | अदाव | अदाम | उ. |
| लङ् | आदत् | आत्ताम् | आदन् | प्र. |
| | आदः | आत्तम् | आत्त | म. |
| | आदम् | आद्व | आद्म | उ. |
| वि. लि. | अद्यात् | अद्यास्ताम् | अद्युः | प्र. |
| | अद्याः | अद्यास्तम् | अद्यास्त | म. |
| | अद्यासम् | अद्यास्व | अद्यास्म | उ. |
| लुङ् | अघसत् | अघसताम् | अघसन् | प्र. |
| | अघसः | अघसतम् | अघसत | म. |
| | अघसम् | अघसाव | अघसाम | उ. |
| लृङ् | आत्स्यत् | आत्स्यताम् | आत्स्यन् | प्र. |
| | आत्स्यः | आत्स्यतम् | आत्स्यत | म. |
| | आत्स्यम् | आत्स्याव | आत्स्याम | उ. |

**कर्मणि**—अद्यते। २ आदे। **पक्षे**—जक्षे। अघासि अघत्सताम्। **णिचि**—आदयते[१] -आदयति[२]। ९ आदिदत्-त। **सनि**—जिघत्सति। **कृत्सु**—आदकः-दिका, **णिचि**—आदकः-दिका, जिघत्सकः-त्सिका, अत्ता[३]-त्री, आदयिता-त्री, जिघत्सिता-त्री, अदन्-न्ती, आदयन्-न्ती, जिघत्सन्-न्ती, अत्स्यन्-न्ती-ती, आदयिष्यन्-न्ती-ती, जिघत्सिष्यन्-न्ती-ती, अदयमानः, आदयिष्यमाणः, सस्यात्[४], आमात्, क्रव्यात्[५], क्रव्यादः,[६] प्राणात्, अभिषादः, जग्धम्[७]-ग्धः-ग्धवान्, अन्नम्[८]-न्नवान्, आदितम्-तः, जिघत्सितम्-तः-तवान्, घसः[९], अन्नादी,[१०] पुत्रादिनी, आदिवान्, जक्षिवान्[११], अद्‌भरः,[१२] जिघत्सुः, अत्तव्यम्, आदितव्यम्, जिघत्सितव्यम्, अदनीयम्, आदनीयम्, जिघत्सनीयम्, आद्यम्, जिघत्स्यम्, अद्यमानः, आद्यमानः, जिघत्स्यमानः, घासः,[१३] घसः, न्यादः[१४], निघसः, आदः, संघसः[१५], प्रधसः, जिघसः, अत्तुम्[१६], आदयितुम्, जिघत्सितुम्, अदनम्, आदनम्, जिघत्सन्, जग्धिः, आदना, जिघत्सा, जिघत्सयिषा, जग्ध्वा, आदयित्वा, जिघत्सित्वा, प्रजग्ध्य, समाद्य, प्रजित्स्यः। अत्रिः[१७], अद्रिः[१८]।

**(१०१२) हन**—**हिंसागत्योः**। (मार डालना, जाना)। **अभि**—मुख से बजाना, **नि-परि**—समूल नष्ट करना, **प्र**—ऊपर रखना, प्रहार करना, मारना, **प्रति**—विरुद्ध पक्ष का खण्डन करना, **व्या**—प्रतिबन्ध करना, रोकना, **सम्**—हिंसा करना, मारना, एकत्र करना, **आ**—(आ) ठोकना, मारना। सक.। अनिट्। वधादेशे सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | हन्ति | हतः | घ्नन्ति | प्र. |
| | हंसि | हथः | हथ | म. |
| | हन्मि | हन्वः | हन्मः | उ. |

१ 'निगरणचलने–' (१-३-८७) ति प्राप्तस्य परस्मैपदस्य 'अदेः प्रतिषेधः' इति निषेधात् आत्मनेपदम्।
२ अकर्तभिप्राये 'शेषात्कर्तरि परस्मैपदम्' (१-३-७८) इति परस्मैपदमपि।
३ 'एकाच उपदेशे–' (७-२-१०) इतीण्णिषेधः।
४ 'अदोनन्ने' (३-२-६८) इति विट्।
५ 'क्रव्ये च' (३-२-६९) इति विट्।
६ 'वाऽसरूपो–' (३-१-९४) इति न्यायेनाणपि।
७ 'अदो जग्धिल्यप् तिकिति' (२-४-३६) इति जग्ध्यादेशः।
८ 'बहुलं तणि, अन्नवधक–' (२-४-५४) इति वार्तिकात् प्रयोगोऽयमपि साधुः। 'अन्नण्णः' (४-४-८५) इति निर्देशाच्च।
९ 'अच्युपसंख्यानम्' (वा. २-४-३७) इति घस्लृ।
१० 'सुप्यजातौ–' (३-२-७८) इति णिनिः।
११ 'लिट्यन्यतरस्याम्' (२-४-४०) इति घस्लृ विकल्पेन। 'वस्वेकाज्–' (७-२-६७) इति इट्।
१२ 'सृघस्यदः क्मरच्' (३-२-१६०) इति तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययः।
१३ 'घञपोश्च' (२-४-३८) इति घस्लृ।
१४ 'नौ ण च' (३-३-६०) इति णा अप्।
१५ 'उपसर्गे अदः' (३-३-५९) इत्यप्।
१६ 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' (३-३-१०) इति तुमुण् ण्वुलौ।
१७ औणादिकः त्रिन् प्रत्ययः (दउ. १-३७) ऋषिः।
१८ औणादिकः (दउ. १-३४) क्रिन् प्रत्ययः।

| | | | | |
|---|---|---|---|---|
| लिट् | जघान | जघ्नतुः | जघ्नुः | प्र. |
| | जघनिथ-जघन्थ | जघ्नथुः | जघ्न | म. |
| | जघान-जघन | जघ्निव | जघ्निम | उ. |
| लुट् | हन्ता | हन्तारौ | हन्तारः | प्र. |
| | हन्तासि | हन्तास्थः | हन्तास्थ | म. |
| | हन्तास्मि | हन्तास्वः | हन्तास्मः | उ. |
| लृट् | हनिष्यति | हनिष्यतः | हनिष्यन्ति | प्र. |
| | हनिष्यसि | हनिष्यथः | हनिष्यथ | म. |
| | हनिष्यामि | हनिष्यावः | हनिष्यामः | उ. |
| लोट् | हन्तु-हतात् | हताम् | घ्नन्तु | प्र. |
| | जहि-हतात् | हतम् | हत | म. |
| | हनानि | हनाव | हनाम | उ. |
| लङ् | अहन् | अहताम् | अघ्नन् | प्र. |
| | अहन् | अहतम् | अहत | म. |
| | अहनम् | अहनाव | अहनाम | उ. |
| वि. लि. | हन्यात् | हन्याताम् | हन्युः | प्र. |
| | हन्याः | हन्यातम् | हन्यात | म. |
| | हन्याम् | हन्याव | हन्याम | उ. |
| आ. लि. | वध्यात् | वध्यास्ताम् | वध्यासुः | प्र. |
| | वध्याः | वध्यास्तम् | वध्यास्त | म. |
| | वध्यासम् | वध्यास्व | वध्यास्म | उ. |
| लुङ् | अवधीत् | अवधिष्टाम् | अवधिषुः | प्र. |
| | अवधीः | अवधिष्टम् | अवधिष्ट | म. |
| | अवधिषम् | अवधिष्व | अवधिष्म | उ. |
| लृङ् | अहनिष्यत् | अहनिष्यताम् | अहनिष्यन् | प्र. |
| | अहनिष्यः | अहनिष्यतम् | अहनिष्यत | म. |
| | अहनिष्यम् | अहनिष्याव | अहनिष्याम | उ. |

आत्मनेपदे– १ **प्र.** आहते[1] आघ्नाते आघ्नते[2]। **म.** आहसे आघ्नाथे आहध्वे। **उ.** आघ्ने आहन्वहे आहन्महे। २ **प्र.** आजघ्ने आजघ्नाते आजघ्निरे। **म.** आजघ्निषे आजघ्नाथे आजघ्निध्वे। **उ.** आजघ्ने आजघ्निवहे आजघ्निमहे। ३ **प्र.** आहन्ता। **म.** आहन्तासे। **उ.** आहन्ताहे। ४ आहनिष्यते। ५ **प्र.** अहताम् आघ्नाताम् आघ्नताम्। **म.** आहस्व आघ्नाथाम् आहध्वम्। **उ.** आहनै आहनावहै आहनामहै। ६ आहत आघ्नातम् आघ्नत। **म.** आहथाः आघ्नाथाम् आहध्वम्। **उ.** आघ्नि आहन्वहि आहन्महि। ७ **प्र.** आघ्नीत आघ्नीयाताम् आघ्नीरन्। **म.** आघ्नीथाः आघ्नीयाथाम् आघ्नीध्वम्। **उ.** आघ्नीय आघ्नीवहि आघ्नीमहि।

१ 'आङो यमहनः' (१-३-२८) आङः परयोर्यमहनोरात्मनेपदं स्यात्।
२ 'आत्मनेपदेष्वनतः' (७-१-५) इति झस्य अत इत्यादेशः स्यात्।

८ **प्र.** अवधिषीष्ट। **म.** आवधिषीष्ठाः। **उ.** आवधीषीय। ९ आवधिष्ट आवधिषाताम् आवधिषत। **म.** आवधिष्ठाः। **उ.** आवधिषी। पक्षे—**प्र.** आहत[१] आहसाताम् आहसत। **म.** आहथाः आहसाथाम् आहध्वम्। **उ.** आहसि आहन्वहि आहन्महि। १० आहनिष्यत।

**कर्मणि**—हन्यते। २ जघ्ने। ९ अघानि अघानिषाताम्-अहसाताम्। **पक्षे**—अवधि अवधिषाताम्। **णिचि**—घातयति-ते। ९ अजीघतत्-त। **सनि**—आजिघांसते जिघांसति। **यङि**—जघ्नीयते। जङ्घन्यते। **यङ्लुकि**—जङ्घनीति-जङ्घन्ति। **कृत्सु**—घातकः[२]-तिका, **णिचि**—घातकः[३]-तिका, जिघांसकः[४]सिका, जेघ्नीयकः[५]-यिका, जङ्घनकः[६]-निका, हन्ता-त्री, घातयिता-त्री, जिघांसिता-त्री, जेघ्नीयता-जङ्घनिता-त्री, हन्तव्यः, हननीयः, हननम्, वधः, घातः, हतः, हतिः, हन्तव्यम्, हन्तुम्, हत्वा[७], प्रहत्य, घात्यम्, हनन्, शत्रुं निघ्नानः, हनिष्यन्[८], हन्यमानः, हनिष्यमानः, क्वसुः-जघ्निवान्-जघन्वान्। आहनिष्यमाणः, प्राणिघ्नन्[९]-व्यतिघ्नन्[१०]- आघ्नन्-चौरस्य, निप्रघ्नन्[११]-न्ती, पद्धतिः[१२], पदोत्पहतः, पुत्त्रहतः[१३]-पुत्रहतः, कुमारिहता,[१४] स्त्रीहता[१५]- स्त्रिहता-ब्रह्मबन्धूहता-ब्रह्मबन्धुहता, लक्ष्मीहता[१६], महद्घता[१७],

१ 'आत्मनेपदेष्वन्यतरस्याम्' (३-१-५४) इति वधादेशो वा। 'हनः सिच्' (१-२-१४) कित् स्यादिति सिचः। कित्वात् 'अनुदात्तोपदेशे' (६-४-३७) ति नकारलोपः। 'स्को–' (८-२-२९) इति सकार लोपः।

२ 'ण्वुलतृचौ' (३-१-१२३) इति ण्वुल्। 'हो हन्तेर्ञ्णिन्नेषु (७-३-५४) इति हन्तेर्हकारस्य कुत्वेन घकारः। 'हनस्तोऽचिण्णलोः' (७-३-३२) इति धातुनकारस्य तकारः।

३ णिजन्तेऽपि सर्वत्र हन्ते र्हकारस्य कुत्वं धकारः नकारस्य तकारश्च पूर्ववत् बोध्यः।

४ सन्नन्ते 'अज् झनगमां सनि' (६-४-१६) इति दीर्घः द्विर्वचनादिकम्, अभ्यासे 'कुहोश्चुः' (७-४-६२) इति चुत्वेन जकारः, 'अभ्यासाश्च' (७-३-५५) इति उत्तरखण्डे कुत्वम्। नकारस्यानुस्वारः। एव सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।

५ 'हन्ते हिंसायां यङि घ्नीभावो वक्तव्यः (वा. ७-१-३०) इति वचनात् यङि विवक्षिते सति हिंसार्थेऽस्य घ्नीभावः, द्विर्वचनादिकम्। हलादिशेषः। 'अभ्यासे चर्च' (८-४-५४) इति अभ्यासे जकारः। 'गुणो यङ्लुकोः' (७-४-८२) इति गुणः।

६ गत्यर्थत्वे तु धातोः 'नुगतोऽनुनासिकान्तस्य' (७-४-८५) इति नुगागमः। नुकः 'पदान्तवत्' इत्यतिदेशात् अनुस्वारः उपलक्ष्यते। 'अभ्यासाच्च' (७-३-५५) इयुक्तरखण्डेऽपि हकारस्य कुत्वेन घकारः।

७ 'अनुदात्तोपदेश–' (६-४-३७) इत्यादिना झलादिषु क्ङित् प्रत्ययेषु क्त्वा-क्तिन्क्तक्तवतुप्रभृतिषु अनुनासिकलोपः।

८ 'ऋद्धनोः स्ये' (७-२-७०) इतीडागमः स्यप्रत्यये परे।

९ शतरि शपोलुकि, शतुः सार्वधातुकत्वेन ङिद्वद्भावात् 'गमहनजनखनघसा लोपः क्ङिति अनङि' (६-४-९८) इति हन्तेरुपधाकारस्य लोपः। 'हो हन्तेः–' (७-३-५४) इति कुत्वेन घकार। 'नेर्गद–' (८-४-१७) इति उपसर्गस्थान्निमित्तादुत्तरस्य नेः णत्वम्।

१० 'न गतिहिंसार्थेभ्यः' (१-३-१५) इति कर्म व्यतिहारात्मनेपदनिषेधः धातोः हिंसार्थकत्वात् गत्यार्थकत्वाच्च।

११ 'जासिनिप्रहण–' (२-३-५६) इति चोरस्य षष्ठी।

१२ पादाभ्यां हन्यते = गम्यते इति पद्धतिः। अत्र धातोर्गत्यर्थकम्। क्तिन्। 'हिमकापि हतिषु च' (६-३-५४) इति पादशब्दस्य पद्भावः। 'वाह्वादित्वात् (४-१-९६) ङीषि पद्धती इत्यपीति माधवः।

१३ 'वा हतजग्धपरेषु' (वा. ८-४-४८) इति पुत्रतकारस्य हतशब्दे परे वा द्वित्वम्।

१४ कुमारी चासौ हता चेति कर्मधारये 'घरूपकल्पप्चेलड्–' (६-३-४३) इति कुमारीशब्दस्यय ह्रस्वः। कुमार्या हता इति समासे तु न ह्रस्वः कुमारीहता इत्येव।

१५ 'नद्याः शेषस्यान्यतरस्याम्' (६-३-४४) इति ह्रस्वविकल्पः।

१६ 'कृन्नपाः प्रतिशेधः' (वा. ६-३-४४) इति प्रतिषेधान्न ह्रस्वः।

१७ महच्छब्दस्यापि पुवद्भावोऽत्र आत्रेयेणोक्त इति माधवः।

अन्तर्हत्य,[१] कणेहत्य-मनोहत्य, घात्यः[२]-वध्यः, ब्रह्महत्या-असिहत्या, अश्वहत्या, हत्याशतं पानसहस्रम्, घनाधनः, शत्रुहः, दार्वाघाटः-दार्वाघातः, वर्णसङ्घाटः-वर्णसङ्घातः, क्लेशापहः-तमोऽपहः, ज्वरापहा, जघ्निवान्-जघन्वान्, तिमिहः[३]-अरातिहः, वराहः-पटहः-कलहः, अभ्याघाती, कुमारघाती- शीर्षघाती, ज्यायाघ्नः, पतिघ्नी, आखुघातः[४], कृतघ्नः[५], गोघ्नः[६], हस्तिघ्नः[७]-कपाघ्नः-कवाट-घ्नः, पणिघः[८]-ताडघः, पितृव्यघाती[९], ब्रह्महा[१०]-भ्रूणहा-वृत्रहा, वृत्रघ्नः[११]-वृत्रघ्णः, घातुकः[१२]-घातुकी, वधकः[१३], वधः, विघ्नः[१४], अभ्रघनः,[१५] अन्तर्घनः-अन्तर्घणः, प्रघणः-प्रघाणः, उद्घनः, अपघनः, अयोघनः, विघनः, द्रुघनः-द्रुघणः, परिघः-पलिघः, प्रतिघः, पर्वतोपघ्नः, उपघ्नः, सङ्घः-उद्घः, सङ्घाथः[१६], हेतिः[१७],

१ 'अन्तरपरिग्रहे' (१-४-६५) इति 'अन्तर्' इत्यस्य गतित्वम्। 'कुगतिप्रादयः' (२-२-१८) इति समासे ल्यपि 'वा ल्यपि' (६-४-३८) इति व्यवस्थितविभाषाविज्ञानात् नान्तानिटोऽस्यः धातोर्नकारलोपो नित्यः। अन्तर्हत्य = मध्ये हत्वा इत्यर्थः। परिग्रहार्थे तु 'अन्तर्हत्वा मूषिकां गतः श्येनः। इत्यत्र न गतित्वम्। तेन न ल्यप्। स्वभावादयं योगः हन्तिविषयकः।

२ 'हनो वा वध च' (वा. ३-१-९७) इति कर्मणि यत् प्रकृते र्वधादेशश्च। वध्यः = वधकर्मीभूतः। पक्षे ण्यति, कुत्वे तकारे च घात्यः। दिगादित्वात् (४-३-५४) यतैव सिद्धिमिति कात्यायनः

३ 'अन्येभ्योऽपि–' इति डप्रत्यये क्षीरस्वामी एतान् साधयति। तादृशं वचनं न दृश्यते। गमेर्डप्रत्ययविधायकं वचनस्य विवक्षितमिति भाति। वरं आहन्तीति वराहः। पटे हन्यते इति पटहः। कलं = माधुर्यं हन्तीति कलहः।

४ आखुं हन्तीत्यर्थे 'कर्मण्यत्' (३-२-१) इत्यण् घत्वे तत्वे च।

५ अत्र 'कप्रकरणे मूल विभुजादिभ्यः–' (वा. ३-२-५) इति कप्रत्यये, उपधाकारलोपे, घत्वे च रूपमिति केचित्। माधुवस्तु कृतं हन्तीत्यर्थे 'कृत्यल्युटो बहुलम्' (३-३-११३) इति बहुलग्रहणात् टक्प्रत्ययमावादीत्। एवमेव क्रियमाणहनः, करिष्यमाणघ्नः, शत्रुघ्नः ठकि कृतघ्नी इति, के कृतघ्ना इति च स्त्रियां भवेत्।

६ गोर्हन्ते स्मै इति गोघ्नः = अतिथिः। दाशगोघ्नौ सम्प्रदाने' (३-४-७३) इति सूत्रे निपातनादेव सम्प्रदाने टक् प्रत्ययः। अन्तोऽयमिति प्रक्रियासर्वस्वम्।

७ हन्तिहनने शक्त एवमुच्यते। 'शक्तौ हस्तिकपाटयोः' (३-२-५४) इति हन्तेष्टक्। हस्तिघ्नः = भटः। कराटघ्नः = चोरः। अशक्तौ यो विषादिमिर्हस्तिं हन्ति सः हस्तिघातः एवम्-यः कुठारादिभिर्बहुभिः साधनैः कपाटं हन्ति स उच्यते कपाटघातः इति। अन्यत्र 'कर्मण्यत्' (३-२-१) इत्यण्।

८ 'पाणिघताडघौ शिल्पिनि' (३-२-५५) इति निपातनात् हन्तेष्टकि टिलोपे, घत्वे च रूपम्। पाणिं हन्तीति पाणिघः हस्तेनैव तालवाद्यप्रावीण्यप्रदर्शयिता। ताडं = हनुं हन्तीति ताडघः मुखेनैव वाद्यविशेषवादयिता।

९ पितृव्यं हतवान् पितृव्यघाती। 'कर्मणि हनः' (३-२-८६) इति हन्तेर्भूते णिनिः।

१० हन्ते 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (३-२-८७) इति क्विप्। ब्रह्म हतवान् ब्रह्महा। भ्रूणं = गर्भं हतवान् भ्रूणहा। वृतं हतवान् वृत्रहा इन्द्रः। 'सौच' (६-४-१३) इति दीर्घः।

११ द्वितीयाबहुवचनान्तमिदम्। अत्र प्रतिपादिकान्त नुम्विभक्तिषु च' (८-२-१५४) इति णत्वविकल्पः।

१२ लषपतपदस्थाभूवृषहन– (३-२-१५४) इति उकञ् ताच्छीलिकः। घत्वतत्वे। स्त्रियां धातुकी।

१३ 'बहुलं तव्यन्नवधक–' (वा. २-४-५४) इति वचनात् ण्वुलि प्रकृतेः वधादेशः सोऽयमकारान्तादेशः। यद् वा हलन्तवेऽपि 'जनिवध्योश्च' (७-३-१५) इति वृद्धिनिषेधः।

१४ 'घत्रर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (वा. ३-३-५८) इति कप्रत्ययः। विशेषेण हन्तीति विघ्नः।

१५ मूर्तौ घनः (३-३-७७) इति हन्तेरप् प्रत्यये प्रकृतेर्घनादेशः, काठिन्ये गम्ये। मूर्तिः—काठिन्यम्। अभ्रघ्नः—अभ्रस्य काठिन्यमित्यर्थः। घनं दधि।

१६ संपूर्वकात् अस्मात् घञि धात्वतत्वयोः संघातशब्दः साधुः। घ-घञोः प्रत्यययोरपवादोऽत्रेति मन्वान आत्रेयः 'हन्त्यर्थाश्च' (ग.सू. चुरादिपाठात् णिजन्तात् संघातशब्दनिष्पत्तिमाहेति माधवः।

१७ हन्तीति हेतिः। हन्यतेऽनेनेति वा 'ऊतियूतिजूतिसातिहेति–' (३-३-९७) इति निपातनात् नलोपे, प्रकृत्यकारस्येकारे च हेतिः इति माधवः।

निघ:,[१] निघ्न:,[२] समूलघातं[३] हन्ति, पाणिघातं[४] वेदिंहन्ति, दण्डोपघातं[५] गा: शातयति, प्रहणम्[६], घङ्गा, जघनम्, रिघातन:, हनु (नू) मान्, हनू:, हिमम्, हेमन्त:, अंहति:, घाति:, अहि:, अनेहा, घोर:, हंस:।

( १०१३ ) **द्विष**—अप्रीतौ। (द्वेष करना, शत्रुता करना)।सकर्म.। अनि.। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | द्वेष्टि | द्विष्ट: | द्विषन्ति | प्र. |
| | द्वेक्षि | द्विष्ठ: | द्विष्ठ | म. |
| | द्वेष्मि | द्विष्व: | द्विष्म: | उ. |
| लिट् | दिद्वेष | दिद्विषतु: | दिद्विषु: | प्र. |
| | दिद्वेषिथ | दिद्विषथु: | दिद्विष | म. |
| | दिद्वेष | दिद्विषिव | दिद्विषिम | उ. |
| लुट् | द्वेष्टा | द्वेष्टारौ | द्वेष्टार: | प्र. |
| | द्वेष्टासि | द्वेष्टास्थ: | द्वेष्टास्थ | म. |
| | द्वेष्टास्मि | द्वेष्टास्व: | द्वेष्टास्म: | उ. |
| लृट् | द्वेक्ष्यति | द्वेक्ष्यत: | द्वेक्ष्यन्ति | प्र. |
| | द्वेक्ष्यसि | द्वेक्ष्यथ: | द्वेक्ष्यथ | म. |
| | द्वेक्ष्यामि | द्वेक्ष्याव: | द्वेक्ष्याम: | उ. |
| लोट् | द्वेष्टु-द्विष्टात् | द्विष्टाम् | द्विषन्तु | प्र. |
| | द्विड्ढि-द्विष्टात् | द्विष्टम् | द्विष्ट | म. |
| | द्वेषाणि | द्वेषाव | द्वेषाम | उ. |
| लङ् | अद्वेट्-ड् | अद्विष्टाम् | अद्विषु:-अद्विषन् | प्र. |
| | अद्वेट्-ड् | अद्विष्टम् | अद्विष्ट | म. |
| | अद्वेषम् | अद्विष्व | अद्विष्म | उ. |
| वि. लि. | द्विष्यात् | द्विष्याताम् | द्विष्यु: | प्र. |
| | द्विष्या: | द्विष्यातम् | द्विष्यात | म. |
| | द्विष्याम् | द्विष्याव | द्विष्याम | उ. |
| आ. लि. | द्विष्यात् | द्विष्यास्ताम् | द्विष्यासु: | प्र. |
| | द्विष्या: | द्विष्यस्तम् | द्विष्यास्त | म. |
| | द्विष्यासम् | द्विष्यास्व | द्विष्यास्म | उ. |

१ 'निघो निमित्तम्' (३-३-८७) इति निपातनात् निपूर्वकादस्मात् अप्प्रत्यये साधु:। निमितम् = समन्तात् मितम् समारोहपरिणाहमित्यर्थ:। निर्विशेषं हन्यन्ते इति निघा: = वृक्षा: शालयश्च।

२ निघ्न: आयत्त:, अधीन:। निपूर्वकादस्मात्, बाहुलकात्, 'घञर्थे कविधानम्–' (वा. ३-३-५८) इति वा कप्रत्यय:।

३ 'समूलाकृतजीवेषु हन्–' (३-४-३६) इति यथासंख्यं समूले उपपदे ण्मुल्। 'कषादिषु यथाविधि–' (३-४-४६) इति वचनात् ण्मुल्प्रयोजकस्येव हन्तेरनुप्रयोग:। 'कृन्मेजन्त:' (१-१-३९) णमुलन्तमव्ययम् इति।

४ 'करणे हन:' (३-४-३६) इति णमुल्। पाणिना हन्तीत्यर्थ:। कषादित्वात् (३-४-४६) पूर्वप्रयुक्तस्यैवानुप्रयोग:।

५ 'हिंसार्थानां च समानकर्मकाणाम्' (३-४-४८) इति णमुल्।

६ 'हन्तेरत्पूर्वस्य' (८-४-२२) इति णत्वम्।

| | | | | |
|---|---|---|---|---|
| लुङ् | अद्विषत् | अद्विक्षताम् | अद्विक्षन् | प्र. |
| | अद्विक्षः | अद्विक्षतम् | अद्विक्षत | म. |
| | अद्विक्षम् | अद्विक्षाव | अद्विक्षाम | उ. |
| लृङ् | अद्वेक्ष्यत् | अद्वेक्ष्यताम् | अद्वेक्ष्यन् | प्र. |
| | अद्वेक्ष्यः | अद्वेक्ष्यतम् | अद्वेक्ष्यत | म. |
| | अद्वेक्ष्यम् | अद्वेक्ष्याव | अद्वेक्ष्याम | उ. |

आत्मनेपदे—१ **प्र.** द्विष्टे द्विषाते द्विषते। **म.** द्विक्षे द्विषाथे द्विड्ढ्वे। **उ.** द्विषे द्विष्वहे द्विष्महे। २ **प्र.** दिद्विषे दिद्विषाते दिद्विषिरे। **म.** दिद्विषिषे दिद्विषाथे दिद्विषिध्वे। **उ.** दिद्विषे दिद्विषिवहे दिद्विषिमहे। द्वेष्टा। द्वेक्ष्यते। ५ **प्र.** द्विष्टाम् द्विषाताम् द्विषताम्। **म.** द्विक्ष्व द्विषाथाम् द्विड्ढ्वम्। **उ.** द्वेषै द्वेषावहै द्वेषामहै। ६ **प्र.** अद्विष्ट अद्विषाताम् अद्विषत। **म.** अद्विष्ठाः अद्विषाथाम् अद्विड्ढ्वम्। **उ.** अद्विषि अद्विष्वहि अद्विष्महि। ७ **प्र.** द्विषीत द्विषीयाताम् द्विषीरन्। **म.** द्विषीथाः द्विषीयाथाम् द्विषीध्वम्। **उ.** द्विषीय द्विषीवहि द्विषीमहि। ८ **प्र.** द्विक्षीष्ट द्विक्षीयास्ताम् द्विक्षीरन्। **म.** द्विक्षीष्ठाः द्विक्षीयास्थाम् द्विक्षीध्वम्। **उ.** द्विक्षीये द्विक्षीवहि द्विक्षीमहि। ९ **प्र.** अद्विक्षत अद्विक्षाताम् अद्विक्षन्त। **म.** अद्विक्षथाः अद्विक्षाथाम् अद्विक्षध्वम्। **उ.** अद्विक्षि अद्विक्षावहि अद्विक्षामहि। १० अद्वेक्ष्यत।

**णिचि**—द्वेषयति-ते। **सनि**—दिद्विक्षति-ते। **यङि**—देद्विष्यते। **यङ्लुकि**—देद्विषीति-देद्वेष्टि। **कृत्सु**—द्वेषकः-षिका, **णिचि**—द्वेषकः-षिका, दिद्विक्षकः-क्षिका, देद्विषकः-षिका, द्वेष्टा-ष्ट्री, द्वेषयिता-त्री, द्विषन्-न्ती, द्वेषयन्-न्ती, दिद्विक्षन्-न्ती, द्वेक्ष्यन्-न्ती-ती, द्वेषयिष्यन्-न्ती-ती, दिद्विक्षिष्यन्-न्ती-ती, द्विषाणः, द्वेषयमाणः, द्वेक्ष्यमाणः, द्वेषयिष्यमाणः, विप्रद्विट्-मित्रद्विट्, मधुद्विट्, प्रद्विट्, ब्रह्मद्विट्-द्विषौ-द्विषः, द्विष्टम्-द्विष्टः-ष्टवान्, द्वेषितः, द्विषः, द्वेषी, द्वेषणः, द्विषन्, दिद्विक्षुः, द्वेष्टव्यम्, द्वेषयितव्यम्, द्वेषणीयम्, द्वेष्यम्, द्विष्यमाणः, द्वेष्यमाणः, द्वेषः, द्वेष्टुम्, द्वेषयितुम्, द्विष्टिः, द्वेषणा, द्वेषणम्, द्विष्ट्वा, द्वेषयित्वा, प्रद्विष्य, प्रद्वेष्य।

**(१०१४) दुह—प्रपूरणे**। प्रपूरणम् = दोहनम्। (दूध निकालना, दोहना)। सकर्म.। अनि.। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | दोग्धि | दुग्धः | दुहन्ति | प्र. |
| | दोक्षि | दुग्धः | दुग्ध | म. |
| | दोह्मि | दुह्वः | दुह्मः | उ. |
| लिट् | दुदोह | दुदुहतुः | दुदुहुः | प्र. |
| | दुदोहिथ | दुदुहथुः | दुदुह | म. |
| | दुदोह | दुदुहिव | दुदुहिम | उ. |
| लुट् | दोग्धा | दोग्धारौ | दोग्धारः | प्र. |
| | दोग्धासि | दोग्धास्थः | दोग्धास्थ | म. |
| | दोग्धास्मि | दोग्धास्वः | दोग्धास्मः | उ. |

| | | | | |
|---|---|---|---|---|
| लृट् | धोक्ष्यति | धोक्ष्यत: | धोक्ष्यन्ति | प्र. |
| | धोक्ष्यसि | धोक्ष्यथ: | धोक्ष्यथ | म. |
| | दोक्ष्यामि | धोक्ष्याव: | धोक्ष्याम: | उ. |
| लोट् | दोग्दु-दुग्धात् | दुग्धाम् | दुहन्तु | प्र. |
| | दुग्धि-दुग्धात् | दुग्धम् | दुग्ध | म. |
| | दोहानि | दोहाव | दोहाम | उ. |
| लङ् | अधोक्-अधोग् | अदुग्धाम् | अदुहन् | प्र. |
| | अधोक्-अधोग् | अदुग्धम् | अदुग्ध | म. |
| | अदोहम् | अदुह्व | अदुह्म | उ. |
| वि. लि. | दुह्यात् | दुह्याताम् | दुह्यु: | प्र. |
| | दुह्या: | दुह्यातम् | दुह्यात | म. |
| | दुह्याम् | दुह्याव | दुह्याम | उ. |
| आ. लि. | दुह्यात् | दुह्यास्ताम् | दुह्यासु: | प्र. |
| | दुह्या: | दुह्यास्तम् | दुह्यास्त | म. |
| | दुह्यासम् | दुह्यास्व | दुह्यास्म | उ. |
| लुङ् | अधुक्षत् | अधुक्षताम् | अधुक्षन् | प्र. |
| | अधुक्ष: | अधुक्षतम् | अधुक्षत | म. |
| | अधुक्षम् | अधुक्षाम | अधुक्षाम | उ. |
| लृङ् | अधोक्ष्यत् | अधोक्ष्यताम् | अधोक्ष्यन् | प्र. |
| | अधोक्ष्य: | अधोक्ष्यतम् | अधोक्ष्यत | म. |
| | अधोक्ष्यम् | अधोक्ष्याव | अधोक्ष्याम | उ. |

अत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट् | दुग्धे | दुहाते | दुहते | प्र. |
| | धुक्षे | दुहाथे | दुग्ध्वे | म. |
| | दुहे | दुह्वहे | दुह्महे | उ. |
| लिट् | दुदुहे | दुदुहाते | दुदुहिरे | प्र. |
| | दुदुहिषे | दुदुहाथे | दुदुहिध्वे-ढ्वे | म. |
| | दुदुहे | दुदुहिवहे | दुदुहिमहे | उ. |
| लुट् | दोग्धा | दोग्धारौ | दोग्धार: | प्र. |
| | दोग्धासे | देग्धासाथे | दोग्धाध्वे | म. |
| | दोग्धाहे | दोग्धास्वहे | दोग्धास्महे | उ. |
| लृट् | धोक्ष्यते | धोक्ष्येते | धोक्ष्यन्ते | प्र. |
| | धोक्ष्यसे | धोक्ष्येथे | धोक्ष्यध्वे | म. |
| | धोक्ष्ये | धोक्ष्यावहे | धोक्ष्यामहे | उ. |
| लोट् | दुग्धाम् | दुहाताम् | दुहताम् | प्र. |
| | धुक्ष्व | दुहाथाम् | धुग्ध्वम् | म. |
| | दोहै | दोहावहै | दोहामहै | उ. |

| | | | | |
|---|---|---|---|---|
| लङ् | अदुग्ध | अदुहाताम् | अदुहत | प्र. |
| | अदुग्धाः | अदुहाथाम् | अदुग्ध्वम् | म. |
| | अदुहि | अदुह्वहि | अदुह्महि | उ. |
| वि. लि. | दुहीत | दुहीयाताम् | दुहीरन् | प्र. |
| | दुहीथाः | दुहीयाथाम् | दुहीध्वम् | म. |
| | दुहीय | दुहीवहि | दुहीमहि | उ. |
| आ. लि. | धुक्षीष्ट | धुक्षीयास्ताम् | धुक्षीरन् | प्र. |
| | धुक्षीष्ठाः | धुक्षीयास्थाम् | धुक्षीध्वम् | म. |
| | धुक्षीय | धुक्षीवहि | धुक्षीमहि | उ. |
| लुङ् | अदुग्ध-अधुक्षत | अधुक्षाताम् | अधुक्षन्त | प्र. |
| | अदुग्धाः-अधुक्षथाः | अधुक्षाथाम् | अधुग्ध्वम्-अधुक्षध्वम् | म. |
| | अधुक्षि | अदुह्वहि-अधुक्षावहि | अदुह्महि-अदुक्षामहि | उ. |
| लृङ् | अधोक्ष्यत | अधोक्ष्येताम् | अधोक्ष्यन्त | प्र. |
| | अधोक्ष्यथाः | अधोक्ष्येथाम् | अधोक्ष्यध्वम् | म. |
| | अधोक्ष्ये | अधोक्ष्यावहि | अधोक्ष्यामहि | उ. |

**कर्मणि**—दुह्यते। **णिचि**—दोहयति-ते। २ दोहयाञ्चकार-चक्रे। ९ अदूदुहत्-त। **सनि**—दुधुक्षति-ते। **यङि**—दोहुह्यते। **यङ्लुकि**—दोहुहीति दोदोग्धि। **कृत्सु**—दोहकः-हिका, णिचि—दोहकः-दोहिका, दुधुक्षकः-क्षिका, दोदुहकः-हिका, दुग्ध्वा, संदुह्य, दोग्धुम्, दोग्धव्यम्, दोहनीयम्, दुह्यम्, दोह्यम्, दुग्धम्, दुहन्, दुहन्ती, दुहानः, धोक्ष्यम्-न्ती-ती, गोधुक्, दुहिता, कामदुधा गौ, दुधुक्षा, दुधुक्षुः, दुधुक्षन्, दोदुह्यमानः, दोही, गोदोहनी, ईषद्दोहनः -दुर्दोहनः-सुदोहनः,

**( १०१५ ) दिह—उपचये**। (बढ़ना, जमाना, लीपटना, पोतना)। सक.। अनिट्.। उभय.।

१ प्र. दोग्धि। म. धोक्षि। उ. देह्मि। २ दिदेह। ३ देग्धा। ४ धेक्ष्यति। ५ देग्धु। ६ अधेक्-ग्। ७ दिह्यात्। ८ दिह्यात्। ९ अधिक्षत्। १० अधेक्ष्यत्। **आत्मने.** १ दिग्धे। २ दिदिहे। ३ देग्धा। ४ धेक्ष्यते। ५ दिग्धाम्। ६ अदिग्ध। ७ दिहीत। ८ धिक्षीष्ट। ९ अदिग्ध-अधिक्षत। १० अधेक्ष्यत। इत्यादि सर्वं "दोग्धि" (१०१४) वत्। देही। देहः।

**( १०१६ ) लिह्—आस्वादने**। (चाटना। चरवाना)। सक.। अनिट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | लेढि | लीढः | लिहन्ति | प्र. |
| | लेक्षि | लीढः | लीढ | म. |
| | लेह्मि | लिह्वः | लिह्मः | उ. |
| लिट् | लिलेह | लिलिहतुः | लिलिहुः | प्र. |
| | लिलेहिथ | लिलिहथुः | लिलिह | म. |
| | लिलेह | लिलिहिव | लिलिहिम | उ. |

| | | | | |
|---|---|---|---|---|
| लुट् | लेढा | लेढारौ | लेढारः | प्र. |
| | लेढासि | लेढास्थः | लेढास्थ | म. |
| | लेढास्मि | लेढास्वः | लेढास्मः | उ. |
| लृट् | लेक्ष्यति | लेक्ष्यतः | लेक्ष्यन्ति | प्र. |
| | लेक्ष्यसि | लेक्ष्यथः | लेक्ष्यथ | म. |
| | लेक्ष्यामि | लेक्ष्यावः | लेक्ष्यामः | उ. |
| लोट् | लेढु-लीढात् | लीढाम् | लिहन्तु | प्र. |
| | लीढि-लीढात् | लीढम् | लीढ | म. |
| | लेहानि | लेहाव | लेहाम | उ. |
| लङ् | अलेट्-ड् | अलीढाम् | अलिहन् | प्र. |
| | अलेट्-ड् | अलीढम् | अलीढ | म. |
| | अलेहम् | अलिह्व | अलिह्म | उ. |
| वि. लि. | लिह्यात् | लिह्याताम् | लिह्युः | प्र. |
| | लिह्याः | लिह्यातम् | लिह्यात | म. |
| | लिह्याम् | लिह्याव | लिह्याम | उ. |
| आ. लि. | लिह्यात् | लिह्यास्ताम् | लिह्यासुः | प्र. |
| | लिह्याः | लिह्यास्तम् | लिह्यास्त | म. |
| | लिह्यासम् | लिह्यास्व | लिह्यास्म | उ. |
| लुङ् | अलिक्षत् | अलिक्षताम् | अलिक्षन् | प्र. |
| | अलिक्षः | अलिक्षतम् | अलिक्षत | म. |
| | अलिक्षम् | अलिक्षाव | अलिक्षाम | उ. |
| लृङ् | अलेक्ष्यत् | अलेक्ष्यताम् | अलेक्ष्यन् | प्र. |
| | अलेक्ष्यः | अलेक्ष्यतम् | अलेक्ष्यत | म. |
| | अलेक्ष्यम् | अलेक्ष्याव | अलेक्ष्याम | उ. |

आत्मनेपदपक्षे

| | | | | |
|---|---|---|---|---|
| लट् | लीढे | लिहाते | लिहते | प्र. |
| | लिक्षे | लिहाथे | लीढ्वे | म. |
| | लिहे | लिह्वहे | लिह्महे | उ. |
| लिट् | लिलिहे | लिलिहाते | लिलिहिरे | प्र. |
| | लिलिहिषे | लिलिहाथे | लिलिहिध्वे-ढ्वे | म. |
| | लिलिहे | लिलिहिवहे | लिलिहिमहे | उ. |
| लुट् | लेढा | लेढारौ | लेढारः | प्र. |
| | लेढासे | लिढासाथे | लेढाध्वे | म. |
| | लेढाहे | लेढास्वहे | लेढास्महे | उ. |
| लृट् | लेक्ष्यते | लेक्ष्येते | लेक्ष्यन्ते | प्र. |
| | लेक्ष्यसे | लेक्ष्येथे | लेक्ष्यध्वे | म. |
| | लेक्ष्ये | लेक्ष्यावहे | लेक्ष्यामहे | उ. |

| | | | | |
|---|---|---|---|---|
| लोट् | लीढाम् | लीहाताम् | लीहताम् | प्र. |
| | लिक्ष्व | लिहाथाम् | लीढ्वम् | म. |
| | लेहै | लेहावहै | लेहामहै | उ. |
| लङ् | अलीढ | अलिहाताम् | अलिहत | प्र. |
| | अलीढाः | अलिहाथाम् | अलीढ्वम् | म. |
| | अलिहि | अलिह्वहि | अलिह्महि | उ. |
| वि. लि. | लिहीत | लिहीयाताम् | लिहीरन् | प्र. |
| | लिहीथाः | लिहीयाथाम् | लिहीध्वम् | म. |
| | लिहीय | लिहीवहि | लिहीमहि | उ. |
| आ. लि. | लिक्षीष्ट | लिक्षीयास्ताम् | लिक्षीरन् | प्र. |
| | लिक्षीष्ठाः | लिक्षीयास्थाम् | लिक्षीध्वम् | म. |
| | लिक्षीय | लिक्षीवहि | लिक्षीमहि | उ. |
| लुङ् | अलीढ-अलिक्षत | अलिक्षाताम् | अलिक्षन्त | प्र. |
| | अलीढाः-अलिक्षथाः | अलिक्षाथाम् | अलीढ्वम्-अलिक्षध्वम् | म. |
| | अलिक्षि | अलिह्वहि-अलिक्षावहि | अलिह्महि-अलिक्षामहि | उ. |
| लृङ् | अलेक्ष्यत | अलेक्ष्येताम् | अलेक्ष्यन्त | प्र. |
| | अलेक्ष्यथाः | अलेक्ष्येथाम् | अलेक्ष्यध्वम् | म. |
| | अलेक्ष्ये | अलेक्ष्यावहि | अलेक्ष्यामहि | उ. |

**कर्मणि**—लिह्यते। **णिचि**—लेहयति-ते। **सनि**—लिलिक्षति-ते। **यङि**—लेलिह्यते। **यङ्लुकि**—लेलिहीति-लेलेढि। **कृत्सु**—लेहकः-हिका, लिलिक्षकः-क्षिका, लेलिहकः-हिका, लेढा[१]-ढ्री, लेहयिता-त्री, लिहन्-न्ती, लेहयन्-न्ती, लिलिक्षन्-न्ती, लेक्ष्यन्-न्ती-ती, लेहयिष्यन्-न्ती-ती, लिहानः, लेहयमानः, लेक्ष्यमाणः, लेहयिष्यमाणः, लिट्-लिहौ-लिहः, लीढम्[२]-ढः-ढवान्, लेहितः-तम्, लेहः[३], लेहनः[४], मधुलेही[५], वहंलिहः[६]-अभ्रंलिहः, लेलिहानः[७], लेढव्यम्, लेहितव्यम्, लेहनीयम्, लेह्यम्, लिह्यमानः, लेह्यमानः, लेहः, मधुलेहः, लिलिक्षः, लेढुम्, लेहयितुम्, लीढिः, लेहना, लेहनम्, लीढ्वा, लेहयित्वा, संलिह्य, संलेह्य।

**(१०१७) चक्षिङ्—व्यक्तायां वाचि**। (स्पष्ट बोलना) सकर्म.। सेट्। ख्यात्रादेशे त्वनिट्। आत्मने.। प्रायेणायमाङ्पूर्वः।

१ धातुहकारस्य ढत्वे, 'झषस्तथोः–' (८-२-४०) इति धत्वे, 'ष्टुना ष्टुः' (८-४-४१) इति ष्टुत्वेन धकारस्य ढकारे, 'ढो ढे लोपः' (८-३-१३) इति धातुस्थढकारस्य लोपे रूपमेवम्। एवमेव तुमुनादिषु प्रक्रिया ज्ञेया।

२ अत्रापि ढत्वधत्वष्टुढलोपः। प्रत्ययस्य कित्वान्न प्रकृतेर्गुणः।

३ इगुपधलक्षणकप्रत्यापवादे 'श्याद् व्यध–' (३-१-१४१) इति णप्रत्यये गुणे च रूपमेवम्।

४ बाहुलकान्नन्द्यादित्वेन कर्तरि ल्युप्रत्यये नादेशे च रूपमेवम्।

५ मधु लेढीति मधुलेही। 'सुप्यजातौ–' (३-२-७८) इति णिनिः।

६ वहं = स्कन्धं लेढीति वहंलिहः = वत्सः। अभ्रं लेढीति अभ्रंलिहः = वायुः सौधो वा। 'वहाभ्रे लिहः' (३-२-३२) इति खश्। 'कर्तरि शप्' (३-२-६८) इति शप्। तस्य 'अदिप्रभृतिभ्यः–' (३-४-७२) इति लुक्। खित्वात् 'अरुर्द्विषदजन्तस्य–' (६-३-६७) इति पूर्वपदस्य मुमागमः प्रत्ययस्य शित्वेन सार्वधातुकत्वम्, तेन सार्वधातुकमपित्।

७ यङन्तात् चानश् प्रत्यये रूपमेवम्। अन्यथा लेलिह्यमान इत्येव शानचि भवेत्।

१ चष्टे चक्षाते चक्षते। म. चक्षे चक्षाथे चढ्वे। उ. चक्षे चक्ष्वहे चक्ष्महे। २ प्र. चचक्षे चचक्षाते चचक्षिरे। म. चचक्षिषे चचक्षाथे चचक्षिध्वे। उ. चचक्षे चचक्षिवहे चचक्षिमहे। **ख्याञादेशपक्षे**– २ प्र. चख्ये चख्याते चख्यिरे। म. चख्यिषे चख्याथे चख्यिध्वे। उ. चख्ये चख्यिवहे चख्यिमहे। **ख्यञो ञित्वात्परस्मैपदपक्षे**– २ प्र. चख्यौ चख्यतुः चख्युः। म. चख्यिथ-चख्याथ चख्यथुः चख्य। उ. चख्यौ चख्यिव चख्यिम। ३ ख्याता। म. ख्यातासे-सि। उ. ख्याताहे-स्मि। ४ ख्यास्यते-ति। ५ चष्टाम् चक्षाताम् चक्षताम्। म. चक्ष्व चक्षाथाम् चढ्वम्। उ. चक्षै चक्षावहै चक्षामहै। ६ प्र. अचष्ट अचक्षाताम् अचक्षत। म. अचष्ठाः अचक्षाथाम् अचढ्वम्। उ. अचक्षि अचक्ष्वहि अचक्ष्महि। ७ चक्षीत चक्षीयाताम् चक्षीरन्। म. चक्षीथाः चक्षीयाथाम् चक्षीध्वम्। उ. चक्षीय चक्षीवहि चक्षीमहि। ८ प्र. ख्यासीष्ट ख्यासीयास्ताम्। म. ख्यासीष्ठाः। उ. ख्यासीय। परस्मैपदे– प्र. ख्यायात् ख्यायास्ताम्। पक्षे– ख्येयात् ख्येयास्ताम्। ९ प्र. अख्यत अख्येताम् अख्यन्त। म. अख्यथाः अख्येथाम् अख्यध्वम्। उ. अख्ये अख्यावहि अख्यामहि। **परस्मै**– प्र. अख्यत्। म. अख्यः। उ. अख्यम्। १० अख्यास्यत-अख्यास्यत्। **वर्जने ख्याञ् नेष्टः**, इति वार्तिकेन 'समचक्षिष्ट'। इत्यादि। **सर्वत्र ख्याञादेशस्थलेषु क्शाञादेश इति पक्षे**– २ चक्शे-चक्शौ। ३ क्शाता। ४ क्शास्यते-ति। ८ क्शासीष्ट-क्शायात्-क्शेयात्। ९ अक्शास्त-अक्शासीत्। १० अक्शास्यत अक्शास्यत्।

**कर्मणि**—ख्यायते-क्शायते। **णिचि**– ख्यापयति-ते-क्शापयति-ते। **सनि**– चिख्यासते-चिख्यासति-चिक्शासते-चिक्शासति। **यङि**—चाख्यायते-चाक्शायते। **यङ्लुकि**—चाचक्षीति-चाचष्टि। **कृत्सु**—ख्यातव्यः-क्शातव्यः, ख्यानीयः-क्शानीयः, ख्येयः-क्शेयः, ख्यातः-क्शातः-चक्षाणः, ख्यास्यन्-क्शास्यन्, ख्यास्यती-न्ती, क्शास्यन्ती-ती, ख्यातुम्-क्शातुम्, चक्षणम्-ख्यानम्-क्शानम्, ख्यात्वा-क्शात्वा, आख्याय-आक्शाय, आख्या, व्याख्या, चक्षुः। विचक्षणः, वि + आ = विवरणे - व्याचष्टे।

**( १०१८ ) ईर—गतौ कम्पने च**। (जाना, कांपना)। सक.। सेट्। आत्मने.।

१ प्र. ईर्ते ईराते ईरते। म. ईर्षे इराथे ईर्ध्वे। उ. ईरे ईर्वहे इर्महे। २ ईराञ्चक्रे, ईरामास, ईराम्बभूव। इत्यादि। 'एधति' वत्। ३ ईरिता। ४ ईरिष्यते। ५ ईर्ताम्। ६ ऐर्त। ७ ईरीत। ८ ईरिषीष्ट। ९ एरिष्ट। १० ऐरिष्यत।

**कर्मणि**—ईर्यते। २ ईराञ्चक्रे। ९ ऐरि। **णिचि**—ईरयति। **सनि**—ईरिरिषते। **कृत्सु**—ईरितव्यम्, ईरणीयम्, ईर्यम्, ईरितः, ईरितुम्, ईरणम्, ईरित्वा, उदीये, समीरणः, ईर्मम्, स्वैरी, स्वैरिणी।

**( १०१९ ) ईड—स्तुतौ**। (प्रार्थना करना)। सक.। सेट्। आत्मने.।

१ प्र. ईडे, ईडाते, ईडते। म. ईडिषे, ईडाथे, ईडिध्वे। उ. ईडे, ईड्वहे, ईड्महे। २ ईडाञ्चक्रे इत्यादि 'एधाञ्चक्रे' वत्। ३ ईडिता, इडितासे। ४ ईडिष्यते ५ प्र. ईडाम्, ईडाताम्,

ईडताम्। म. ईडिष्व, ईडाथाम्, ईडिध्वम्। उ. ईडै, ईडावहै, ईडामहै। ६ ऐट्ट, ऐडाताम्, ऐडत। म. ऐट्ठा, ऐडाथाम् ऐड्ध्वम्। उ. ऐडि, ऐड्वहि, ऐड्महि। ७ प्र. ईडीत, ईडीयाताम् ईडीरन्। म. ईडीथाः, ईडीयाथाम्, ईडीध्वम्। उ. ईडीय, ईडीवहि, ईडीमहि। ८ ईडिषीष्ट। ९ ऐडिष्ट। १० ऐडिष्यत। शेषं ईरति (१०१८) वत्।

**(१०२०) ईश—ऐश्वर्ये।** (अधिकार होना, मनानुसार काम करने की शक्ति रखना)। अक.। सेट्। आत्मने.।

१ प्र. ईष्टे, ईशाते, ईशते। म. ईशिषे, ईशाथे, ईशिध्वे। उ. ईशे, ईश्वहे, ईश्महे। २ ईशाञ्चक्रे। ३ ईशिता। ४ ईशिष्यते। ५ ईष्टाम्। ६ ऐष्ट। ७ ईशीत। ८ ईशिषीष्ट। ९ ऐशिष्ट। १० ऐशिष्यत। इत्यादि 'इडति' (१०१९) वत्।

**(१०२१) आस—उपवेशने।** (बैठना)। **अधि**– वास करना, रहना, **अभि**—अध्ययान करना, **उप**—उपासना करना, **निर्**—बाहर निकलना या निकाल देना। अक.। सेट्। आत्मने.।

१ प्र. आस्ते आसाते आसते। म. आस्से आसाथे आध्वे। उ. आसे आस्वहे आस्महे। २ आसाञ्चक्रे। ३ प्र. आसिता आसितारौ आसितारः। म. आसितासे आसिताथे आसिताध्वे। उ. आसिताहे आसिस्वहे आसितास्महे। ४ आसिष्यते। ५ प्र. आस्ताम् आसाताम् आसताम्। म. आस्व आसाथाम् आध्वम्। उ. आसै आसावहै आसामहै। ६ प्र. आस्त आसाताम् आसत। म. आस्थाः आसाथाम् आध्वम्। उ. आसि आस्वहि आस्महि। ७ प्र. आसीत् आसीयात्ताम् आसीरन्। म. आसीथाः आशीयाथाम् आसीध्वम्। उ. आसीय आसीवहि आसीमहि। ८ प्र. आसिषीष्ट आसिषीयास्ताम् आसिषीरन्। म. आसिषीष्ठाः आसिषीयास्थाम् आसिषीध्वम्। उ. आसिषीय आसिषीवहि आसिषीमहि। ९ प्र. आसिष्ट आसिषाताम् आसिषत। म. आसिष्ठाः आसिषाथाम् आसिड्ढ्वम्-ध्वम्। उ. आसिषि आसिष्वहि आसिष्महि। १० प्र. आसिष्यत आसिष्येताम् आसिष्यन्त। म. आसिष्यथाः आसिष्येथाम् आसिष्यध्वम्। उ. आसिष्ये आसिष्यावहि आसिष्यामहि।

**भावे**– आस्यते। **णिचि**—आसयति-ते। **सनि**—आसिसिषते। **कृत्सु**—आसकः-सिका, आसिसिषकः-षिका, दुरासिका[1], आसिता-त्री, आसयिता-त्री, आसिसिषिता-त्री, अध्यासयन्[2], आसयन्[3]-न्ती, आसयिष्यन्-न्ती-ती, आसीनः,[4] आः-आसौ-आसः, आसितम्-तः-तवान्, आसः, आसितव्यम्, आसयितव्यम्, आसनीयम्, आस्यम्, उपास्यमानः, आसः, कैलासः,[5] आसिसिष,

१ 'संज्ञायाम्' (३-३-१०९) इति ण्वुल्। 'दुरीश्चरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः। इति वैराग्यपञ्चके (३)।

२ त्रिवर्गपारीणमसौ भवन्तम् अध्यासयन् आसनमेकमिन्द्रः। (भ.का. २-४६)

३ 'अणावकर्मकात् चित्तवत्कर्तृकात्' (१-३-८८) इति ण्यन्तात् शतैव।

४ 'ईदासः' (७-२-८३) इति आनस्यादेरीकारः।

५ 'केलिः प्रयोजनस्य = कैलः 'चूडादिभ्य उपसंख्यानम्' (वा. ५-१-११०) इत्यण्। आस्यतेऽस्मिन् इत्यासः। 'हलश्च' (३-३-१२१) इत्यधिकरणे घञ्। कैलश्चासावासश्चेति 'विशेषणं विशेष्येण–' (२-१-५७) इति संज्ञात्वात् लोहितशाल्यादित्वत् समासो नित्यम्।' इति मा.धा. वृत्तिः।

आसितुम्, आसयितुम्, आसना[1], उपासना[2], उपास्तिः[3], आस्या[4], आसिसिषा, आसनम्, आसित्वा, आसयित्वा, उपास्य, समास्य । उपासजे । अध्यास्ते ।

**(१०२२) आङः शासु—इच्छायाम्** । (भला करना, आशा करना, इच्छा करना) । सक. । सेट् । आत्मने. ।

१ **प्र.** आशास्ते । **म.** आशास्से । **उ.** आशासे । २ **प्र.** आशशासे आशशासाथे आशशासिरे । **म.** आशशासिषे आशशासाथे आशशासिध्वे । **उ.** आशशासे आशशासिवहे आशशासिमहे । ३ **प्र.** आशसिता । **म.** आशासितासे । **उ.** आशासिताहे । ४.आशासिष्यते । ५ **प्र.** आशास्ताम् आशासाताम् आशासताम् । **म.** आशास्स्व आशासाथाम् आशाध्वम् । **उ.** आशासै आशासावहै आशासामहै । ६ **प्र.** आशास्त आशासाताम् आशासत । **म.** आशास्थाः आशासाथाम् आशाध्वम् । **उ.** आशासि आशास्वहि आशास्महि । ७ **प्र.** आसासीत् आशासीयाताम् आशासीरन् । **म.** आशासीथाः आशासीयाथाम् आशासीध्वम् । **उ.** आशासीय आशासीवहि आशासीमहि । ८ आशासिषीष्ट । ९ आशासिष्ट । १० आशासिष्यत ।

**कर्मणि**—आशास्यते । **णिचि**—आशासयति-ते । **सनि**—आशिशासिषते । **यङि**—आशाशास्यते । **यङ्लुकि**—आशाशासीति आशाशास्ति । **कृत्सु**—आशासितव्यम्, आशासनीयम्, आशास्यम्[5], आशासितः[6], आशासानः[7], आशासितुम्, आशासनम्, आशास्यः, आशीः[8], आशा, आशिषा,[9] अन्यदाशीः[10]-अन्याशीः,

१ 'ण्यासश्रन्थो युच्' (३-३-१०७) इति शुद्धादेव धातोः युच् ।

२ 'प्रायोपासनया शान्तिं मन्वानो वालिसम्भवः । युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनम् ।' (भ.का. ७-७३) ।

३ 'बाहुलकात् क्तिन्—' इति मा.धा. वृत्तिः ।

४ 'वाऽसरूप—' (३-१-९४) इति न्यायेन ण्यादपि भावे इति मा.धा. वृत्ति ।

५ 'एतिस्तुशास्वृ—' (३-१-१०९) इत्यत्र उदितो निर्देशात् न अस्मात् क्यः प्रसङ्ग इति आशास्यम् इति ण्यदेव इति माधवः ।

६ 'आङ् शास' इति दुर्गसम्मतपाठे निष्ठायामिटि एवं रूपम् । उदित्पक्षपातिनौ आत्रेयमैत्रेयौ तु आशास्तः, आशास्तवान् इति निष्ठायां रूपमाहुतिरिति माधवीये स्पष्टम् । अयं भावः— उदित् पक्षे क्त्वायामिड्विकल्पनात् निष्ठायाम् 'यस्य विभाषा' (७-२-१५) इतीण्निषेधः, इति तेषां मतम् ।

७ तच्छीलादिषु कर्तृषु 'अनुदात्तेतश्च हलादेः' (३-२-१४९) इति युच् प्रत्ययः ।

८ 'आङ शासः क्वौ' (वा. ६-४-३४) इति आङ् पूर्वकादस्मात् क्विपि, उपधाया इत्वम् । 'आशिषि लिङ् लोटौ' (३-३-१३७) शियाशीः—' (८-२-१०४) इत्यादिनिर्देशाद्वा उपधाया इकारः । धातुसकारस्य 'र्वोरुपधाया दीर्घ इकः' (८-२-७६) इति दीर्घः । मित्रशीः आर्यशीः इत्यादि तु नास्माद्धातोः किन्तु 'शासु अनुशिष्टौ' इत्यस्मादिति न्यासपदमञ्जर्यादिषु स्पष्टम् ।

९ 'आपं चैव हलन्तानाम्—' इति वचनात् क्विबन्तात् टाप् । क्विबन्तात् धातोः इत्वे, 'शासिवसि—' (८-३-६०) इत्यादिना षत्वे च एवं सम्पद्यते ।

१० अन्याः आशीः अन्यदाशीः । 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुग् आशीराशा—' (६-३-९९) इत्यादिना दुगागमः । षष्ठीतृतीयान्तत्वे तु अन्याशीः इत्येव ।

आशासा[१]-आशास्ति:, आशाशित्वा[२]-आशास्त्वा, आशासकः-सिका, आशासिता-त्री, आशासयिता-त्री।

**(१०२३) वस—आच्छादने।** (ढकना, वस्त्र पहनना, ओढ़ना, पोशाक धारण करना)। सक.। सेट्। आत्म.।

१ **प्र.** वस्ते वसाते वसते। **म.** वस्से वसाथे वध्वे[३]। **उ.** वसे वस्वहे वस्महे। २ **प्र.** ववसे ववसाते ववसिरे। **म.** ववसिषे ववसाथे ववसिध्वे। **उ.** ववसे ववसिवहे ववसिमहे। ३. वसिता। ४. वसिष्यते। ५ **प्र.** वस्ताम् वसाताम् वसताम्। **म.** वस्स्व वसाथाम् वध्वम्। **उ.** वसै वसावहै वसामहै। ६ **प्र.** अवस्त अवसाताम् अवसत। **म.** अवस्थाः अवसाथाम् अवध्वम्। **उ.** अवसि अवस्वहि अवस्महि। ७ **प्र.** वसीत वसीयाताम् वसीरन्। **म.** वसीथाः वसीयाथाम् वसीध्वम्। **उ.** वसीय वसीवहि वसीमहि। ८ **प्र.** वसिषीष्ट वसिषीयास्ताम् वसिषीरन्। **म.** वसिषीष्ठाः वसिषीयास्थाम् वसिषीध्वम्। **उ.** वसिषीय वसिषीवहि वसिषीमहि। ९ **प्र.** अवसिष्ट अवसिषाताम् अवसिषत। **म.** अवसिष्ठाः अवसिषाथाम् अवसिढ्वम्-ध्वम्। **उ.** अवसिषि अवसिस्वहि अवसिस्महि। १० अवसिष्यत।

**कर्मणि**—वस्यते। ९ अवासि। **णिचि**—वासयति-ते। **सनि**—विवसिषते। **यङि**—वावस्यते। **यङ्लुकि**—वावसीति-वावस्ति। **कृत्सु**—वासकः-सिका, **णिचि**- वासकः-सिका, विवसिषकः-षिका, वावसकः-षिका, वासिता-त्री, वासयिता-त्री, वासयन्-न्ती, वसानः,[४] वासयमानः, विवसिषमाणः, वावस्यमानः, वसिष्यमाणः, वासयिष्यमाणः, चर्मवसः[५]-चर्मवसौ-चर्मवसः, वसितम्-त्तः, वासितम्, वसः, वसा[६], सुवासी, वसन,[७] वसिता[८], वासः,विवसिषुः,वावसः,वसितव्यम्,वासयितव्यम्,वसनीयम्,वासनीयम्,वास्यम्,वस्यमानः, वास्यमानः,वासः,आवासः,कृत्तिवासाः,[९] वसितुम्,वासयितुम्,वस्तिः,वसा,[१०] वासना,वसनम्,

१ 'गुरोश्च हलः' (३-३-१०३) इति स्त्रियामकारप्रत्यये रूपमेवम्। एतच्च माधवमतेनोक्तम्। क्षीरस्वामी तु 'आशास्तिः 'गुरोश्च हलः'(३-३-१०३) इति नास्ति। निष्ठायां सेटोऽकारवचनात्। द्रष्टव्यम्(वा. ३-३-९४)' इत्याह। अत्र प्रयोगः प्रमाणम्।

२ 'क्त्वाऽपि च्छन्दसि' (७-१-३८) इति ल्यपोऽपवादे क्त्वादेशे आशास्त्वा आशासित्वा इतीड्विकल्पः' इति आत्रेयमैत्रेयावाहतुरिति माधवः। छन्दसि एवं सम्भवेऽपि लोके 'समासेऽनञ् पूर्वे' (७-१-३७) इति क्त्वाप्रत्ययस्य ल्यबादेशे आशास्य इत्येव न्याय्यमिति बोध्यम्।

३ 'धि च' (८-२-२५) धादौ प्रत्यये परे सस्य लोपः। इति सकारलोपः।

४ 'पिशाङ्गमौञ्जीयुजमर्जुनच्छवि वसानमेणाजिनमञ्जद्युतिः। (शि.व. १-६)

५ चर्म वस्ते इति चर्मवः इति क्विप् प्रत्यये रूपमेवम्। अत्वसन्तस्य चाधातोः' (६-४-१४) इत्यत्र काशिकायां प्रत्युदाहरणत्वेन प्रदर्शितम्।

६ पचाद्यजन्तात् स्त्रियां टाप्। वसा = शरीरान्तर्गतस्नेहद्रव्यम्।

७ वस्ते आच्छादयति इत्यर्थे 'अनुदात्तेतश्च–' (३-२-१४९) इति युचि रूपमेवम्।

८ 'तृन्' (३-२-१३५) इति तच्छीलादिषु कर्तृषु तृन् प्रत्यये रूपम्। 'वसिता वस्त्रमित्येवं साधुकारिणि कर्तरि' इति 'तृन्' सूत्रे प्रक्रियासर्वस्वश्लोकः।

९ औणादिकेऽसुन् प्रत्यये वासश्शब्दः। कृत्तिर्वासोऽस्येति 'अत्वसन्तस्य–' (६-४-१४) इति असम्बुद्धौ सौ परतः दीर्घो भवति। तेन रूपमेवम्।

१० भिदादिपाठात् (३-३-१०४) अङ् प्रत्ययः।

वासनम्, वासित्वा, वासयित्वा, प्रवस्य, प्रवास्य, वसु[१], वस्नम्[२], संवत्सरः[३], वस्त्रम्[४]।

(१०२४) **कसि—गतिशासनयोः**। (जाना, दण्ड देना, शासन करना)। सक.। सेट्। आत्मने.।

१ **प्र.** कंस्ते कंसाते कंसते। **म.** कंस्से कंसाथे कन्ध्वे। २ चकंसे चकंसाते चकन्सिरे। ३ कंसिता। ४ कंसिष्यते। ५ कंस्ताम् कंसाताम्। ६ अकंस्त। ७ कंसीत। ८ कंसिषीष्ट। ९ अकंसिष्ट १० अकंसिष्यत।

(१०२५) **णिसि—चुम्बने**। (चुम्बन लेना, चूमना)। सकर्म.। सेट्। आत्मने.।

१ **प्र.** निंस्ते निंसाते निंसते। **म.** निंस्से निंसाथे निन्ध्वे। २ निनिंस्से। ३. निंसिता। ५. निंस्ताम्। निंसै। ९ अनिंसिष्ट।

**कृत्सु**—निंसितः, निंसितुम्, निसित्वा, प्रनिंस्य-प्रणिस्य।

(१०२६) **णिजि—शुद्धौ**। (स्वच्छ करना, निर्मल करना)। सक.। सेट्। आत्मने.।

१ **प्र.** निङ्क्ते निञ्जाते निञ्जते। २. निनिञ्जे। **म.** निनिञ्जिषे। **उ.** निनिञ्जे। ३. निञ्जिता। ४. निञ्जिष्यते। ५. निङ्क्ताम् निञ्जाताम् निञ्जताम्। ६. अनिङ्क्त अनिञ्जाताम् अनिञ्जत। ७. निञ्जीत निञ्जीयाताम् निञ्जीरन्। ८. निञ्जिषीष्ट। ९. अनिञ्जिष्ट। १०. अनिञ्जिष्यत।

**कृत्सु**—निञ्जानः, निञ्जितम् निञ्जित्वा।

(१०२७) **शिजि—अव्यक्ते शब्दे**। (अस्पष्ट शब्द बोलना)। अक.। सेट्। आत्मने.। शिङ्क्ते। णिजि—(१०२६) वत्।

(१०२८) **णिजि—वर्णे। सम्पर्चने, अवयवे, अव्यक्ते, शब्दे च**। (रंगना, चमकीला करना, धुंधुरुओं का शब्द होना, टुकड़े-टुकड़े करना, अस्पष्ट शब्द होना)। सकर्मकोऽकर्मकश्च। सेट्। आत्म.।

पिङ्क्ते। 'णिजि' (१०२६) वत्। पिङ्गलः, पिञ्जरः, शानचि-पिञ्जानः। इत्यादि।

(१०२९) **वृजी—वर्जने**। (छोड़ना, वर्जित करना)। सकर्म.। सेट्। आत्मने.। (इदित् पक्षे)

१ वृङ्क्ते (अनिदित् पक्षे) वृक्ते वृजाते वृजते। **म.** वृक्षे वृजाथे वृग्ध्वे। **उ.** वृजे वृज्वहे वृज्महे। २ **प्र.** ववृजे ववृजाते ववृजिरे। **म.** ववृजिषे ववृजाथे ववृजिध्वे। **उ.** ववृजे ववृजिवहे ववृजिमहे। ३. वर्जिता। **म.** वर्जितासे। ४. वर्जिष्यते। ५ **प्र.** वृक्ताम् वृजाताम् वृजताम्।

१ 'शॄस्वृस्निहित्रप्यसिवसि—' (द.उ. १-९५) इति उप्रत्यये रूपम्। वस्ते भाग्यवतो जनानिति वसु = धनम्।

२ औणादिके (द.उ. ५-३९) नप्रत्यये रूपम्। वस्तेऽनेनोति वस्नम् वासः।

३ संपूर्वात् वसधातोः औणादिकः (द.उ. ८-५२) सरन् प्रत्ययः। संवत्सरः = क्षणलवमुहूर्ताहोरात्रपक्षमासायनानि च इत्यर्थः। एवं परिवत्सरः, विवत्सरः, उद्वत्सरः, इडावत्सरः, इद्वत्सरः इत्यादिषु बोध्यम्। वस्त्रेण समाच्छादयति इत्यर्थे संवस्त्रयन् इत्यत्र 'मुण्डमिश्र—'(३-१-२१) इत्यादिना णिच्। 'वस्त्रात्समाच्छादने' इति काशिकावृत्तिः।

४ औणादिके (द.उ. ८-७९) ष्ट्रन् प्रत्यये वस्त्रमिति रूपम्। वस्ते शरीरमिति वस्त्रम्। 'वैतानवेदिजनितं पवमानबन्धुं वस्त्रेण बद्धुमविनीत कथं यतेथाः।' (चम्पूरामायणे ५-४८)

**म.** वृक्ष्व वृजाथाम् वृग्ध्वम् । **उ.** वर्जै वर्जावहै वर्जामहै । ६ **प्र.** अवृक्त अवृजाताम् अवृजत । **म.** अवृक्थाः अवृजाथाम् अवृग्ध्वम् । **उ.** अवृजि अवृज्वहि अवृज्महि । ७ **प्र.** वृजीत वृजीयाताम् वृजीरन् । **म.** वृजीथाः वृजीयाथाम् वृजीध्वम् । **उ.** वृजीय वृजीवहि वृजीमहि । ८ **प्र.** वर्जिषीष्ट वर्जिषीयास्ताम् वर्जिषीरन् । **म.** वर्जिषीष्ठाः वर्जिषीयास्थाम् वर्जिषीध्वम् । **उ.** वर्जिषीय वर्जिषीवहि वर्जिषीमहि । ९ **प्र.** अवर्जिष्ट अवर्जिषाताम् अवर्जिषत । **म.** अवर्जिष्ठाः अवर्जिषाथाम् अवर्जिड्ढ्वम्-ढ्वम्-ध्वम् । **उ.** अवर्जिषि अवर्जिष्वहि अवर्जिष्महि । १० अवर्जिष्यत ।

**कर्मणि**—वृज्यते । **णिचि**—वर्जयति-ते । **सनि**—विवर्जिषति । **यङि**—वरीवृज्यते । **कृत्सु**—वर्जकः-र्जिका, **णिचि**—वर्चकः-र्जिका, विवर्जिषकः-षिका, वरीवृजकः[1]-जिका, वर्जिता-त्री, वर्जयिता-त्री, वर्जयन्-न्ती, वर्जयिष्यन्-न्ती-ती, वर्जमानः, वर्जयमानः, वर्जिष्यमाणः, वर्जयिष्यमाणः, वृक्-ग्-वृजौ वृजः, वृक्तम्[2]-क्तः-तवान्, वर्जितम्-तः, वर्जः, प्रवर्जी, विवर्जिषुः, वरीवृजः, वर्जितव्यम्, वर्जनीयम्, वर्जित्वा, परिवर्ज्य, वर्जितुम्, वृज्यः,[3] वृजयः,[4] वृजिकः, वर्गः[5], वर्ग्यः, कवर्गीयः, वासुदेववर्ग्यः-वासुदेववर्गीणः, वासुदेववर्गीयः, एकवर्जम्[6], वृजिनम्[7], वृजनम्[8] ।

**(१०३०) पृजी—सम्पर्चने** । (कुलतता करना) । सक. । सेट् । आत्म. । पृङ्क्ते पृञ्जाते पृञ्जते । 'णिजि (१०२६) वत् ।

**(१०३१) षूञ्—प्राणिगर्भविमोचने** । (उत्पन्न करना, प्रसव करना, जनना) । सक. । वेट् । आत्मने. ।

| | | | | |
|---|---|---|---|---|
| लट् | सूते | सूवाते | सुवते | प्र. |
| | सूषे | सुवाथे | सूध्वे | म. |
| | सुवे | सूवहे | सूमहे | उ. |
| लिट् | सुषुवे | सुषुवाते | सुषुविरे | प्र. |
| | सुषुविषे | सुषुवाथे | सुषुविध्वे-ढ्वे | म. |
| | सुषुवे | सुषुविवहे | सुषुविवहे | उ. |

१ ऋदुपधस्याङ्गस्य 'रीगृदुपधस्य च' (७-४-९०) इति अभ्यासे रीगागमः । एवं यङन्ते सर्वत्र बोध्यम् ।

२ निष्ठायाम् 'श्वीदितो निष्ठायाम्' (७-२-१४) इति अनिट्त्वम्, ततश्च 'चोः कुः' (८-२-३०) इति कुत्वे रूपमेवम् ।

३ 'ऋदुपधाच्च—' (३-१-११०) इति क्यप् प्रत्यये रूपमेवम् ।

४ 'इक् कृष्यादिभ्यः' (वा. ३-३-१०८) इति इक् । वृजयो जनपदाः ।

५ घञि 'चजोः कु—' (७-३-५२) इति कुत्वम् ।

६ 'द्वितीयाश्च' (३-४-५३) इति द्वितीयान्त उपपदे परीप्सायां गम्यमानायां ण्मुल्प्रत्यये रूपमेवम् । परीप्सा = त्वरा । अत्र निदानं तु 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इति निर्देश एव परीप्सायामिति नानुवर्ततेऽत्र इति हरदत्तः ।

७ 'वृजेः किच्च' (द.उ. ५-५३) इति इनच् प्रत्ययः किच्च भवति । वृजिनम् = पापम् । कित्वान्न गुणः ।

८ 'कृपॄवृजि—' (द.उ. ५-२६) इति छन्दसि विषये क्यु प्रत्यय अनादेशे च रूपमेवम् । वृजनम् = निवारणम् ...नियं च ।

| | | | | |
|---|---|---|---|---|
| लुट् | सविता | सवितारौ | सवितारः | प्र. |
| | सवितासे | सवितासाथे | सविताध्वे | म. |
| | सविताहे | सवितास्वहे | सवितास्महे | उ. |

पक्षे—सोता सोतारौ सोतारः इत्यादि।

लृट् सविष्यते सविष्येते सविष्यन्ते इत्यादि।

पक्षे—सोष्यते सोष्येते सोष्यन्ते इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | सूताम् | सुवाताम् | सुवताम् | प्र. |
| | सूष्व | सुवाथाम् | सूध्वम् | म. |
| | सुवै | सुवावहै | सुवामहै | उ. |
| लङ् | असूत | असुवाताम् | असुवत | प्र. |
| | असूथाः | असुवाथाम् | असूध्वम् | म. |
| | असुवि | असूवहि | असूमहि | उ. |
| वि. लि. | सुवीत | सुवीयाताम् | सुवीरन् | प्र. |
| | सुवीथाः | सुवीयाथाम् | सुवीध्वम् | म. |
| | सुवीय | सुवीवहि | सुवीमहि | उ. |
| आ. लि. | सविषीष्ट | सविषीयास्ताम् | सविषीरन् | प्र. |
| | सविषीष्ठाः | सविषीयास्थाम् | सविषीध्वम् | म. |
| | सविषीय | सविषीवहि | सविषीमहि | उ. |

पक्षे—सोषीष्ट सोषीयास्ताम् सोषीरन् इत्यादि।

| | | | | |
|---|---|---|---|---|
| लुङ् | असविष्ट | असविषाताम् | असविषत | प्र. |
| | असविष्ठाः | असविषाथाम् | असविड्ढ्वम्-ध्वम् | म. |
| | असविषि | असविष्वहि | असविष्महि | उ. |

पक्षे—असोष्ट असोषाताम् असोषत इत्यादि।

लृङ् असविष्यत असविष्येताम् असविष्यन्त इत्यादि।

पक्षे—असोष्यत असोष्यताम् असोष्यन्त इत्यादि।

**कर्मणि**—सूयते। **णिचि**—सावयति। **सनि**—सुसूषते। **यङि**—सोषूयते। **यङ्लुकि**—सोषूति-सोसवीति। **कृत्सु**—सोतव्यम्-सवितव्यम्, सवनीयम्, सव्यम्- अवश्यसाव्यम्, सूतः, सुवानः, सविष्यमाणः, सोतुम्-सवितुम्, सवित्वा-सूत्वा, प्रसूय, पुत्रसूः, सुषूतिः[1]-विषूतिः-निःषूतिः-दुःषूतिः, प्रसूनम्[2], प्रसूतम्, सुषवी, प्रसवी[3], प्रसवः,[4] सन्तानसूः[5],

१ पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्रयुकः क्किति' (७-२-११) इतीण्निषेधः। 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८-३-८८) इति षत्वम्।

२ 'स्वादय ओदितः' (ग.सू. ८-२-४५) इत्यातिदेशिकमोदित्वम्। तेन 'ओदितश्च' (८-२-४५) इति निष्ठानत्वम्। एतच्च पाक्षिकमिति केचित्। तेषां मते प्रसूत इत्यपि।

३ 'जिदृक्षि— प्रसूभ्यश्च' (३-२-१५७) इति इनिप्रत्ययः। प्रसवी = प्रसवशीलः।

४ 'ऋदोरप्' (३-३-५७) इत्यप् प्रत्ययः। प्रसवः = सन्तानः, पुष्पं च।

५ सन्तानं सूते इति सन्तानसूः। 'सत्सू—' -२-६१) इत्यादिना क्विप्।

सुनुः[1], सूतकम्, सूतका-सूतिका।

(१०३२) **शीङ्—स्वप्ने**। (सोना, शयन कनरा)। **अति**—अतिशय होना, अधिक होना, **अधि**—निवास करना, **सम्-वि**—शंका करना, सन्देह करना। अक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | शेते | शयाते | शेरते | प्र. |
| | शेषे | शयाथे | शेध्वे | म. |
| | शये | शेवहे | शेमहे | उ. |
| लिट् | शिश्ये | शिश्याते | शिश्यिरे | प्र. |
| | शिश्यिषे | शिश्याथे | शिश्यिध्वे-ढ्वे | म. |
| | शिश्ये | शिश्यिवहे | शिश्यिमहे | उ. |
| लुट् | शयिता | शयितारौ | शयितारः | प्र. |
| | शयितासे | शयितासाथे | शयिताध्वे | म. |
| | शयिताहे | शयितास्वहे | शयितास्महे | उ. |
| लृट् | शयिष्यते | शयिष्येते | शयिष्यन्ते | प्र. |
| | शयिष्यसे | शयिष्येथे | शयिष्यध्वे | म. |
| | शयिष्ये | शयिष्यावहे | शयिष्यामहे | उ. |
| लोट् | शेताम् | शयाताम् | शेरताम् | प्र. |
| | शेष्व | शयाथाम् | शेध्वम् | म. |
| | शयै | शयावहै | शयामहै | उ. |
| लङ् | अशेत | अशेयाताम् | अशेरत | प्र. |
| | अशेथाः | अशेयाथाम् | अशेध्वम् | म. |
| | अशेयि | अशेवहि | अशेमहि | उ. |
| वि. लि. | शयीत | शयीयाताम् | शयीरन् | प्र. |
| | शयीथाः | शयीयाथाम् | शयीध्वम् | म. |
| | शयीय | शयीवहि | शयीमहि | उ. |
| आ. लि. | शयिषीष्ट | शयिषीयास्ताम् | शयिषीरन् | प्र. |
| | शयिषीष्ठाः | शयिषीयास्थाम् | शयिषीढ्वम्-ध्वम् | म. |
| | शयिषीय | शयिषीवहि | शयिषीमहि | उ. |
| लुङ् | असयिष्ट | असयिषाताम् | असयिषत | प्र. |
| | अशयिष्ठाः | अशयिषाथाम् | अशयिध्वम्-ढ्वम् | म. |
| | अशयिषि | अशयिष्वहि | अशयिष्महि | उ. |
| लृङ् | अशयिष्यत | अशयिष्येताम् | अशयिष्यन्त | प्र. |
| | अशयिष्यथाः | अशयिष्येथाम् | अशयिष्यध्वम् | म. |
| | अशयिष्ये | अशयिष्यावहि | अशयिष्यामहि | उ. |

१ औणादिके (द.उ. १-१४६) नुप्रत्यये रूपम्। प्रत्ययस्य कित्वान्न गुणः।

**भावे**– शय्यते । **णिचि**– शाययति । **सनि**– शिशयिषते । **यङि**– शाशय्यते । **यङ्लुकि**– शेशयीति-शेशीति । **कृत्सु**– शायकः-यिका, **णिचि**– शायकः-यिका, शिशयिषकः[१]-षिका, शाशय्यकः[२]-य्यिका, शयिता[३]-त्री, शाययिता-त्री, शिशयिषिता-त्री, शाशय्यिता-त्री, शाययन्-न्ती, शाययिष्यन्-न्ती-ती, शयानः[४], शाययमानः[५], शिशयिषमाणः, शाशय्यमानः, शयिष्यमाणः, शाययिष्यमाणः, सुखशीः[६]-सुखश्यौ-सुखश्यः, शयितम्[७]-तः- तवान्, शायितः, शयः[८], विशयी,[९] खेशयः[१०]-खशयः, विलेशयः, उत्तानशयः,[११] गिरिशः[१२], शयालुः,[१३] शयितः[१४], ग्रामन् अधिशयानः,[१५] शेषशायी[१६]-अब्दिशायी, रङ्गशायी, शयानो[१७] भुङ्क्ते यवनः, शायः, शिशयिषुः-शिशाशयिषुः । शाशयः, शयितव्यम्, शायितव्यम्, शयनीयम्[१८]

---

१ सन्नन्तात् द्विर्वचनादिकेषु सर्वत्र रूपमेवं ज्ञेयम् ।

२ यङन्ते प्रत्ययस्य ङित्वात् 'अयङ् यि क्ङिति' (७-४-२२) इत्ययङ् सर्वत्र बोध्यम् ।

३ 'इवर्णेष्वथ शीङ्श्रिआवपि' (व्याघ्रभूतिकारिका, काशिका ७-२-१०) इति वचनाद धातोः इड् भवतीति बोध्यम् ।

४ शानच् प्रत्ययस्य 'सार्वधातुकमपित्' (१-२-४) इति ङिद्वद् भावेन यद्यपि 'क्ङिति च' (१-१-५) इति गुणनिषेधोऽत्र प्राप्तः तथापि 'शीङः सार्वधातुके गुणः' (७-४-२१) इति विशेषविधानाद् गुणो भवतीति बोध्यम् । 'शयाना भुञ्जते यवनाः' इत्यत्र 'लक्षणहेत्वोः क्रियायाः' (३-२-१२६) इति शानच् इति बोध्यम् ।

५ अचित्तवत् कर्तृकत्वे एवं शानजपि ण्यन्तात् भवतीति माधवः । चित्तवत्कर्तृकत्वे तु 'अणावकर्मकात् चित्तवत् कर्तृकात्' (१-३-८८) इति नित्यं परस्मैपदमेव ।

६ सुखं शेते इति सुखशीः । द्विवचनादौ 'एरनेकाचोऽसंयोगपूर्वस्य' (६-४-८२) इति यणि सुखश्यौ सुखश्यः इत्यादीनि बोध्यानि ।

७ 'निष्ठा शीङ्–' (१-२-१९) इति वचनात् धातोरत्र निष्ठया अकित्वम् । तेन गुणः ।

८ पचादिपाठादच् प्रत्ययः । गुणायादेशौ ।

९ 'विशयी देशे' (ग.सू. ३-१-१३४) इति ग्रह्यादिपाठात् विपूर्वकात् णिनिप्रत्ययः । निपातनात् देशविशेष-वाचकत्वे वृद्ध्यभावः । अन्यत्र विशायी इत्येव ।

१० खे शेते इति खेशयः-खशयः । 'अधिकरणे शेतेः' (३-२-१५) इति अच् प्रत्ययः । 'शयवासवासिष्व-कालात्' (६-३-१८) इति पाक्षिकः सप्तम्या अलुक् । एवं रङ्गेशयः अद्रिशयः विलेशयः कुशेशयम् इत्यादयो बोध्याः ।

११ उत्तानः शेते उत्तानशयः । अवमूर्धा शेते अवमूर्धशयः । अत्र 'उत्तानादिषु कर्तृषु' (वा. ३-२-१५) इति अच् प्रत्ययः ।

१२ 'गिरौ डश्छन्दसि' (वा. ३-२-१५) इति गिरावुपपदे शेतेर्डप्रत्ययः । प्रत्ययस्य डित्वेन टेर्लोपः । गिरिरस्यास्तीत्यर्थे लोमादित्वात् (५-२-१००) शप्रत्ययेन प्रसाध्य भाष्ये वार्तिकमिदं प्रत्याख्यातम् । निमित्तावधिसंकरत उभयमपि प्रमाणमद्यत्वे इति सिद्धान्तः ।

१३ 'आलुचिशीङो ग्रहणम्' (वा. ३-२-१५८) इत्यालुच् ताच्छीलिकः । शयनशीलः शयालुः ।

१४ 'मतिबुद्धि–' (३-२-१८८) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् अस्मादपि धातोः वर्तमाने क्तप्रत्ययः ।

१५ अत्र 'अधिशीङ्स्थाऽऽसां कर्म' (१-४-४६) इत्याधारस्य कर्मत्वम् ।

१६ 'सुप्यजातौ–' (३-२-७८) इति णिनिः ।

१७ 'लक्षणहेत्वोः क्रियायाः' (३-२-१२६) इति लक्षणार्थे शानच् । शयानानामेव सतां भोजनकरणं यवनलक्षणमिति समुदितार्थः ।

१८ अधिकारणेऽप्यनीयर् प्रत्ययो भवति, बाहुलकात् । शेरतेऽस्मिन् इति शयनीयम् ।

शायनीयम्, शेयम्, शाय्यम्, शय्यमानः[१], शाय्यमानः, शयः[२], तव उपशायः[३]-विशायः, संशयः[४]-सांशयिकः, अतिशयः[५]-अतिशायिकः-आतिशयिकः, शयितुम्, शाययितुम्, संशीतिः[६], शय्या[७], सुखशायिका[८], सुखशयिका[९], शायना, शयनम्, सुख- शयनम्[१०]-सौखशायिकः, श्मशानम्[११], अतिशायनम्[१२]-अतिशयनम्- आतिशायनिकम्, शायनम्, शयित्वा[१३], शाययित्वा, शिशयिषित्वा, शाशय्यित्वा। उपशय्य, विशाय्य, शयुः[१४], शयानकः[१५], शीधुः[१६]-शीलम्-शैवालम्-शेवलः, शेवः[१७], शेपः, शिखा[१८], शिनि[१९], निशीथः[२०]। अधिशेते, संशेते।

(१०३३) **यु—मिश्रणे**। अमिश्रणे चेति केचित्। (मिश्रित करना, मिलाना, मिलाप करना, पृथक्-पृथक् करना)। सकर्म.। सेट्। परस्मै.।

---

१ यकि, 'अयङ् यि क्ङिति' (७-४-२२) इति अयङ् आदेशः। आदेशस्य अनेकालत्वेऽपि 'ङिच्च' (१-१-५३) इत्यन्त्यस्येकारस्यादेशः।
२ 'एरच्' (३-३-५६) इति भावेऽच् प्रत्ययः।
३ पर्यायार्थे गम्यमाने, वि, उप इत्युपसर्गाभ्यां परस्यास्य 'व्युपयोः शेतेः पर्याये' (३-३-३९) इति घञ् प्रत्ययः इवर्णान्तत्वलक्षणाच् प्रत्ययस्यापवादः। तव विशायः। मम राजोपशायः, राजानमुपशयितुं पर्याय इत्यर्थः। पर्यायभिन्नार्थे तु उपशयः, विशयः इत्यजेव।
४ संशय्यते इति संशयः = सन्देहः। संशयम् आपन्नोऽर्थः सांशयिकः। 'संशयमापन्नः' (५-१-७३) इति ठञ्। सांशयिकः स्थाणुः। स्थाणुः संशयं = पुरुष इति सन्देहमापन्न इत्यर्थः।
५ अतिशेते इत्यतिशयः। उपसर्गवशाद्धातोरर्थान्तरे वृत्तिः। अतिशये भवः आतिशायिकः, अध्यात्मादित्वात् (५-४-४४) ठञ्। अनुशतिकादित्वात् (७-३-२०) उभयपदवृद्धिः। 'व्याप्तमातिशयिकेन रसेन' (माघः १०-२३) इत्यत्र तु विनयादित्वात् (५-४-३४) ठक्।
६ भावे क्तिन्। संशीतिः = संशयः। 'तितुत्र–' (७-२-९) इतीण्निषेधः।
७ संज्ञायां समजनिषदनिपतमनविदषुञ् शीङ्भृञिणः' (३-३-९९) इति संज्ञायां गम्यमानायां स्त्रियां भावादौ क्यप् प्रत्ययः। शेरतेऽस्यामिति शय्या। कित्वादयङ्।
८ सुखशयनं सुखसायिका। धात्वर्थनिर्देशे स्त्रियां ण्वुल्।
९ शोभनः शयोऽस्याः सुशयिका। 'प्रत्ययस्थात् कात्–' (७-३-४४) इतीकारः।
१० सुखेन शयनम् – सुखशयनम्। सुखशयनं पृच्छतीति सौखशायनिकः। पृच्छतौ सुस्नातादिभ्यः–' (वा. ४-४-१) इति ठक्। 'भृग्वादीन् अनुगृह्णन्तं सौखशायनिकान् ऋषीन्।' (रघुवंशः १०/१४)
११ शवानां शयनम् = श्मशानम्। पृषोदरादित्वात् (६-३-१०९) शवशब्दस्य श्मादेशः, शयनशब्दस्य 'शान' इत्यादेशः। काशिका (६-३-९) द्रष्टव्या।
१२ अतिशयनम् एव अतिशायनम्। 'अतिशायने तमबिष्ठनौ' (५-३-५५) 'नित्ययोगेऽतिशायने' (वा. ५-२-९४) इति सूत्रवर्तिकनिर्देशात् ल्युडन्ते दीर्घः पाक्षिकः, तेन अतिशयनम् अतिशायनम् इत्युभयमपि साधु।
१३ 'न क्त्वा सेट्' (१-२-१८) इति सेटः क्त्वायाः कित्वनिषेधात् गुणोऽत्र।
१४ अत्यर्थं शेरते इति शयुः = अजगरः। औणादिकः (द.उ. १-९२) उ प्रत्ययः।
१५ औणादिके (द.उ. २६) आकप्रत्यये शयानकः इति भवति।
१६ 'शीङो धुक्लग्वलन् वालनः' (द.उ. १०-९) इति क्रमेण धुगादिप्रत्ययेषु रूपाणीमानि सिद्धानि। शीधुः = मदिरा। केचित् शीयुः इति पठन्ति। शीलम् = स्वभावः। शेवल-शैवालो जललता विशेषवाचकौ।
१७ औणादिके (द.उ. ८-१२६) वन् प्रत्यये रूपम्। शेवः = सर्पः। शेवा इति केचित्। औणादिके (द.उ. ६-६९) इति क्वनिप् प्रत्यये तु शीवा इति भवति।
१८ औणादिके (द.उ. ३-५५) ख प्रत्यये शिखा = केशबन्धः।
१९ औणादिके निप्रत्यये धातो र्ह्रस्वे च रूपम्। शिनिः क्षणियविशेष इति माधवः।
२० नितरां शेरतेऽस्मिन् प्राणिन इति निशीथः = अर्धरात्रम्। औणादिकस्थक् प्रत्ययोऽत्र।

१ प्र. यौति[1] युतः युवन्ति[2]। म. यौषि युथः युथ। उ. यौमि युवः युमः। २ प्र. युयाव युयुवतुः युयुवुः। म. युयुविथ युयुवथु युयुव। उ. युयाव-युयव युयुविव युयुविम। ३ यविता। ४ यविष्यति। ५ प्र. यौतु-तात् युताम् युवन्तु। म. युहि-तात् युतम् युत। उ. यवनि यवाव यवाम। ६ प्र. अयौत् अयुताम् अयुवन्। म. अयौः अयुतम् अयुत। उ. अयवम् अयुव अयुम। ७ प्र. युयात्[3] युयाताम् युयुः। म. यूयाः यूयातम् युयात। उ. युयाम् युयाव युयाम। ८ प्र. यूयात् यूयाताम् यूयासुः। म. यूयाः यूयास्तम् यूयास्त। उ. यूयासम् यूयास्व यूयास्म। ९ प्र. अयावीत् अयाविष्टाम् अयाविषुः। म. अयावीः अयाविष्टम् अयाविष्ट। उ. अयाविषम् अयाविष्व अयाविष्म। १० प्र. अयविष्यत् अयविष्यताम् अयविष्यन्। म. अयविष्यः अयविष्यतम् अयविष्यत। उ. अयविष्यम् अयविष्याव अयविष्याम।

**कर्मणि**—यूयते। **णिचि**—यावयति। **सनि**—यियविषति-युयूषति। **यङि**—योयूयते। **यङ्लुकि**—योयवीति योयोति। **कृत्सु**—यावकः-विका। **णिचि**—यावकः-विका, यियविषकः[4]-युयूषकः-षिका, योयूयकः[5]-यिका, यविता-त्री, यावयिता-त्री, यियविषिता-युयूषिता-त्री, योयूयिता-त्री, युवन्-न्ती, यावयन्-न्ती, यविष्यन्-न्ती-ती, यावयिष्यन्-न्ती-ती, यावयमानः, यावयिष्यमाणः, नियुत्-नियुतौ-नियुतः, युतम्[6]-युतः-युतवान्, यावितः, यवः[7]-यवानी, यवनः[8]-यवनानी, यवनी, यवकः[9], यावः, यावकः, यावकम्[10], यियविषुः-युयूषुः

१ 'उतो वृद्धिर्लुकि हलि' (७-३-८९) इति उकारस्य वृद्धिः।

२ 'अचि श्नुधातुभ्रुवाम्' (६-४-७७) इति उवङ्।

३ 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३-४-१०३) इति ङित्वस्य विशेषविहितत्वात् भाष्ये 'ङिच्च पिन्न' पिच्च ङिन्न' इति पित्वस्य निषिद्धत्वात् उतो वृद्धिर्न।

४ इमांस्तु सेटः प्रवदन्ति तद् विदः —तथोर्णोतिमथो युणुक्ष्णवः।' (भाष्ये ७-२-१०) इति व्याघ्रभूतिकारिकायामुपात्तत्वादस्य सेट्त्वम्। सन्नन्ते तु 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभर—' (७-२-४९) इति इड्विकल्पः। इट् पक्षे, 'ओः पुयण्ज्यपरे' (७-४-८०) इत्यभ्यासस्येकारः। इडभावपक्षे झलादित्वात् सनः कित्वे, 'अजझनगमां सनि' (६-४-१६) इति दीर्घः। एवं सन्नन्ते सर्वत्र रूपद्वयम्।

५ यङन्ते सर्वत्रोत्तरखण्डे, 'अकृत्सार्वधातुकयोः—' (७-४-२५) इति दीर्घः। पूर्वखण्डे गुणः।

६ 'यस्य विभाषा' (७-२-१५) इति निष्ठायामिण्निषेधः। क्त्वा-क्तिन्-प्रभृतिषु तु 'श्र्युकः क्किति' (७-२-११) इतीण्निषेध इति विशेषः।

७ पचादित्वात् (३-१-१३४) अच् प्रत्ययः स्त्रियाम् 'इन्द्रवरुणभवशर्व-' (४-१-४९) इत्यादिना आनुगागमे ङीषि च यवानी इतिं सम्पद्यते। एतच्च 'यवाद् दोषे' (वा. ४-१-४९) इति वचनाद् दुष्टे यवे स्त्रीत्वेन विवक्षित एवेति ज्ञेयम्। अन्यत्र तु टापि यवा इति।

८ नन्द्यादित्वात् (३-१-१३४) कर्तरि ल्युः। स्त्रियाम् 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवन—' (४-१-४९) इत्यादिना। 'यवनाल्लिप्याम्' (वा. ४-१-४९) इति वचनेन वचनलिप्यां विवक्षितायामानुगागमो ङीष् च भवतः। पुंयोगलक्षणे ङीषि तु यवनी इति सम्पद्यते।

९ यव एव यवकः, स्वार्थे कन्। प्रज्ञादित्वात् स्वार्थे ण् प्रत्यये यावः।

१० 'संज्ञायाम्' (३-३-१०९) इति ण्वुलि रूपमेव। यावकम् = रञ्जनसाधनीभूतो रसविशेषः। अत्र ण्वुलः स्त्र्यधिकारविहितत्वेऽपि लिङ्गविवक्षितं लोकाश्रितत्वाल्लिङ्गस्य इति न्यायेन नपुंसकलिङ्गमिति ज्ञेयम्।

यियावयिषुः[१], यवितव्यम्, यावयितव्यम्, प्रयवणीयम्, प्रणियवनीयम्,[२] प्रणियवनीयम्, प्रनियवनीयम्, प्रयावनीयम्[३]-प्रयावणीयम्, याव्यम्,[४] यूयमानः,[५] याव्यमानः, प्रयवः[६], संयावः[७], उद्यावः[८], उद्यावः,[९] यवः,[१०] योत्रम्[११], यौत्रम्[१२], यवितुम्, यावयितुम्, यूतिः[१३], यावना, यवनम्, यावनम्, युत्वा, यावयित्वा, प्रयुत्य, प्रयूय[१४], प्रयाव्य, योनिः[१५], यूकः[१६]-यूका, यूथः[१७], युवा-युवतिः,[१८] यूपः,[१९] यूषः[२०], योषा[२१], यवागूः[२२]।

**(१०३४) रु—शब्दे।** (शब्द करना, आवाज कना)। अक.। सेट्। परस्मै.।

**तुरुस्तुशम्यमः सार्वधद्यातुके।** एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात्। ईडभावपक्षे वृद्धि। १ प्र. रौति-रवीति रुतः-रुवीतः रुवन्ति। म. रौषि-रवीषि रुथः-रुवीथः

१ ण्यन्तात् सनि, 'ओः पुयण्ज्यपरे' (७-४-८०) इति अभ्यासेकारः।

२ 'कृत्यचः' (८-४-२९) इति णत्वम्। प्रणियवनीयम् प्रनियवनीयम् इत्यत्र तु 'शेषे विभाषा' (८-४-३०) इति णत्वविकल्पः।

३ 'णेर्विभाषा' (८-४-३०) इति णत्वविकल्पः।

४ 'आसुयुवपि-' (३-१-१२६) इति ण्यत्। अजन्तलक्षणयतोऽपवादः। धातोस्तन्निमित्तस्यैव (६-१-८०) इत्यावादेशः। आवश्यकार्थेऽपि, 'ओरावश्यके' (३-१-१२५) इति ण्यति एवमेव रूपम्।

५ यकि, अकृत्सार्वधातुकयोः—' (७-४-२५) इति दीर्घः।

६ 'ऋदोरप्' (३-३-५७) इत्यप् प्रत्ययः भावे।

७ समि युद्रुदुवः (३-३-२३) इति सम्युपपदे करणे घञ्। संयावः = पिष्टविकारो पूपविशेषः।

८ 'उदि श्रयतियौतिपूद्रुवः' (३-३-४९) इति घञ्।

९ 'अध्यायन्यायोद्यावसंहाराश्च' (३-३-१२२) इत संज्ञायां करणाधिकरणयोर्धत्रि निपात्यते। उद्यावः = भक्ष्यविशेषः।

१० यौति अत्र रसादिकमिति यवः = धान्यविशेषः। 'पुंसि संज्ञायां घः—' (३-३-११८) इति संज्ञायां घप्रत्ययः।

११ 'दाम्नीशसयुयुज-' (३-३-१८२) इति करणे ष्ट्रन् प्रत्ययः। यूयतेऽनेनेति योत्रम् = गोपालकानां करे स्थितो दण्डविशेषः।

१२ 'उणादयो बहुलम्' (३-३-१) इति ष्ट्रन् प्रत्यये, 'अचो ञ्णिति' (७-२-११५) इति वृद्धिरिति काशिका (७-२-११५)

१३ स्त्रियां क्तिनि, 'श्र्युकः क्किति' (७-२-११) इति इण्निषेधे, 'ऊतियूतिजूतिसातिहेति कीर्तयश्च' (३-३-९७) इति निपातनात् दीर्घः, अन्तोदात्तत्वं च। युतिः = संघः, एकत्र समेषां समागमः। गव्यूतिः = कोशयुगम्।

१४ छन्दसि विषये ल्यपि, 'युप्लुवोर्धीर्घः—' (६-४-५८) इति दीर्घ इति ज्ञेयम्। लोके तु तुकि प्रयुत्य इति भवति।

१५ 'वहिश्रियु—' (द.उ. १-१२१) इति निप्रत्ययः। युवन्त्यस्यामिति योनिः।

१६ 'अजियुसु—' (द.उ. ३-२४) इति कन् प्रत्ययः, धातोः दीर्घश्च भवति। यूकः = क्षुद्र जन्तुः।

१७ 'तिथपृष्ठगूथयूथप्रोथाः' (द.उ. ६-३४) इति यक् प्रत्यये निपात्यते। निपातनादेव धातो दीर्घश्च। यूथः = गजादिसंघातः।

१८ 'कनिन् युवृषि—' (द.उ. ६-५१) इति कनिन् प्रत्ययः। यौति, यूयते वा इति युवा। स्त्रियाम्, 'यूनस्तिः' (४-१-७७) इति ति प्रत्यये युवतिः।

१९ 'कुसुयुभ्यश्च' (द.उ. ७-५) इति पप्रत्ययः दीर्घश्च। यूपः = यज्ञपशुबन्धनकाष्टः।

२० 'मूङ्य्व्योर्लोपश्च' (द.उ. ९-१७) इति ऊषन् प्रत्यये, धातूकारस्य लोपे च रूपम्। यूषः = व्यञ्जनम्। मण्डम् चेति केचित्।

२१ औणादिके (द.उ. ९-२१) सप्रत्यये रूपम्। योषा = योषित्।

२२ 'सृयु—' (द.उ. १०-४) इत्यागूच् प्रत्यये रूपम्। यवागूः = पेया।

रुथ-रुवीथ। उ. रौमि-रवीमि रुवः-रुवीवः रुमः-रुवीमः। **आर्धधातुके तु** 'यौति' (१०३३) वत्। २ रुराव। ३ रविता। ४ रविष्यति। ५ **प्र.** रौतु-रवीतु:-रुतात्-रुवीतात् रुताम्-रवीताम् रुवन्तु। **म.** रुहि-रुवीहि-रुतात्-रुवीतात् रुतम्-रुवीतम् रुत-रुवीत। **उ.** रवाणि रवाव रवाम। ६ **प्र.** अरौत्-अरवीत् अरुताम् अरुवीताम् अरुवन्। **म.** अरौः-अरवीः। अरुतम् अरुवीतम् अरुत-अरुवीत। **उ.** अरवम् अरुव-अरुवीव अरुम-अरुवीम। ७. रुयात्-रुवीयात्। ८. रूयात्। ९. अरावीत्। १०. अरविष्यत्।

**कृत्सु**—रावकः-यिका, **णिचि**—रावकः-विका, रुरूषकः-रिरावयिषकः-षिका, रोरूयकः-यिका, रविता-त्री, रावयिता-त्री, रुरूषिता-रिरावयिषिता-त्री, रवणः[1], संरावः[2], रव[3], रावः[4], अल्परावः, मञ्जुरावः, आरावः[5]-आरवः, मयूरः[6], रुरूषुः[7], ध्वाङ्क्षरावी,[8] मण्डुक-रावी[9], सांराविणम्[10], रोरूयः,[11] लोकरावणः[12], रविः,[13] रुरुः,[14] पुरुरवाः[15]।

**(१०३५) णु—स्तुतौ।** (स्तुति करना। प्रार्थना करना)। सक.। सेट्। पर.।

१. नौति। २. नुनाव। ३. नविता। ४. नविष्यति। ५. नौतु। ६. अनौत्। ७ नुयात्। ८ नूयात्। ९ अनावीत्। १० अनाविष्यत्। इत्यादि 'यौति' (१०३३) वत्। **आत्मनेपदे**—'**आङि नुप्रच्छयोपसंख्यानम्**' इति तङ्। १ आनुते। २ आनुनुवे। ३ आनविता। ४ आनविष्यते। ५ आनुताम्। ६ आनुत। ७. आनुवीत। ८. आनविषीष्ट। ९. आनविष्ट। १०. आनविष्यत। **सनि**—आनुनूषते। **यङि**—आनोनूयते इत्यादि। प्रणौति। प्रणवः।

१ तच्छीलादिषु कर्तृषु 'चलनशब्दार्थादकर्मकात्—' (३-२-१४८) इति युच् णत्वम्। क्षीरस्वामी तु औणादिके 'सुयुरुवृञो युच्' (द.उ. ५-२०) इती युच् प्रत्यये निष्पादितवान्।

२ 'उपसर्गे रुवः' (३-३-२२) इति घञ्। उवर्णान्तत्वप्रयुक्तापोऽपवादः।

३ अनुपसृष्टात् (शुद्धात्) 'ऋदोरप्' (३-३-५७) इति अप्प्रत्ययः।

४ बाहुलकाद् घञपि, इत्यात्रेयः। रावः। इति माधवधातुवृत्तिः।

५ 'विभाषाऽऽङि रुप्लुवोः' (३-३-५०) इति घञ्विकल्पः। तेन पक्षेऽप् प्रत्ययः।

६ मह्यां रौतीति मयूरः। 'अन्येष्वपि दृश्यते' (३-२-१०१) इति डप्रत्यये वृषोदरादिषु (६-३-१०९) पाठात् महीशब्दस्य 'मयू' इत्यादेशे च रूपमेवम्।

७ 'संजुधुक्षव आयुंषि ततः प्रतिरुरूषवः।' (भ.का. ९-१४)।

८ ध्वाङ्क्ष इव रौतीति ध्वाङ्क्षरावी। 'कर्तर्युपमाने' (३-२-७९) इति णिनिः।

९ 'मण्डुकराविणं सर्पं गोमुखं च मृगादिनम्।' (सुभाषितनीवी)।

१० संपूर्वकादस्मात् 'अभिविधौ भाव इनुण्' (३-३-४४) इति इनुण् प्रत्यये, अण् इनुणः' (५-४-१५) इति स्वार्थेऽण् प्रत्यये, 'इन् अण्यनपत्ये' (६-४-१६४) इति प्रकृतिभावे च सांराविणम् इति भवति।

११ 'उदन्तात् यङो लुङ् नेति केचित्' इति प्रक्रियाकौमुदी। तेनात्र यङन्तात् पचाद्यचि रूपमेवं तेषां मते। वस्तुतस्तु एवमङ्गीकरणे नियामकाभावात् यङोऽनैमित्तिकलुक एवं भाष्यादिषु 'यङोऽचि च' (२-४-७४) इत्यत्राभ्युपगतत्वात् चिन्त्यमिदमिति रोरुवः इत्येव न्याय्यमिति च बोध्यम्।

१२ लोकान् रावयतीति लोकरावणः। नन्द्यादित्वात् (३-१-१३४) ण्यन्तात् कर्तरि ल्युः। 'रावणो लोकरावण इत्यादयः रामायणप्रयोगाः अत्रानुसन्धेयाः।

१३ 'इन्' (द.उ. १-४६) इतीन्प्रत्ययः। रौतीति, रूयते इति वा रविः = भानुः।

१४ 'रुशातिभ्यां क्रुन्' (द.उ. १-१५९) इति क्रुन्प्रत्ययः। रुरुः = मृगः।

१५ 'पुरुरवाः' (द.उ. ९-९२) इत्यसिप्रत्यये निरुढः। पुरु रूयते स्वयशः सर्वत्रेति पुरूरवाः = राजविशेषः। पुरुशब्दस्य दीर्घोऽपि निपातनात्।

**(१०३६) टुक्षु (क्षु) —शब्दे**। (शब्द करना)। सक.। सेट्। पर.। १ क्षौति क्षुतः क्षुवन्ति। २ चुक्षाव। ३ क्षुविता। इत्यादि 'यौति' (१०३३) वत्।

**(१०३७) क्ष्णु—तेजने**। (तीक्ष्ण करना, तेज करना)। सक.। सेट्.। परस्मै.। १ क्ष्णौति २ चुक्ष्णाव चुक्ष्णुवतुः ३ क्ष्णविता इत्यादि- 'यौति' (१०३३) वत्। **समःक्ष्णुवः**। इत्यात्मनेपदे- संक्ष्णुते। संक्ष्णुवाते संक्ष्णुवते। इत्यादि 'आनुते' (१०३५) इति वत्।

**(१०३८) ष्णु (स्नु) —प्रस्रवणे**। (टपकना, झरना, चूना)। अक.। सेट्। परस्मै.। १ स्नौति स्नुतः स्नुवन्ति। २ सुष्णाव। ३. स्नविता। इत्यादि 'यौति' (१०३३) वत्।

**सनि**—सुस्नूषति। **णिचि**—स्नावयति। **यङि**—सोष्णूयते। **यङ्लुकि**—सोष्णवीति सोष्णोति।

**(१०३९) ऊर्णुञ्—आच्छादने**। (ढकना)। सक.। सेट्.। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | ऊर्णौति-ऊर्णोति | ऊर्णुतः | ऊर्णुवन्ति | प्र. |
| | ऊर्णौषि-ऊर्णोषि | ऊर्णुथः | ऊर्णुथ | म. |
| | ऊर्णौमि-ऊर्णोमि | ऊर्णुवः | ऊर्णुमः | उ. |
| लिट् | ऊर्णुनाव | ऊर्णुनुवतुः | ऊर्णुनुवुः | प्र. |
| | ऊर्णुनुविथ-ऊर्णुनविथ | ऊर्णुनुवथुः | ऊर्णुनुव | म. |
| | ऊर्णुनाव-ऊर्णुनव | ऊर्णुनुविव | ऊर्णुनुविम | उ. |
| लुट् | ऊर्णविता | ऊर्णवितारौ | ऊर्णवितारः | प्र. |
| | ऊर्णवितासि | ऊर्णवितास्थः | ऊर्णवितास्थ | म. |
| | ऊर्णवितास्मि | ऊर्णवितास्वः | ऊर्णवितास्मः | उ. |

पक्षे—ऊर्णुविता ऊर्णुवितारौ ऊर्णुवितारः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृट् | ऊर्णविष्यति | ऊर्णविष्यतः | ऊर्णविष्यन्ति | प्र. |
| | ऊर्णविष्यसि | ऊर्णविष्यथः | ऊर्णविष्यथ | म. |
| | ऊर्णविष्यामि | ऊर्णविष्यावः | ऊर्णविष्यामः | उ. |

पक्षे—ऊर्णुविष्यति ऊर्णुविष्यतः ऊर्णुविष्यन्ति इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | ऊर्णौतु-ऊर्णोतु-तात् | ऊर्णुताम् | ऊर्णुवन्तु | प्र. |
| | ऊर्णुहि-तात् | ऊर्णुतम् | ऊर्णुत | म. |
| | ऊर्णवानि | ऊर्णवाव | ऊर्णवाम | उ. |
| लङ् | और्णोत् | और्णुताम् | और्णुवन् | प्र. |
| | और्णोः | और्णुतम् | और्णुत | म. |
| | और्णवम् | और्णुव | और्णुम | उ. |
| वि. लि. | ऊर्णुयात् | ऊर्णुयाताम् | ऊर्णुयुः | प्र. |
| | ऊर्णुयाः | ऊर्णुयातम् | ऊर्णुयात | म. |
| | ऊर्णुयाम | ऊर्णुयाव | ऊर्णुयाम | उ. |

| | | | | |
|---|---|---|---|---|
| आ. लि. | ऊर्णूयात् | ऊर्णूयास्ताम् | ऊर्णूयासुः | प्र. |
| | ऊर्णूयाः | ऊर्णूयास्तम् | ऊर्णूयास्त | म. |
| | ऊर्णूयासम् | ऊर्णूयास्व | ऊर्णूयास्म | उ. |
| लुङ् | और्णुवीत् | और्णुविष्टाम् | और्णुविषुः | प्र. |
| | और्णुवीः | और्णुविष्टम् | और्णुविष्ट | म. |
| | और्णुविषम् | और्णुविष्व | और्णुविष्म | उ. |

पक्षे—और्णावीत् और्णाविष्टाम् और्णाविषुः इत्यादि।

पक्षे—और्णवीत् और्णविष्टाम् और्णविषुः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृङ् | और्णविष्यत् | और्णविष्यताम् | और्णविष्यन् | प्र. |
| | और्णविष्यः | और्णविष्यतम् | और्णविष्यत | म. |
| | और्णविष्यम् | और्णविष्याव | और्णविष्याम | उ. |

पक्षे– और्णुविष्यत् और्णुविष्यताम् और्णुविष्यन्

आत्मनपेपद पक्षे

| | | | | |
|---|---|---|---|---|
| लट् | ऊर्णुते | ऊर्णवाते | ऊर्णुवते | प्र. |
| | ऊर्णुषे | ऊर्णुवाथे | ऊर्णुध्वे | म. |
| | ऊर्णुवे | ऊर्णुवहे | ऊर्णुमहे | उ. |
| लिट् | ऊर्णुनुवे | ऊर्णुनुवाते | ऊर्णुनुविरे | प्र. |
| | ऊर्णुनुविषे | ऊर्णुनुवाथे | ऊर्णुनुविध्वे | म. |
| | ऊर्णुनुवे | ऊर्णुनुविवहे | ऊर्णुविमहे | उ. |

३. ऊर्णविता-ऊर्णुविता। ४. ऊर्णविष्यते-ऊर्णुविष्यते। ५. ऊर्णुताम्। ६. और्णुत। ७. ऊर्णुवीत। ८. ऊर्णविषीष्ट ऊर्णुविषीष्ट। ९. और्णविष्ट-और्णुविष्ट। १०. और्णविष्यत और्णुविष्यत।

**कर्मणि**—ऊर्णूयते। **णिचि**—ऊर्णावयति-ते। **सनि**—ऊर्णुनूषति-ऊर्णुनुविषति-ऊर्णुनविषति-ते। **यङि**—ऊर्णोनूयते। **यङ्लुकि**– ऊर्णोनौति-ऊर्णोनवीति-ऊर्णोनोति **कृत्सु**– ऊर्णावकः-विका, ऊर्णनविषकः-ऊर्णुनुविषकः-ऊर्णुनषकः-ऊर्णुनूषकः-षिका, ऊर्णोनूयकः-यिका, ऊर्णविता-ऊर्णुविता-त्री, ऊर्णावयिता-त्री, ऊर्णुवन्-ती, ऊर्णावयन्-न्ती, ऊर्णुवानः ऊर्णावयमानः, ऊर्णविष्यमाणः, ऊर्णतम्-तः, ऊर्णावितम्-तः, ऊर्णवः-ऊर्णावः, ऊर्णवितव्यम्-ऊर्णुवितव्यम्, ऊर्णवनीयम्, ऊर्णावनीयम्, ऊर्णव्यम्-अवश्योर्णाव्यम्, ऊर्णाव्यम्, ऊर्णयमानः, ऊर्णाव्यमानः, ऊर्णवः, ऊर्णावः, ऊर्णवितुम्, ऊर्णुतिः, ऊर्णावना, ऊर्णवनम्, ऊर्णावनम्, ऊर्णुत्वा, ऊर्णावयित्वा, समूर्णुत्य, समूणर्यव्य, ऊर्णा ऊरुः, ऊर्णायुः।

**( १०४० ) द्यु—अभिगमने**। (शत्रु पर आक्रमण करना, आगे जाना, समीप जाना)। सकर्म.। अनि.। परस्मै.।

१. **प्र.** द्यौति द्युतः द्युवन्ति। **म.** द्यौषि। **उ.** द्यौमि। २ **प्र.** दुद्याव दुद्युवतुः दुद्युवुः। **म.** दुद्यविथ-दुद्योथे दुद्युवथुः दुद्युव। **उ.** दुद्याव-दुद्यव दुद्युविव दुद्युविम। ३. द्योता। ४. द्योष्यति।

५. द्योतु-द्युतात्। **म.** द्युहि। **उ.** द्यवानि। ६ **प्र.** अद्यौत्। म. अद्यौः। **उ.** अद्यवम्। ७. द्युयात्। ८. द्यूयात्। **अकृत्सार्वधातुकयो** रिति दीर्घः। ९. अद्यौषीत्। १०. अद्योष्यत्।

**कर्मणि**—द्यूयते। **णिचि**—द्यावयति। **सनि**—दुद्युषति। **यङि**—दोद्युयते। **यङ्लुकि**—दोद्योति- दोद्यवीति। **कृत्सु**—द्योतव्यम् द्यवनीयम् द्यव्यम् द्युतः द्युवन् द्योतुम् द्यवनम् द्युत्वा उद्द्युत्य।

**(१०४१) षु (सु) —प्रसवैश्वर्ययोः**। (उत्पन्न करना, पैदा करना, जनना, गर्भ धारण करना, अद्‌भुत सामर्थ्य होना)। सक.। अनिट्। परस्मै.। सौति सुतः सुवन्ति इत्यादि 'द्यौति' (१०४०) वत्।

**(१०४२) कु—शब्दे**। (शब्द करना)। अक.। अनिट्। परस्मै.। कौति कुतः कुवन्ति इत्यादि 'द्यौति' (१०४०) वत्।

**(१०४३) ष्टुञ्—(स्तु) स्तुतौ**। (प्रार्थना करना। स्तुति करना। प्रशंसा करना। भजन करना)। सक.। अनिट्। उभय.। **तुरुस्तुशम्यमः**– इति ईड्विकल्पः ईडभावपक्षे वृद्धिः।

| | | | | |
|---|---|---|---|---|
| लट् | स्तौति-स्तवीति | स्तुतः | स्तुवन्ति | प्र. |
| | स्तौषि-स्तवीषि | स्तुथः | स्तुथ | म. |
| | स्तौमि-स्तवीमि | स्तुवः | स्तुमः | उ. |
| लिट् | तुष्टाव | तुष्टुवतुः | तुष्टुवुः | प्र. |
| | तुष्टोथ | तुष्टुवथुः | तुष्टुव | म. |
| | तुष्टाव-तुष्टव | तुष्टुव | तुष्टुम | उ. |
| लुङ् | स्तोता | स्तोतारौ | स्तोतारः | प्र. |
| | स्तोतासि | स्तोतास्थः | स्तोतास्थ | म. |
| | स्तोतास्मि | स्तोतास्वः | स्तोतास्मः | उ. |
| लृट् | स्तोष्यति | स्तोष्यतः | स्तोष्यन्ति | प्र. |
| | स्तोष्यसि | स्तोष्यथः | स्तोष्यथ | म. |
| | स्तोष्यामि | स्तोष्यावः | स्तोष्यामः | उ. |
| लोट् | स्तौतु-स्तवीतु-तात् | स्तुताम्-स्तुवीताम् | स्तुवन्तु | प्र. |
| | स्तुहि-स्तुवीहि | स्तुतम्-स्तुवीतम् | स्तुत-स्तुवीत | म. |
| | स्तवानि | स्तवाव | स्तवाम | उ. |
| लङ् | अस्तौत् | अस्तुताम् | अस्तुवन् | प्र. |
| | अस्तौः-अस्तवीः | अस्तुतम् | अस्तुत | म. |
| | अस्तवम् | अस्तुव-अस्तुवीव | अस्तुम-अस्तवीम | उ. |

पक्षे—अस्तवीत् अस्तुवीताम् इत्यादि।

| | | | | |
|---|---|---|---|---|
| वि. लि. | स्तुयात् | स्युताताम् | स्तुयुः | प्र. |
| | स्तुयाः | स्तुयातम् | स्तुयात | म. |
| | स्तुयाम् | स्तुयाव | स्तुयाम | उ. |

| | | | | |
|---|---|---|---|---|
| आ. लि. | स्तूयात् | स्तूयास्ताम् | स्तूयासुः | प्र. |
| | स्तुयाः | स्तूयास्तम् | स्तूयास्त | म. |
| | स्तूयासम् | स्तूयास्व | स्तूयास्म | उ. |
| लुङ् | अस्तावीत् | अस्ताविष्टाम् | अस्ताविषुः | प्र. |
| | अस्तावीः | अस्ताविष्टम् | अस्ताविष्ट | म. |
| | अस्ताविषम् | अस्ताविष्व | अस्ताविष्म | उ. |
| लृङ् | अस्तोष्यत् | अस्तोष्यताम् | अस्तोष्यन् | प्र. |
| | अस्तोष्यः | अस्तोष्यतम् | अस्तोष्यत | म. |
| | अस्तोष्यम् | अस्तोष्याव | अस्तोष्याम | उ. |

**आत्मनेपदे**—१. **प्र.** स्तुते-स्तुवीते स्तुवाते स्तुवते। **म.** स्तुषे-स्तुवीषे स्तुवाथे स्तुध्वे-स्तुवीध्वे। **उ.** स्तुवे स्तुवहे-स्तुवीवहे स्तुमहे-स्तुवीमहे। २. **प्र.** तुष्टुवे। **म.** तुष्टुषे। उ. तुष्टुवे। ३. **प्र.** स्तोता। म. स्तोतासे। उ. स्तोताहे। ४. स्तोष्यते। ५. स्तुताम्-स्तुवीताम्। ६. अस्तुत-अस्तुवीत। ७. स्तुवीत स्तुवीयाताम् स्तुवीरन्। ८. स्तोषीष्ट। ९. अस्तोष्ट अस्तोषाताम्। १०. अस्तोष्यत।

**कर्मणि**—स्तूयते। **णिचि**—स्तावयति-ते। **सनि**—तुष्टूषति-ते। **यङि**—तोष्टूयते। **यङ्लुकि**—तोष्टवीति-तोष्टोति। **कृत्सु**—स्तोतव्यः, स्तवनीयः, स्तुत्यः, स्तव्यः, स्तुतः, स्तुवन्, स्तुवती, स्तुवान्, स्तोतुम्, स्तवनम्, स्तुत्वा, प्रस्तुत्य, स्तवः, स्तोता, अभिष्टुवन्[१], तुष्टूषन्[२]-तुष्टूषमाणः, अग्निष्टुत्[३]-पुरुष्टुत्, स्तुत्यः[४]-अवश्यस्तुत्यः, ग्रावस्तुत्[५], आयतस्तूः[६], स्तोत्रम्[७], प्रस्तावः[८], संस्तावः[९]-संस्तवः, स्तुतिः,[१०] प्रस्तोता[११], परिष्टुवन्[१२]-निष्टुवन्, विष्टुवन्,

१ शतरि उवङ्। अभिष्टुवन् इत्यत्र 'उपसर्गात् सुनोति सुवतिस्यतिस्तौति (८-३-६५) इत्यादिना षत्वम्।
२ सन्नन्तादुप्रत्यये रूपम्। अभ्यासे 'शर्पूर्वाः खयः' (७-४-६१) इति खयः शेषः। हलादिशेषापवादः। 'स्तौतिण्योरेव–' (८-३-६१) इति षत्वम्।
३ अग्निं स्तौतीति अग्निष्टुत् 'क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विप्। तुक्। 'अग्नेः स्तुत्–' (८-३-८२) इति षत्वम्। पुरु स्तौतीति पुरुष्टुत् = ऋत्विग्विशेषः। अत्र सुषमादित्वात् (८-३-९८) छान्दसत्वाद्वा षत्वम्।
४ 'एतिस्तु–' (३-१-१०९) इति क्यप्। प्रकृतसूत्रे 'क्यप्' इत्यनुवर्तमानेऽपि पुनः क्यब्ग्रहणं 'ओरावश्यके' (३-१-१२५) इति प्राप्तस्य ण्यतोऽप्यपवादार्थम्। अवश्यस्तुत्यः इत्यत्र मयूरव्यंसकादित्वात् समासः।
५ 'भ्राजभास-ग्रावस्तुवः क्विप्' (३-२-१७७) इति ग्रावशब्द उपपदे स्तौतेः क्विप् ताच्छीलिकः। तुक्। ग्रावस्तुत् = ऋत्विग्विशेषः।
६ आयतं स्तौति इति आयस्तूः। 'क्विब् वचिप्रच्छयायतस्तु–' (वा. ३-२-७६) इति क्विप् 'दीर्घश्च ह्रस्वाभावात् तुक् न।
७ 'दाम्नीशसयुयुजस्तु–' (३-२-१८२) इति करणे ष्ट्रन् प्रत्ययः।
८ प्रपूर्वकादस्मात् 'प्रे स्तुद्रुश्रुवः' (३-३-२७) इति घञ्। उवर्णान्तत्वलक्षणापोऽपवादः। अन्यत्र स्तवः इत्येव।
९ 'यज्ञे समि स्तुवः' (३-३-३१) इति सपूर्वकादस्माद् घञ्। यज्ञकर्मणि यत्र देशे छन्दोगाः समेत्य स्तुवन्ति स देशः संस्ताव इत्युच्यते। अन्यत्र संस्तवः परिचयः।
१० 'श्रुयजीषिस्तुभ्यः–' (वा. ३-३-९४) इति करणे क्तिन् प्रत्ययः। स्तूयतेऽनयेति स्तुतिः स्तोत्रम्।
११ प्रपूर्वकादस्मात् ताच्छीलिके 'तृन्' (३-२-१३५) इति तृन् प्रत्यये रूपमेवम्। प्रस्तोता = ऋत्विग्विशेषः।
१२ अत्र सर्वत्र 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तु–' (८-३-७०) इति षत्वम्।

स्तोमः[१], अग्निष्टोमः[२], ज्योतिष्टोमः[३]-आयुःष्टोमः, परिष्टोमः, स्तोमः,[४] स्तवानः,[५] अन्यानि सर्वाणि रूपाणि आदादिकक्ष्णौति वत्।

**(१०४४) ब्रूञ्—व्यक्तायां वाचि**। (कहना, बोलना)। सक.। अनिट्। वच्यादेशे त्वनिट्। उभयपदी।

१ **प्र.** ब्रवीति-आह ब्रूतः-आहतुः ब्रुवन्ति-आहुः। **म.** ब्रवीषि-आत्थ ब्रुथः आहथुः ब्रूथ। **उ.** ब्रवीमि ब्रूवः ब्रूमः। २ **प्र.** उवाच ऊचतुः ऊचुः। **म.** उवचिथ-उवक्थ ऊचथुः ऊच। **उ.** उवाच-उवच ऊचिव ऊचिम। ३. **प्र.** वक्ता वक्तारौ वक्तारः। **म.** वक्तासि वक्तास्थः वक्तास्थ। **उ.** वक्तास्मि वक्तास्वः वक्तास्मः। ४. **प्र.** वक्ष्यति वक्यतः वक्ष्यन्ति। **म.** वक्ष्यसि वक्ष्यथः वक्ष्यथ। **उ.** वक्ष्यामि वक्ष्यावः वक्ष्यामः। ५. **प्र.** ब्रवीतु-ब्रूतात् ब्रूताम् ब्रुवन्तु। **म.** ब्रूहि-ब्रूतात् ब्रूतम् ब्रूत। **उ.** ब्रवाणि ब्रवाव ब्रबाम। ६. **प्र.** अब्रवीत् अब्रूताम् अब्रूवन्। **म.** अब्रवीः अब्रूतम् अब्रूत। **उ.** अब्रवम् अब्रूव अब्रूम। ७. **प्र.** ब्रूयात् ब्रूयाताम् ब्रूयुः। **म.** ब्रूयाः ब्रूयातम् ब्रूयात। **उ.** ब्रूयाम् ब्रूयाव ब्रूयाम। ८ **प्र.** उच्यात् उत्यास्ताम् उच्यासुः। **म.** उच्याः उच्यास्तम् उच्यास्त। **उ.** उच्यासम् उच्यास्व उच्यास्म। ९. **प्र.** अवोचत् अवोचताम् अवोचन्। **म.** अवोचः अवोचतम् अवोचत। **उ.** अवोचम् अवोचाव अवोचाम। १०. **प्र.** अवक्ष्यत् अवक्ष्यताम् अवक्ष्यन्। **म.** अवक्ष्यः अवक्ष्यतम् अवक्ष्यत। **उ.** अवक्ष्यम् अवक्ष्याव अवक्ष्याम।

**आत्मनेपदे**—१. **प्र.** ब्रूते ब्रूवाते ब्रुवते। **म.** ब्रूषे ब्रुवाथे ब्रूध्वे। **उ.** ब्रुवे ब्रूवहे ब्रूमहे। २. **प्र.** ऊचे ऊचाते ऊचिरे। **म.** ऊचिषे ऊचाथे ऊचिध्वे। **उ.** ऊचे ऊचिवहे ऊचिमहे। ३. **प्र.** वक्ता वक्तारौ वक्तारः। **म.** वक्तासे वक्तासाथे वक्ताध्वे। **उ.** वक्ताहे वक्तावहे वक्तामहे। ४. वक्ष्यते। ५. **प्र.** ब्रूताम् ब्रुवाताम् ब्रुवताम्। **म.** ब्रूष्व ब्रुवाथाम् ब्रूध्वम्। **उ.** ब्रवै ब्रवावहै ब्रवामहै। ६. **प्र.** अब्रूत अब्रुवाताम् अब्रुवत। **म.** अब्रूथाः अब्रुवाथाम् अब्रूध्वम्। **उ.** अब्रुवि अब्रूवहि अब्रूमहि। ७. **प्र.** ब्रुवीत ब्रुवीयाताम् ब्रुवीरन्। **म.** ब्रुवीथाः ब्रुवीयाथाम् ब्रुवीध्वम्। **उ.** ब्रुवीय ब्रुवीवहि ब्रुवीमहि। ८. **प्र.** वक्षीष्ट वक्षीयास्ताम् वक्षीरन्। **म.** वक्षीष्ठाः वक्षीयास्थाम् वक्षीध्वम्। **उ.** वक्षीय वक्षीवहि वक्षीमहि। ९. **प्र.** अवोचत अवोचेताम् अवोचन्त। **म.** अवोचथाः अवोचेथाम् अवोचध्वम्। **उ.** अवोचे अवोचावहि अवोचामहि। १०. अवक्ष्यत अवक्ष्येथाम् अवक्ष्यन्त।

**कर्मणि**—उच्यते। २ ऊचे। ९ अवचि अवाक्षाताम्। **णिचि**—वाचयति-ते। **सनि**—

---

१ औणादिके (द.उ. ७-२६) मन् प्रत्यये रूपमेवम्। स्तोमः स्तुतिव्यूहः। उपचारात् स्तोमः समूहार्थकः।

२ 'अग्नेः स्तुत् स्तोम–' (८-३-८२) इति षत्वम्।

३ 'ज्योतिरायुषः स्तोमः' (८-३-८३) इति षत्वम्। परिष्टोम इत्यत्र तु 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौति–' (८-३-६५) इत्यादिना षत्वम्।

४ औणादिके भप्रत्यये रूपम्। स्तोमः = केवलस्तुतिप्रयोजको वर्णसमूहः।

५ औणादिके (द.उ. ५-३२) आनच् प्रत्यये रूपम्। लोकेऽपि प्रयोगार्होऽयं शब्दः।

विवक्षति-ते। यङि—वावच्यते। यङ्लुकि—बोब्रवीति-बोब्रोति। कृत्सु—वाचक:[१]-चिका, णिचि—वाचक:-चिका, विवक्षक:[२]-क्षिका, वावचक:-चिका, वक्ता-वक्त्री, वाचयिता-त्री, विवक्षिता-त्री, वावचिता-त्री, ब्रुवन्[३]-ती, वाचयन्-न्ती, विवक्षन्-न्ती, वक्ष्यन्-न्ती-ती, वाचयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती, ब्रुवाण:, वाचयमान:, विवक्षमाण:, वावच्यमान:, वक्ष्यमाण:, वाचयिष्यमाण:, विवक्षिष्यमाण:, वावचिष्यमाण:, सुवाक्[४]-ग्-सुवाचौ-सुवाच:, उक्तम्[५]-उक्त:-उक्तवान्, वाचितम्-त:, विवक्षित:, वावचित:-तवान्, ब्रूव:,[६] ब्राह्मणिब्रुवा, विदुषिब्रुवा[७]-विदुषीब्रुवा,विद्वद्ब्रुवा[८],वाक्[९]-वाचा,अनूचान:,[१०] वाग्मी[११],वाचाल:-वाचाट:, प्रवचनीय:[१२] (ब्राह्मण:, अनुवाको वा), गुणवचन:[१३], वाच:, विवक्षु:, वक्तव्यम्, वाचयितव्यम्, विवक्षितव्यम्, वावचितव्यम्, प्रवचनीयम्, वाचनीयम्, विवक्षणीयम्, वावचनीयम्, वाच्यम्[१४]-वाक्यम्, प्रवाच्यम्[१५], अविवाक्यम्, विवक्षणम्, उच्यमान:, वाच्यमान:,

---

१ आर्धधातुके विविक्षिते 'ब्रुवो वचि:' (२-४-५३) इति वच्यादेशे रूपमेवम्। एवमेव तृजादिषु सर्वत्र शुद्धे, ण्वुलादिषु ण्यन्ते च वच्यादेशे रूपं ज्ञेयम्।

२ सन्नन्ताण्ण्वुलि वच्यादेशे रूपम्। तत्र वच्यादेशस्य 'पचिवचि-' इत्यनिटकारिकासु भाष्ये (७-२-१०) वचनादनिट्त्वम्। कुत्वषत्वयो: रूपमेवम्। एवमेव सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।

३ शतरि, अदादित्वात् शपो लुकि, शतु: सार्वधातुकत्वेन ङित्वात्, 'अचि श्नुधातु-' (६-४-७७) इत्यादिनोवङि रूपमेवम्।

४ ताच्छीलिके क्विपि, 'क्विब् वचिप्रच्छि—' (वा. ३-२-१७८) इति दीर्घोऽसम्प्रसारणं च भवति।

५ निष्ठायाम्, 'वचिस्वपियजादीनां किति' (६-१-१५) इति वकारस्य संप्रसारणे, 'संप्रसारणाच्च' (६-१-१०८) इति पूर्वरूपे च रूपमेवम्। एवमेव क्तिनि, क्त्वायां च रूपनिष्पत्तिर्बोध्या।

६ ब्रवीति इति ब्रुव:। कर्तरि पचाद्यचि रूपम्। 'घरूपकल्पचेलट्ब्रुव—' इति सूत्रे 'ब्रुव' इति निपातनात् गुणाभावे, वच्यादेशाभावे च रूपम्। अनेनैव सूत्रेण भाषितपुंस्कात् परस्य ङीप् प्रत्ययान्तस्यानेकाचो ह्रस्व:।

७ 'उगितश्च' (६-३-४५) इति ब्रुवशब्दे परे ह्रस्वविकल्प:।

८ पुंवदभावेऽप्यत्र पक्षे वक्तव्य:' (काशिका ६-३-४५) इति वृत्तिकारवचनादत्र पुंवद्भावे विद्वद् ब्रुवा, श्रेयोब्रुवा इति रूपे भवत:। परन्तु भाष्ये नैतादृशं वचनं दृश्यते।

९ क्विबन्तात् स्त्रियां टापि रूपमेवम्। 'आपं चैव हन्तानां यथा वाचा निशा दिशा।' इति भागुरिवचनात् टाप् इति सि. कौमुदी। भाष्ये नैतादृशं वचनं दृश्यते।

१० 'उपेयिवाननाश्वाननूचानश्च' (३-२-१०९) इत्येनेन, अनु इत्युपसर्गपूर्वकादस्मात् लिट: कर्तरि कानचि, सम्प्रसारणे पूर्वरूपे द्वित्वे सवर्णदीर्घे च 'अनूचान:' इति सिद्ध्यति। अनूचान: = साङ्गवेदाध्येता।

११ वाक्छब्दात् 'वाचो ग्मिनि:' (५-२-१२४) इति मत्वर्थीये ग्मिनिप्रत्यये रूपमेवम्। प्रशस्तवाग्वति प्रत्ययोऽयम्। अत्रैव प्रकरणे 'आलजाटचौ बहुभाषिणि' (५-२-१२५) इति कुत्सितार्थे मत्वर्थीये आलच्-आटच् प्रत्ययो: वाचाल: वाचाट: इति रूपे इत्यपि ज्ञेयम्।

१२ 'भव्यगेयप्रवचनीय—' (३-४-६८) इत्यादिना अनियर् प्रत्यय:। प्रवचनीय: = ब्राह्मण:। अत्र कर्मण्येव प्रत्ययो निपात्यते इति मते तु प्रवचनीय: = अनुवाक:।

१३ गुणम् उक्तवान् इति गुणवचन:। 'कृत्यल्युटो बहुलम्' (३-३-११३) इति भूते कर्तरि ल्युट् प्रत्यय:। अत्र च निदानम्, 'गुणवचनब्राह्मणादिभ्य:—' (५-१-१२४) इत्यत्र 'गुणवचन—' इति निर्देश एवेति ज्ञेयम्।

१४ 'आर्धधातुके' (२-४-३५) इत्यत्र विषयसप्तमीत्वाश्रयणात् प्रत्ययोत्पत्ते: प्रागेव वाच्यादेशे हलन्तलक्षणे ण्यति 'वचो शब्दसंज्ञायाम्' (७-३-६७) इति कुत्वनिषेधे वाच्यम् इति रूपम्। शब्दसंज्ञायां तु कुत्वे वाक्यम् इत्येव।

१५ 'यजयाचरुचप्रवचर्चश्च' (७-३-६६) इत्यनेन कुत्वनिषेधे प्रवाच्यम् इति रूपम्। प्रावच्यम् = ग्रन्थिविशेष: इति वृत्यादिषु प्रोक्तम्।

विवक्ष्यमाणः,वावच्यमानः,वाचः,अनुवाकः[१]-प्राड्विपाकः,विवक्षः,वावचः,वक्तुम्,वाचयितुम्, विवक्षितुम्, वावचितुम्, उक्तिः, निरुक्तम्[२]-पुनरुक्तिः, वाचना, विवक्षा, वावचा, वचनम्, वाचनम्, विवक्षणम्, वावचनम्, उक्त्वा, वाचयित्वा, विवक्षित्वा, वावचित्वा, प्रोच्य, संवाच्यः, प्रविवक्ष्य, प्रवावच्य, कृकवाकुः[३], उक्थम्[४], वक्त्रम्[५], वचः,[६] वचक्नुः[७]।

**(१०४५) इण्—गतौ।** (जाना, **अति**—अतिक्रमण करना, समय बिताना, अधिक श्रेष्ठ होना, **अनु**—पीछे जाना, अनुसरण करना, अनुकरण करना, **अप**—निकल जाना, **अभि**—सामने आना, सर्वत्र जाना, **अभ्युत्**—ऐश्वर्यादिक से प्रसिद्ध होना, **अभ्युप्**—अङ्गीकार करना, स्वीकार करना, सम्मुख आना, सामने आना, **अव**—जानना, समझना, **उत्**—उदय होना, उगना, ऊपर जाना, **उप**—सहयाता करना, पास आना या जाना, **निर्**—निकल जाना, **परि**—चारों ओर घुमाना, प्रदक्षिणा करना, **परा**—पीछे लौटना, **सम्**—संगत होना, मिलना, **समुप**—सामने आना, **वि**—व्यय करना, विध्वंस करना, **प्रति**—स्पष्ट होना, विश्वास रखना)। सक.। अनिट्.। परस्मै.।

१. **प्र.** एति इतः यन्ति। **म.** एषि इथः इथ। **उ.** एमि इवः इमः। २ **प्र.** इयाय ईयतुः ईयुः। **म.** इययिथ-इयेथ ईयथुः ईय। **उ.** इयाय-इयय ईयिव ईयिम। ३. एता एतारौ एतारः। ४. एष्यति। ५. **प्र.** एतु-इतात् इताम् यन्तु। **म.** इहि-इतात् इतम् इत। **उ.** अयानि अयाव अयाम। ६. ऐत्। **म.** ऐः। **उ.** आयम्। ७. **प्र.** इयात्। **म.** इयाः। **उ.** इयाम्। ८. **प्र.** ईयात् ईयास्ताम् ईयासुः। **म.** ईयाः ईयास्तम् ईयास्त। **उ.** ईयासम् ईयास्व ईयास्म। ९. **प्र.** अगात्। **म.** अगाः। **उ.** अगाम्। १० **प्र.** ऐष्यत्। **म.** ऐष्यः। **उ.** एष्यम्।

**कर्मणि**—ईयते। **णिचि**—गमयति-प्रत्याययति। **'इणो गा लुङि'** इति गादेशे। **सनि—जिगमिषति**—प्रतीषिषति 'सनि च' इत्यवोधनार्थस्य गाम्यादेश। बोधने तु प्रत्याययति। **कृत्सु**—आयकः[८]-यिका, गमकः[९]-मिका, प्रत्यायकः[१०]-यिका,

---

१ शब्दसंज्ञात्वात् कुत्वमत्रेति ज्ञेयम्। अनुवाकः = श्रुतौ विभाग विशेषः। पृच्छतीति प्राट्। विशेषेण सूक्ष्मेक्षिकया न्यायादिकं ब्रवीति इति विपाकः। प्राट्चासौ विवाकश्च प्राड्विवाकः = नीतिस्थले न्यायवादी। अत्रापि 'हलश्च' (३-३-१२१) इति संज्ञायां घञि कुत्वमिति ज्ञेयम्।

२ पुनरुक्तिः, निरुक्तम् इत्यत्र 'क्तिच्क्तौ च संज्ञायाम्। (३-३-१७४) इत्यनेन क्तिच् क्तश्च संज्ञायां भवतः पुनरुक्तिरिति असकृदाम्नानस्य संज्ञा। एवं निरुक्तमिति ग्रन्थनिशेषस्य संज्ञा।

३ 'कृके वचः कश्च' (द.उ. १-९१) इति श्रुण् प्रत्यये ककारस्यान्तादेशे च रूपमेवम्। कृकेण = गलेन ब्रवीतीति कृकवाकुः = कुक्कुटः।

४ औणादिके (द.उ. ६-३२) वक् प्रत्यये सम्प्रसारणे च रूपमेवम्। उक्थम् = सामविशेषः।

५ 'गुवृवीपचिवचि—' (द.उ. ८-८९) इत्यादिना कर्तरि त्रप्रत्यये रूपम्। ब्रवीत्ययमिति वक्त्रम् = आस्यम्।

६ 'असुन्' (द.उ. ९-४९) इत्यनेनासुन् प्रत्यये वाच्यादेशे च रूपमेवम्।

७ 'सु यु वचिभ्योऽन्यज् आकूज् अक्नुचः' (द.उ. १०-४) इत्यनेन यथासंख्यमवनुच् प्रत्यये रूपमेवम्। ब्रवीति इति वचक्नुः = वाग्मी।

८ 'अचो ञ्णिति' (७-२-११५) इति वृद्धौ आयादेशे।

९ 'णौ गमिरबोधने' (२-४-४६) इति गमादेशः अमन्तत्वमित्वेन उपधाह्रस्वः।

१० इणो बोधनार्थकत्वात् 'अबोधने' (२-४-४६) इत्युक्त्या गमादेशाभावः।

जिगमिषकः[१]-षिक, प्रतिषिषकः[२]-षिका, एता-त्री, आययिता-त्री, गमयिता-त्री, यन्[३], निर्यन्, प्रत्यययान्-न्ती, गमयन्-न्ती, जिमिषन्-न्ती, एष्यन्[४]-न्ती-ती, प्रत्यययायिष्यन्-न्ती-ती, गमयिष्यन्-न्ती, जिगमिषिष्यन्-न्ती-ती, परीत्[५]-परीतौ-परीतः, इतम्-इतः-इतवान्, उपेतः[६], प्रत्यायितः, अवगमितः, जिगमिषितः, अयः, आयः, गमः, इत्वरः[७], उपेयिवान्[८] ईयिवान्, उपेयुषी[९], अत्ययी[१०], अत्यायः,[११] जिगमिषुः, जिगमयिषुः, परीषिषुः, एतव्यम्, उपैतव्यम्[१२], प्रत्यायितव्यम्, गमयितव्यम्, अयनीयम्, प्रत्यायनीयम्, गमनीयम्, इत्यम्[१३], अनभ्यासमित्यः[१४], प्रत्याय्यम्, अवगम्यम्, जिगमिष्यम्, ईयमानः[१५], प्रत्याय्यमानः, अवगम्यमानः, जिगांस्यमानः[१६], आयः, न्यायः[१७], पर्यायः[१८], अध्यायः[१९], समयः एतुम्[२०], प्रत्याययितुम्, गमयितुम्, जिगमिषितुम्, इत्या[२१], अपीतिः, समितिः[२२], इतिः, समित्[२३], प्रत्यायना, अवगमना, जिगमिषा, जिगमयिषा, अयनम्, अन्तरयणम्[२४], (वर्तते), प्रत्यायनम्,

१ 'सनि च' (२-४-४४) इति गमादेश। 'गमेरिट् परस्मैपदेषु' (७-२-५८) इत्यत्र 'परस्मैपदेषु' इत्यस्य तङानयोरभावे-इत्यर्थकतया अत्र सन इड् भवति।

२ 'सनि च' (२-४-४७) इत्यत्रापि 'अबोधने इत्यनुवृत्या गमादेशाभावे, अजादित्वाद् 'अजादेर्द्वितीयस्य' (६-१-२) इति द्वितीयस्यैकाचो द्वित्वे, 'अज्झनगमां सनि' (६-४-४६) इति दीर्घः।

३ 'इणो यण्' (६-४-८१) इति यणादेशः।

४ 'आच्छीनद्योर्नुम्' (७-१-८०) इति नुमागमस्य वैकल्पिकत्वात् रूपद्वयम्।

५ 'षत्वतुकोरसिद्धः' (६-१-८६) इत्यनेन एकादेशशास्त्रस्यासिद्धत्वात् तुक्।

६ आ + इतः एतः, उप + एत = इति स्थिते 'एत्येधत्यूठसु' (६-१-८९) इति वृद्धिं बाधित्वा, 'ओमाङोश्च' (६-१-९५) इति पररूपम्।

७ 'इण् नशिजिसर्तिभ्यः–' (३-२-१६३) इति तच्छीलादिषु क्वरप्। तुक्।

८ 'उपयिवाननाश्वान्–' (३-२-१०९) इति क्वसुप्रत्ययान्तो निपातितः। 'उप' इत्यस्याविवक्षितत्वात् समीयिवान् ईयिवान् इत्याद्यपि सिद्ध्यति। 'दीर्घ इणः किति' (७-४-६९) इति दीर्घः।

९ 'उगितश्च' (४-१-६) इति ङीष्। 'वसोः सम्प्रसारणम्' (६-४-१३१) इति सम्प्रसारणम्।

१० 'जिदृक्षिविश्रीण्–' (३-२-१५७) इत्यनेन तच्छीलादिषु इनिः।

११ 'श्याद्व्यधास्रुसंस्रतीण्–' (३-१-१४१) इति 'अति' इत्युपसृष्टादस्मात् कर्तरि णः प्रत्ययः।

१२ 'एत्येधत्यूठ्सु' (६-१-८९) इति वृद्धिः।

१३ 'एतिस्तुशास्–' (३-१-१०९) इति क्यपि तुक्।

१४ 'इत्येऽनभ्याशस्य' (वा. ६-३-७०) इति पूर्वपदस्य नुम्।

१५ 'अकृत्सार्वधातुकयोः–' (७-४-२५) इति दीर्घः।

१६ अज्झनगमां सनि (६-४-१६) इति दीर्घः। आत्मनेपदपरकत्वात् सनो नेट्।

१७ संज्ञायाम् 'अध्यायन्याय–' (३-३-१२२) इत्यादिना घापवादो घञ् निपातितः। न्याय इति शास्त्रस्य संज्ञा। न्येति – निश्चिनोति इति शास्त्रयुक्त्यादिरत्र न्यायः। न अभ्रेषः।

१८ 'परावनुपात्यय इणः' (३-३-३८) इति अजपवादो घञ् क्रमस्यानतिक्रमोऽनुपात्ययः।

१९ 'अध्यायन्याय–' (३-३-१२२) इत्यादिना घापवादो घञ् निपातितः संज्ञायाम्।

२० 'एरच्' (३-३-५६) इति भावेऽच्। एवं 'अभ्युदय' इति यावदच् प्रत्ययः।

२१ संज्ञायां 'समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (३-३-९९) इति स्त्रियां भावे क्यप्।

२२ बाहुलकात् क्तिन्नपि इत्यात्रेयः। समितिः = सभा।

२३ 'सम्पदादित्वात्–' (३-३-९४) स्त्रियां भावादौ क्विप्। समित् = सभा।

२४ 'अयनं च' (८-४-२५) इत्यदेशे णत्वम्। देशविशेषे तु न – अन्तरयनो देशः। 'अन्तश्शब्दस्याङ्किविधिणत्वेषु उपसर्गत्वं वक्तव्यम्' (वा. १-४-५८) इति वचनात् उपसर्गत्वम्। 'कृत्यचः' (८-४-२९) इत्यनेनैव सिद्धे देशे णत्वाभावाय 'अयनं च' (८-४-२५) इति सत्रारम्भः।

इत्वा, आययित्वा, गमयित्वा, जिमिषित्वा, उपेत्य-परीत्य, प्रत्याय्य, अवगमय्य,[१] अवजिगमिष्य।

**(१०४६) इङ्**—अध्ययने नित्यमधिपूर्वः। (अध्ययन करना, अभ्यास करना, सीखना)। सकर्म.। अनिट्। आत्मने.।

१. **प्र.** अधीते अधीयाते अधीयते। **म.** अधीषे अधीयाथे अधीध्वे। **उ.** अधीये अधीवहे अधीमहे। २. **प्र.** अधिजगे अधिजगाते अधिजगिरे। **म.** अधिजगिषे अधिजगाथे अधिजगिध्वे। **उ.** अधिजगे अधिजगिवहे अधिजगिमहे। ३. **प्र.** अध्येता अध्येतारौ अध्येतारः। **म.** अध्येतासे अध्येतासाथे अध्येताध्वे। **उ.** अध्येताहे अध्येतास्वहे अध्येतास्महे। ४. **प्र.** अध्येष्यते अध्येष्येते अध्येष्यन्ते। **म.** अध्येष्यसे अध्येष्येथे अध्येष्यध्वे। **उ.** अध्येष्ये अध्येष्यावहे अध्येष्यामहे। ५. **प्र.** अधीताम् अधीयाताम् अधीयताम्। **म.** अधीष्व अधीयाथाम् अधीध्वम्। **उ.** अध्ययै अध्यावहै. अध्ययामहै। ६. **प्र.** अध्यैत अध्यैयाताम् अध्यैयत। **म.** अध्यैथाः अध्यैयाथाम् अध्यैध्वम्। **उ.** अध्यैयि अध्यैवहि अध्यैमहि। ७. **प्र.** अधीयीत अधीयीयाताम् अधीयीरन्। **म.** अधीयीथाः अधीयीयाथाम् अधीयीध्वम्। **उ.** अधीयीय अधीयीवहि अधीयीमहि। ८. **प्र.** अध्येषीष्ट अध्येषीयास्ताम् अध्येषीरन्। **म.** अध्येषीष्ठाः अध्येषीयास्थाम् अध्येषीढ्वम्। **उ.** अध्येषीय अध्येषीवहि अध्येषीमहि। ९. **प्र.** अध्यगीष्ट अध्यगीषाताम् अध्यगीषत। **म.** अध्यगीष्ठाः अध्यगीषाथाम् अध्यगीढ्वम्-ड्ढ्वम्। **उ.** अध्यगीषि अध्यगीष्वहि अध्यगीष्महि। पक्षे—**प्र.** अध्यैष्ट अध्यैषाताम् अध्यैषत। **म.** अध्यैष्ठाः अध्यैषाथाम् अध्यैढ्वम्-ड्ढ्वम्, **उ.** अध्यैषि अध्यैष्वहि अध्यैष्महि। १०. **प्र.** अध्यगीष्यत अध्यगीष्येताम् अध्यगीष्यन्त। **म.** अध्यगीष्यथाः अध्यगीष्येथाम् अध्यगीष्यध्वम्। **उ.** अध्यगीष्ये अध्यगीष्यावहि अध्यगीष्यामहि। **विकल्पपक्षे**—**प्र.** अध्यैष्यत अध्यैष्येताम् अध्यैष्यन्त। **म.** अध्यैष्यथाः अध्यैष्येथाम् अध्यैष्यध्वम्। **उ.** अध्यैष्ये अध्यैष्यावहि अध्यैष्यामहि।

**कर्मणि**—अधीयते। २. अधिजगे। ९. अध्यगायि-अध्यायि। **णिचि**—अध्यापयति। ९. अध्यजीगपत्-अध्यापिपत्। **सनि**—अधिजिगांसते। **कृत्सु**—अध्यापकः-पिका, अध्यापकः[२]-पिका, अधिजिगमिषकः[३]-षिका, अध्येता-त्री, अध्यापयिता-त्री, अधिजिगमिषिता-त्री, अधीयन्[४] पारायणम्, अधीयती[५], अध्यापयन्[६]-न्ती,

१ 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।

२ 'क्रीङ्जीनां णौ' (६-१-४८) इती आत्वे, 'अर्तिही–' (७-३-३६) इति पुक्।

३ 'इङश्च' (२-४-४८) इति सनि गमिः। 'गमेरिट् परस्मैपदेषु' (७-२-५८) इति इट्। 'परस्मैपदेषु' इत्यस्य तङानयोरभावे' इत्यर्थः।

४ 'इङ्धार्योः शत्रकृच्छ्रिणि' (३-२-१३०) इति शता।

५ 'उगितश्च' (६-३-४५) इति स्त्रियां ङीप्। अधीयन् पारायणं अकृच्छ्रेणाधीयान इत्यर्थः।

६ 'बुधयुधनशजनेङ–' (१-३-८६) इति ण्यन्तात् परस्मैपदमेव।

अध्यापयिष्यन्-न्ती-ती, अधीयानः[१], अधिजिगासमानः[२], अध्येष्यमाणः, अजिगिजांसिष्यमाणः[३], अधीतः-तम्, अध्यापितः, अध्ययः, मन्त्राध्यायः[४], अध्यापः, अधिजिगमिषुः, अधिजिगापयिषुः-अध्यापिपयिषुः[५], अध्येतव्यम्, अध्यापयितव्यम्, अध्ययनीयम्, अध्यापनीयम्, अध्येयम्, अध्याप्यम्, अधीयमानः, अध्याप्यमानः, अधिजिंगास्यमानः, अध्यायः[६], उपाध्यायः, उपाध्याया, उपाध्यायी[७], उपाध्यायानी, अध्यापः, अधिजिगमिषः, अध्येतुम्, अध्यापयितुम्, अधिजिगमिषितुम्, अधीतिः, अध्यापना, अधिजिगमिषा, अध्ययनम्, अध्यापनम्, अधिगमिषणम्, अधीत्य, अध्याप्य, अधिजगमिष्य, अध्यायम्, अध्यापम् ।

**( १०४७ ) इक्—स्मरणे** । (स्मरण करना, याद करना, चिन्तन करना)। सकर्म.। अनिट् । परस्मै.। नित्यमधिपूर्वः।

१. **प्र.** अध्येति अधीतः अधियन्ति-अधीयन्ति । **म.** अध्येषि अधीथः अधीथ । **उ.** अध्येमि अधीवः अधीमः । २. **प्र.** अधीयाय अधीयतुः अधीयुः । **म.** अधीययिथ-अधीयेथ अधीयथुः अधीय । **उ.** अधीयाय-अदीयय अधीयिव अधीयिम । ३. **प्र.** अध्येता । **म.** अध्येतासि ४. अध्येष्यति । ५. **प्र.** अध्येतु-अधीतात् अधीताम् अधियन्तु-अधीयन्तु । **म.** अधीहि-अधीतात् अधीतम् अधीत । **उ.** अध्ययानि अध्ययाव अध्ययाम । ६. **प्र.** अध्यैत् अध्यैताम् अध्यैयन्-अध्यायन् । **म.** अध्यैः अध्यैतम् अध्यैत । **उ.** अध्यायम् अध्यैव अध्यैम । ७. **प्र.** अधीयात् अधीयाताम् अधीयुः । **म.** अधीयाः अधीयातम् अधीयात् । **उ.** अधीयाम् अधीयाव अधीयाम । ८. **प्र.** अधीयात् अधीयास्ताम् अधीयासुः । **म.** अधीयाः अधीयास्तम् अधीयास्त । **उ.** अधीयासम् अधीयास्व अधीयास्म । ९. **प्र.** अध्यगात् अध्यगाताम् अध्यगुः । **म.** अध्यगाः अध्यगातम् अध्यगात । **उ.** अध्यगाम् अध्यगाव अध्यगाम । १० अध्यैष्यत् ।

**कर्मणि**—अधीयते । २. अधीये अधीयाते अधीयिरे । ९ अध्यगायि । **णिचि**—अधिगमयति-ते । **सनि**—अधिजिगमिषति । **कृत्सु**—'अधीति' (१०४५) वत् ।

**( १०४८ ) वी—गतिव्याप्तिप्रजनकान्त्यसनखादनेषु** । प्रजनं = गर्भग्रहणम् । असनं = क्षेपणम् । (जाना, घेरना, आक्रमण करना, गर्भवती होना, गर्भाधारण करना, चमकना, फेंकना, खाना, भक्षण करना।) **सम्**—घेरना, घेर लेना, लपेटना । यथायथं सकर्मकोऽकर्मकश्च । अनिट् ।पर.।

१. **प्र.** वेति वीतः वियन्ति । **म.** वेषि वीथः वीथ । **उ.** वेमि वीवः वीमः । २. **प्र.** विवाय

१ इयङ्पूर्वम् । पश्चात् दीर्घः ।
२ 'इङश्च' (२-४-४८) इति गमादेशः । 'अज्झनगमां सनि' (६-४-१६) दीर्घः ।
३ 'आर्धधातुकस्येट्–' (७-२-३५) इतीट् ।
४ 'कर्मण्यण्' (३-२-१) इत्यण् ।
५ 'णौ च संश्चङोः' (२-४-५१) इति गादेशः वा, पक्षे आत्वे पुकि अध्यापिपयिषुः इति रूपम् ।
६ 'इङश्च' (३-३-२१) इति भावादौ घञ् असंज्ञायाम् । अध्ययनमध्यायः ।
७ अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् (वा. ३-३-२१) इती ङीष् वा ।

विव्यतुः विव्युः। **म.** विवयिथ-विवेथ विव्यथुः विव्य। **उ.** विवाय-विवय विव्यिव विव्यिम। ३. वेता। ४. वेष्यति। ५. **प्र.** वेतु-वीतात् वीताम् वियन्तु। **म.** वीहि-वीतात् वितम् वीत। **उ.** वयानि वयाव वयाम। ६. **प्र.** अवेत् अवीताम् अवियन्-अव्यन्। **म.** अवेः अवीतम् अवीत। **उ.** अव्यम् अवीव अवीम। ७. **प्र.** वीयात् वीयाताम् वीयुः। **म.** वीयाः वियातम् वीयात। **उ.** वीयाम् वीयाव वीयाम। ८. **प्र.** वीयात् वीयास्ताम् वीयासुः। **म.** वीयाः वीयास्तम् वीयास्त। **उ.** वियासम् वीयास्व वीयास्म। ९. **प्र.** अवैषीत् अवैष्टाम् अवैषुः। **म.** अवैषीः अवैष्टम् अवैष्ट। **उ.** अवैषम् अवैष्व अवैष्म। १०. अवेष्यत्।

**कर्मणि**—वीयते। २. विव्ये। **णिचि**—वाययति। प्रजनार्थे तु वाययति-वापयति। **सनि**—विवीषति। **यङि**—वेवीयते। **यङ्लुकि**—वेवेति-वेवयीति। **कृत्सु**—वीत्वा, वेतुम्, वयनम्, वियनम्, वेतव्यम्, वयनीयम्, वेयम्, वीतम्, प्रवीय, वायकः-यिका, वापकः[१]-पिका, विवीषकः[२]-षिका, वेवीयकः-यिका, वेता-त्री, वाययिता- वापयिता-त्री, वियन्[३]-न्ती, वाययन्-वापयन्-न्ती, वेष्यन्-न्ती-ती, वाययिष्यन्-वापयिष्यन्, वयः,[४] क्तिनि-वीतिः, वेणिः[५], वेणुः[६], वीणा[७], वेतनम्[८], वेत्रम्[९], वेतसः[१०] वयः।

**( १०४९ ) या—प्रापणे। प्रापणमिह गतिः।** (जाना)। **अनु**—अनुसरण करना, पीछे पीछे जाना। **अभि**—पहूंचना, पास जाना, **आ**—आना। **उप**—छोड़ना, त्यागना। **निर्**—बाहर जाना, निकल जाना। **प्र**—जाना। **प्रत्युत्**—सामने जाना। **समभि**—समीप जांना। **समा**—आना या पहुंचना। सक.। अनिट्। परस्मै.।

१. **प्र.** याति-प्रणियाति[११] यातः यान्ति। **म.** यासि याथः याथ। **उ.** यामि यावः यामः। २. **प्र.** ययौ ययतुः ययुः। **म.** ययिथ-ययाथ ययथुः-यय। **उ.** ययौ ययिव ययिम। ३. याता यातारौ यातारः। ४. यास्यति। ५. **प्र.** यातु-यातात् याताम् यान्तु। **म.** याहि-यातात् यातम् यात। **उ.** यानि याव याम। ६. **प्र.** अयात् अयाताम् अयुः-अयान्[१२]। **म.** अयाः अयातम् अयात। **उ.** अयाम् अयाव अयाम। ७. **प्र.** आयात् यायाताम् यायुः। **म.** यायाः यायातम्

१ 'प्रजने वायतेः' (६-१-५५) इति प्रजने वर्तमानस्य णौ विभाषा आत्वे, पुकि च रूपमेवम्।
२ सन्नन्तात् ण्वुलि 'इको झल्' (१-२-९) इति सनः कित्वान्न गुणः।
३ 'अदिप्रभृतिभ्यः शपः' (२-४-७२) इति शपो लुकि प्रकृतेः इयङादेशे च रूपमेवम्।
४ 'एरच्' (३-३-५६) इति भावे अकर्तरि च कारके संज्ञायामच् प्रत्यये रूपम्। घञोऽपवादः।
५ 'वीज्याज्वरिभ्यो निः' (द.उ. १-१८) इति निप्रत्ययः। बाहुलकात् णत्वम्। वेणिः = केशबन्धः।
६ औणादिके (द.उ. १-१४८) णु प्रत्यये रूपमेवम्। वेणुः = वंशः।
७ औणादिके (द.उ. ५-५७) न प्रत्ययो णत्वं गुणाभावश्च निपातनात्। तेन रूपमेवम्। वेति जायते स्वरोऽस्यामिति वीणा = वल्लकी। वीणा तु वल्लकी विपञ्ची इत्यमरः।
८ 'वीपतिभ्यां तनन्' (द.उ. ६-५६) इति तनन् प्रत्ययः। वेतनम् = भृतकदानम्। भृतकर्मकधनमिति केचित्।
९ 'गुधृवी—' (द.उ. ८-८९) इति त्र प्रत्यये रूपमेवम्। वेत्रम् = वीरुद्विशेषः।
१० 'वियस्तुट् च' (द.उ. ९-४५) इति अचस् प्रत्यये तुडागमे च रूपमेवम्। वेतसः = काष्ठजातिः।
११ 'नेर्गद' (८-४-१६) इति णत्वम्।
१२ 'लङ शाकटायनस्यैव' (३-४-१११ ) इति झेर्जुस् विकल्पः।

यायात । उ. यायाम् यायाव यायाम । ८. प्र. यायात् यायास्ताम् यायासुः । म. यायाः यायास्तम् यायास्त । उ. यायासम् यायास्व यायास्म । ९. प्र. अयासीत् अयासिष्टाम् अयासिषुः । म. अयासीः अयासिष्टम् अयासिष्ट । उ. अयासिषम् अयासिष्व अयासिष्म । १०. प्र. अयास्यत् अयास्यताम् अयास्यन् । म. अयास्यः अयास्यतम् अयास्यत । उ. अयास्यम् अयास्वाव अयास्याम ।

**कर्मणि**—यायते । २. याये । ९. अयायि । **णिचि**—यापयति । **सनि**—यियासति । **यङि**—यायायते । **यङ्लुकि**—यायेति-यायाति । **कृत्सु**—यात्वा, प्रयाय, यातम्, यातुम्, यातः, यान्, याती-यान्ती, यातव्यम्, यानीयम्, यायकः-यिका, यापकः-पिका, यियासकः-सिका, याता-त्री, यापयिता-त्री, यियासिता, यायायिता-त्री, प्रणियान्[१]-ती-न्ती, यानीयः,[२] येयः[३], अध्वङ्गतुरङ्गयायी[४], अनुयायी, प्रयायी[५]-प्रतियायी, सङ्ग्रामयायी[६], शुभंयाः[७], अभियाः, यायावरः[८], प्रयाणम्, प्रयापणम्[९], प्रयापनम्, अययः[१०], अप्रयाणिः[११], ययातिः[१२], याता,[१३] ययुः[१४], मृगयुः[१५], देवयुः-केवलयुः-ग्रहयुः-मित्रयुः-मन्त्रयुः-अध्वर्युः,

१ शतरि अदादित्वाच्छपोलुकि, 'नेर्गदनदपतपदधुमास्यतिहिन्तियाति–' (८-४-१७) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वे रूपमेवम् । स्त्रियाम् 'आच्छीनद्योः' (७-१-८०) इति नुम्विकल्पः ।

२ 'कृत्यल्युटो बहुलम्' (३-३-११३) इति बाहुलकत्वाभ्यनुज्ञानादत्र करणेऽनीयर् प्रत्ययः । यान्त्यनेनेति यानीयः = अश्वः ।

३ कर्मणि यत्प्रत्यये, 'ईद् यति' (६-४-६५) इतीकारे गुणे च रूपमेवम् ।

४ अध्यवन्यतुरङ्गेन यातीति अध्वन्यतुरङ्गयायी । 'सुप्यजातौ–' (३-२-७८) इति ताच्छील्ये णिनिप्रत्ययः । 'आतो युक्–' इति युगागमः । एवम् अनुयायी इत्यत्रापि स्वनिष्पत्तिर्ज्ञेया । उपसर्गोपपदेऽप्यनेन णिनिरिति भाष्यादौ स्पष्टम् ।

५ 'भविष्यति गम्यादयः' (३-३-३) इत्यत्र गम्यादिगणे पाठात् औणादिके णिनि प्रत्यये युगागमे च रूपमेवम् । भविष्यत् कालेयं प्रत्यय इति ज्ञेयम् । आयायी इति काशिका (३-३-३) पाठः ।

६ 'आवश्यकाधर्ण्ययोर्णिनिः' (३-३-१७०) इत्यावश्यकार्थे णिनिप्रत्यये रूपमेवम् ।

७ शुभं यातीति शुभंयाः = शुभान्वितः । 'क्विप् च' (३-२-७६) इति क्विप् ।

८ यङन्तात् 'यश्च यङः' (३-२-१७६) इति ताच्छीलिके वरचि द्विर्वचनादिकेषु रूपमेवम् ।

९ 'णेर्विभाषा' (८-४-३०) इति णत्वविकल्पः । प्रयाणम् इत्यत्र तु 'कृत्यच' (८-४-२९) इति नित्यं णत्वमिति ।

१० अयः = शुभावहो विधिः, अयं यातीति अययः । 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्तरि कप्रत्ययः ।

११ 'आक्रोशे नञ्यनिः' (३-३-११२) इति नञुपपदादस्माद् अनिप्रत्ययः । आक्रोशः = शापः ।

१२ "क्तिनि बाहुलकाद् द्विर्वचनम्" इत्यात्रेयः– इति मा. धा. वृत्तिः । स्त्रियामेव क्तिनो विधानात् क्तिचस्तु पुल्लिङ्गेपि सद् भावात् क्तिचि, बाहुलकादेव द्विर्वचनमिति ।

१३ ताच्छीलिके, औणादिके वा तृनि, रूपमेवम् । स्त्रियाम् 'न षट्स्वस्रादिभ्यः' (४-१-१०) इति ङीब्निषेधः । याता = देवरपत्नी ।

१४ 'यो द्वे च' (द.उ. १-१०६) इत्युप्रत्यये द्विर्वचने, ङिद्वद् भावेनाकारलोपे च रूपमेवम् । ययुः = अश्वमेधीयः स्वर्गमार्गश्च ।

१५ 'मृगय्वादयश्च' (द.उ. १-१२१) इति कुप्रत्यये, आकारलोपे च रूपाण्येतानि । अत्रैव गणे अध्वरशब्दस्यान्तलोपश्च निपातनादेवेति ज्ञेयम् । मृगयुः = व्यधाः, देवयुः = धार्मिकः । केवलयुः = मानी । ग्रहयुः = ग्रहपतिः । मित्रयुः = मित्रवत्सलः ऋषिविशेषश्च । मन्त्रयुः = मन्त्री । अध्वर्युः = ऋत्विग् विशेषः । मृगम् आत्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' (३-१-८) इति क्यच् प्रत्यये 'सनाद्यन्ता धातवः' (३-१-३२) इति धातुसंज्ञायाम् 'क्याच्छन्दसि' (३-२-१७०) इति उप्रत्यये रूपनिष्पत्तिरपीदृशस्थलेषु नानुप्रन्नेति ज्ञेयम् ।

यातुः,[१] यामः[२], यात्रा[३]।

**(१०५०) वा**—गतिगन्धयोः। (जाना, हवा की तरह तीव्र गति में चलना, वहना, गन्ध लगना।) अकर्म.। अनिट्। परस्मै.। वाति वातः वान्ति। इत्यादि 'याति' (१०४९) वत्।

**णिचि**—वाजयति-वापयति—'**वो विधूनने जुक्**' इति वातेर्जुक्। **कृत्सु**—वायकः-यिका, वाजकः-जिका, वापकः-पिका, विवासकः-सिका, वावायकः-यिका, वाता-त्री, वापयिता-त्री, वाजयिता-त्री, विवासिता-त्री, वावयिता-त्री, वान्-न्ती, वापयन्-वाजयन्-न्ती, विवासन्-न्ती, वास्यन्-न्ती-ती, वापयिष्यन्-वाजयिष्यन्-न्ती-ती, व्यतिवानः, वापयमानः, वाजयमानः, वापयिष्यमाणः-वाजयिष्यमाणः, वातम्-तः, निर्वाणः[४] (अग्निः भिक्षुर्वा), निर्वातो (वातः) वापितः, वाजितः, निवासितः, वातः, वानः[५], वापः, वाजः, वातूलः, प्रणिवातव्यम्[६], वापयितव्यम्-वाजयितव्यम्, वानीयम्, वापनीयम्, वाजनीयम्, वेयम्, वाप्यम्-वाज्यम्, वायमानः, वाप्यमानः-वाज्यमानः, वायः, वातुम्, वापयितुम्-वाजयितुम्, वातिः, वापना-वाजना, वानम्, वापनम्-वाजनम्, वात्वा, वापयित्वा-वाजयित्वा, प्रवाय, प्रवाप्य-प्रवाज्य, वातिः[७], वाजिकम्, वातकी, वात्या, वायुः[८], वातः[९], वामः[१०]।

**(१०५१) भा**—**दीप्तौ**।(चमकना, प्रकाशित होना, सुन्दर दीखना)। **वि-प्र**—विशेष प्रकाश करना। अकर्म.। अनिट्। परस्मै.।

१. **प्र.** भाति भातः भान्ति। **म.** भासि भाथः भाथ। **उ.** भामि भावः भामः। २. **प्र.** बभौ बभतुः बभुः। **म.** बभिथ-बभाथ बबथुः बभ। **उ.** बभौ बभिव बभिम। ३. भाता भातारौ भातारः। ४. भास्यति भास्यतः भास्यन्ति। ५. **प्र.** भातु-भातात् भाताम् भान्तु। **म.** भाहि-भातात् भातम् भात। **उ.** भानि भाव भाम। ६. **प्र.** अभात् अभाताम् अभुः-अभान्। **म.** अभाः अभातम् अभात। **उ.** अभाम् अभाव अभाम। ७. **प्र.** भायात् भायाताम् भायुः। **म.** मायाः भायातम् भायात। **उ.** भायाम् भायाव भायाम। ८. **प्र.** भायात् भायास्ताम् भायासुः। **म.** भायाः भायास्तम् भायास्तः। **उ.** भायासम् भायास्व भायास्म।

---

१ 'काममनिजनिगामापाया—' (द.उ. १-१२५) इति तु प्रत्यये रूपमेवम्। यातुः = पावकः, मनश्च। राक्षस इति क्षीरस्वामी।
२ औणादिके (द.उ. ७-२६) मन् प्रत्यये रूपम्। यामः = कालविशेषः।
३ 'हुयामा—' (द.उ. ८-८४) इति त्रन् प्रत्ययः। यात्रा = गमनम् आचारश्च। अभ्यवहार इति केचित्।
४ निष्ठायाम् 'निर्वाणोऽवाते' (८-२-३०) इति अवाताधिकरणत्वे निष्ठातकारस्य नकारादेशे, णत्वे च रूपमेवम्। वातार्थे तु निर्वातो = वायुः इति।
५ 'चलन शब्दार्थात्—' (३-२-१४८) इति युच् प्रत्ययः।
६ 'नेर्गदनद—' (८-४-१७) इति उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य णकारादेशो भवति।
७ 'वातेर्नित्' (द.उ. १-७८) इत्यतिप्रत्यये नित् संज्ञके च रूपमेवम्। वातीति वातिः = गन्धमिश्रपवनः।
८ 'कृवापा—' (द.उ. १-८६) इत्यादिना उण् प्रत्ययः। वाति वायति वा द्रव्याणि इति वायुः।
९ औणादिके (द.उ. ६-७) तन् प्रत्यये रूपमेवम्।
१० औणादिके (द.उ. ६-२६) मन् प्रत्यये वामः इति रूपम्।

९. प्र. अभासीत् अभासिष्टाम् अभासिषुः। म. अभासीः अभासिष्टम् अभासिष्ट। उ. अभासिषम् अभासिष्व अभासिष्म। १०. प्र. अभास्यत् अभास्यताम् अभास्यन्। म. अभास्यः अभास्यतम् अभास्यत। उ. अभास्यम् अभास्याव अभास्याम। शेषं सर्वं 'याति' (१०४९) वत्।

**(१०५२) ष्णा (स्ना) —शौचे।** (स्नान करना, नहाना, शुद्ध होना)। अक.। अनि.। परस्मै.।

१. प्र. स्नाति स्नातः स्नान्ति। म. स्नासि स्नाथः स्नाथ। उ. स्नामि स्नावः स्नामः। २. प्र. सस्नौ सस्नतुः सस्नुः। म. सस्निथ-सस्नाथ सस्नथुः सस्न। उ. सस्नौ सस्निव सस्निम। ३. प्र. स्नाता स्नातारौ। ४. स्नास्यति। ५. प्र. स्नातु-स्नातात् स्नाताम् स्नान्तु। म. स्नाहि स्नातम् स्नात। उ. स्नामि स्नाव स्नाम। ६. प्र. अस्नात् अस्नाताम् अस्नुः-अस्नान्। म. अस्नाः अस्नातम् अस्नात। उ. अस्नाम् अस्नाव अस्नाम। ७. प्र. स्नायात् स्नायाताम् स्नायुः। म. स्नायाः स्नायातम् स्नायात्। उ. स्नायाम् स्नायाव स्नायाम। ८. प्र. स्नेयात् स्नेयास्ताम् स्नेयासुः। म. स्नेयाः। स्नेयास्तम् स्नेयास्त। उ. स्नेयासम स्नेयास्व स्नेयास्म। एत्व विकल्पपक्षे– प्र. स्नायात् स्नायास्ताम् स्नायासुः। इत्यादि। ९. प्र. अस्नासीत् अस्नासिष्टाम् अस्नासिषुः। म. अस्नासीः अस्नासिष्टम् अस्नासिष्ट। उ. अस्नासिषम् अस्नासिष्व अस्नासिष्म। १०. प्र. अस्नास्यत् अस्नास्यताम् अस्नास्यन्। म. अस्नास्यः अस्नास्यतम् अस्नास्यत। उ. अस्नास्यम् अस्नास्याव अस्नास्याम।

**भावे**—स्नायते। **णिचि**—स्नापयति-ते। वा घटादित्वे स्नपयति-ते। **सनि**—सिष्णासति। **यङि**—सास्नायते। **कृत्सु**—स्नानीयम्, स्नानम्, स्नायः, स्नायकः[१]-यिका, स्नायी, स्नाता, स्नापकः[२]-स्नपकः-पिका सिष्णासकः[३]-सिका, सास्नासकः-सिका, स्नाता-त्री, स्नापयिता-स्नपयिता-त्री, सिष्णासिता-त्री, सास्नायिता-त्री, स्नातः, अभिस्नातः, स्नातिः, स्नातव्यम्, स्नातुम्, स्नात्वा, उपस्नाय, स्नेयम्, स्नान्, स्नास्यन्, प्रतिष्णातम्,[४] निष्णातः[५], नदीष्णः[६]-नदीष्णातः, सुस्नातम्[७], सौस्नातिकः,

१ ण्वुलि, 'आतो युक्—' (७-३-३३) इति युगागमः। धात्वादिषकारस्य सकारः।

२ ण्यन्ते सर्वत्र आदन्त लक्षणः पुगागमो बोध्यः। प्रगनन्तरम्, 'ग्लास्नावनुवमां च' (ग.सू. भ्वादिः) इति णिजन्ते मित्वविकल्पः। मित्वपक्षे स्नपकः इत्यादीनि ह्रस्वघटितानि रूपाणि। मित्वाभावपक्षे स्नापकः इत्यादीनि।

३ सन्नन्ते 'आदेशप्रत्ययोः' (८-३-५९) इत्युत्तरखण्डे षत्वम्। ष्टुत्वेन नकारस्य णकारः।

४ 'सूत्रं प्रतिष्णातम्' (८-३-९०) इति मूर्धन्यविशिष्टो निपातः। प्रतिष्णातम् = शुद्धं सूत्रमित्यर्थः। अन्यत्र प्रतिस्नातमित्येव।

५ नितरां स्नातः निष्णातः = कुशलः। 'निनदीभ्यां स्नाते कौशले' (८-३-८९) इति षत्वम्। निष्णातः कटकरणे निष्णातो रज्जुवर्तने। अत्र धात्वर्थस्य न विवक्षा।

६ नद्यां स्नाति नदीष्णः। 'सुपि स्थः' (३-२-४) इत्यत्र योगविभागात् क प्रत्ययः। षत्वे। नदीष्णः = नदीस्नाने कुशल इत्यर्थ। कौशलभिन्नार्थे तु नदीस्नातः।

७ अत्र 'सु' इत्यस्य कर्मप्रवचनीयत्वेन न षत्वम् इत केचित्। वस्तुतः षत्वस्य प्राप्त्यभावात् 'सात् पदाद्योः' (८-३-१११) इति निषधाच्च षत्वमेः। सुस्नातं पृच्छति सौस्नातिकः। पृच्छतौ सुस्नातादिभ्यः। (वा. ४-४-१) इति ठक्।

प्रस्नः[१], नानीयम्[२], नात्वाकालकः, स्नावा[३], स्नात्वी स्नायुः[४]।

**(१०५३) श्रा—पाके**। (पकाना, राधना, उबालना, पसीजना, पसीना निकालना)। सक.। अनि.। परस्मै.।

१. श्राति श्रातः श्रान्ति। २. शश्रौ। ३. श्राता। ४. श्रास्यति। ५. श्रातु-श्रातात्। ६. अश्रात्। ७. श्रायात् श्रायाताम्। ८. श्रायात् श्रायास्ताम्। एत्वे श्रेयात् श्रेयास्ताम्। ९. अश्रासीत्। १०. अश्रास्यत्। शेषं सर्वं 'याति' (१०४९) वत्।

**(१०५४) द्रा—कुत्सायां गतौ**। कुत्सितगतिः = पलायनम्, निद्रा च। स्वापे निपूर्वकोऽयम्। (बुरी चाल चलना, भागना, उड़ जाना, सोना)। अक.। अनिट्। परस्मै.।

१. **प्र.** द्राति-निद्राति-प्रणिद्राति द्रातः द्रान्ति। २. **प्र.** दद्रौ दद्रतुः दद्रुः। **म.** दद्रिथ-दद्राथ दद्रथुः दद्र। **उ.** दद्रौ दद्रिव दद्रिम। ३. द्राता। ४. द्रास्यति। ५. द्रातु-द्रातात्। ६. अद्रात्। ७. द्रायात् द्रायाताम्। ८. द्रयात् द्रायास्ताम्। एत्वे द्रेयात्। ९. अद्रासीत्। १०. अद्रास्यत्। इत्यादि 'याति' (१०४९) वत्।

**कृत्सु**—द्रायकः-यिका, द्रापकः-पिका, दिद्रासकः-सिका, दाद्रायकः-यिका, निद्रा, निद्रालुः[५]-तन्द्रालुः, तन्द्रा[६], द्राणम्[७]-द्राणः-द्राणवान्, प्रणिदाता[८]।

**(१०५५) प्सा—भक्षणे**। (खाना)। सक.। अनि.। परस्मै.।

१ प्साति प्सातः प्सान्ति। २ **प्र.** पप्सौ पप्सतुः पप्सुः। **म.** पप्सिथ-पप्साथ पप्सथुः पप्स। **उ.** पप्सौ पप्सिव पप्सिम। ३ प्साता। ४ प्सास्यति। ५ प्सातु प्सातात् ६ अप्सात्। ७ प्सायात् प्सायाताम्। ८ प्सायात् प्सायास्ताम् एत्वे प्सेयात्। ९ अप्सासीत्। १० अप्सास्यत् शेषं सर्वं 'याति' (१०४९) वत्।

**(१०५६) पा—रक्षणे**। (रक्षा करना, पालन करना)। सक.। अनि.। परस्मै.।

१. पाति पातः पान्ति। **म.** पासि पाथः पाथ। **उ.** पामि पावः पामः। २. **प्र.** पपौ पपतुः पपुः। **म.** पपिथ-पपाथ पपथुः पप। **उ.** पपौ पपिव पपिम। ३. पाता पातारौ पातारः। ४. पास्यति। ५. **प्र.** पातु-पातात् पाताम् पान्तु। **म.** पाहि-पातात् पातम् पात। **उ.** पानि पाव

१ 'घञर्थे कविधानं ग्लास्नापा—' (वा. ३-३-५८) इति क प्रत्ययः। प्रस्नात्यस्मिन् इति प्रस्नः = शैलेषु विद्यमानो जलाशयः। 'आतोलोप इटि च' (६-४-६४) इत्याकारलोपः।

२ बाहुलकात् करणेऽनीयर् प्रत्ययः स्नान्त्यनेनेति स्नानीयम् = स्नानसाधनभूतश्चूर्णविशेषः।

३ 'आतो मिनिन् क्वनिप्—' (३-२-७४) इति क्वनिप्।

४ औणादिके उण् प्रत्यये रूपम्। स्नायुः = शरीरस्थमज्जादिविशेषः।

५ तच्छीलादिषु कर्तृषु 'स्पृहिगृहि—' (३-२-१५८) इत्यनेन निपूर्वकात् तत्पूर्वकाच्चास्मात् आलुच्प्रत्यय। तदो दकारस्य प्रत्ययसन्नियोगेन नकारादेशोऽपि सूत्रकारनिर्देशात् भवति।

६ 'घञर्थे कविधानम्' (वा. ३-३-५८) इति कप्रत्यये, स्पृहिगृहिपतिदयनिद्रातन्द्रा—' (३-२-१५८) इति सूत्रे निर्देशात् तदो दकारस्य नकारे, अदन्तत्वेन टापि रूपमेवम्।

७ 'संयोगादेरातो धातोर्यण्वतः' (८-२-४३) इति निष्ठानत्वे णत्वे च रूपमेवम्।

८ तृचि, प्रपूर्वकात् नेः, 'नेर्गद—' (८-४-१७) इति णत्वम्।

पाम । ६. **प्र.** अपात् अपाताम् अपु:-अपान् । **म.** अपाः अपातम् अपात । **उ.** अपाम् अपाव अपाम । ७. **प्र.** पायात् पायाताम् पायुः । **म.** पायाः पायातम् पायात । **उ.** पायाम् पायाव पायाम । ८. **प्र.** पायात् पायास्ताम् पायासुः । **म.** पायाः पायास्तम् पायास्त । **उ.** पायासम् पायास्व पायास्म । ९. **प्र.** अपासीत् अपासिष्टाम् अपासिषुः । **म.** अपासीः अपासिष्टम् अपासिष्ट । **उ.** अपासिषम् अपासिष्व अपासिष्म । १०. अपास्यत् ।

**कर्मणि**—पायते । **णिचि**—पालयति-ते । **पातेर्णौलुग् वक्तव्यः** । इति णिचि लुगागमः । **कृत्सु**—पायकः[१]-यिका, पालकः[२]-गोपालकः[३]-लिका, पिपासकः-सिका, पापायकः[४]-यिका, पाता-पात्री, पालयिता-त्री, पिपासिता-त्री, पापायिता-त्री, पान्[५]-न्ती-ती, पालयन्-न्ती, पिपासन्-न्ती, पास्यन्-न्ती-ती, पालयिष्यन्-न्ती-ती, पिपासिष्यन्-न्ती-ती, व्यतिपानः[६], पालयमानः, व्यतिपिपासमानः,[७] पापायमानः, व्यतिपास्यमानः, पालयिष्यमाणः, नपात्[८]-नपातौ-नपातः, तनूनपात्, अपान्नपात्, अपोनपात्, पातम्-तः-तवान्, पालितः, पिपासितः, पापायितः-तवान्, विश्वपाः[९]-सुपाः, गोपः[१०]-नृपः, अधिपः[११], पायः[१२] गोपायी[१३], नगरपायी[१४], पाणिवान्[१५], पालः, गोपालः[१६], पिपासुः, पापाः, पातव्यम्, पालयितव्यम्, पिपासितव्यम्, पापायितव्यम्, प्रपाणीयम्,[१७] प्रपानीयम्, पालनीयम्, पिपासनीयम्,

१ 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमः । एवं घञादिष्वपि ज्ञेयम् ।
२ 'पातेर्लुग् वक्तव्यः' (वा. ७-३-३७) इति ण्यन्ते सर्वत्र लुगागमः ।
३ गवां पालकः गोपालकः । 'नित्यं क्रीडाजीविकयोः' (२-२-१७) इत्यनेन जीविकार्थकस्य नित्यसमासः ।
४ 'गापोर्ग्रहणे इण् पिबत्योर्ग्रहणम्' (वा. २-४-७७) इति वचनादस्य लुग्विकरणत्वेन, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' (परिभाषा ९१) इत्यनेन च घुमास्थागापा—' (६-४-६६) इत्यादिषु नास्य ग्रहणम् । तेन ईत्वादिकमस्य नेति ज्ञेयम् । तेन यङन्ताण्ण्वुलि द्वित्वे, अभ्यासह्रस्वे च, 'दीर्घोऽकितः' (७-४-८३) इत्यभ्यासस्य दीर्घः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
५ शत्रन्तात् स्त्रियाम् 'आच्छीनद्योर्नुम्' (७-१-८०) इति नुम्विकल्पः ।
६ 'कर्तरि कर्मव्यतिहारे' (१-३-१४) इति कर्मव्यतिहारे शानच् ।
७ सन्नन्तात् 'पूर्ववत्सनः' (१-३-६२) इत्यनेन कर्मव्यतिहारे शानच् ।
८ न पातीति नपात् = नप्ता । 'नभ्राणनपात्—' (६-३-७५) इत्यत्र निपातनात् नञ् तत्पुरुषे नञः प्रकृतिभावः, क्विपि तुगागमश्च । तन्वा न पातीति तनूनपात् = अग्निरिन्द्रश्च । अपोनपात्, अपांनपात् इत्यपि देवता विशेषवाचके पदे । सर्वेऽप्येते क्विबन्ताः ।
९ विश्वं पातीति विश्वपाः । 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति विचि रूपमेवम् । एवं सुपाः इत्यत्रापि ।
१० 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मण्युपपदे कर्तरि क प्रत्ययः । एवं नृपः इत्यादिष्वपि ज्ञेयम् ।
११ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः ।
१२ 'श्याऽऽद्व्यध—' (३-१-१४१) इत्यादिना आदन्तलक्षणे कर्तरि णप्रत्यये रूपम् ।
१३ 'व्रते' (३-२-८०) इति णिनिप्रत्यये युगागमः ।
१४ 'सुप्यजातौ णिनिस्ताच्छील्ये' (३-२-७८) इति णिनि प्रत्ययः ।
१५ 'छान्दसोऽपि क्वसुरत्र धातो भवतीति 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (४-३-२४) इत्यत्र भाष्ये 'पपुष आगतं पपिवद्रूप्यम्—' इति प्रयोगाज्ज्ञायते । तेन क्वसु प्रत्यये, लिड्वद् भावेन द्विर्वचने, 'आतोलोप इटि च' (६-४-६४) इत्याकारलोपे, 'वस्वेकाजाद्घसाम्' (७-२-६७) इतीडागमे च रूपम् ।
१६ गाः पालयतीति गोपालः । कर्मण्यण् (३-२-१) इति ण्यन्तादस्मादण् प्रत्ययः ।
१७ 'शेषे विभाषा—' (८-४-१८) इत्यनेन णत्वविकल्पः ।

पापायनीयम्, पेयम्, पाल्यम्, पिपास्यम्, पापाय्यम्, ईषत्पानः[१]-दुष्पानः-सुपानः। पायमानः, पालयमानः, पिपास्यमानः, पापय्यमानः, पायः, पालः, पिपासुः, पापायः, पातुम्, पालयितुम्, पिपासितुम्, पापायितुम्, पातिः, सम्पातिः,[२] पालना, पिपासा, पापाया, पात्वा, पालयित्वा, पिपासित्वा, पापायित्वा, प्रपाय, प्रणाल्य, प्रपिपास्य, प्रपापाय्यः, पतिः[३], पिता[४], पापम्[५], पुमान्[६], पाथः[७]।

(१०५७) **रा—दाने**। (देना, मिल जाना)। सकर्म.। अनिट्। पर.। राति रातः रान्ति। इत्यादि। 'याति' (१०४९) वत्।

**कृत्सु**—रायकः-यिका, रापकः-पिका, रिरासकः-सिका, रारायकः-यिका, राता-त्री, रापयिता-त्री, रान्-न्ती, रापयन्-न्ती, रिरासन्-न्ती, रास्यन्-न्ती-ती, रापयिष्यन्-न्ती-ती, व्यतिराणः, रापयमाणः, व्यतिरास्यमाणः, रापयिष्यमाणः, राः रौ राः, राप्-रापौ-रापा, रातम्-तः, रापितः, सुरः[८]-सुरा, धीरः[९], द्रव्यरः, गोरः, मुद्रः, शुभंरः, रातव्यम्, रापयितव्यम्, राणीयम्, रापणीयम्, रेयम्, राप्यम्, ईषद्राणः[१०]-दुराणः-सुराणः, रायमाणः, रापयमाणः, रायः, रापः, रातुम्, रापयितुम्, रतिः, प्ररा, रापणा, राणम्, रापणम्, रात्वा, रापयित्वा, प्रराय, प्रराप्य, राका,[११] रात्रिः[१२], रात्री, राः[१३]-रायौ-रायः।

(१०५८) **ला—आदाने**। (लेना, ग्रहण कनरा)। सक.। अनि.। परस्मै.।

१. लाति लातः लान्ति। २. **प्र.** ललौ ललतुः ललुः। **म.** ललिथ-ललाथ ललथुः लल। **उ.** ललौ ललिव ललिम। ३. लाता। ४. लास्यति। ५. लातु-लातात्। ६. अलात्। ७.

१ 'आतो युच्' (३-३-१२८) इति ईषदाद्युपपदेषु खलपवादो युच्।
२ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तिच्। पुंल्लिङ्गोऽयम्। सम्पातिः = जटायुभ्राता।
३ 'पातेर्डतिः' (द.उ. १-२७) इति डति प्रत्ययः पातीति पतिः = नायकः, रक्षकश्च।
४ औणादिके (द.उ. २-३) तृन् प्रत्यये, तृच् प्रत्यये वा रूपम्। तत्र (द.उ. २-३) निपातनात् धातोरित्वम्। पातीति पिता = जनकः।
५ 'पानीविषिभ्यः पः' (द.उ. ७-२) इति पप्रत्यये रूपम्। दुर्जनैः पायते इति पापम् = कायवाङ् मनोदुश्चरितम्।
६ 'पातेर्डुम्सुन्' (द.उ. ९-४८) इति डुम्सुन् प्रत्यये, टिलोपे च रूपम्। पातीति पुमान् = नरः।
७ 'पातेर्बले जुट् च' उदके थुट् च, अन्ने च' (द.उ. ९-५३-५) इति बलेऽभिधेये जुडागमे पाजः = अग्निः, जलेऽभिधेये अन्ने च, थुडागमे पाथः = जलमन्नं च।
८ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि क प्रत्ययः। 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः। स्त्रियामदन्तलक्षणे टापि। सुरा = मद्य विशेषः।
९ धियं राति = आदत्ते इति धीरः। कर्मणि उपपदे, 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्तरि कप्रत्ययः। एवमेव मुद्रः इत्यादिष्वपि ज्ञेयम्।
१० 'आतो युच्' (३-३-१२८) इति ईषदाद्युपदेषु खलपवादो युच्। णत्वम्।
११ 'कृतधारा–' (द.उ. ३-१८) इति कन् प्रत्ययः। राका = पूर्णिमारूपकालविशेषः।
१२ 'राशदिभ्यां त्रिप्' (द.उ. १-३६) इति त्रिप् प्रत्ययः। रात्री इति तु 'कृदिकारादक्तिनः' (ग.सू. ४-१-४५) इति ङीषि बोध्यम्।
१३ 'राते डैः' (द.उ. २-१०) इति डैप्रत्ययः। एजन्तेऽपि, कृन्मेजन्तः' (१-१-३९) इति नास्याव्ययत्वम्। 'च्विरव्ययम्' (द.उ. २-१३) इत्यनेन सूत्रेण च्विप्रत्ययान्तस्यैवाव्ययत्वमुणादिषु, नान्यस्येति नियमेन ज्ञापनात्।

लायात् लायाताम्। ८. लायात् लायास्ताम् लायासुः। ९. अलासीत्। १०. अलास्यत्। **णिचि**—विलालयति-ते-विलापयति-ते।

**कृत्सु**—लायकः[१]-यिका, लापकः[२]-पिका, लालकः[३] (घृतस्य) लिलासकः-सिका, लालायकः-यिका, लाता-त्री, लापयिता-त्री, विलालयिता-(घृतम्), लालः, लायः, लापः, कृपालुः[४], स्पर्धालुः,[५] व्यालः[६], छायालः, बहुलम्[७]। शेषं 'राति' (१०५६) वत्।

**(१०५९) दाप्—लवणे**। (काटना, कतराना)। सक.। अनि.। परस्मै.। दाति दातः दान्ति। इत्यादि 'याति' (१०४९) वत्।

**(१०६०) ख्या—प्रकथने**। (प्रख्यात करना, कहना, व्याख्यान करना)। **अभि**—चमकना, **आ**—कीर्तिमान होना, **वि**—प्रख्यात होना, **सु**—पसन्द होना, **प्रत्या**—खण्डन करना, **सम्**—गिनना, **समा**—संज्ञा देना, नाम रखना। सकर्म.। अनिट्। परस्मै.।

१. ख्याति ख्यातः ख्यान्ति। २. **प्र.** चख्यौ चख्यतुः चख्युः। **म.** चख्यिथ-चख्याथ चख्यथुः चख्य। **उ.** चख्यौ चख्यिव चख्यिम। ३. ख्याता ख्यातारौ ख्यातारः। ४. ख्यास्यति। ५. **प्र.** ख्यातु-ख्यातात् ख्याताम् ख्यान्तु। **म.** ख्याहि-ख्यातात् ख्यातम् ख्यात। **उ.** ख्यानि ख्याव ख्याम। ६. **प्र.** अख्यात् अख्याताम् अख्युः-अख्यान्। **म.** आख्यः अख्यातम् अख्यात। **उ.** अख्याम् अख्याव अख्याम। ७. **प्र.** ख्यायात् ख्यायाताम् ख्यायुः। **म.** ख्यायाः ख्यायातम् ख्यायात। **उ.** ख्यायाम् ख्यायाव ख्यायाम। ८. **प्र.** ख्येयात् ख्येयास्ताम् ख्येयासुः। **म.** ख्येयाः ख्येयास्तम् ख्येयास्त। **उ.** ख्येयासम् ख्येयास्व ख्येयास्म। पक्षे—ख्यायात् ख्यायास्ताम् इत्यादि। ९. **प्र.** अख्यत् अख्यताम् अख्यन्। **म.** अख्यः अख्यतम् अख्यत। **उ.** अख्यम् अख्याव अख्याम। १० **प्र.** अख्यास्यत् अख्यास्यताम् अख्यास्यन्। **म.** अख्यास्यः अख्यास्यतम् अख्यास्त। **उ.** अख्यास्यम् अख्यास्याव अख्यास्याम।

**कर्मणि**—ख्यायते। **णिचि**—ख्यापयति-ते। **सनि**—चिख्यासति। **यङि**—चाख्यायते। **यङ्लुकि**—चाख्यति-चाख्याति। **कृत्सु**—ख्यातुम्, ख्यानम्, ख्यात्वा, प्रख्याय, ख्यातव्यम्, ख्यानीयम्, ख्येयम्, ख्यातः, ख्यान्, ख्याती-ख्यान्ती।

**(१०६१) प्रा—पूरणे**। (भरना, तृप्त होना)। सक.। अनि.। परस्मै.। प्राति प्रातः

१ 'आतो युक् चिण्कृतोः' (७-३-३३) इति आकारान्तस्याङ्गस्य युगागमे रूपमेवम्। एवं घञ्णमुल्प्रभृतिष्वपि ज्ञेयम्।
२ 'अर्तिह्री–' (७-३-३६) इति पुगागमे रूपमेवम्। ण्यन्ते सर्वत्र एवमेव ऊह्यम्।
३ 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' (७-३-३९) इति णौ परतः स्नेहविपातनेऽर्थे पक्षे लुगागमे रूपमेवम्। स्नेहवितानादन्यत्र पुगेव। स्नेहविपातनं नाम घनीभूतस्य स्नेहपदार्थस्य विलापनम्।
४ 'कृपां लातीति वृत्तौ मितद्र्वादित्वात्' (वा. ३-२-१८०) डप्रत्यये रूपमेवम्। कृपालुः इति तु कृपधातोरालुचि निष्पन्नं शब्दान्तरम्।
५ 'स गान्दिनीभूरथ गोकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनम्।' (धा.का. १-२)
६ 'आतश्चोपसर्गे' (३-१-१३६) इति वि आङ् इति उपसर्गयोः उपपदयोः कप्रत्ययः।
७ बहूनर्थान् लातीति बहुलम्। 'आतश्चोपसर्गे कः' (३-२-३) इति कर्मणि उपपदे कप्रत्ययः। अणोऽपवादः।

प्रान्ति। इत्यादि 'याति' (१०४९) वत्। प्रायः[१], प्रान्[२]-प्रान्तौ-प्रान्तः, प्राणः[३]-प्राणवान्।

**(१०६२) मा—माने**। (नापना, तौलना)। अनुमान से सिद्ध करना, अनु—उपमा देना, **परि**—नापना, तौलना, **प्र**—प्रमाण देना। अकर्म.। सेट्। परस्मै.।

१. माति मातः मन्ति। २. **प्र.** ममौ ममतुः ममुः। **म.** ममिथ-ममाथ ममथुः मम। **उ.** ममौ ममिव ममिम। ३. माता मातारौ मातारः। ४. मास्यति। ५. **प्र.** मातु-मातात् माताम् मान्तु। **म.** माहि-मातात् मातम् मात। **उ.** मानि माव माम। ६. **प्र.** अमात् अमाताम् अमान्-अमुः। **म.** अमाः अमातम् अमात। **उ.** अमाम् अमाव अमाम। ७. मायात्-मायातात् मायाताम् मायुः। ८. **प्र.** मेयात् मेयास्ताम् मेयासुः। **म.** मेयाः मेयास्तम् मेयास्त। **उ.** मेयासम् मेयास्व मेयास्म। पक्षे— मायात् मायास्ताम् इत्यादि। ९. **प्र.** अमासीत् अमासिष्टाम् अमासिषुः। **म.** अमासीः अमासिष्टम् अमासिष्ट। **उ.** अमासिषम् अमासिष्व अमासिष्म। १०. अमास्यत्।

**कृत्सु**—मायकः[४]-यिका, मापकः[५]-पिका, मित्सकः[६]-त्सिका, मेमीयकः[७]-यिका, माता-त्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री, निर्मान्[८]-न्ती-ती, मापयिष्यन्-न्ती-ती, मित्सिष्यन्-न्ती-ती, मापयमानः, मापयिष्यमाणः, प्रमी-प्रम्यौ-प्रम्यः, मितम्[९]-तः-तवान्, मापितः, मित्सितः, मेमीयितः-तवान्, प्रमः[१०], मायः[११], माया-मायावी-मायिकः-मायी, धान्यमायः[१२], मापः, मित्सुः, मेम्यः[१३], मातव्यम्, मापयितव्यम्, प्रनिमानीयम्[१४]-प्रणिमानीयम्, मापनीयम्,

१ 'श्याऽऽद्व्यध–' (३-१-१४१) इत्यादिना कर्तरि णप्रत्यये युगागमे रूपमेवम्।

२ शतरि, शपि, 'अदि प्रभृतिभ्यः–' (२-४-७२) इति शपो लुकि, 'पदान्तस्य' (८-४-३७) इति निषेधात् णत्वं नेति ज्ञेयम्।

३ 'संयोगादेरातो धातोर्यण्वतः' (८-२-४३) इति निष्ठानत्वे, णत्वे च रूपम्।

४ ण्वुलि 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमः। एवं घञ्णमुलादिष्वपि ज्ञेयम्।

५ ण्यन्ते सर्वत्र 'अर्तिह्रीव्ली–' (७-३-३६) इति आदन्तलक्षणे युगागमे रूपमेवम्।

६ 'सनि मीमाघु–' (७-४-५४) इत्यादिना इस्भावे, 'अत्र लोपोऽभ्यासस्य' (७-४-५८) इत्यभ्यासलोपे 'सः स्यार्धधातुके' (७-४-४९) इति सकारस्य तकारे, 'हलन्ताच्च' (१-२-१०) इति सनः कित्वेन गुणाभावे च रूपमेवम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

७ यङन्ते सर्वत्र, 'घुमास्था–' (६-४-६६) इतीकारे, 'गुणो यङ्लुकोः' (७-४-८२) इत्यभ्यासे गुणः।

८ शतरि, अदादित्वेन शपो लुकि, सवर्णदीर्घे, 'आच्छीनद्योर्नुम्' (७-१-८०) इति स्त्रियां नुम्विकल्पे च मिमान्ती-मिर्माती इति रूपद्वयम्।

९ 'द्यतिस्यतिमास्यथाम् इत् ति किति' (७-४-४०) इति क्तप्रत्यये परतः प्रकृतेः इकारः। गुणनिषेधः। एवं क्त्वाक्तिन् प्रभृतिष्वपीकारो बोध्यः।

१० 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः। 'आतोलोप इटि च' (६-४-६४) इत्याकारलोपः।

११ 'श्याऽऽद्व्यध–' (३-१-१४१) इत्यादिना कर्तरि आदन्तलक्षणे ण प्रत्ययः। 'आतो युक् चिण् कृतोः' (७-३-३३) इति युगागमः। स्त्रियां टापि माया इति सिद्ध्यति। माया शब्दात् मत्वर्थीये विनिप्रत्यये मायावी इति, व्रीह्यादित्वात् (५-२-११६) इनिन् प्रत्ययोश्च मायी मायिकः इति च रूपाणि सिद्ध्यन्ति।

१२ कर्मण्युपपदे कर्तरि, 'ह्वावामश्च' (३-२-२) इत्यण् प्रत्यये युगागमे च रूपमेवम्। 'आतोऽनुपसर्गे कः'। (३-२-३) इति प्राप्तस्य कप्रत्ययस्यापवादः।

१३ यङन्तात् पचाद्यचि (३-१-१३४), 'यङोऽचि च' (२-४-७४) इति यङो लुकि ईकारे, उत्तरखण्डे यणि च रूपमेवम्।

१४ 'शेषे विभाषा–' (८-४-१८) इति नेर्णत्वविकल्पः। 'नेर्गदनदपतदघुमा–' (८-४-१७) इत्यत्र नास्य धातोर्ग्रहणम्, अपि तु माङ्मेङोरेव ग्रहणम् इति बहवः।

मित्सनीयम्, मेमीयनीयम्, मेयम्[१], पाय्यम्[२] माप्यम्, मित्स्यम्, मीयमानः[३] माप्यमानः, मित्स्यमानः, मेमीय्यमानः, मायः, आमः[४] मापः, मित्सः, मेमीयः, मातुम्, मापयितुम्, मित्सितुम्, प्रमा[५]-उपमा-अनुमा, प्रमितिः, मापना, मित्सा, मेमीया, प्रमाणम्, मापनम्, मित्सनम्, मित्वा, मापयित्वा, प्रमाय[६], प्रमाप्य, मेरुः[७], मात्रा[८], मासः[९]।

**(१०६३) वच—परिभाषणे**। (बोलना, कहना)। द्विक.। अनि.। पर.।

१. **प्र.** वक्ति वक्तः अन्ति प्रयोगो न प्रयुज्यते। **म.** वक्षि वक्थः वक्थ। **उ.** वच्मि वच्वः वच्मः। २. **प्र.** उवाच ऊचतुः ऊचुः। **म.** उवचिथ-उवक्थ ऊचथुः ऊच। **उ.** उवाच-उवच ऊचिव ऊचिम। ३. वक्ता वक्तारौ वक्तारः। ४. वक्ष्यति। ५. **प्र.** वक्तु वक्तात् वक्ताम् वचन्तु। **म.** वग्धि-वक्तात् वक्तम् वक्त। **उ.** वचानि वचाव वचाम। ६. **प्र.** अवक्-ग् अवक्ताम् अवचन्। **म.** अवक्-ग् अवक्तम् अवक्त। **उ.** अवचम् अवच्व अवच्म। ७. **प्र.** वच्यात् वच्याताम् वच्युः। **म.** वच्याः वच्यातम् वच्यात। **उ.** वच्याम् वच्याव वच्याम। ८. **प्र.** उच्यात् उच्यास्ताम् उच्यासुः। **म.** उच्याः उच्यास्तम् उच्यास्त। **उ.** उच्यासम् उच्यास्व उच्यास्म। ९. **प्र.** अवोचत् अवोचताम् अवोचन्। **म.** अवोचः अवोचतम् अवोचत। **उ.** अवोचम् अवोचाव अवोचाम। १०. **प्र.** अवक्ष्यत् अवक्ष्यताम् अवक्ष्यन् इत्यादि।

**कर्मणि**—उच्यते। २. ऊचे। ९. अवाचि। **णिचि**—वाचयति-ते। **सनि**—विवक्षिति। **यङि**—वावच्यते। **यङ्लुकि**—वावचीति-वावक्ति। **कृत्सु**—वाचकः-चिका, णिचि—वाचकः-चिका, विवक्षकः-क्षिका, वावचकः-चिका, वक्ता-वक्त्री, वाचयिता-त्री, विवक्षिता-त्री, वावचिता-त्री, वचन्-न्ती, वाचयन्-न्ती, विवक्षन्-न्ती, वक्ष्यन्-न्ती-ती, वाचयिष्यन्-न्ती-ती, विवक्षिष्यन्-न्ती-ती। वाच्यमानः, वाचयिष्यमानः, विवक्षमाणः, विवक्षिष्यमाणः। उक्तः, उक्तिः, वक्तुम्, वक्तव्यम्, उक्त्वा, प्रोच्य, वाच्यम्, पदसमुदाये वाक्यम्, निरुक्तिः, वक्ष्यमाणः, वाक्, विवक्षा, विवक्षुः, विवक्षितः, निर्वचनम्, अनुवाकः, प्रत्युक्तः, प्रतिवाक्यम्।

---

१ यति परे 'ईद् यति' (६-४-६५) इति ईकारे गुणे च रूपमेवम्।

२ माने = परिमाणेऽभिधेये 'पाय्यसान्नाय्यनिकाय्यधाय्यमानहविर्निवाससामिधेनीषु' (३-१-१२९) इत्यनेन ण्यदायादेशौ आदेः पकारश्च निपात्यते।

३ यगन्ताच्छानशि ईकारे मीयमानः इति सिद्ध्यति।

४ आः समन्तात् मीयतेऽत्रेति आमः = अपक्कपदार्थः अधिकरणे 'घञर्थे कविधानम्—' (वा. ३-३-५८) इति कप्रत्यये आकारलोपे रूपमेवम्।

५ स्त्रियां भावादौ, 'आतश्चोपसर्गे' (३-३-१०६) इति क्तिन्नपवादोऽङ् प्रत्ययः। 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपे अदन्तत्वेन टापि प्रमा, उपमा इत्यादिकं सिद्ध्यति। प्रमितिः, उपमितिः, अनुमितिः इत्यादयस्तु बाहुलकात् क्तिनि सिद्ध्यतीति ज्ञेयम्।

६ समासे क्त्वाप्रत्ययस्य ल्यबादेशे 'न ल्यपि' (६-४-६९) इत्याकालनिषेधः।

७ 'मापो रुरी च' (द.उ. १-५७) इति रुप्रत्यये ईकारे चान्तादेशे गुणे रूपमेवम्। मतिसूर्येन्दुभ्यामिति मेरुः = सुरगिरिः।

८ 'हयामा—' (द.उ. ८-८४) इति त्रन् प्रत्यये रूपमेमव्। मीयतेऽनेनेति मात्रा = अल्पपरिमाणम्।

९ मातीत्यर्थे 'मासश्च' (द.उ. ९-२७) इति सप्रत्ययो निपात्यते। मासः = त्रिंशद्दिनपरिच्छिन्नः कालविशेषः।

**(१०६४) विद**—ज्ञाने। (समझना, जानना, दुःखी होना, ध्यान करना, मनन करना)। (संविते)। सक.। सेट्। परस्मै.।

१. **प्र.** वेद विदतुः विदुः। **म.** वेत्थ विद्थुः विदुः। **उ.** वेद [illegible] विद्म। **'विदो लटो वा'** वेत्तेर्लटः परस्मैपदानां णलादयों वा स्युः। इति णलोऽभावपक्षे– **प्र.** वेत्ति वित्तः विदन्ति। **प्र.** वेत्सि वित्थः वित्थ। **उ.** वेद्मि विद्वः विद्मः। २ विदाञ्चकार विदाञ्चक्रतुः विदाञ्चक्रुः। इत्यादि **'उषविदजागृभ्योऽन्यतरस्याम्'** इति वा आम्। **इत्यामभावपक्षे**– २. **प्र.** विवेद विविदतुः विविदुः। **म.** विवेदिथ विविदथुः विविद। **उ.** विवेद विविदिव विविदिम। ३. **प्र.** वेदिता वेदितारौ वेदितारः। **म.** वेदितासि वेतास्थः वेदितास्थ। **उ.** वेदितास्मि वेदितास्वः वेदितास्मः। ४. वेदिष्यति। ५. **प्र.** विदाङ्करोतु विदाङ्कुरुताम् विदाङ्कुर्वन्तु इत्यादि। पक्षे– **प्र.** वेत्तु- वित्तात् वित्ताम् विदन्तु। **म.** विद्धि-वित्तात् वित्तम् वित्त। **उ.** वेदानि वेदाव वेदाम। ६. **प्र.** अवेत्-द् अवित्ताम् अविदुः। **म.** अवेः-अवेत् अवित्तम् अवित्त। **उ.** अवेदम् अविद्व अविद्म। ७. **प्र.** विद्यात् विद्याताम् विद्युः **म.** विद्याः विद्यातम् विद्यात। **उ.** विद्याम् विद्याव विद्याम। ८. **प्र.** विद्यात् विद्यास्ताम् विद्यासुः। **म.** विद्याः विद्यास्तम् विद्यास्त। **उ.** विद्यासम् विद्यास्व विद्यास्म। ९. **प्र.** अवेदीत् अवेदिष्टाम् अवेदिषुः। **म.** अवेदीः अवेदिष्टम् अवेदिष्ट। **उ.** अवेदिषम् अवेदिष्व अवेदिष्म। १०. **प्र.** अवेदिष्यत् अवेदिष्यताम् अवेदिष्यन्। **म.** अवेदिष्यः अवेदिष्यतम् अवेदिष्यत। **उ.** अवेदिष्यम् अवेदिष्याव अवेदिष्याम।

**सम्पूर्वः आत्मनेपदे**—१. **प्र.** संवित्ते संविदाते संविदते-संविद्रते। **म.** संवित्से। **उ.** संविदे। २. **प्र.** संविविदे संविविदाते संविदिरे। **म.** संविदिषे। **उ.** संविविदे संविदिवहे संविदिमहे। ३. संवेदिता। ४. संवेदिष्यते। ५. **प्र.** संवित्ताम् संविदाताम् संविदताम्- संविद्रताम्। **म.** संवित्स्व। **उ.** संविदै। ६. **प्र.** समवित्त समविदाताम् संविदत-समविद्रत। **म.** समवित्थाः। **उ.** समविदि। ७. **प्र.** संविदित संविदीयाताम् संविदीरन्। ८. संवेदिषीष्ट। ९. समवेदिष्ट। १०. समवेदिष्यत।

**कर्मणि**—विद्यते। २. विविदे। ९. अवेदि। **णिचि**—वेदयति। **सनि**—विविदिषति। **यङि**—वेविद्यते। **यङ्लुकि**—वेवेत्ति-वेविदीति। **कृत्सु**—आवेदकः-दिका, **णिचि**—वेदकः-दिका, विविदिषकः[1]-षिका, वेविदकः- दिका, वेदित्ता-त्री, वेदयिता-त्री, विविदिषिका-त्री, वेविदिता-त्री, विदन्[2]-न्ती, विद्वान्[3]-विदुषी, निवेदयन्[4]-न्ती, वेदयः[5], विविदिषन्-न्ती, वेदिष्यन्-न्ती-ती, वेदयिष्यन्-न्ती, संविदानः[6], वेदयमानः, संविविदिषमाणः, वेविद्यमानः,

१ सनि 'रलो व्युपधात्–' (१-२-२६) इत्यादिना कित्वविकल्पे प्राप्ते 'रुदविद–' (१-२-८) इति नित्यं कित्वं भवति। तेन सन्नन्ते सर्वत्र एकमेव रूपम्।

२ शतरि 'विदेः शतुर्वसुः' (७-१-३६) इति सूत्रात् शतुः वस्वादेशविकल्पः। वस्वादेशपक्षे विद्वान इति तदभावे विदन् इति च रूपम्। नित्यं वसुरित्यादेश इति केषाञ्चिन् मतम्। काशिकादिषु तु वैकल्पिकमिति स्पष्टम्।

३ 'विद्वान् उपनिष्ट च तान् स्वकाले यतिर्वशिष्ठो यमिनां वरिष्ठः।' (भ.का. १-१५)।

४ स्पष्टं बहिः स्थितिवतेऽपि निवेदयन्तः–' (शि.व. ५-९७)

५ ण्यन्तात् 'अनुपसर्गाल्लिम्पविन्द–' (३-१-१३८) इति शप्रत्यये शपि गुणायादेशौ। वेदयतीति वेदयः।

६ 'विदिप्रच्छिस्वरतीनाम्' (वा. १-३-२९) इति संपूर्वकात् विदेः आत्मनेपदं भवति।

संवेदिष्यमाणः, वेदयिष्यमाणः, मन्त्रवित्,[१] ब्रह्मवित्, शास्त्रवित्, वेदवित्, अनिर्विदा, विदितम्-तः-तवान्, वेदितः, विविदिषितः, वेविदितः-तवान्, विदः, विन्दुः,[२] विदुरः,[३] सार्ववेद्यः, चतुर्वेदः, विविदिवान्[४]-विविद्वान्-चतुर्वेदी, पराशयवेदी, धनुर्वेदी, वैदिकः, वेदः, वैदनः,[५] आवेदितव्यम्, वेदयितव्यम्, आवेदनीयम्, **णिचि**—वेदनीयम्, वेद्यम्, त्रैविद्यः, वेद्यमानः, वेदयमानः, विविदिषमाणः, वेविद्यमानः, वेदः,[६] विविदिषः, वेविदः, वेदितुम्, वेदयितुम्, वित्तिः,[७] विदा, विद्या,[८] वेदना,[९] विविद्विषा, वेदनम्, विदित्वा,[१०] वेदयित्वा, आवेद्य, प्रवेद्य, वेदिः,[११] विदथः,[१२] नवेदाः,[१३] निश्ववेदाः,[१४] ब्राह्मणवेदं[१५] (भोजयति)।

**(१०६५) अस—भुवि**। (होना, रहना)। अकर्म.। सेट्। परस्मै.।

१. **प्र.** अस्ति स्तः सन्ति। **म.** असि स्थः स्थ। **उ.** अस्मि स्वः स्मः। २. **प्र.** बभूव बभूवतुः बभूव इत्यादि। ३. भविता। ४. भविष्यति। ५. **प्र.** अस्तु-स्तात् स्ताम् सन्तु। **म.** एधि-स्तात् स्तम् स्त। **उ.** असानि असाव असाम। ६. **प्र.** आसीत् आस्ताम् आसन्। **म.** आसीः आस्तम् आस्त। **उ.** आसम् आस्व आस्म। ७. **प्र.** स्यात् स्याताम् स्युः। **म.** स्याः स्यातम् स्यात। ३. स्याम् स्याव स्याम। ८. **प्र.** भूयात् भूयास्ताम् भूयासुः। इत्यादि। ९. **प्र.** अभूत् अभूताम् अभूवन् इत्यादि। १०. अभविष्यत्। भावे, णिचि, सनि, यङि, यङ्लुकि च 'भवति' (१) वत्।

---

१ 'सत्सूद्विषद्रुहयुजविद—' (३-२-६१) इति क्विप् प्रत्यये रूपमेवम्।

२ 'विन्दुरिच्छुः' (३-२-१६९) इति तच्छीलादिषु कर्तृषु उप्रत्यये, निपातनात् नुमागमे च रूपमेवम्। वेदनशीलो विन्दुः। पवर्गीयस्तु 'विदि अवयवे' इति धातोः 'मृगय्वादिभ्यः' (द.उ. १-१२१) इति कौ बोध्यः इति बृहच्छन्देन्दुशेखरे।

३ 'विदिभिदिच्छिदेः कुरच्' (३-२-१६२) इति कुरच् प्रत्यये रूपमेवम्। 'ज्ञाता तु विदुरो विन्दुः' इत्यमरः। अत्र सूत्रे ज्ञानार्थ एव न्यासे गृहीतः।

४ क्वसु प्रत्यये, 'विभाषा गमहनविदविशाम्' (७-२-६८) इति विकल्पेन इडागमो भवति। विविदिवान् - विविद्वान् इति रूपद्वयम्।

५ विदन्नेव वैदनः, 'प्रज्ञादिभ्यश्च' (५-४-३८) इति स्वार्थेऽण्प्रत्ययः। एतेनापि विदेः शतुर्वसुः' (७-१-३६) इति वसुविकल्पः सिद्धः। अन्यथा अणः प्रकृतिभूतस्य विदन् इति शत्रन्तस्यासिद्धेरित्यवधेयम्।

६ वेत्ति अनेनेति 'हलश्च' (३-३-१२१) इति करणे घञ्।

७ 'मन्त्रे वृषेषपचमनविद—' (३-३-९६) इति स्त्रियां भावे क्तिन् प्रत्ययः।

८ त्रिदन्त्यनया इति विद्या, 'संज्ञायां समजनिषदनिपतमनविद—' (३-३-९९) इति स्त्रियां भावे क्यप्प्रत्ययः।

९ 'घटिवन्दिविदिभ्यश्च' (वा. ३-३-१०७) इति स्त्रियां युच् प्रत्ययः।

१० क्त्वायां 'रलो व्युपधात्—' (१-२-२६) इति वैकल्पिककित्वे प्राप्ते 'रुदविद—' (१-२-८) इत्यादिना नित्यं कित्वम्। तेन एकमेव रूपम् इति ज्ञेयम्।

११ 'हृपिशिरुहिवृतिविदि—' (द.उ. १-४७) इति इन् प्रत्ययः वेत्ति विन्दति विद्यते वा वेदिः = त्रेताग्न्यधिष्ठानम्।

१२ 'रुदिविदिभ्यां कित्' (द.उ. ६-४१) इति अथ प्रत्यये रूपमेवम्। वेत्तीति विदथः = ज्ञानी।

१३ 'नभ्राण्नपान्नवेदा—' (६-३-७१) इति निपातनात् न वेत्तीति नवेदाः इति असुन् प्रत्ययान्तोऽयम्।

१४ 'विदिभुजिभ्यां विश्वे' (द.उ. ९-९८) इति विश्वशब्द उपपदे असिप्रत्ययः। विश्ववेदाः = हुताशनः।

१५ 'कर्मणि दृशिविदोः साकल्ये' (३-४-२९) इति कर्मण्युपपदे साकल्यविशिष्टेऽर्थे धातोः णमुल्प्रत्ययो भवति। ब्राह्मणवेदं भोजयति इत्यस्य यं यं ब्राह्मणं = ब्राह्मणत्वेन जानाति लभते विचारयति वा तान् सर्वान् भोजयतीत्यर्थः।

**कृत्सु**—भावकः-विका, **णिचि**—भावकः-विका, वुभूषकः-षिका, विभाषयिषकः-षिका, बोभूयकः-यिका, भविता, भावयिता, बुभूषिता, विभावयिषिता-बोभूयिता-त्री, सन्-सती, भावयन्,बुभूषन्,विभावयिषन्-न्ती,भविष्यन्,भावयिष्यन्,बुभूषिष्यन्,बिभावयिष्यन्-न्ती-ती, व्यतिषाणः, भावयमानः, भावयिष्यमाणः, बोभूयमानः, बोभूयिष्यमाणः, भूः, भुवौ-भुवः। भूतः-तम्-तवान्, भावितः, बुभूषितः, भवः, भावः, बुभूषुः, विभावयिषुः, बोभूयः, भवितव्यम्, भावयितव्यम्, बुभूषितव्यम्, भवनीयम्-प्रभवनीयम्, प्रभावनीयम्, बुभूषणीयम्, भव्यम्, अवश्यभाव्यम्,भूयमानः,भाव्यमानः,बुबूष्यमाणः,भूतिः,भावना,बुभूषा,विभावयिषा,बोभूया। इत्यादि 'भवति' (१) वत्।

**(१०६६) मृजू—शुद्धौ**। (धोना, स्वच्छ करना, **अप-प्र**—सफा करना, झारना, बुहारना, स्वच्छ करना, पवित्र करना।) सकर्म.। वेट्। परस्मै.।

१. **प्र.** मार्ष्टि[1] मृष्टः मृजन्ति मार्जन्ति[2]। **म.** मार्क्षि मृष्ठः मृष्ठ। **उ.** मार्ज्मि मृज्वः मृज्मः। २. **प्र.** ममार्ज ममार्जतुः ममृजतुः ममार्जुः-ममृजुः। **म.** ममार्जिथ-ममार्ष्ठ ममार्जथुः-ममृजथुः ममार्ज-ममृज। **उ.** ममार्ज ममृजिव-ममार्जिव-ममृज्व ममृजिम-ममर्जिम-ममृज्म। ३. **प्र.** मार्जिता-मार्ष्टा। ४. मार्जिष्यति-मार्क्ष्यति। ५. **प्र.** मार्ष्टु-मृष्टात् मृष्टाम् मृजन्तु-मार्जन्तु। **म.** मृड्ढि-मृष्टात् मृष्टम् मृष्ट। **उ.** मार्जानि मार्जाव मार्जाम। ६. **प्र.** अमार्ट्-ड् अमृष्टाम् अमृजन्-अमार्जन्। **म.** अमार्ट्-ड् अमृष्टम् अमृष्ट। **उ.** अमार्जम् अमृज्व अमृज्म। ७. **प्र.** मृज्यात् मृज्याताम् मृज्युः। **म.** मृज्याः मृज्यातम् मृज्यात। **उ.** मृज्याम् मृज्याव मृज्याम। ८. **प्र.** मृज्यात् मृज्यास्ताम् मृज्यासुः। **म.** मृज्याः मृज्यास्तम् मृज्यास्त। **उ.** मृज्यासम् मृज्यास्व मृज्यास्म। ९. **प्र.** अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः। **म.** अमार्क्षीः अमार्ष्टम्, अमार्ष्ट। **उ.** अमार्क्षम् अमार्क्ष्व अमार्क्ष्म। **पक्षे**—अमार्जीत् अमार्जिष्टाम् अमार्जिषुः। इत्यादि। १०. **प्र.** अमार्क्ष्यत् अमार्क्ष्यताम अमार्क्ष्यन् इत्यादि। **पक्षे**—अमार्जिष्यत् अमार्जिष्यताम् अमार्जिष्यन् इत्यादि।

**कर्मणि**—मृज्यते। २. ममृजे। ९. अमार्जि। **णिचि**—मार्जयति-ते। ९. अभीमृजत-अममर्जत्। **सनि**—मिमृक्षति-मिमार्जिषति। **यङि**—मरीमृज्यते। **यङ्लुकि**—मरीमार्जीति-मरीमार्ष्टि। **कृत्सु**—मार्जकः-जिका, **णिचि**—मार्जकः-र्जिका, मिमर्जिषकः-षिका, मिमृक्षकः-क्षिका, मरिमृजकः-जिका, मार्जिता[3]-मार्ष्टा-मार्ष्टी, मार्जयिता-त्री, मिमार्जिषिता-मिमृक्षिता-त्री, मरीमृजिता-त्री, मार्जन्-मृजन्-ती, मार्जयन्-न्ती, मिमार्जिषन्-मिमृक्षन्-न्ती, मार्जिष्यन्-मार्क्ष्यन्-न्ती-ती, व्यतिमार्जनः[4], व्यतिमृजानः, मार्जयमानः, मृक्षमाणः, मरीमृज्यमानः, मर्मृज्यमानासः, कंसपरिमृट्[5]-ड् कंसपरिमृजौ-कंसपरिपरिमृजः, मृष्टम्-मृष्टः-मृष्टवान्, मार्जितः,

१ 'मृजे र्वृद्धिः' मृजेरिको वृद्धिः स्यात् धातुप्रत्यये परे।

२ 'क्ङित्यजादौ वेष्यते' इति वृद्धिर्विकल्पः।

३ तृजादिष्वप्यूदित्वादिड् विकल्पः। इडभावपक्षे, इट्पक्षेऽपि लघूपघलक्षणं गुणं वाधित्वा, 'मृजेर्वृद्धिः' (७-२-११४) इति वृद्धिः। एवमेव तव्यदादिष्वपि ज्ञेयम्।

४ 'कर्तरि कर्मव्यतीहारे' (१-३-१४) इति शानच्। वृद्धि विकल्पः।

५ कंसं परिमार्ष्टि इत्यर्थे 'क्विप् च' (३-२-७६) इति कर्मणि उपपदे क्विप्। पदान्तनिमित्तके षत्वे जश्त्वे चर्त्वविकल्पे च रूपमेवम्।

परिमार्जः, तुन्दपरिमृजः, तुन्दपरिमार्जः, परिमाक्षणुः, मार्जनः, मार्जः, मिमार्जिषुः-मिमृक्षुः, मरीमार्जः-मृजः, मार्जितव्यम्, मार्ष्टव्यम्, मार्जयितव्यम्, मार्जनीयम्, मृज्यः[१]-मार्ग्यः, अवश्यमार्ज्यः, मार्ज्यम्, मृज्यमानः, मार्ज्यमानः, मार्गः अपामार्गः,[२] मार्जितुम्-मार्ष्टुम्, मार्जयितुम्, मृजा, मृष्टिः मार्जना, परिमार्जनम्, सम्मार्जनी,[३] मार्जित्वा-मृष्ट्वा, मार्जयित्वा, विमृज्य, विमार्ज्य, मर्जूः,[४] मार्जारः,[५] मार्जालीयः[६] ।

**(१०६७) रुधिर्—अश्रुविमोचने।** (रोना, उपा—रो-रोकर शान्त करना, दूसरे के लिए रोना)। अकर्म.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | रोदिति | रुदितः | रुदन्ति | प्र. |
| | रोदिषि | रुदिथः | रुदिथ | म. |
| | रोदिमि | रुदिवः | रुदिमः | उ. |
| लिट् | रुरोद | रुरुदतुः | रुरुदुः | प्र. |
| | रुरोदिथ | रुरुदथुः | रुरुद | म. |
| | रुरोद | रुरुदिव | रुरुदिम | उ. |
| लुट् | रोदिता | रोदितारौ | रोदितारः | प्र. |
| | रोदितासि | रोदितास्थः | रोदितास्थ | म. |
| | रोदितास्मि | रोदितास्वः | रोदितास्मः | उ. |
| लृट् | रोदिष्यति | रोदिष्यतः | रोदिष्यन्ति | प्र. |
| | रोदिष्यसि | रोदिष्यथः | रोदिष्यथ | म. |
| | रोदिष्यामि | रोदिष्यावः | रोदिष्यामः | उ. |
| लोट् | रोदितु-रुदितात् | रुदिताम् | रुदन्तु | प्र. |
| | रोदिहि-रुदितात् | रुदितम् | रुदित | म. |
| | रोदानि | रोदाव | रोदाम | उ. |
| लङ् | अरोदीत्-अरोदत् | अरुदिताम् | अरुदन् | प्र. |
| | अरोदीः-अरोदः | अरुदितम् | अरुदित | म. |
| | अरोदम् | अरुदिव | अरुदिम | उ. |
| वि. लि. | रुद्यात् | रुद्याताम् | रुद्युः | प्र. |
| | रुद्याः | रुद्यातम् | रुद्यात | म. |
| | रुद्याम् | रुद्याव | रुद्याम | उ. |

१ 'मृजेर्विभाषा' (३-१-११३) इति विभाषा क्यप्। पक्षे ण्यति निष्ठयामनिट्त्वात् 'चजोः कु घिण्ण्यतोः' (७-३-५२) इति कुत्वे वृद्धौ च मार्ग्यः इति रूपम्।

२ 'हलश्च' (३-३-१२१) इति संज्ञायां घञि, कुत्वे, उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६-३-१२२) इति 'अप' इत्युपसर्गान्त्यकारस्य दीर्घे रूपमेवम्' अपमृज्यतेऽनेन व्याध्यादिभिरिति अपामार्गः = औषधविशेषः ।

३ सम्मार्जनी इति करणल्युडन्तात् स्त्रियां टित्वेन ङीपि रूपम्। सम्मार्जनी = शोधनसाधनी ।

४ 'मृजेर्गुणश्च' (द.उ. १-१६५) इत्यूप्रत्यये, वचनादेव वृद्ध्यपवादे गुणे च रूपम्। मर्जूः = शुद्धिः ।

५ 'कञ्जिमृजिभ्यां चित्' (द.उ. ८-६७) इत्यारन् प्रत्यये रूपसिद्धिः । मार्ष्टि भवनमिति मार्जारः = बिडालः ।

६ 'स्थाचतिमृजेः आलवालजालीयरः' (द.उ. १०-१) इत्यनेन यथासंख्यमालीयर् प्रत्यये रूपमेवम्। मार्ष्टि अशुभं रक्षांसि चेति मार्जालीयः = अग्निः ।

| | | | | |
|---|---|---|---|---|
| आ. लि. | रुद्यात् | रुद्यास्ताम् | रुद्यासुः | प्र. |
| | रुद्याः | रुद्यास्तम् | रुद्यास्त | म. |
| | रुद्यासम् | रुद्यास्व | रुद्यास्म | उ. |
| लुङ् | अरुदत् | अरुदताम् | अरुदन् | प्र. |
| | अरुदः | अरुदतम् | अरुदत | म. |
| | अरुदम् | अरुदाव | अरुदाम | उ. |

**पक्षे—प्र.** अरोदीत् अरोदिष्टाम् अरोदिषुः। **म.** अरोदीः अरोदिष्टम् अरोदिष्ट। **उ.** अरोदिषम् अरोदिष्व अरोदिष्म।

| | | | | |
|---|---|---|---|---|
| लृङ् | अरोदिष्यत् | अरोदिष्यताम् | अरोदिष्यन् | प्र. |
| | अरोदिष्यः | अरोदिष्यतम् | अरोदिष्यत | म. |
| | अरोदिष्यम् | अरोदिष्याव | अरोदिष्याम | उ. |

**भावे**—रुद्यते। २. रुरुदे। ९. अरोदि। **णिचि**—रोदयति-ते। **सनि**—रुरुदिषति। **यङि**—रोरुद्यते। **यङ्लुकि**—रोरुदीति रोरोत्ति। **कृत्सु**—रोदकः-दिका, **णिचि**—रोदकः-दिका, रुरुदिषकः-षिका, रोरुदकः-दिका, रोदिता-त्री, रोदयिता-त्री, रुरुदिषिता-त्री, रोरुदिता-त्री, रोदनीयम्, रोदनम्, रोदः, रोदी, रुदितः, रुप्तिः, रोदितव्यम्, रोदितुम्, रुदित्वा, विरुद्य, रोद्यम्, रुदन्, रोदिष्यन्, रुरुदिषा, रुरुदिषन्, रोरुद्यमानः, रोरुदा, रुद्रः, रुद्राणी, रुद्रा, रोदसी, शेषं भौवादिकतोहति वत्।

**(१०६८) ञिष्वप् (स्वप्)** —शये। (सोना, निद्रा लेना)।अकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | स्वपिति | स्वपितः | स्वपन्ति | प्र. |
| | स्वपिषि | स्वपिथः | स्वपिथ | म. |
| | स्वपिमि | स्वपिव | स्वपिम | उ. |
| लिट् | सुष्वाप | सुषुपतुः | सुषुपुः | प्र. |
| | सुवपिथ-सुष्वप्थ | सुषुपथुः | सुष्वप | म. |
| | सुष्वाप-सुष्वप | सुषुपिव | सुषुपिम | उ. |
| लुट् | स्वप्ता | स्वप्तारौ | स्वप्तारः | प्र. |
| | स्वप्तासि | स्वप्तास्थः | स्वप्तास्थ | म. |
| | स्वप्तास्मि | स्वप्तास्वः | स्वप्तास्मः | उ. |
| लृट् | स्वप्स्यति | स्वप्स्यतः | स्वप्स्यन्ति | प्र. |
| | स्वप्स्यसि | स्वप्स्यथः | स्वप्स्यथ | म. |
| | स्वप्स्यामि | स्वप्स्यावः | स्वप्स्यामः | उ. |

| | | | | |
|---|---|---|---|---|
| लोट् | स्वपितु-स्वपतात् | स्वपिताम् | स्वपिन्तु | प्र. |
| | स्वपिहि-स्वपतात् | स्वपितम् | स्वपित | म. |
| | स्वपानि | स्वपाव | स्वपाम | उ. |
| लङ् | अस्वपत्-अस्वपीत् | अस्वपिताम् | अस्वपन् | प्र. |
| | अस्वपीः-अस्वपः | अस्वपितम् | अस्वपित | म. |
| | अस्वपम् | अस्वपिव | अस्वपिम | उ. |
| वि. लि. | स्वप्यात् | स्वप्याताम् | स्वप्युः | प्र. |
| | स्वप्याः | स्वप्यातम् | स्वप्यात | म. |
| | स्वप्याम् | स्वप्याव | स्वप्याम | उ. |
| आ. लि. | सुप्यात् | सुप्यास्ताम् | सुप्यासुः | प्र. |
| | सुप्याः | सुप्यास्तम् | सुप्यास्त | म. |
| | सुप्यासम् | सुप्यास्व | सुप्यास्म | उ. |
| लुङ् | अस्वाप्सीत्[१] | अस्वाप्ताम् | अस्वाप्सुः | प्र. |
| | अस्वाप्सीः | अस्वाप्तम् | अस्वाप्त | म. |
| | अस्वाप्सम् | अस्वाप्स्व | अस्वाप्स्म | उ. |
| लृङ् | अस्वाप्स्यत् | अस्वपस्यताम् | अस्वपस्यन् | प्र. |
| | अस्वपस्यः | अस्वपस्यतम् | अस्वपस्यत | म. |
| | अस्वपस्यम् | अस्वपस्याव | अस्वपस्याम | उ. |

**भावे**—सुप्यते। **णिचि**—स्वापयति-ते। **सनि**—सुषुप्सति[२]। **यङि**—सोषुप्यते[३]। **यङ्लुकि**—सास्वपीति-सास्वप्ति। **कृत्सु**—स्वप्तव्यम्, स्वपनीयम्, स्वाप्यम्, स्वपनम्, स्वापः, स्वापी, स्वप्ता, स्वप्तम्, स्वाप्यम्, स्वप्स्यन्-न्ती, स्वप्तुम्, सुप्त्वा, निषुप्य, स्वापकः-पिका, णिचि—स्वापकः-पिका, सुषुप्सकः[४]-प्सिका, सोषुपकः[५]-पिका, स्वाप्त्री, स्वापयिता-त्री, सोषुपिता-त्री, सुप्तः[६], सुप्त्वा-सुप्तिः, स्वप्नः,[७] स्वप्नक्,[८] सुषुप्तः[९]-विषुप्तः-निषुप्तः-दुःषुप्तः, सुषुप्सुः-सुस्वापयिषुः[१०]। इत्यादि भौवादिकवपतिवत्।

१ 'वदव्रजे–' (७-२-३) ति वृद्धिः। अनिट्कत्वान्न सिज् लोपः।
२ 'रुदविदमुषे–' (१-२-२८) ति कित्वम्।
३ 'स्वपिस्यमिव्येञां यङि' (६-१-१९) इति सम्प्रसारणादिः।
४ 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' (१-२-८) इति सनः कित्वम्। तेन 'वचि स्वपियजादीनां किति' (६-१-१५) इति सम्प्रसारणम्। पूर्वरूपादिकम्। ततो द्विर्वचनम्। उत्तरखण्डे 'आदेशप्रत्यययोः' (८-३-५९) इति षत्वम्।
५ 'स्वपिस्यमिव्येञां यङि' (६-१-१९) इति यङन्ते सम्प्रसारणम्। पूर्ववत् अभ्यासकार्याणि।
६ 'ञीतः क्तः' (३-२-१८७) इति कर्तरि भावे च वर्तमाने क्तप्रत्ययः। निष्ठायाः कित्वात् सम्प्रसारणम्' एवं क्त्वाक्तिन्यक् प्रभृतिष्वपि बोध्यम्।
७ 'स्वपो नन्' (३-३-९१) इति भावे नन् प्रत्ययः।
८ 'सपि तृषोर्नजिङ्' (३-२-१७२) इति ताच्छीलिको नजिङि 'नज्' इत्येवावशिष्यते। जकारस्य पदान्तत्वप्रयुक्तः ककारः।
९ 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८-३-८८) इति षत्वम्। सूत्रे 'सुपि' इति कृतसम्प्रसारणनिर्देशः। तेन सम्प्रसारणयोग्यस्थलेषु यत्र 'सुप्' इति श्रवणं तत्र सर्वत्राऽपि षत्वं भवतीति बोध्यम्।
१० ण्यन्तात् सनि उप्रत्यये रूपमेतत्। अभ्यासस्य 'द्युतिस्वाप्योः–' (७-४-६७) इति सम्प्रसारणम्। स्तौतिण्योरेव षणि–' (८-३-६१) इत्युत्तरखण्डे षत्वम्।

**( १०६९ ) श्वस—प्राणने**। (सांस लेना, श्वासोच्छवास करना, जीना, जीते रहना)। **आ**—समाधान करना, आश्वासन करना, **उत्**—विवसित होना, प्रफुल्लित होना, खिलना, **निर्**—मरना, दम छोड़ना, सांस भरना, **वि**—विश्वास करना, भरोसा रखना। अक.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | श्वसिति | श्वसितः | श्वसन्ति | प्र. |
| | श्वसिषि | श्वसिथः | श्वसिथ | म. |
| | श्वसिमि | श्वसिवः | श्वसिमः | उ. |
| लिट् | शश्वास | शश्वसतुः | शश्वसुः | प्र. |
| | शश्वसिथ | शश्वसथुः | शश्वस | म. |
| | शश्वस-शश्वास | शश्वसिव | शश्वसिम | उ. |
| लुट् | श्वसिता | श्वसितारौ | श्वसितारः इत्यादि | |
| लृट् | श्वसिष्यति | श्वसिष्यतः | श्वसिष्यन्ति | प्र. |
| लोट् | श्वसितु-श्वसितात् | श्वसिताम् | श्वसन्तु | प्र. |
| | श्वसिहि-श्वसितात् | श्वसितम् | श्वसित | म. |
| | श्वसानि | श्वसाव | श्वसाम | उ. |
| लङ् | अश्वसत्-अश्वसीत् | अस्वसिताम् | अश्वसन् | प्र. |
| | अश्वसः-अश्वसीः | अश्वसितम् | अश्वसित | म. |
| | अश्वसम् | अश्वसिव | अश्वसिम | उ. |
| वि. लि. | श्वस्यात् | श्वस्याताम् | श्वस्युः | प्र. |
| | श्वस्याः | श्वस्यतम् | श्वस्यात | म. |
| | श्वस्याम् | श्वस्याव | श्वस्याम | उ. |
| आ. लि. | श्वस्यात् | श्वस्यास्ताम् | श्वस्यासुः | प्र. |
| | श्वस्याः | श्वस्यास्तम् | श्वस्यास्त | म. |
| | श्वस्यासम् | श्वस्यास्व | श्वस्यास्म | उ. |
| लुङ् | अश्वासीत् | अश्वासिष्टाम् | अश्वासिषुः | प्र. |
| | अश्वासीः | अश्वासिष्टम् | अश्वासिष्ट | म. |
| | अश्वासिषम् | अश्वासिष्व | अश्वासिष्म | उ. |
| लृङ् | अश्वसिष्यत् | अश्वसिष्यताम् | अश्वसिष्यन् इत्यादि। | |

**भावे**—श्वस्यते। २. शश्वसे। ९. अश्वसि। **णिचि**—श्वासयति। **सनि**—शिश्वसिषति। **यङि**—शाश्वस्यते। **यङ्लुकि**—शाश्वसीति-शाश्वस्ति। **कृत्सु**—श्वसनीयम्, श्वसनम्, श्वसनः, श्वासः, श्वासवः, श्वासी, श्वसिता-त्री, श्वसितः, श्वस्तिः, श्वसितव्यम्, श्वसितुम्, श्वसित्वा, विश्वास्य, श्वास्यम्, श्वसन्, श्वसिष्यन्, विश्वासितः, प्रश्वासः, निःश्वासः।

**( १०७० ) अन्**—प्राणने। (जीना, श्वासोच्छ्वास करना, समर्थ होना)। प्रायेण प्रपूर्वकोऽयम्। अकर्म.। सेट्। परस्मै.।

१. प्र. अनिति अनितः अनन्ति। म. अनिषि। उ. अनिमि। २. प्र. आन आनतुः आनुः। म. आनिथ आनथुः आन। उ. आन आनिव आनिम। ३. अनिता। ४. आनिष्यति। ५. प्र. अनितु-अनितात् अनिताम् अनन्तु। म. अनिहि-अनितात् अनितम् अनित। उ. अनानि अनाव अनाम। ६. प्र. आनत्-आनीत् आनिताम् आनत्। म. आनः-आनीः आनितम् आनित। उ. आनम् आनिव आनिम। ७. प्र. अन्यात् अन्याताम् अन्युः। म. अन्याः अन्यातम् अन्यात। उ. अन्याम् अन्याव अन्याम। ८. प्र. अन्यात् अन्यास्ताम् अन्यासुः। म. अन्याः अन्यास्तम् अन्यास्त। उ. अन्यासम् अन्यास्व अन्यास्म। ९. प्र. आनीत् आनिष्टाम् आनिषुः। म. आनीः आनिष्टम् आनिष्ट। उ. आनिषम् आनिष्व आनिष्म। १०. आनिष्यत्।

**भावे**—अन्यते। २ आने। ९ आनि। **णिचि**—प्राणयति। **सनि**—प्राणिणिषति। **कृत्सु**—आनकः-निका, **णिचि**—आनकः-निका, आनेनिषकः-षिका, अनिता-त्री, आनयिता-त्री, अनन्-ती, प्राणन्, आनयन्-न्ती, प्राणयन्, अनिनिषन्-न्ती, प्राणिष्यन्-न्ती-ती, प्राणयिष्यन्-न्ती-ती, प्राणयमानः, प्राणयिष्यमाणः, हे प्राण-प्राणौ-प्राणः, प्राणितम्-तः-तवान्, प्राणः, अनिनिषुः, प्राणिणिषुः, आनिनयिषुः, प्राणितव्यम्, प्राणयितव्यम्, प्राण्यम्, अन्यमानः, आन्यमानः, प्राणः, अपानः, व्यानः, उदानः, समानः, अनिनिषः, अनुतम्, आनयितुम्, आन्तिः, प्राणना, प्राणनम्, आननम्, अनित्वा, आनयित्वा, प्राण्य।

**( १०७१ ) जक्ष—भक्षहसनयोः।** (खाना, हंसना।) **भक्षणे सकर्मकाः।** अन्यात्राकर्मकः। परस्मै.।

१. प्र. जक्षिति जक्षितः जक्षति। म. जक्षिषि जक्षथः जक्षथ। उ. जक्षिमि जक्षिव जक्षिमः। २. जजक्ष जजक्षतुः। ३. जक्षिता। ४. जक्षिष्यति। ५. प्र. जक्षितु-जक्षितात् जक्षिताम् जक्षतु। म. जक्षिहि-जक्षितात्। उ. जक्षाणि। ६. प्र. अजक्षीत्-अजक्षत् अजक्षिताम् अजक्षुः। म. अजक्षीः-अजक्षः अजक्षितम् अजक्षित। उ. अजक्षम् अजक्षिव अजक्षिम। ७. प्र. जक्ष्यात् जक्ष्याताम्। ८. प्र. जक्ष्यात् जक्ष्यास्ताम्। ९. अजक्षीत् अजक्षिष्टाम्। १०. अजक्षिष्यत्।

**कर्मणि**—जक्ष्यते। २. जजक्ष। ९. अजक्षि। **णिचि**—जक्षयति। **सनि**—जिजक्षिषति। **यङ्**—जाजक्ष्यते। **यङ्लुकि**—जाजक्षीति-जाजष्टि। **कृत्सु**—जक्षकः-क्षिका, जिजक्षिषक-क्षिका, जाजक्षकः-क्षिका, जक्षिता-त्री, जक्षयिता-त्री, जक्षत्-ती, जक्षन्ति-जक्षति- (कुलानि), जक्षयन्-न्ती, जक्षिष्यन्-न्ती-ती, जक्षयिष्यन्-न्ती-ती, जट्-ड्-जक्षौ जक्षः, जक्षितम्-तः, जक्षः, जक्षितव्यम्, जक्षयितव्यम्, जक्षणीयम्, जक्ष्यम्, जक्ष्यमाणः, जक्षितुम्, जक्षयितुम्, जक्षा, जक्षणा, जक्षणम्, जक्षित्वा, प्रजक्ष्य।

**( १०७२ ) जागृ—निद्राक्षये।** (जागना, नींद न लेना)। अक.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | जागर्ति | जागृतः | जाग्रति | प्र. |
| | जागर्षि | जागृथः | जागृथ | म. |
| | जागर्मि | जागृवः | जागृमः | उ. |

| | | | | |
|---|---|---|---|---|
| लिट् | जजागार | जजागरतुः | जजागरुः | प्र. |
| | जजागरिथ | जजागरथुः | जजागर | म. |
| | जजागार-जजागर | जजागरिव | जजागरिम | उ. |

जागराञ्चकार जागराञ्चक्रतुः। जागरामास। जागराम्बभूव।

| | | | | |
|---|---|---|---|---|
| लुट् | जागरिता | जागरितारौ | जागरितारः इत्यादि | |
| लृट् | जागरिष्यति | जागरिष्यतः | जागरिष्यन्ति इत्यादि। | |
| लोट् | जागर्तु-जागृतात् | जागृताम् | जाग्रतु | प्र. |
| | जागृहि-जागृतात् | जागृतम् | जागृत | म. |
| | जागराणि | जागराव | जागराम | उ. |
| लङ् | अजागः[१] | अजागृताम् | अजागरुः | प्र. |
| | अजागः | अजागृतम् | अजागृत | म. |
| | अजागरम् | अजागृव | अजागृम | उ. |
| वि. लि. | जागृयात् | जागृयाताम् | जागृयुः | प्र. |
| | जागृयाः | जागृयातम् | जागृयात | म. |
| | जागृयाम् | जाजृयाव | जागृयाम | उ. |
| आ. लि. | जागर्यात् | जागर्यास्ताम् | जागर्यासुः | प्र. |
| | जागर्याः | जागर्यास्तम् | जागर्यास्त | म. |
| | जगर्यासम् | जागर्यास्व | जागर्यास्म | उ. |
| लुङ् | अजागरीत् | अजागरिष्टाम् | अजागरिषुः | प्र. |
| | अजागरीः | अजागरिष्टम् | अजागरिष्ट | म. |
| | अजागरिषम् | अजागरिष्व | अजागरिष्म | उ. |
| लृङ् | अजागरिष्यत् | अजागरिष्यताम् | अजागरिष्यन् इत्यादि। | |

**कर्मणि**—जागर्यते। ९. अजागारि। **णिचि**—जागरयति। **सनि**—जिजागरिषति। अनेकाचत्वान्न यङ्लुकौ। **कृत्सु**—जागरकः[२]-रिका, **णिचि**—जागरकः[३]-रिका, जिजागरिषकः[४]-षिका, जागरिता[५]-त्री, जागरयिता-त्री, जिजागरिषिता-त्री, जाग्रत्-त्री, जाग्रत्-ती,[६] जागरयन्-न्ती,[७] जिजागरिषन्-न्ती, जागिरष्यन्-न्ती-ती, जागरयिष्यन्-न्ती-ती, जागः

१ हल्ङ्याभ्य इति अपृक्तस्य तकारस्य लोपः।

२ 'जाग्रोऽविचिण्णल्ङित्सु' (७-३-८५) इति वृद्ध्यपवादो गुणः। एवं घञन्ते णमुलन्ते च गुण एव।

३ वृद्ध्यपवादे 'जाग्रोवि–' (७-३-८५) इति गुणे कृते, 'अत उपधायाः' (७-२-११६) इति वृद्धिरपि न भवति, गुणविधानसामर्थ्यात्। अतएव चिण्णाल् प्रतिषेधः सार्थकः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।

४ 'इको झल्' (१-२-९) इति सनः कित्वेऽपि 'जाग्रोऽविचिण्–' (७-३-८५) इति प्रतिषेधविषयत्वात् गुणो भवति। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

५ अस्य धातोरुदात्तत्वात् 'आर्धधातुकस्येड् वलादेः' (७-२-३५) इतीडागमः। एवं तव्यदादिष्वपि ज्ञेयम्।

६ शतरि 'अदिप्रभृतिभ्यः शपः' (२-४-७२) इति शपो विकरणप्रत्ययस्य लुका अपहारे, शतुः ङित्वेन गुणाभावे, 'इको यणचि' (६-१-७७) इति यणि, 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुमभावे च रूपम्। 'जक्षित्यादयः षट्' (६-१-६) इत्यभ्याससंज्ञा भवति।

७ ण्यन्तात् 'अणावकर्मकात् चित्तवत्कर्तृकात्' (१-३-१८) इति नित्यं परस्मैपदमेव।

-जागरौ-जागरः, साधुजागरी,[१] जागरुकः,[२] जजागर्वान्[३]-जजागृवान्, जजाग्राणः,[४] जजागरणः, जिजागरिषुः, जागरितव्यम्, जागरयितव्यम्, जागरणीयम्, जागर्यम्,[५] जागर्यमाणः,[६] जारितुम्, जागरयितुम्, जागरणम्, जागर्या-जागरा, जागरणा, जागरित्वा, जागरयित्वा, सञ्जागर्य, सञ्जागरय्य,[७] जागृविः[८] ।

( १०७३ ) **दरिद्रा—दुर्गतौ** । (दरिद्र होना, दुःखित होना, गरीब होना, निर्धन होना) । अक. । सेट । पर. । आकारान्तोयम् ।

| | | | | |
|---|---|---|---|---|
| लट् | दरिद्राति | दरिद्रितः | दरिद्रति | प्र. |
| | दरिद्रासि | दरिद्रिथः | दरिद्रिथ | म. |
| | दरिद्रामि | दरिद्रिवः | दरिद्रिमः | उ. |
| लिट् | ददरिद्रौ | ददरिद्रतुः | ददरिद्रुः | प्र. |
| | ददरिद्रिथ | ददरिद्रथुः | ददरिद्र | म. |
| | ददरिद्रौ | ददरिद्रिव | ददरिद्रिम | उ. |

पक्षे—दरिद्राञ्चकार । दरिद्राम्बभूव । दरिद्रामास ।

| | | | | |
|---|---|---|---|---|
| लुट् | दरिद्रिता | दरिद्रितारौ | दरिद्रितारः | प्र. |
| | दरिद्रितासि | दरिद्रितास्थः | दरिद्रितास्थ | म. |
| | दरिद्रितास्मि | दरिद्रितास्वः | दरिद्रितास्मः | उ. |
| लृट् | दरिद्रिष्यति | दरिद्रिष्यतः | दरिद्रिष्यन्ति | प्र. |
| | दरिद्रिष्यसि | दरिद्रिष्यथः | दरिद्रिष्यथ | म. |
| | दरिद्रिष्यामि | दरिद्रिष्यावः | दरिद्रिष्यामः | उ. |
| लोट् | दरिद्रातु-दरिद्रितात् | दरिद्रिताम् | दरिद्रतु | प्र. |
| | दरिद्रिहि-दरिद्रितात् | दरिद्रितम् | दरिद्रित | |
| | दरिद्राणि | दरिद्राव | दरिद्राम | उ. |
| लङ् | अदरिद्रात् | अदरिद्रिताम् | अदरिद्रुः | प्र. |
| | अदरिद्राः | अदरिद्रितम् | अदरिद्रित | म. |
| | अदरिद्राम् | अदरिद्रिव | अदरिद्रिम | उ. |

१ 'साधुकारिण्युपसंख्यानम्' (वा. ३-२-७८) इति णिनिः गुणः ।
२ 'जागरुकः' (३-२-१६५) इति तच्छीलादिषु कर्तृषु ऊकप्रत्ययः ।
३ छान्दसोऽपि क्वसुः क्वचिद् भाषायामिति पक्षे, अस्माद्धातोः लिडादेशे क्वसुप्रत्यये द्वित्वे, 'नेड् वशि कृति' (७-२-८) इतीण्णिषेधे, 'जाग्रोऽवि—' (७-३-३५) इत्य क्विन एव ग्रहणम् इत्युभ्युपगमे जजागर्वान् इति रूपम् । वकारादि प्रत्यये गुणनिषेधपक्षे जजागृवान् इति रूपम् ।
४ 'लिटः कानज् वा' (३-२-१०६) इति कानच् ।
५ 'ऋहलोर्ण्यत्' (३-१-१२४) इति ण्यति गुणे रूपम् ।
६ 'जाग्रोऽवि—' (७-३-८५) इति विहितो गुणः 'रिङ् शयग्लिङक्षु' (७-४-२८) इति प्राप्तं रिङादेशं पूर्वविप्रतिषेधाद् बाधते ।
७ ण्यन्ताल्ल्यपि गुणे 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः ।
८ 'जॄशॄस्तृजागृभ्यः क्विन्' (द.उ. १-२४) इति क्विन् प्रत्ययः । जागर्तीति जागृविः = अग्निः राजा च । अत्र क्विन् इकारः प्रयोगघटकः । न तु उच्चारणार्थः ।

| | | | | |
|---|---|---|---|---|
| वि. लि. | दरिद्रियात् | दरिद्रियाताम् | दरिद्रियुः | प्र. |
| | दरिद्रियाः | दरिद्रियातम् | दरिद्रियात | म. |
| | दरिद्रियाम् | दरिद्रियाव | दरिद्रियाम | उ. |
| आ. लि. | दरिद्र्यात् | दरिद्र्यास्ताम् | दरिद्र्यासु | प्र. |
| | दरिद्र्याः | दरिद्र्यास्तम् | दरिद्र्यास्त | म. |
| | दरिद्र्यासम् | दरिद्र्यास्व | दरिद्र्यास्म | उ. |
| लुङ् | अदरिद्रीत् | अदरिद्रिष्टाम् | अदरिद्रिषुः | प्र. |
| | अदरिद्रीः | अदरिद्रिष्टम् | अदरिद्रिष्ट | म. |
| | अदरिद्रिषम् | अदरिद्रिष्व | अदरिद्रिष्म | उ. |

पक्षे—**प्र.** अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः। **म.** अदरिद्रासीः अदरिद्रासिष्टम् अदरिद्रासिष्ट। **उ.** अदरिद्रासिषम् अदरिद्रासिष्व अदरिद्रासिष्म।

| | | | | |
|---|---|---|---|---|
| लृङ् | अदरिद्रिष्यत् | अदरिद्रिष्यताम् | अदरिद्रिष्यन् | प्र. |
| | अदरिद्रिष्यः | अदरिद्रिष्यतम् | अदरिद्रिष्यत | म. |
| | अदरिद्रिष्यम् | अदरिद्रिष्याव | अदरिद्रिष्याम | उ. |

**भावे**—दरिद्र्यते। ९ **अदरिद्रि**—अदरिद्रयि। **णिचि**—दरिद्रयति-ते। **सनि**—दिदरिद्रासति-दिदरिद्रिषति। अनेकाचत्वान्न लङ्लुकौ। **कृत्सु**—दरिद्रायकः[१]-यिका, दरिद्रकः[२]- द्रिका, दिदरिद्रिषकः[३]-षिका, दिदरिद्रासकः-सिका, दरिद्रिता-त्री, दरिद्रयिता-त्री, दरिद्रत्[४]-दरिद्रतौ-दरिद्रतः, दरिद्रयन्-न्ती, दिदरिद्रिषन्, दिदरिद्रासन्-न्ती, दरिद्रिष्यन्-न्ती-ती, दरिद्रयिष्यन्-न्ती-ती, दरिद्रयमाणाः, दरिद्रयिष्यमाणः, दरिद्[५]-दरिद्रौ-दरिद्रः,[६] दरिद्रितम्-तः, दरिद्रः, ददरिद्रवान्, दिदरिद्रिषुः-दिदरिद्रासुः, दरिद्रितव्यम्, दरिद्रयितव्यम्, दरिद्रणीयम्, दरिद्र्यम्, दरिद्र्यमाणः, दरिद्रः, दरिद्रितुम्, दरिद्रयितुम्, दरिद्रा,[७] दरिद्रणा, दरिद्राणम्,[८] दरिद्रणम्,

---

१ दरिद्राजागृदीधीङाम् एकाचां च चिरेर्जिरेः। अदन्तोर्णोतिवेवीङां स्मर्यते नेत् तथा लङेः। 'इति प्राचीनैः स्मरणात् धात्वाकारस्येत्संज्ञा न। 'दरिद्रातेरार्धधातुके लोपो वाच्यः' (वा. ६-४-११४) इत्यत्र 'आर्धधातुके' इत्यस्य विषयसप्तमीत्वादत्रापि आकारस्य लोपे प्राप्ते, 'न दरिद्रायके लोपो दरिद्रायणे न चेष्यते।' (भाष्येष्टिः ६-४-११४) इति वचनात् ण्वुलि आकारलोपे न। 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमे रूपमेवम्।

२ ण्यन्तात् ण्वुलि, णिचोऽप्यार्धधातुकत्वेन प्रत्ययोत्पत्तेः प्रागेव (णिज्विवक्षायामेव) आकालोपे रूपम्। एवं ण्यन्ते सर्वत्र आकारलोपो ज्ञेयः।

३ 'दिदरिद्रिषतीत्येके दिदरिद्रासतीति वा।' (भाष्येष्टिः ६-४-११४) इति वचनात् अस्माद्धातोः सनि इड्विकल्पो भवतीति ज्ञायते। इटपक्षे आकारलोपे, षत्वे च दिदरिद्रिषकः इति, इडभावपक्षे आकारलोपाभावे दिदरिद्रासकः इति च रूपम्। एवमेव सन्नन्ते सर्वत्र रूपद्वयोपपत्तिर्ज्ञेया।

४ शतरि, 'जक्षित्यादयः षट्' (६-१-६) इत्यभ्यस्तसंज्ञायाम्, 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे, 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुम्निषेधे रूपमेवम्।

५ क्विपि, रेफस्य संयोगान्तलोपे रूपमेवम्।

६ 'इद् दरिद्रस्य' (६-४-११४) इति निर्देशाद् औत्सर्गिके पचाद्यचि आलोपे च रूपमेवम्।

७ क्तिन् प्रत्ययविवक्षायामेवाकारलोपात् 'गुरोश्च हलः' (३-३-१०३) इत्यकारप्रत्ययः।

८ 'दरिद्राणे न चेष्यते।' इति भाष्येष्ट्या (६-४-११४) ल्युटि आकारलोपो न। अनादेशे सवर्णदीर्घे च णत्वम्।

दरिद्रित्वा, दरिद्रयित्वा, प्रदरिद्र्य, दर्द्रूः[1] ।

(१०७४) **चकासृ—दीप्तौ** । (चमकना, प्रकाशित होना) । अक. । सेट् । परस्मै. ।

| | | | | |
|---|---|---|---|---|
| लट् | चकास्ति | चकास्तः | चकासति | प्र. |
| | चकास्सि | चकास्थः | चकास्थ | म. |
| | चकास्मि | चकास्वः | चकास्मः | उ. |
| लिट् | चकासाञ्चकार | चकासाञ्चक्रतुः | चसाञ्चक्रुः इत्यादि | |

एवं—चकासामास, चकासाम्बभूव इत्यादि ।

| | | | | |
|---|---|---|---|---|
| लुट् | चकासिता | चकासितारौ | चकासितारः इत्यादि । | |
| लृट् | चकासिष्यति | चकासिष्यतः | चकासिष्यन्ति इत्यादि । | |
| लोट् | चकास्तु-तात् | चकास्ताम् | चकासतुः | प्र. |
| | चकाद्धि-चकाधि | चकास्तम् | चकास्त | म. |
| | चकासानि | चकासाव | चकासाम | उ. |
| लङ् | अचकात् | अचकास्ताम् | अचकासुः | प्र. |
| | अचकाः-अचकात् | अचकास्तम् | अचकास्त | म. |
| | अचकासम् | अचकास्व | अचकास्म | उ. |
| वि. लि. | चकास्यात् | चकास्याताम् | चकास्युः | प्र. |
| | चकास्याः | चकास्यातम् | चकास्यात | म. |
| | चकास्यम् | चकास्याव | चकास्याम | उ. |
| आ. लि. | चकास्यात् | चकास्यास्ताम् | चकास्यासुः | प्र. |
| | चकास्याः | चकास्यास्तम् | चकास्यास्त | म. |
| | चकास्यासम् | चकास्यास्व | चकास्यास्म | उ. |
| लुङ् | अचकासीत् | अचकासिष्टाम् | अचकासिषुः | प्र. |
| | अचकासीः | अचकासिष्टम् | अचकासिष्ट | म. |
| | अचकासिषम् | अचकासिष्व | अचकासिष्म | उ. |
| लृङ् | अचकासिष्यत् | अचकासिष्यताम् | अचकासिष्यन् | प्र. |

**भावे**—चकास्यते । ९. अचकासि । **णिचि**—चकासयति-ते । **सनि**—चिचकासति । **कृत्सु**—चकासितव्यम्, चकासनीयम्, चकास्यम्, चकासितः, चकासन्-न्ती-ती, चकासितुम्, चकासनम्, चकासित्वा, अभिचकास्य ।

(१०७५) **शासु—अनुशिष्टौ** । (आज्ञा करना, कहना, बोध करना, अधिकार करना, शासन करना, शासक होना) । द्विकर्म. । सेट् । परस्मै. ।

१. **प्र.** शास्ति शिष्टः शासति । **म.** शास्सि शिष्टः शिष्ट । **उ.** शास्मि शिष्वः शिष्मः । २. **प्र.** शशास शसासतुः शशासुः । **म.** शशासिथ शशासथुः शशास । **उ.** शशास शशासिव

१ 'दरिद्रातेर्यालोपश्च' (द.उ. ९-१७३) इत्यनेन ऊप्रत्यये, धात्विकारयोर्लोपे च रूपमेवम् । दरिद्रयते शरीरमनयेति दर्द्रूः = कुष्टविकारः ।

शशासिम। ३. प्र. शासिता शासितारौ शासितारः इत्यादि। ४. प्र. शासिष्यति शासिष्यतः शासिष्यन्ति। इत्यादि। ५. प्र. शास्तु-शिष्टात् शिष्टाम् शासतु। म. शाधि-शिष्टात् शिष्टम् शिष्ट। उ. शासनि शासाव शासाम। ६. प्र. अशात् अशिष्टाम् अशासुः। म. अशाः-त् असिष्टम् अशिष्ट। उ. अशासम् अशिष्व अशिष्म। ७. प्र. शिष्यात् शिष्याताम् शिष्युः। म. शिष्याः शिष्यतम् शिष्यात। उ. शिष्याम् शिष्याव शिष्याम। ८. प्र. शिष्यात् शिष्यास्ताम् शिष्यासुः। म. शिष्याः शिष्यास्तम् शिष्यास्त। उ. शिष्यासम् शिष्यास्व शिष्यास्म। ९. प्र. अशिषत् अशिषताम् अशिषन्। म. अशिषः अशिजतम् अशिषत। उ. अशिषम् अशिषाव अशिषाम। १०. प्र. अशासिष्यत् अशासिष्यताम् अशासिष्यन्। म. अशासिष्यः अशासिष्यतम् अशासिष्यत। उ. अशासिष्यम् अशासिष्याव अशासिष्याम।

**कर्मणि**—शिष्यते। ९. अशासि। **णिचि**—शासयति। **सनि**—शिशासिषति। **यङि**—शेशिष्यते। **यङ्लुकि**—शाशासीति-शाशास्ति। **कृत्सु**—शासितव्यम्, शासनीयम्, शासत्, शासर्ता, शासितुम्, शासनम्, शिष्ट्वा[१]-शासित्वा, अनुशिष्य, शिष्यः,[२] शास्यम्,[३] दुःशासनः[४]-दुश्शासः, आशीः,[५] शिष्टः,[६] शिष्टिः[७]-शास्तिः, शास्ता[८], प्रशास्ता, माणवकं शासत्,[९] मित्रशीः[१०]-आर्यशीः, संशिष्य, शासिष्यन्, कर्माणि-शिष्यमाणः, शासिष्यमाणः। शेषं अदादिक चकस्तिवत्।

**आ**—आशंसने आशीर्वादप्रार्थने। आत्मने.। सक.। प्र. आशास्ते आशासाते आशासते। म. आशास्से आशासाथे आशाध्वे। उ. आशासे आशास्वहे आशास्महे। **कर्मणि**—आशास्यते। ९. आशासि। **णिचि**—आशासयते। आशिशासत। **सनि**—आशशासिषते। **यङि**—आशाशास्यते।

---

१ 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पः। इडभावपक्षे इत्वमुपधायाः, इट्पक्षे धात्वाकारस्य उपधात्वाभावाद् नेकार इति विशेषः। अतएव षत्वमपीकाराश्रयं न भवति।

२ 'एतिस्तुशास्–' (३-१-१०९) इति क्यप्। 'शास् इदङ्हलोः' (६-४-३४) इत्युपधाया इकारः। 'शासिवासि–' (८-३-६०) इत्यादीना षत्वम्।

३ शास्यम्– इति तु 'शसु हिंसायाम्' इति भौवादिक धातोः 'हन्त्यार्थाश्च' (ग.सू. चुरादिः) इति वचनाण्णिचि, णिजन्ताद् यति ज्ञेयम्।

४ 'भाषायां शासि–' (३-३-१३०) इत्यादिना खलपवादो युच् प्रत्ययः। तस्य वैकल्पिकत्वं प्रक्रियाकौमुद्यागुक्तम्' तेन दुश्शास इति खलपीति केचित्।

५ भावे सम्पदादित्वात् (वा. ३-३-९४) क्विपि 'आशासः क्वावुपधायाः–' (वा. ६-४-३४) इति उपधाया इकारः।

६ 'यस्य विभाषा' (७-२-१५) इति इण्निषेधात् एवमेव रूपं निष्ठायाम्।

७ शिष्टिः इत्यत्र 'तितुत्र–' (७-२-९) इतीण्निषेधः। शस्तिः इति तु अस्मादेव धातोः क्तिच् प्रत्यये यद्वा, धातुनिर्देशे श्तिप्प्रत्ययो वा ज्ञेयम्। णिजन्तात् शासना इति भवति। णिजन्तादेव शास्तिः इत्यपि माधवः।

८ 'तृन्' (३-२-१३५) इति ताच्छीलिकः तृन् प्रत्ययः। प्रशास्ता इत्यपि एवमेव। प्रशास्ता = ऋत्विग्विशेषः।

९ शतरि रूपमेवम्। 'जक्षित्यादयः षट्' (६-१-६) इत्यभ्यस्तसंज्ञायाम्, 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुमिषेधः।

१० मित्राणि शास्तीति मित्रशीः। आर्यान् शास्तीति आर्यशीः। कर्तरि 'क्विप् च' (३-२-७६) इति क्विप्। अत्रापि उपधाया इकार इति विशेषः।

**(१०७६) दीधीङ्—दीप्तिदेवनयोः।** (चमकना, प्रकाशित होना, खेलना, क्रीडा करना)। दीप्तौ सक्रम.। सेट्। आत्म.।

१. दीधीते दीध्याते दीध्यते। २. दिध्याञ्चक्रे। ३. दीधिता। ४. दीधिष्यते। ५. प्र. दीधीताम् दीध्याताम्। म. दीधीष्व। उ. दीध्यै। ६. अदीधीत। ७. दीधीत दीधीयाताम्। ८. दीधिषीष्ट दिधीषीयास्ताम्। ९. अदीधिष्ट। णिचि- दीधयति।

**कृत्सु**—दीध्यकः-ध्यिका, दिदीधिषकः, दीधिता-त्री, दीधयिता-त्री, दीधयन्-न्ती, दीधयिष्यन्-न्ती-ती, दीध्यानः, दीधयमानः, दीधिष्यमाणः, दीधितम्-तः-तवान्, दीध्यः, दीधितव्यम्, दीधयितव्यम्, दीध्यनीयम्, दीध्यम्, दीध्यमानः, दीधितुम्, दीधयितुम्, दीधितिः, दीध्यनम्, दीधित्वा, दीधयित्वा, आदीध्या।

**(१०७७) वेवीङ्—गतिव्याप्तिप्रजनकान्त्यसनस्वादनेषु।** (जाना, चलना, व्याप्त होना, गर्भवती होना, इच्छा करना, भेजना, खाना, स्वाद लेना।) यथायथं सक्रर्मकोऽकर्मकश्च। सेट्। आत्मने.। वेवीते वेव्याते वेव्यते। वेव्याञ्चक्रे इत्यादि। दीधीङ् (१०७६) वत्।

**(१०७८-७९) षस-षस्ति—स्वप्ने।** (सोना)। अकर्म.। सेट्। परस्मै.। छान्दसः। सस्ति सस्तः ससन्ति। संस्ति संस्तः संसन्ति इत्यादि।

**(१०८०) वश—कान्तौ।** (इच्छा करना, चाहना) सकर्म.। सेट्। परस्मै.।

१. **प्र.** वष्टि उष्टः उशन्ति। **म.** वक्षि उष्टः उष्ट। **उ.** वश्मि उश्वः उश्मः। २. **प्र.** उवाश उशतुः ऊशुः। **म.** उवशिथ ऊशथुः ऊश। **उ.** उवाश-उवश ऊशिव ऊशिम। ३. **प्र.** वशिता वशितारौ वशितारः। **म.** वशितासि वशितास्थः वशितास्थ। **उ.** वशितास्मि वशितास्वः वसिथास्मः। ४. वशिष्यति। ५. **प्र.** वष्टु-उष्टात् उष्टाम् उशन्तु। **म.** उड्ढि-उष्टात् उष्टम् उष्ट। ३. वशानि वशाव वशाम। ६. **प्र.** अवट्-ड् औष्टाम् औशन्। **म.** अवट्-ड् औष्टम् औष्ट। **उ.** अवशम् औश्व औश्म। ७. **प्र.** उश्यात् उश्याताम् उश्युः। **म.** उश्याः उश्यातम् उश्यात। **उ.** उश्याम् उश्याव उश्याम। ८. **प्र.** उश्यात् उश्यास्ताम् उश्यासुः। **म.** उश्या उश्यास्तम् उश्यास्त। **उ.** उश्यासम् उश्यास्व उश्यास्म। ९. **प्र.** अवाशीत् अवाशिष्टाम् अवाशिषुः। **म.** अवाशीः अवाशिष्टम् अवाशिष्ट। **उ.** अवाशिषम् अवाशिष्व अवाशिष्म। **पक्षे**—अवशीत् अवशिष्टाम् अवशिषुः इत्यादि। १०. अवशिष्यत् अवशिष्यताम् अवशिष्यन् इत्यादि।

**कर्मणि**—उश्यते। ९. ऊवाशि। **णिचि**—वाशयति-ते। **सनि**—विवशिषति। **यङि**—वावश्यते। **'न वशः'** इति यङि सम्प्रसारणनिषेधः। **यङ्लुकि**—वावशीति वावष्टि। **कृत्सु**—वाशकः-शिका, णिचि-वाशकः-शिका, विवशिषकः-षिका, वावशकः-शिका, वशिता-त्री, वाशयिता-त्री, उशन्[१]-न्ती, वाशयन्-न्ती, विवशिषन्, वशिष्यन्-न्ती-ती, वाशयिष्यन्-न्ती-ती, वाशयमानः, वाशयिष्यमाणः, वावश्यमानः, उट्-उशौ उशः,

१ शतरि 'ग्रहिज्यावयि–' (६-१-१६) इति किति, ङिति च प्रत्यये, परतः सम्प्रसारणं भवति तेनैवं रूपम्। एवं क्विप् निष्ठाक्तिनादिषु च ज्ञेयम्।

उशितम्-तः-तवान्, वाशितम्-तः, विवशिषतः, वावशितः-तवान्, वशः, वशाः,[१] गोवशा,[२] वशी, वाशनः,[३] विवशिषुः, वावशः, वशितव्यम्, वाशयितव्यम्, उश्यमानः, वाश्यमानः, वशः,[४] वाशः, वशितुम्, वाशयितुम्, उष्टिः, वाशना, वशनम्, वाशनम्, वशित्वा,[५] वासयित्वा, प्रोश्य, प्रवाश्य, उशिक्,[६] उशीरिम्[७], उशना[८]।

**(१०८१) चर्करीतं च-**

**(१०८२) ह्नुङ्—अपनयने।** प्रायेणायं निपूर्वकः, अपपूर्वकोऽपि। (छिपाना, लुकाना, चुराना, ले जाना)। आ-नि- छिपाना, लुकाना। सक.। अनिट्। आत्मने.।

१. ह्नुते ह्नुवाते ह्नुवते। २. जुह्नुवे। ३. ह्नोता। ४. ह्नोष्यते। ५. ह्नुताम्। ६. अह्नुत। ७. ह्नुवीत। ८. ह्नोषीष्ट। ९. अह्नोष्ट। १०. अह्नोष्यत।

**कृत्सु**—ह्नावकः-विका, ह्नोता-त्री, ह्नावयिता-त्री, इत्यादि- 'वनुञ्' धातुवत्।

इत्यदादयः ॥ २ ॥

---

१ पचाद्यचि, तदन्तात् टापि च रूपमेवम्। वशा = मांसम्।

२ अत्र 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशा–' (२-१-६५) इत्यादिना तत्पुरुषसमासः। गोवशा = वन्ध्यागौरित्यर्थः।

३ ण्यन्तात् 'नन्दिवशि–' (वा. ३-१-१३४) इत्यादिना संज्ञायां ल्युप्रत्यये रूपमेवम्।

४ 'वशिरण्योरुपसंख्यानम्' (वा. ३-३-५८) इति भावे घञपवादोऽप् प्रत्ययः।

५ क्त्वाप्रत्यये, 'न क्त्वा सेट्' (१-२-१८) इति कित्वनिषेधात् न सम्प्रसारणम्।

६ 'वशेः कित्' (दउ. ४-९) इति वातोरिजिप्रत्यये कित्वात् सम्प्रसारणम्। वष्टि उश्यतेऽसौ श्रेयोर्थिभिरिति उशिक् = अग्न्यादिः।

७ औणादिके (दउ. ८-७३) ईरन् प्रत्यये, कित्वात् सम्प्रसारणे च रूपमेवम्। उश्यते तदिति उशीरम् = गन्धद्रव्यम्। उशीनरम् इति तु वेशविशेषवाचकं शब्दान्तरम्।

८ 'वशेः कनसिः' (दउ. ९-९९) इति कनसि प्रत्यये, कित्वात् 'ग्रहिज्या–' (६-१-१६) इत्यादिना सम्प्रसारणे रूपमेवम्। उशना = शुक्रः।

# अथ जुहोत्यादयः ( ३ )

( १०८३ ) हु—दानादनयोः। आदाने चेत्येके। प्रीणनेऽप्रीति भाष्यम्। दानञ्च वैधेऽग्नौ हावेषः प्रक्षेपः। (देना, यज्ञ करना, खाना, लेना, भक्षण करना, ग्रहण करना)। तृप्त करना। सकर्म. अनिट्। परस्मै.। उकारान्तः।

| | | | | |
|---|---|---|---|---|
| लट् | जुहोति[1] | जुहुतः[2] | जुह्वति[3] | प्र. |
| | जुहोषि | जुहुथः | जुहुथ | म. |
| | जुहोमि | जुहुवः | जुहुमः | उ. |
| लिट् | जुहवाञ्चकार | जुहवाञ्चक्रतुः | जुहवाञ्चक्रुः | प्र. |
| | जुहवाञ्चकर्थ | जुहवाञ्चक्रथुः | जुहवाञ्चक्र | म. |
| | जुहवाञ्चकार-चकर | जुहवाञ्चकृव | जुहवाञ्चकृम | उ. |

पक्षे—प्र. जुहाव[4] जुहुवतुः[5] जुहुवुः। म. जुहुविथ[6]-जुहोथ जुहुवथुः जुहुव। उ. जुहाव-जुहुव जुहुविव जुहुविम।

| | | | | |
|---|---|---|---|---|
| लुट् | होता | होतारौ | होतारः | प्र. |
| | होतासि | होतास्थः | होतास्थ | म. |
| | होतास्मि | होतास्वः | होतास्मः | उ. |
| लृट् | होष्यति | होष्यतः | होष्यन्ति | प्र. |
| | होष्यसि | होष्यथः | होष्यथ | भ. |
| | होष्यामि | होष्यावः | होष्यामः | उ. |
| लोट् | जुहोतु-जुहुतात् | जुहुताम् | जुहन्तु | प्र. |
| | जुहुधि-जुहुतात् | जुहुतम् | जुहुत | म. |
| | जुहवानि | जुहवाव | जुहवाम | उ. |
| लङ् | अजुहोत् | अजुहुताम् | अजुहवुः | प्र. |
| | अजुहोः | अजुहुतम् | अजुहुत | म. |
| | अजुहवम् | अजुहुव | अजुहुम | उ. |

१ 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) शपः श्लुः स्यात्। लोप इत्यर्थः। 'श्लौ' (६-१-१०) इति द्वित्वे, हुहु इति जाते 'कुहोश्चुः' (७-४-६२) इति अभ्यासस्य जकारे जुहु + ति इति जाते, 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इति गुणे 'जुहोति' इति।

२ जुहु + तः इति स्थिते 'सार्वधातुकमपित्' (१-२-४) इति ङित्वात् 'क्ङिति च' (१-१-५) इति गुणाभावः।

३ जुहु + झि इति स्थिते 'अदभ्यस्तात्' ( ) इति अदादेशे जुहु अति इति जाते 'हुश्नुवोः सार्वधातुके' (६-४-८७) इति यण्।

४ आमभावपक्षे— जुहु + णल इति स्थिते 'अचो ञ्णिति' (७-२-११५) इति वृद्धौ, आवादेशे च रूपमेवम्।

५ 'अचि श्नुधातु–' (६-४-७७) इति उवङ्।

६ थलि भारद्वाजनियमादिड्विकल्पः।

| | | | | |
|---|---|---|---|---|
| वि. लि. | जुहुयात् | जुहुयाताम् | जुहुयुः | प्र. |
| | जुहुयोः | जुहुयातम् | जुहयात | म. |
| | जुहुयाम् | जुहुयाव | जुहुयाम | उ. |
| आ. लि. | हूयात् | हूयास्ताम् | हूयासुः | प्र. |
| | हूयाः | हूयास्तम् | हयास्त | म. |
| | हुयासम् | हूयास्व | हूयस्म | उ. |
| लुङ् | अहौषीत्[1] | अहोष्टाम् | अहौषुः | प्र. |
| | अहौषीः | अहौष्टम् | अहौष्ट | म. |
| | अहौषम् | अहौष्व | अहौष्म | उ. |
| लृङ् | अहोष्यत् | अहोष्यताम् | अहोष्यन् | प्र. |
| | अहोष्यः | अहोष्यतम् | अहोष्यत | म. |
| | अहोष्यम् | अहोष्याव | अहोष्याम | उ. |

**कर्मणि**—हूयते । २. जुहवाञ्चक्रे । ९. अहावि अहाविषाताम्-अहोषाताम् । **णिचि**—हावयति-ते । ९. अजूहवत् । **सनि**—जुहूषति । **यङि**—जोहूयते । **यङ्लुकि**—जोहोति-जोहवीति । **कृत्सु**—होतव्यम्, हवनीयम्, हव्यम्, हाव्यम्,[2] हूतः, जुह्वत्,[3] जुह्वती, होष्यन्, होतुम्, हवनम्, हुत्वा, आहुत्य, होता[4]-त्री, हविष्यम्, जुहुः,[5] होमः,[6] होत्रम्[7]-अग्निहोत्रम्, होत्रा, हविः,[8] हूयमान ।

**(१०८४) ञिभी—भये ।** (भय करना, डरना)। अकर्म.। अनिट् । परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | बिभेति | बिभितः[9]-बिभीतः | बिभ्यति | प्र. |
| | बिभेषि | बिभिथः-बिभीथः | बिभिथ-बिभीथ | म. |
| | बिभेमि | बिभिवः-बिभीवः | बिभिमः-बिभीमः | उ. |
| लिट् | बिभयाञ्चकार | बिभयाञ्चक्रतुः | बिभयाञ्चक्रुः | प्र. |
| | बिभयाञ्चकर्थ | बिभयाञ्चक्रथुः | बिभयाञ्चक्रुः | म. |
| | बिभयाञ्चकार-चकर | बभयाञ्चकृव | बिभयाञ्चकृम | उ. |

एवं विभयाबभूव, बिभयामास इत्यादि ।

१ षष्ठो लुङ् । 'शेषाण्यहौषीत् सुतसम्पदे च' (भट्टि १/१२)।

२ 'ओरावश्यके' (३-१-१२५) इति ण्यत् । अवश्यं होतव्यं यत् देवार्हमेव हविः, तदुच्यते हाव्यम् इति । अजन्तत्वलक्षणयतोऽपवादः ।

३ शतरि, 'जुहोत्यादिभ्यः—' (२-४-७५) इति शपः श्लुः । 'श्लौ' (६-१-१०) इति द्विर्वचनम् । 'हुश्नुवोः सार्वधातुके' (६-४-८७) इत्याजादिक्ङित्प्रत्ययत्वे शतुः अत्रापि यण् । 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुम् निषेधः ।

४ 'ऋत्विक्षु चानुपसर्गस्य' (वा. ३-२-१३५) इति ताच्छीलिकस्तृन् । 'अपतृन्—' (६-४-११) इत्यादिना सर्वनामस्थाने दीर्घः । होता = ऋत्विग् विशेषः । क्षीरहोता इति तु याजकादित्वात् (२-२-९) समासे साधुः

५ 'द्युतिगमिजुहोतीनां द्वे च' (वा. ३-२-१६८) इति करणे क्विप्, द्वित्वं च । जुहन्ते अनयेति जुहुः = स्रुक् ।

६ औणादिके (द.उ. ७-२६) मन्प्रत्यये होमः = अग्नौ पूजितस्य द्रव्यस्य प्रक्षेपः ।

७ 'हुयामा—' (द.उ. ८-८४) इति त्रन् प्रत्ययः । ऋत्विग् वाचको होत्राशब्दस्तु स्वभावात् स्त्रीलिङ्गः इति 'होत्राभ्यश्छः' (५-१-१३५) इत्यत्र पदमञ्जरी ।

८ औणादिके इसिप्रत्यये रूपम् । हूयते इति हविः = देवतोद्येशेन मन्त्रसंस्कृतं दधिपय आज्यादिकं द्रव्यम् ।

९ 'भियोऽन्यतरस्याम्' (६-४-११५) इकारः स्याद्धालादौ क्ङिति सार्वधातुके ।

| | | | | |
|---|---|---|---|---|
| पक्षे— | बिभाय | बिभ्यतु:[१] | बिभ्यु: | प्र. |
| | बिभयिथ-बिभेथ | बिभ्यथु: | बिभ्य | म. |
| | बिभाय-बिभय | बिभ्यिव | बिभ्यिम | उ. |
| लुट् | भेता | भेतारौ | भेतार: | प्र. |
| | भेतासि | भेतास्थ: | भेतास्थ | म. |
| | भेतास्मि | भेतास्व: | भेतास्म | उ. |
| लृट् | भेष्यति | भेष्यत: | भेष्यन्तिच | प्र. |
| | भेष्यसि | भेष्यथ: | भेष्यथ | म. |
| | भेष्यामि | भेष्याव: | भेष्याम: | उ. |
| लोट् | बिभेतु-बिभितात् | बिभिताम् बिभीताम् | बिभ्यतु | प्र. |
| | बिभिहि-बिभितात् | बिभितम्-बिभीतम् | बिभित-विभीत | म. |
| | बिभ्यानि | बिभयाव | बिभयाम | उ. |
| लङ् | अबिभेत् | अबिभिताम्-अबिभीताम् | अबिभयु: | प्र. |
| | अबिभे: | अबिभितम्-अबिभीतम् | अबिभित-अबिभीत | म. |
| | अबिभयम् | अबिभिव-अबिभीव | अबिभिम-अबिभीम | उ. |
| वि. लि. | बिभियात् | बिभियाताम् | बिभियु: | प्र. |
| | बिभिया: | बिभियातम् | बिभियात | म. |
| | बिभियाम् | बिभियाव | बिभियाम | उ. |
| आ. लि. | भीयात् | भीयास्ताम् | भीयासु: | प्र. |
| | भीया: | भीयास्तम् | भीयास्त | म. |
| | भीयासम् | भीयास्व | भीयास्म | उ. |
| लुङ् | अभैषीत् | अभैष्टाम् | अभैषु: | प्र. |
| | अभैषी: | अभैष्टम् | अभैष्ट | म. |
| | अभैषम् | अभैष्व | अभैष्म | उ. |
| लृङ् | अभेष्यत् | अभेष्यताम् | अभेष्यन् | प्र. |
| | अभेष्य: | अभेष्यतम् | अभेष्यत | म. |
| | अभेष्यम् | अभेष्याव | अभेष्याम | उ. |

**भावे**—भीयते। ९. अभायि। **णिचि**—भापयते-भीषयते-भापयति-ते। **सनि**—बिभीषति। **यङि**—बेभीयते। **यङ्लुकि**—बेभयीति-बेभेति। **कृत्सु**—भायक:-यिका, भापक:[२]-भीषक:[३]-षिका, भायक:[४]-यिका, बिभीषक:[५]-षिका, बेभीयक:-यिका, भेता-भेत्री, भापयिता-भीषयिता-भाययिता-त्री, बिभीषिता-त्री, बेभीयिता-त्री, बिभ्यत्[६]-बिभ्यतौ-बिभ्यत:

१ 'एरनेकाच' (६-४-८२) इति यण्।
२ 'विभतेर्हेतुभये' (६-१-५६) इति विकल्पेन णावात्वे, आदन्तलक्षण: पुगागम:।
३ आत्वाभावपक्षे, 'भियो हेतुभये षुक्' (७-३-४०) इति षुगागम:।
४ अहेतुभये तु (करणादिजन्ये भये तु) णिन्निमित्तकवृद्धौ, आयादेशे च रूपमेवम्। एवमेव ण्यन्ते रूपत्रयम्।
५ सन्नन्तात् ण्वुलि, 'इको झल्' (१-२-९) इति सन: कित्वान् न गुण:। एवमुत्तरत्रापि सन्नन्तेषु ज्ञेयम्।
६ शतरि शपो जुहोत्यादित्वात् श्लौ, द्विर्वचने, अभ्यासह्रस्वे, उत्तरखण्डे यणि 'नाभ्यस्ताच्छतु:' (७-१-७८) इति नुमो निषेध:।

भाययन्[१]-न्ती, बिभीषन्-न्ती, भेष्यन्-न्ती-ती, भाययिष्यन्-न्ती-ती, बीभीषिष्यन्-न्ती-ती, भापयमानः,[२] भीषयमाणः,[३] बेभीयमानः, भापयिष्यमाणः, भीषयिष्यमाणः, बेभीयिष्यमाणः, भीः-भियौ-भियः, भीतः-भीतवान्, भापितः-भीषितः, भायितः, बिभीषितः, बेभीयितः-तवान्, भीतः,[४] वृकभीतः, भीरुः[५]-भीलुकः, भीरुकः,[६] बिभीषणः,[७] भापः-भीषः-भायः, बिभीषुः, बेभ्यः, भेतव्यम्, भापयितव्यम्-भीषयितव्यम्-भावयितव्यम्, प्रनिभयनीयम्[८]-प्रणिभयनीयम्-भापनीयम्- भीषणीयम्-भायनीयम्, बिभीषणीयम्, बेभीयनीम्, भेयम्, भाप्यम्-भीष्यम्-भाय्यम्, बिभीष्यम्, बेभीय्म, भायमानः, भाप्यमानः-भीष्यमाणः-भाय्यमानः, बिभीष्यमाणः, बेभीय्यमानः, ईषद्भयः-दुर्भयः-सुभयः, भयम्,[९] भापः-भीषः-भायः, बिभीषः, बेभीयः, भेतुम्, भापयितुम्-भीषयितुम्-भाययितुम्, बिभीषितुम्, बेभीयितुम्, भीतिः, भीः,[१०] भापना-भीषणा-भायना, भीषा[११]-जातभीषा, बिभीषा, बेभीया, भापनम्-भीषणम्, भायनम्, बिभीषणम्, बेभीयनम्, भीत्वा, भापयित्वा-भीषयित्वा-भाययित्वा, प्रभीय, प्रभाप्य-प्रभीष्य-प्रभाय्य, भेकः,[१२] भयानकः,[१३] भीमः[१४]-भीष्णः।

(१०८५) ह्री—लज्जायाम्। (लज्जित होना, शरमाना)। अकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | जिह्रेति | जिह्रीतः | जिह्रियति | प्र. |
| | जिह्रेषि | जिह्रीथः | जिह्रीथ | म. |
| | जिह्रेमि | जिह्रीवः | जिह्रीमः | उ. |

१ हेतुमये एत्वात्मनेपदविधानादत्र च अहेतु (करण) भयत्वात् ण्यन्ताच्छतैव।
२ 'भीस्म्योर्हेतुभये' (१-३-६८) इति ण्यन्तादात्मनेपदम्।
३ शत्रून् भीषयमाणं तं रामं विस्मापयेत कः। (भ.का. ५-५८)
४ 'ञीतः क्तः' (३-२-१८७) इति वर्तमाने कर्तरि क्तप्रत्ययः। वृकभीत इत्यत्र 'भयभीतभीतिभीभिरिति वक्तव्यम्। (वा. २-१-३७) इति वचनात् समासो बोध्यः।
५ तच्छीलादिषु कर्तृषु 'भियः क्रुक् लुकनौ' (३-२-१७४) इति क्रुः क्लुकन् च प्रत्ययौ भवतः। क्रमेण भीरुः-भीलुकः इति रूपे सिद्ध्यतः।
६ 'क्रुकन्नपि वक्तव्यः' (वा. ३-२-१७४) इति वचनात् क्रुकन् प्रत्यये रूपमेवम्। अयमपि ताच्छीलिकप्रत्ययः।
७ विशेषेण भीषयत इति विभीषणः। ण्यन्तात् नन्द्यादित्वात् (३-१-१३४) कर्तरि ल्युः। षुगागमः।
८ 'शेषे विभाषाऽकखादावषान्त उपदेशे' (८-४-१८) इति उपसर्गस्थान्निमित्तात् परस्य नेः णत्वविकल्पः।
९ अज्विधौ भयादीनामुपसंख्यानम्, नपुंसके क्तादिनिवृत्त्यर्थम्' (वा. ३-३-५६) इति वचनादत्र 'एरच्' (३-३-५६) इति भावेऽच् प्रत्ययः। अच् प्रत्ययान्तस्य पुंल्लिङ्गत्वं तु प्रायिकम्। अतोऽत्र नपुंसकत्वम्। वार्तिकेऽत्र 'क्तादिनिवृत्त्यर्थम्' इत्युक्तत्वात् नपुंसके भावे विहितः ल्युट् प्रत्ययोऽप्यस्य धातो र्नेति ज्ञेयम्। वृकभयम् इत्यत्र 'पञ्चमी भयेन' (२-१-३७) इति समासः।
१० स्त्रियां भावे सम्पदादित्वात् (वा. ३-३-९४) क्विप्।
११ हेतुमण्ण्यन्तात् बाहुलकेन 'अ प्रत्ययात्' (३-३-१०२) इत्यकारप्रत्ययः, युजपवादः।
१२ 'इण्भीका–' (द.उ. ३-२१) इति कन् प्रत्यये रूपमेवम्। बिभेतीति भेकः।
१३ 'आनकः शीङ्भियः' (द.उ. ३-२६) इत्यानकप्रत्ययः। बिभेति तस्मादिति भयानकः = भीषणः। भीमादयो पादाने' (३-४-७४) इति अपादानेऽयं प्रत्ययः।
१४ 'भियः षुग् वा' (द.उ. ३-३५) इति मक् प्रत्ययः पक्षे षुगागमश्च। बिभेत्यस्माज्जन इति भीमः 'भीष्मो वा। भीमादयोऽपादाने' (३-४-७४) इत्यपादानेऽयं प्रत्ययः।

| | | | | |
|---|---|---|---|---|
| लिट् | जिह्रयाञ्चकार | जिह्रयाञ्चक्रतुः | जिह्रयाञ्चक्रुः इत्यादि। | |

एवं जिह्रयाम्बभूव, जिह्रयामास इत्यादि।

| | | | | |
|---|---|---|---|---|
| पक्षे— | जिह्राय | जिह्रियतुः | जिह्रियुः | प्र. |
| | जिह्रियिथ-जिह्रेथ | जिह्रियथुः | जिह्रिय | म. |
| | जिह्राय-जिह्रय | जिह्रियिव | जिह्रियिम | उ. |
| लुट् | ह्रेता | ह्रेतारौ | ह्रतारः इत्यादि। | |
| लृट् | ह्रेष्यति | ह्रेष्यतः | ह्रेष्यन्ति इत्यादि। | |
| लोट् | जिह्रेतु-जिह्रीतात् | जिह्रीताम् | जिह्रियतु | प्र. |
| | जिह्रीहि-जिह्रीतात् | जिह्रीतम् | जिह्रीत | म. |
| | जिह्रयणि | जिह्रयाव | जिह्रयाम | उ. |
| लङ् | अजिह्रेत् | अजिह्रीताम् | अजिह्रयुः | प्र. |
| | अजिह्रेः | अजिह्रीतम् | अजिह्रीत | म. |
| | अजिह्रयम् | अजीह्रीव | अजिह्रीम | उ. |
| वि. लि. | जिह्रीयात् | जिह्रीयाताम् | जिह्रीयुः | प्र. |
| | जिह्रीयाः | जिह्रीयातम् | जिह्रीयात | म. |
| | जिह्रीयम् | जिह्रीयाव | जिह्रीयाम | उ. |
| आ. लि. | ह्रीयात् | ह्रीयास्ताम् | ह्रीयासुः | प्र. |
| | ह्रीयाः | ह्रीयास्तम् | ह्रीयास्त | म. |
| | ह्रीयासम् | ह्रीयास्व | ह्रीयास्म | उ. |
| लुङ् | अह्रैषीत् | अह्रैष्टाम् | अह्रैषुः | प्र. |
| | अह्रैषीः | अह्रैष्टम् | अह्रैष्ट | म. |
| | अह्रैषम् | अह्रैष्व | अह्रैष्म | उ. |
| लृङ् | अह्रेष्यत् | अह्रेष्यताम् | अह्रेष्यन् इत्यादि। | |

**भावे**—ह्रीयते। ९. अह्रायि। **णिचि**—ह्रेपयति-ते। **सनि**—जिह्रीषति। **यङि**—जेह्रीयते। **यङ्लुकि**—जेह्रयीति-जिह्रेति। **कृत्सु**—ह्रेतव्यम्, ह्रयणीयम्, ह्रेयम्, जिह्रियत्,[1] जिह्रियतौ, जिह्रितः, ह्रेतुम्, ह्रीत्वा, विजिर्ह्राय, ह्रीः,[2] ह्रीणवान्-ह्रीतवान्, ह्रेपकः[3]-पिका, ह्रीकः[4]-ह्रयणम्, ह्रयः, ह्रायकः, ह्रायी, ह्रेता, ह्रीतिः, प्रह्रीय, ह्रेष्यत्। इत्यादि 'डुक्रीञ्' धातुवत्। ह्रीणः[5]-ह्रीतः।

**( १०८६ ) पॄ—पालनपूरणयो।** (पालन करना, पोषण करना, पूर्ण करना, भरना)। सक.। सेट्। पर.। ऋकारान्तः।

१ शतरि श्लौ, द्विर्वचने, 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुम्निषेधे इयङादेशे च रूपम्।

२ क्विपि रूपम्।

३ णिजन्तात् ण्वुलि रूपमेवम्। 'अर्तिह्री–' (७-३-३६) इत्यादिना पुगागमः। 'पुगन्तलघूपदस्य च' (७-३-८६) इति गुणः। एवं ण्यन्तरूपेषु सर्वत्राप्यस्य धातोः प्रक्रिया ज्ञेया।

४ 'ह्रियः कन्' (कुग्) रश्च लो वा' (द.उ. १-१५३) इति कन् प्रत्ययः। बाहुलकात् कनः ककारस्य न इत् संज्ञा। पक्षे धातुरेफस्य लकारोऽपि। ह्रीकः = लज्जाविशिष्टः।

५ 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्तरस्याम्' (८-२-५६) इति निष्ठानत्वविकल्पः। नत्वपक्षे णत्वम्।

१. प्र. पिपर्ति पिपूर्तः पिपुरति। म. पिपर्षि पिपूर्थः पिपूर्थ। उ. पिपर्मि पिपूर्वः पिपूर्मः। २. प्र. पपार पप्रतुः-पपरतुः पप्रः-पपरुः। म. पपरिथ पप्रथुः-पपरथुः पप्र-पपर। उ. पपार-पपर पपरिव-पप्रिव पपरिम-पप्रिम। ३. प्र. परिता परितारौ परितारः। म. परितासि परितास्थः परितास्थ। उ. परितास्मि परितास्वः परितास्मः। पक्षे—परीता परीतारौ परीतारः इत्यादि। ४. परिष्यति परिष्यतः परिष्यन्ति इत्यादि। पक्षे—परीष्यति परीष्यतः परीष्यन्ति इत्यादि। ५. प्र. पिपर्तु-पिपूर्तात् पिपूर्ताम् पिपुरतुः। म. पिपूर्हि-पिपूर्तात् पिपूर्तम् पिपूर्त। उ. पिपराणि पिपराव पिपराम। ६. प्र. अपिपः-अपिपूर्ताम् अपिपरुः। म. अपिपः अपिपूर्तम् अपिपूर्त। उ. अपिपरम् अपिपूर्व अपिपूर्म। ७. प्र. पिपूर्यात् पिपूर्याताम् पिपूर्युः। म. पिपूर्याः पिपूर्यातम् पिपूर्यात। उ. पिपूर्याम् पिपूर्याव पिपूर्याम। ८. प्र. पूर्यात् पूर्यास्ताम् पूर्यासुः। म. पूर्याः पूर्यास्तम् पूर्यास्त। उ. पूर्यासम् पूर्यास्व: पूर्यास्मः। ९. प्र. अपारीत् अपारिष्टाम् अपारिषुः। म. अपारीः अपारिष्टम् अपारिष्ट। उ. अपारिषम् अपारिष्व अपारिष्म। १०. प्र. अपरिष्यत् अपरिष्यताम् अपरिष्यन् इत्यादि। पक्षे—अपरीष्यत् अपरीष्यताम् इत्यादि।

**कर्मणि**—पूर्यते। ९. अपारि। **णिचि**—पारयति-ते। **सनि**—पिपरिषति- पिपरीषति- पुपूर्षति। **यङि**—पोपूर्यते। **यङ्लुकि**—पापर्ति-पापरीति। **कृत्सु**—पारकः[१]-रिका, **णिचि**—पारकः-रिका, पुपूर्षकः-पिपरिषकः-पिपरीषकः-षिका, पोपुरकः-रिका, परिता-परीता-त्री, पारयिता-त्री, पिपुरत्[२]-पिपुरतौ-पिपुरतः, पारयन्-न्ती, परिष्यन्- परीष्यन्-न्ती-ती, पारयिष्यन्-न्ती-ती, पारयमाणः, पारयिष्यमाणः, पूः-पुरौ-पुरः, पूर्तम्,[३] पूर्तवान्, पारितः परः-पूः,[४] पारयः,[५] पारयिष्णुः,[६] परितव्यम्, परीतव्यम्, पारयितव्यम्, परणीयम्, पारणीयम्, पार्यम्, पूर्यमाणः,[७] पार्यमाणः, परः, पारः, परितुम्, परीतुम्, पारयितुम्, पूर्तिः-पूर्णिः,[८] पारणा, परणम्, पारणम्, पूर्त्वा, पारयित्वा, प्रपूर्य, प्रपार्य, पुरुः,[९] पर्व,[१०] पुरीषम्,[११]

१ 'इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन' (वा. ७-१-१०२) इति वचनेन वृद्धिरत्र ज्ञेया। एवं तव्यदादिषु गुणोऽपि ज्ञेयः।

२ शतरि, 'जुहोत्यादिभ्यः—' (२-४-७५) इति शपः श्लौ, 'श्लौ' (६-१-१०) इति द्विर्वचने, श्लोः शित्वेन सार्वधातुकत्वात् धातोरुत्वे रपरत्वे, 'अर्तिपिपर्त्योश्च' (७-४-७७) इत्यभ्यासेकारः।

३ 'श्र्युकः क्किति' (७-२-११) इति इण्निषेधे, उत्वादिकम्।

४ तच्छीलादिषु कर्तृषु। 'भ्राजभासधुर्विद्युतोर्जिपॄ—' (३-२-१७७) इति क्विपि उत्वादिषु प्रवृत्तेषु रेफस्य विसर्गे रूपम्।

५ ण्यन्तादस्मात् 'अनुपसर्गाल्लिम्पविन्दधारिपारि—' (३-१-१३८) इति कर्तरि शप्रत्यये तस्य शित्वेन सार्वधातुकत्वात् शपि, पररूपे, अयादेशे च रूपम्।

६ 'णेश्छन्दसि' (३-२-१३७) इति इष्णुच् प्रत्यये, 'अयामन्ताल्वाय्येत्न्विष्णुषु' (६-४-५५) इति णेरयादेशः।

७ यकः कित्वेन उत्वरपरत्वादिकं ज्ञेयम्।

८ 'ॠल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. ८-२-४४) इति नकारे, णत्वम्। एतच्च पाक्षिकमिति केचित्।

९ 'पॄभि—' (द.उ. १-१०८) इति कुप्रत्ययः। पृणाति, पूर्यते वा इति पुरुः = विस्तीर्णः लोकश्च।

१० 'स्नामदिपद्यर्तिपॄ—' (द.उ. ६-६८) इति वनिप् प्रत्ययः। पृणाति पूर्यते वा इति पर्वः अङ्गुल्यग्रम्, पुण्यतिथिश्च।

११ 'शॄपॄभ्यां कित्' (द.उ. ९-१०) इतीषन् प्रत्ययः तस्य कित्वं च। पृणाति, पूर्यते वा तेनोदरामिति पुरीषम्।

पुरुषः,[1] परुषः,[2] परुः[3] ।

(१०८७) डुभृञ्—धारणपोषणयोः । (धारण करना, पोषण करना)। सक.। अनिट् । उभयपदी । ऋकारान्तः ।

| | | | | |
|---|---|---|---|---|
| लट् | बिभर्ति[4] | बिभृतः | बिभ्रति | प्र. |
| | बिभर्षि | बिभृथः | बिभृथ | म. |
| | बिभर्मि | बिभृवः | बिभृमः | उ. |
| लिट् | बिभराञ्चकार | बिभराञ्चक्रतुः | बिभराचक्रुः | प्र. |
| | बिभराञ्चकार्थ | बिभराञ्चक्रथुः | बिभराञ्चक्र | म. |
| | बिभराञ्चकार-चकर | बिभराञ्चकृव | बिभराञ्चकृम | उ. |

पक्षे—बभार बभ्रतुः बभ्रुरित्यादि ।

| | | | | |
|---|---|---|---|---|
| लुट् | भर्ता | भर्तारौ | भर्तारः | प्र. |
| | भर्तासि | भर्तास्थः | भर्तास्थ | म. |
| | भर्तास्मि | भर्तास्वः | भर्तास्मः | उ. |
| लृट् | भरिष्यति | भरिष्यतः | भरिष्यन्ति | प्र. |
| | भरिष्यसि | भरिष्यथः | भरिष्यथ | म. |
| | भरिष्यामि | भरिष्यावः | भरिष्यामः | उ. |
| लोट् | बिभर्तु-बिभृतात् | बिभृताम् | बिभ्रतु | प्र. |
| | बिभृहि-बिभृतात् | बिभृतम् | बिभृत | म. |
| | बिभराणि | बिभराव | बिभराम | उ. |
| लङ् | अबिभः[5] | अबिभृताम् | अबिभरुः | प्र. |
| | अबिभः | अबिभृतम् | अबिभृत | म. |
| | अबिभरम् | अबिभृव | अबिभृम | उ. |
| वि. लि. | बिभृयात् | बिभृयाताम् | बिभृयुः | प्र. |
| | बिभृयाः | बिभृयातम् | बिभृयात | म. |
| | बिभृयाम् | बिभृयाव | बिभृयाम | उ. |
| आ. लि. | भ्रियात् | भ्रियास्ताम् | भ्रियासुः | प्र. |
| | भ्रियाः | भ्रियास्तम् | भ्रियास्त | म. |
| | भ्रियासम् | भ्रियास्व | भ्रियास्म | उ. |
| लुङ् | अभार्षीत् | अभार्ष्टाम् | अभार्षुः | प्र. |
| | अभार्षीः | अभार्ष्टम् | अभार्ष्ट | म. |
| | अभार्षम् | अभार्ष्व | अभार्ष्म | उ. |

१ 'पुरः कुषन्' (द.उ. ९-१४) इत्यनेन कुषन् प्रत्यये, उत्वादिकम् ।

२ 'पृकलिभ्यामुषच्' (द.उ. ९-१५) इत्युषच् प्रत्ययः । पृणाति, पिपर्ति इति वा परुषः = अमृदुः ।

३ 'अर्तिपृवपि—' (द.उ. ९-३७) इत्युसिप्रत्ययः । परुः = समुद्रः, राजा च ।

४ भृञामित् (७-४-७६) भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत् स्यात् श्लौ ।

५ अबिभृ + त् इति स्थिते गुणे रपरत्वे हलङ्यादिति तकारलोपे रेफस्य विसर्गः ।

| | | | | |
|---|---|---|---|---|
| लृङ् | अभरिष्यत् | अभरिष्यताम् | अभरिष्यन् | प्र. |
| | अभरिष्यः | अभरिष्यतम् | अभरिष्यत | म. |
| | अभरिष्यम् | अभरिष्याव | अभरिष्याम | उ. |

आत्मनेपदपक्षे

| | | | | |
|---|---|---|---|---|
| लट् | बिभृते | बिभ्राते | बिभ्रते | प्र. |
| | बिभृषे | बिभ्राथे | बिभृध्वे | म. |
| | बिभ्रे | बिभृवहे | बिभृमहे | उ. |
| लिट् | बिभराञ्चक्रे | बिभराञ्चक्राते | बिभराञ्चक्रिरे | प्र. |
| | बिभराञ्चकृषे | बिभराञ्चक्राथे | बिभराञ्चकृढ्वे | म. |
| | बिभराञ्चक्रे | बिभराञ्चकृवहे | बिभराञ्चकृमहे | उ. |

पक्षे—प्र. बभ्रे बभाते बभ्रिरे। म. बभृषे बभ्राथे बभृध्वे-ढ्वे। उ. बभ्रे बभृवहे बभृमहे।

| | | | | |
|---|---|---|---|---|
| लुट् | भर्ता | भर्तारौ | भर्तारः | प्र. |
| | भर्तासे | भर्तासाथे | भर्ताध्वे | म. |
| | भर्ताहे | भर्तास्वहे | भर्तास्महे | उ. |
| लृट् | भरिष्यते | भरिष्येते | भरिष्यन्ते इत्यादि।. | |
| लोट् | बिभृताम् | बिभ्राताम् | बिभ्रताम् | प्र. |
| | बिभृष्व | बिभ्राथाम् | बिभृध्वम् | म. |
| | बिभरै | बिभरावहै | बिभरामहै | उ. |
| लङ् | अबिभृत | अबिभ्राताम् | अबिभ्रत | प्र. |
| | अबिभृथाः | अबिभ्राथाम् | अबिभृध्वम् | म. |
| | अबिभ्रि | अबिभृवहि | अबिभृमहि | उ. |
| वि. लि. | बिभ्रीत | बिभ्रीयाताम् | बिभ्रीरन् | प्र. |
| | बिभ्रीथाः | बिभ्रीयाथाम् | बिभ्रीध्वम् | म. |
| | बिभ्रीय | बिभ्रीवहि | बिभ्रीमहि | उ. |
| आ. लि. | भृषीष्ट | भृषीयास्ताम् | भृषीरन् | प्र. |
| | भृषीष्ठाः | भृषीयास्थाम् | भृषीध्वम् | म. |
| | भृषीय | भृषीवहि | भृषीमहि | उ. |
| लुङ् | अभृत | अभृषाताम् | अभृषत | प्र. |
| | अभृथाः | अभृषाथाम् | अभृढ्वम् | म. |
| | अभृषि | अभृष्वहि | अभृष्महि | उ. |
| लृङ् | अभरिष्यत | अभरिष्येताम् | अभरिष्यन्त इत्यादि। | |

**कर्मणि**—भ्रियते। २. बभ्रे। ९. अभारि। **णिचि**—भारयति। ९. अबीभरत। **सनि**—बुभूर्षति-ते। **यङि**—बेभ्रीयते। **यङ्लुकि**—बर्भरीति-बरीभरीति-बर्भर्ति। **कृत्सु**—भारकः-रिका, **णिचि**—भारकः-रिका, बुभूर्षकः-र्षिका, बेभ्रीयकः-यिका, भर्ता-त्री, भारयिता-त्री, भरन्-न्ती, भारयन्-न्ती, भरिष्यन्-न्ती-ती, भारयिष्यन्-न्ती-ती, भरमाणः, भारयमाणः, भरिष्यमाणः,

भारयिष्यमाणः, भृतम्-तवान्, भर्तव्यम्, भारयितव्यम्, भरणीयम्, भारणीयम्, भर्तुम्, भारयितुम्, भरणम्, भारणम्, भृत्वा, भारयित्वा, सम्भृत्य, बिभ्रत्[१]-बिभ्रतौ-बिभ्रतः, बिभाणः, भृत्रिमम्,[२] भरथुः, (कवचं) बिभ्राणः,[३] विश्वम्भरः[४]-विश्वम्भरा, भार्यम्,[५] इषुभृत्[६]-देहभृत्, उदरंभरिः, भृतिः,[७] भृङ्गारः[८]। शेषं सर्वं भौवादिभरति वत्।

(१०८८) **माङ्—माने शब्दे च**। (नापना, तौलना, मेमियाना। **अप**—उपमा देना। अनु—तर्क से सिद्ध करना। **परि**—नापना, परिमाण करना। **प्र**—प्रमाण होना।) सकर्मकाकर्मकौ। अनिट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | मिमीते[९] | मिमाते | मिमते[१०] | प्र. |
| | मिमीषे | मिमाथे | मिमीध्वे | म. |
| | मिमे | मिमीवहे | मिमीमहे | उ. |
| लिट् | ममे | ममाते | ममिरे | प्र. |
| | ममिषे | ममाथे | ममिध्वे | म. |
| | ममे | ममिवहे | ममिमहे | उ. |
| लुट् | माता | मातारौ | मातारः | प्र. |
| | मातासे | मातासाथे | माताध्वे | म. |
| | माताहे | मातास्वहे | मातास्महे | उ. |
| लृट् | मास्यते | मास्येते | मास्यन्ते | प्र. |
| | मास्यसे | मास्येथे | मास्यध्वे | म. |
| | मास्ये | मास्यावहे | मास्यामहे | उ. |
| लोट् | मिमीताम् | मिमाताम् | मिमताम् | प्र. |
| | मिमीष्व | मिमाथाम् | मिमीध्वम् | म. |
| | मिमै | मिमावहै | मिमामहै | उ. |

१ शतरि शपः 'जुहोत्यादिभ्यः–' (२-४-७५) इति श्लुः। 'श्लौ' (६-१-१०) इति द्विर्वचनम्। 'भृञामित्' (७-४-७६) इत्यभ्यासस्येकारः उत्तरखण्डे यणादेशः। 'नभ्यास्ताच्छतुः' (७-१-७८) इति नुम्निषेधः। एवमेव शानजन्तेऽपि प्रक्रिया ज्ञेया।

२ भावे 'ड्वितः क्त्रिः' (३-३-८८) इति क्त्रिप्रत्ययः। तस्य 'तेन' इति वर्तमाने निर्वृतार्थे, 'क्त्रेमम्नित्यम्' (४-४-२०) इति नित्यं मप् तद्धितः।

३ 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३-२-१२९) इत्यनेनात्र वयोवचने चानश् प्रत्ययः कवचधारणयोग्यं वयः प्राप्तवान् इत्यर्थः।

४ संज्ञायां 'भृतृ–' (३-२-४६) इत्यादिना खच् प्रत्ययः। विश्वं बिभर्तीति विश्वम्भरः = विष्णुः।

५ 'ऋहलोः' (३-१-१२४) इति कर्मणि ण्यत्।

६ 'क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विप्। तुगागमः।

७ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तिच्। भृतिः = वेतनम्।

८ 'शृङ्गारभृङ्गारौ' (द.उ. ८-६६) इति आरन् प्रत्ययः, नुगागमः - गुगागमौ गुणभावश्च निपात्यन्ते बिभर्त्युदकं मङ्गलार्थिभिरिति भृङ्गारः = उदककलशः।

९ 'भृञामित्' (७-४-७६) इत्यभ्यासस्य इत्वम्। 'ईहल्यघोः' (६-४-११३) इति ईस्।

१० 'श्नाभ्यस्तयोरातः' (६-४-११२) इति आल्लोपः।

| | | | | |
|---|---|---|---|---|
| लङ् | अमिमीत | अमिमाताम् | अमिमत | |
| | अमिमीथाः | अमिमाथाम् | अमिमीध्वम् | म. |
| | अमिमि | अमिमीवहि | अमिमीमहि | उ. |
| वि. लि. | मिमीत | मिमीयाताम् | मिमीरन् | प्र. |
| | मिमीथाः | मिमीयाथाम् | मिमीध्वम् | म. |
| | मिमीय | मिमीवहि | मिमीमहि | इ. |
| आ. लि. | मासीष्ट | मासीयास्ताम् | मासीरन् | प्र. |
| | मासीष्ठाः | मासीयास्थाम् | मासीध्वम् | म. |
| | मासीय | मासीवहि | मासीमहि | उ. |
| लुङ् | अमास्त[१] | अमासाताम् | अमासत | प्र. |
| | अमास्थाः | अमासाथाम् | अमाध्वम् | म. |
| | अमासि | अमास्वहि | अमास्महि | उ. |
| लृङ् | अमास्यत | अमास्येताम् | अमास्यन्त | प्र. |
| | अमास्यथाः | अमास्येथाम् | अमास्यध्वम् | म. |
| | अमास्ये | अमास्यावहि | अमास्यामहि | उ. |

**कर्मणि**—मीयते। ९. अमायि। **णिचि**—मापयति[२]-ते। **सनि**—मित्सते। **यङि**—मेमीयते[३]। **यङ्लुकि**—मामाति-मामेति। **कृत्सु**—मायकः-यिका, मापकः-पिका, मित्सकः-त्सिका, मेमीयकः-यिका, माता-त्री, मापयिता-त्री, मित्सिता-त्री, मेमीयिता-त्री, मिमानः,[४] वातप्रमीः[५]-वातप्रम्यौ-वातप्रम्यः, प्रणिमानम्[६]-प्रणिमापनम्, मेयम्, पाय्यम्, व्योममायः, चन्द्रमाः[७]। अस्य धातोः आत्मनेपदित्वात् शानचि- अनुमिमानः, मित्समानः, मास्यमानः, मित्स्यमानः, इति विशेषः। अन्यत् सर्वम् आदादिकमाति वत् (१०६२) बोध्यम्।

**(१०८९) ओहाङ्—गतौ**। (जाना)। सक.। अनि.। आत्म.। आकारान्तः। ओदित् ङिच्च।

| | | | | |
|---|---|---|---|---|
| लट् | जिहीते | जिहाते | जिहते | प्र. |
| | जिहीषे | जिहाथे | जिहीध्वे | म. |
| | जिहे | जिहीवहे | जिहीमहे | उ. |

१ लुङि दशमी विधा।

२ 'अर्तिह्री–' (७-३-३६) ति पुक्।

३ 'सनि मीमा–' (७-४-६४) इत्यच इस्। 'घुमास्था–' (६-४-६६) इति ईत्वम्। द्विर्वचनेऽभ्यासस्य गुणः।

४ शानचि, 'जुहोत्यादिभ्यः–' (२-४-७५) इति शपः श्लुः 'श्लौ' (६-१-१०) इति द्विर्वचने, 'भृञामित्' (७-४-७६) इत्यभ्यासेकारः। 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपः।

५ वातं प्रमिमीते इत्यर्थे 'क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विपि, 'घुमास्था–' (६-४-६६) इतीकारे रूपमेवम्। वातप्रमीः = शमीवृक्षः पक्षिविशेषश्च।

६ 'नेर्गदनद–' (८-४-१७) इत्यादिना नेर्णत्वम्।

७ 'चन्द्रे मो डित्' (द.उ. ९-८८) इत्यनेन चन्द्रशब्द उपपदे धातोरस्यासि प्रत्यये तस्य च डिद्भावेन टिलोपे च रूपमेवम्।

| | | | | |
|---|---|---|---|---|
| लिट् | जहे | जहाते | जहिरे | प्र. |
| | जहिषे | जहाथे | जहिध्वे-ढ्वे | म. |
| | जहे | जहिवहे | जहिमहे | उ. |
| लुट् | हाता | हातारौ | हातारः। इत्यादि | |
| लृट् | हास्यते | हास्येते | हास्यन्ते। इत्यादि। | |
| लोट् | जिहीताम् | जिहाताम् | जिहताम् | प्र. |
| | जिहीष्व | जिहाथाम् | जिहीध्वम् | म. |
| | जिहै | जिहावहै | जिहामहै | उ. |
| लङ् | अजिहीत | अजिहाताम् | अजिहत। इत्यादि। | |
| वि. लि. | जिहीत | जिहीयाताम् | जिहीरन् | प्र. |
| | जिहीथाः | जिहीयाथाम् | जिहीध्वम् | म. |
| | जिहीय | जिहीवहि | जिहीमहि | उ. |
| आ. लि. | हासीष्ट | हासीयास्ताम् | हासीरन् | प्र. |
| | हासीष्ठाः | हासीयास्थाम् | हासीध्वम् | म. |
| | हासीय | हासीवहि | हासीमहि | उ. |
| लुङ् | अहास्त | अहासाताम् | अहासत | प्र. |
| | अहास्थाः | अहासाथाम् | अहाध्वम् | म. |
| | अहासि | अहास्वहि | अहास्महि | उ. |
| लृङ् | अहास्यत | अहास्येताम् | अहास्यन्त। इत्यादि। | |

**कर्मणि**—हायते। **णिचि**—हापयति-ते। ९. अजीहपत। **सनि**—जिहासते। **यङि**—जाहायते। **यङ्लुकि**—जाहति-जोहति। **सनि**—हानीयम्, हयम्, हातव्यम्, हानम्, जिहानः, हातुम्, हात्वा, विहाय, हायनः, हानिः।

(१०९०) **ओहाक्—त्यागे**। (त्यागना, छोड़ना, परित्याग करना)। सक.। अनिट्। परस्मै.। आकारान्त ओदित् किति च।

| | | | | |
|---|---|---|---|---|
| लट् | जहाति | जहितः-जहीतः | जहति | प्र. |
| | जहासि | जहिथः-जहीथः | जहिथ-जहीथ | म. |
| | जहामि | जहिवः-जहीवः | जहिमः-जहीमः | उ. |
| लिट् | जहौ | जहतुः | जहुः | प्र. |
| | जहिथ-जहाथ | जहथुः | जह | म. |
| | जहौ | जहिव | जहिम | उ. |
| लुट् | हाता | हातारौ | हातारः इत्यादि। | |
| लृट् | हास्यति | हास्यतः | हास्यन्ति इत्यादि। | |
| लोट् | जहातु-हितात्-हीतात् | जहिताम्-जहीताम् | जहतु | प्र. |
| | जहाहि-हिहि-हीहि-हीतात् | जहितम्-जहीतम् | जहित-जहीत | म. |
| | जहानि | जहाव | जहाम | उ. |

| | | | | |
|---|---|---|---|---|
| लङ् | अजहात् | अजहिताम्-अजहीताम् | अजहुः | प्र. |
| | अजहाः | अजहितम्-अजहीतम् | अजहित-अजहीत | म. |
| | अजहाम् | अजहिव-अजहीव | अजहिम-अजहीम | उ. |
| वि. लि. | जह्यात् | जह्याताम् | जह्युः | प्र. |
| | जह्याः | जह्यातम् | जह्यात | म. |
| | जह्याम् | जह्याव | जह्याम | उ. |
| आ. लि. | हेयात् | हेयास्ताम् | हेयासुः | प्र. |
| | हेयाः | हेयास्तम् | हेयास्त | म. |
| | हेयासम् | हेयास्व | हेयास्म | उ. |
| लुङ् | अहासीत् | अहासिष्टाम् | अहासिषुः | प्र. |
| | अहासीः | अहासिष्टम् | अहासिष्ट | म. |
| | अहासिषम् | अहासिष्व | अहासिष्म | उ. |
| लृङ् | अहास्यत् | अहास्यताम् | अहास्यन् | प्र. |
| | अहास्यः | अहास्यतम् | अहास्यत | म. |
| | अहास्यम् | अहास्याव | अहास्याम | उ. |

**कर्मणि**—हीयते। २. जहे। ९. अहायि। **णिचि**—हापयति-ते। **सनि**—जिहासति। **यङि**—जेहीयते। **यङ्लुकि**—जाहाति-जाहेति। **कृत्सु**—हानीयम्, हानम्, प्रहाणम्, हायः, हायकः-यिका, हायी, हाता, हीनः,[१] हानिः,[२] हातव्यम्, हातुम्, हित्वा,[३] प्रहीय, हेयम्, जहत्,[४] हास्यन्, हीयमानः, हायिष्यमाण, हास्यमानः, हीनवान्, विहाय,[५] हायनावीहयः,[६] पूर्वापहाणा-अपरापहाणा, सम्प्रहाणा, जहकः,[७] अहः,[८] कलहः,[९] निहाका[१०]। अन्यत् सर्वं जौहत्यादिक 'ददाति' (१०९१) वत्।

**(१०९१) डुदाञ्—दाने**। देना, सौंपना। **आ**—लेना, देना, अङ्गीकार करना। **व्या**—उघारना, खोलना। **समा**—प्रसन्न करके लेना। **परि**—देना, सौंपना। सक.। अनिट्। उभयपदी। आकारन्तः। ङित् ञिच्च।

१ 'घुमास्था–' (६-४-६६) इति धात्वाकारस्य ईकारः। ओदित्वात् निष्ठानत्वम्। 'मन्त्रोहीनः स्वरतो वर्णतो वा' (पाणिनीय शिक्षा)।
२ 'ग्लाज्याहाभ्यो निः' (वा. ३-३-९५) इति निप्रत्ययः ईत्वं न। केचित्तु हानिः इत्येव वदन्ति।
३ 'जहातेश्च क्त्वि' (७-४-४३) इति 'हि' इति प्रकृतेरादेशः।
४ शतरि 'श्लौ' (६-१-१०) इति द्विर्वचनम्। धातोः कित्वात् अभ्यासे 'दीर्घोऽकितः' (७-४-८३) इति दीर्घ-निषेध इति केचित् इति क्षीरतरङ्गिणी। तन्न। तत्र सूत्रे 'अंकितः' इति न धातुककारो विवक्षितः, किन्तु प्रत्ययस्य कित्वमेवेत्यास्तां तावत्। 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुम् निषेधः।
५ 'न ल्यपि' (६-४-६९) इति ईकार निषेधः।
६ 'हश्च व्रीहिकालयोः' (३-२-१४८) इति ण्युट्। जहाति उदकमिति हायनः संवत्सराख्योव्रीहिविशेषः। जहाति जीर्णमिति हायनो = वत्सरः।
७ जहातीति जहकः त्यागी, कालपुरुषश्च। 'जहातेर्द्वे च' (द.उ. ३-६) इति क्वुन्, द्वित्वं च।
८ 'नाञि जहातेः' (द.उ. ६-५२) इति कनिन् प्रत्यये आकारलोपः। अहः = दिनम्।
९ कलं जहातीति कलहः। 'सुपि–' (३-२-५) इति कप्रत्ययः। आकारलोपः इति क्षीरस्वामी।
१० 'नी हः' (द.उ. ३-२२) इति कन्। निहाका = गोधा।

| | | | | |
|---|---|---|---|---|
| लट् | ददाति | दत्तः | ददति | प्र. |
| | ददासि | दत्थः | दत्थ | म. |
| | ददामि | दद्वः | दद्मः | उ. |
| लिट् | ददौ | ददतुः | ददुः | प्र. |
| | ददिथ-ददाथ | ददथुः | दद | म. |
| | ददौ | ददिव | ददिम | उ. |
| लुट् | दाता | दातारौ | दातारः | प्र. |
| | दातासि | दातास्थः | दातास्थ | म. |
| | दातास्मि | दातास्वः | दातास्मः | उ. |
| लृट् | दास्यति | दास्यतः | दास्यन्ति | प्र. |
| | दास्यसि | दास्यथः | दास्यथ | म. |
| | दास्यामि | दास्यावः | दास्यामः | उ. |
| लोट् | ददातु-दत्तात् | दत्ताम् | ददतु | प्र. |
| | देहि-दत्तात् | दत्तम् | दत्त | म. |
| | ददानि | ददाव | ददाम | उ. |
| लङ् | अददात् | अदत्ताम् | अददुः | प्र. |
| | अददाः | अदत्तम् | अदत्त | म. |
| | अददाम् | अदद्व | अदद्म | उ. |
| वि. लि. | दद्यात् | दद्याताम् | दद्युः | प्र. |
| | दद्याः | दद्यातम् | दद्यात | म. |
| | दद्याम् | दद्याव | दद्याम | उ. |
| आ. लि. | देयात् | देयास्ताम् | देयासुः | प्र. |
| | देयाः | देयास्तम् | देयास्त | म. |
| | देयासम् | देयास्व | देयास्म | उ. |
| लुङ् | अदात् | अदाताम् | अदुः | प्र. |
| | अदाः | अदातम् | अदात | म. |
| | अदाम् | अदाव | अदाम | उ. |
| लृङ् | अदास्यत् | अदास्यताम् | अदास्यन् | प्र. |
| | अदास्यः | अदास्यतम् | अदास्यत | म. |
| | अदास्यम् | अदास्याव | अदास्याम | उ. |

आत्मनेपदपक्षे

| | | | | |
|---|---|---|---|---|
| लट् | दत्ते | ददाते | ददते | प्र. |
| | दत्से | ददाथे | दद्ध्वे | म. |
| | ददे | दद्वहे | दद्महे | उ. |
| लिट् | ददे | ददाते | ददिरे | प्र. |
| | ददिषे | ददाथे | ददिध्वे | म. |
| | ददे | ददिवहे | ददिमहे | उ. |

| | | | | |
|---|---|---|---|---|
| लुट् | दाता | दातारौ | दातारः | प्र. |
| | दातासे | दातासाथे | दाताध्वे | म. |
| | दाताहे | दातास्वहे | दातास्महे | उ. |
| लृट् | दास्यते | दास्येते | दास्यन्ते | प्र. |
| | दास्यसे | दास्येथे | दास्यध्वे | म. |
| | दास्ये | दास्यावहे | दास्यामहे | उ. |
| लोट् | दत्ताम् | ददाताम् | ददताम् | प्र. |
| | दत्स्व | ददत्थाम् | ददध्वम् | म. |
| | ददै | ददावहै | ददामहै | उ. |
| लङ् | अदत्त | अददाताम् | अददत | प्र. |
| | अदत्थाः | अददाथाम् | अददध्वम् | म. |
| | अददि | अदद्वहि | अदद्महि | उ. |
| वि. लि. | ददीत | ददीयाताम् | ददीरन् | प्र. |
| | ददीथाः | ददीयाथाम् | ददीध्वम् | म. |
| | ददीय | ददीवहि | ददीमहि | उ. |
| आ. लि. | दासीष्ट | दासीयास्ताम् | दासीरन् | प्र. |
| | दसीष्ठाः | दासीयास्थाम् | दासीध्वम् | म. |
| | दासीय | दासीवहि | दासीमहि | उ. |
| लुङ् | अदित | अदिषाताम् | अदिषत | प्र. |
| | अदिथाः | अदिषाथाम् | अदिढ्वम् | म. |
| | अदिषि | अदिष्वहि | अदिष्महि | उ. |
| लृङ् | अदास्यत | अदास्येताम् | अदास्यन्त | प्र. |
| | अदास्यथाः | अदास्येथाम् | अदास्यध्वम् | म. |
| | अदास्ये | अदास्यावहि | अदास्यामहि | उ. |

**कर्मणि**—दीयते । २ ददे । ९ अदायि । **णिचि**—दापयति-ते । ९. अदीदपत्-त । **सनि**—दित्सति-ते । **यङि**—देदीयते । **यङ्लुकि**– दादेति-दादाति । **कृत्सु**—दायकः[१]-यिका, णिचि–दापकः[२]-पिका, दित्सकः[३]-त्सिका, देदीयकः[४]-यिका, दाता-त्री, दापयिता-त्री, दित्सिता-त्री, देदीयिता-त्री, ददत्[५]-ददतौ-ददतः (आस्यं) व्याददत्, दापयन्-न्ती, दित्सन्-न्ती, दास्यन्-न्ती-ती,

१ 'आतो युक् चिण्कृतोः' (७-३-३३) इति युगागमः । एवं घञादिष्वपि ज्ञेयम् ।

२ 'अतिह्रीव्ली–' (७-३-३६) इति ण्यन्ते सर्वत्र पुगागमः ।

३ 'दाधाघ्वदाप्' (१-२-२०) इति घुसंज्ञायाम्, 'सनिमीमाघु–' (७-४-५४) इति सन्नन्ते इस् । 'सः सार्वधातुके' (७-४-४९) इति तकारे, 'अत्र लोपोभ्यासस्य' (७-४-५८) इत्यभ्यासलोपः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

४ 'घुमास्था–' (६-४-६६) इत्यादिना ईत्वम् । द्वित्वादिकम् । 'गुणो यङ्लुकोः' (७-४-८२) इति अभ्यासे गुणो भवति । एवं यङन्ते सर्वत्र ज्ञेयम् ।

५ शतरि 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) इति शपः श्लौ, 'श्लौ' (६-१-१०) इति द्वित्वे, उत्तरखण्डे 'अभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे, 'नाभ्यस्ताच्छतुः' (७-१-७८) इति नुम्निषेधः । 'अनास्यविहरणे' (१-३-२०) इति पर्युदासात् 'आस्यं' व्याददत् इत्यत्र शतैव ।

दापयिष्यन्-न्ती-ती, दित्सिष्यन्-ती, ददानः, (विद्यां) आददानः,[१] दापयमानः, दित्समानः, (विधौ) आदिस्यमानः, देदीयमानः, दास्यमानः, आदास्यमानः, दापयिष्यमाणः, दित्सिष्यमाणः, देदीयिष्यमाणः, प्रदाः-प्रदौ-प्रदाः, दत्तम्[२]-तः-दत्तवान्, मनसादत्ता,[३] प्रत्तम्[४]-नीत्तम्[५]-सूत्तम्-मरुत्तः,[६] अवदत्तम्,[७] विदत्तम्-प्रदत्तम्-सुदत्तम्- अनुदत्तम्-निदत्तम्, अवदत्तम्, दापितः, दित्सितः, देदीयितः-तवान्। प्रदः,[८] ददः[९]-दायः, गोदः,[१०] (गवां गोषु वा) दायादः,[११] कम्बलप्रदः,[१२] उपदाः,[१३] सुदामा[१४]-सुदीवा-गोदावरी, ग्रामदायी,[१५] शापदायी,[१६] साधुदायी,[१७] कर्णदायी,[१८] विद्यादायी,[१९] देदिवान्,[२०] दाता,[२१] दारुः,[२२] ददिः[२३] (गाः),

१ 'आङो ढो नास्य विहरणे' (१-३-२०) इति परगामिनि क्रियाफले पि शानच्।

२ 'दो दद्घोः' (७-४-४६) इति तादौ किति प्रत्यये परतः 'दथ्' इत्यादेशः। थकारस्य चर्त्वेन तकारः। तथा 'चोक्तम्–' तान्ते दोषो दीर्घत्वं स्यात्, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्तिः निर्दोषात्वात् थान्तो ग्राह्यः। 'भाष्यम्–' (७-४-४६) इति। एवं क्तिन् प्रभृतिष्वपि।

३ 'मनसः संज्ञायाम्' (६-३-४) इति तृतीयाया अलुक्।

४ निष्ठायाम् 'अच उपसर्गात् तः' (७-४-१७) इति धातो स्तकारे रूपमेवम्।

५ 'दस्ति' (६-३-१२४) इत्यनेनात्र निष्ठायां तकारादेशे इगन्तस्योपसर्गस्य दीर्घः।

६ 'मरुत उपसंख्यानम्' (वा. १-४-५९) इति मरुच्छब्दस्योपसर्गसंज्ञायां विधानसामर्थ्यात्, अजन्तत्वेपि 'अच उपसर्गात् तः' (७-४-४७) इति तकारादेशः।

७ 'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्त मनुदत्तं च निदत्तमिति चेष्यते।' (भाष्यम् ७-४-४६) इति भाष्येष्ट्या न धातोस्तकारादेशः। अत्र चकारस्य समुच्चयार्थकत्वात् अवदत्तम् इत्यादयो पि यथासम्भवं साधवः।

८ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः। 'आतो लोप इटि च' (६-४-६४) इत्यकारलोपः।

९ 'ददाति दधात्योर्विभाषा' (३-१-१३९) इति कर्तरि शप्रत्ययः। 'कर्तरिशप्' (३-१-६९) इति शपि, तस्य, 'जुहोत्यादिभ्यः–' (३-४-७५) इति श्लो, 'श्लौ' (६-१-१०) इति द्विर्वचने, 'अभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे च 'ददः' इति रूपम्। अस्य शप्रत्ययस्य वैकल्पिकत्वात् पक्षे, 'श्याऽऽद् व्यध–' (३-१-१४१) इति कर्तरि णप्रत्यये, युगागमे च दायः इति रूपम्।

१० 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मण्युपपदे णोपवादः कप्रत्ययः। आकारलोपः।

११ दायमादत्ते इति दायादः। 'मूलविभुजादिभ्य उपसंख्यानम्' (वा. ३-२-५) इति सोपसर्गात् धातोः कर्मण्युपपदे कप्रत्ययः। 'स्वामीश्वराधिपतिदायाद–' (२-३-३९) इति षष्ठीसप्तम्यौ।

१२ 'प्रे दाज्ञः' (३-२-६) इति प्रोपसृष्टादस्मात् कर्मण्युपपदे क प्रत्ययः।

१३ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति विचि रूपमेवम्।

१४ 'आतो मनिन्क्वनिब्वनिपश्च' (३-२-७४) इत्यनेन क्रमेण मनीनि, क्वनिणि, वनिपि च सुदामा सुदीवा-गोदावरी इति रूपाणि। तत्र सुदीवा इत्यत्र प्रत्ययस्य कित्वादीकारः प्रकृतेः। गोदावरी इत्यत्र 'वनो र च' (४-१-७) इत्यनेन स्त्रियां ङीष् रेफादेशौ भवतः इति विशेषः।

१५ 'क्विप् च' (३-२-७६) इत्यनेन कर्मोपपदादस्मात् क्विप् प्रत्ययः।

१६ 'सुप्यजातौ–' (३-२-७८) इति णिनिप्रत्ययः। युगागमः।

१७ 'साधुकारिण्युसंख्यानम्' (वा. ३-२-७८) इति णिनिः।

१८ 'कर्तर्युपमाने' (३-२-७९) इति णिनिः। कर्ण इव ददातीत्यर्थः।

१९ 'व्रते' (३-२-८०) इति णिनिः। यो विद्यादानं व्रतत्वे नाचति, स एवमुच्यते।

२० क्वसौ, द्विर्वचने, आकारलोपे, 'वस्वेकाजाद्घसाम्' (७-२-७६) इतीडागमे रूपम्।

२१ 'तृन्' (३-२-१३५) इति तच्छीलादिषु कर्तृषु तृन्। दानशील एवमुच्यते।

२२ 'दाधेट् सिशदसदो रुः' (३-२-१५९) इति तच्छीलाद्धर्मतत्साधुकारिषु रुः।

२३ 'आद् ऋगम–' (३-२-१७१) इति कि, किन् वा प्रत्ययः। तस्य लिड्वद्भावातिदेशात् द्वित्वादिकार्यम्।

दायको[१] (व्रजति),अश्वदाय:,[२] दानीय:[३] (ब्राह्मण:)दाता,[४] अवश्यंदायी,[५] शतंदायी,देवदत्त:,[६] आदि:,[७] अन्तर्दि:,[८] दाप:, दित्सु:, देध:,[९] दातव्यम्, दापयितव्यम्, दित्सितव्यम्, देदीयितव्यम्, दानीयम्, दापनीयम्, दित्सनीयम्, देदीयनीयम्, देयम्,[१०] दाप्यम्, दित्स्यन्, देदीय्यम्, ईषद्दान:[११]-दुर्दान:-सुदान:, दीयमान:, दाप्यमान:, दित्स्यमान:, देदीय्यमान:, दाय:, दाप:, दित्स:, देदीय:, दातुम्, दापयितुम्, दित्सितुम्, देदीयितुम्, दत्ति:, उपदा,[१२] दापना, दित्सा, देदीया, दानम्, दात्त्रिमम्,[१३] दापनम्, दित्सनम्, देदीयनम्, दत्वा, दापयित्वा, दित्सित्वा, देदीयित्वा, प्रणिदाय,[१४] प्रदाप्य, प्रदित्स्य, प्रदेदीप्य, दानु:,[१५] देष्ण:[१६] ।

**(१०९२) डुधाञ्—धारणपोषणयो:** । दान इत्येके । (धारण करना, पहनना, पालन करना, देना)। **अनुसम्**—अनुसंधान करना, **अभि**—प्रसिद्ध करना, प्रकट करना, दिखाना, कहना, **अभिसम्**—जीतना, पराजय करना, **सम्-अव**—सावधान रहना, ध्यान देना, **आ**—स्वीकार करना, स्थापित करना, **उप**—सहायता करना, **नि**—ऊपर लेना, बीच में या ऊपर स्थापन करना, उत्पन्न होना, धारण करना, **परि**—वस्त्रादि धारण करना, परिधान करना, **प्र**—मुख्य होना, प्रेरणा करना, भेज देना, **प्रणि**—धारण करना, स्वीकार करना, गुप्त रहना, **प्रतिवि**—प्रतिकार करना, **वि**—कहना, धर्म सम्बन्धी कार्य करना, पसन्द करना, आज्ञा करना, देना, **व्यव**—छिपाना, **सम्**—स्थापना करना, रखना, निशाना लगाना, **सम्प्र**—**प्र. तिसम्**—चर्चा करना, वाद विवाद करना, **समा**—समाधान करना, सिखाना, **सन्नि**—समीप रखना, समीप आना । सकर्म. । अनिट् । उभय. । आकारान्त: । ड्वित् । ञिच्च ।

| | | | | |
|---|---|---|---|---|
| लट् | दधाति | धत्त: | दधति | प्र. |
| | दधासि | धत्थ: | धत्थ | म. |
| | दधामि | दध्व: | दध्म: | उ. |

१ क्रियार्थायां क्रियायाम्, 'तुमुन् ण्वुलौ—' (३-३-१०) इति ण्वुलि युगागम: ।
२ 'अण् कर्मणि च' (३-३-१२) इति क्रियार्थायां क्रियायां कप्रत्ययापवादोऽण् प्रत्यय: ।
३ दीयतेऽस्मै, इति दानीयो विप्र: । सम्प्रदाने 'कृत्यल्युटो बहुलम्' (३-३-११३) इति अनियर् ।
४ 'अर्हे कृत्यतृचश्च' (३-३-१६९) इति अर्हार्थे तृच् । दातुमर्हो दाता ।
५ 'आवश्यकाधमणर्ययोर्णिनि:' (३-३-१७०) इति क्रमेणार्थद्वये णिनि प्रत्यय: ।
६ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति क्त प्रत्यय: ।
७ 'उपसर्गे घो कि:' (३-३-९२) इति कि प्रत्यय: । आदीयते इत्यादि: कारणम् ।
८ 'अन्तश्शब्दस्य अङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्' (वा. १-४-६५) इति वचनादुपसर्गत्वात् किप्रत्यय: ।
९ यङन्तात् पचाद्यति, यङो लुकि, 'एरनेकाच:—' (६-४-८२) इति यण् ।
१० 'इद् यति' (६-४-६५) इति धातोरीकारे गुणे च रूपम् ।
११ ईषदाद्युपपदेषु, 'आतो युच्' (३-३-१२८) इति युचि, अनादेश: ।
१२ 'आतश्चोपसर्गे' (३-३-१०६) इत्यङ्प्रत्यय: ।
१३ 'ड्वित: क्त्रि:' (३-३-८८) इति क्त्रिप्रत्यये, 'त्रेर्मप् नित्यम्' (४-४-२०) इति मप् नित्यम् । दद्भावश्च भवति ।
१४ 'न ल्यपि' (६-४-६९) इतीत्वनिषेद: । 'नेर्गदनदपत—' (८-४-१७) इति प्रोत्तरस्य नेर्णत्वम् ।
१५ 'दाभाभ्यां नु:' (द.उ. १-१४३) इति नुप्रत्यय: । दानु: = दक्षिणार्थं धनम् ।
१६ 'गादाभ्यां चेष्णक्' (द.उ. ५-४८) इति चेष्णक् प्रत्यय: । ददातीति देष्ण: = दानशील: । मा.धा. वृत्तौ तु देष्णु: इति रूपमौणादिके साधितम् ।

| | | | | |
|---|---|---|---|---|
| लिट् | दधौ | दधतुः | दधुः | प्र. |
| | दधिथ-दधाथ | दधथुः | दध | म. |
| | दधौ | दधिव | दधिम | उ. |
| लुट् | धाता | धातारौ | धातारः इत्यादि | |
| लृट् | धास्यति | धास्यतः | धास्यन्ति इत्यादि | |
| लोट् | दधातु-धत्तात् | धत्ताम् | दधतु | प्र. |
| | धेहि-धत्तात् | धत्तम् | धत्त | म. |
| | दधानि | दधाव | दधाम | उ. |
| लङ् | अदधात् | अधत्ताम् | अदधुः | प्र. |
| | अदधाः | अधत्तम् | अधत्त | म. |
| | अदधाम् | अदध्व | अदध्म | उ. |
| वि. लि. | दध्यात् | दध्याताम् | दध्युः | प्र. |
| | दध्याः | दध्यातम् | दध्यात | म. |
| | दध्याम् | दध्याव | दध्याम | उ. |
| आ. लि. | धेयात् | धेयास्ताम् | धेयासुः | प्र. |
| | धेयाः | धेयास्तम् | धेयास्त | म. |
| | धेयासम् | धेयास्व | धेयास्म | उ. |
| लुङ् | अधात् | अधाताम् | अधुः | प्र. |
| | अधाः | अधातम् | अधात | म. |
| | अधाम् | अधाव | अधाम | उ. |
| लृङ् | अधास्यत् | अधास्यताम् | अधास्यन् इत्यादि | |

आत्मनेपदपक्षे

| | | | | |
|---|---|---|---|---|
| लट् | धत्ते | दधाते | दधते | प्र. |
| | धत्से | दधाथे | धद्ध्वे | म. |
| | दधे | दध्वहे | दध्महे | उ. |
| लिट् | दधे | दधाते | दधिरे | प्र. |
| | दधिषे | दधाथे | दधिध्वे | म. |
| | दधे | दधिवहे | दधिमहे | उ. |
| लुट् | धाता | धातारौ | धातारः। इत्यादि | |
| लृट् | धास्यते | धास्येते | धास्यन्ते। इत्यादि। | |
| लोट् | धत्ताम् | दधाताम् | दधताम् | प्र. |
| | धत्स्व | दधाथाम् | धदध्वम् | म. |
| | दधै | दधावहै | दधामहै | उ. |
| लङ् | अधत्त | अदधाताम् | अदधत | प्र. |
| | अधत्थाः | अदधाथाम् | अदध्वम् | म. |
| | अदधि | अदध्वहि | अदध्महि | उ. |

| | | | | |
|---|---|---|---|---|
| वि. लि. | दधीत | दधीयाताम् | दधीरन् | प्र. |
| | दधीथाः | दधीयाथाम् | दधीध्वम् | म. |
| | दधीय | दधीवहि | दधीमहि | उ. |
| आ. लि. | धासीष्ट | धासीयास्ताम् | धासीरन् | प्र. |
| | धासीष्ठाः | धासीयास्थाम् | धासीध्वम् | म. |
| | धासीय | धासीवहि | धासीमहि | उ. |
| लुङ् | अधित | अधिषाताम् | अधिषत | प्र. |
| | अधिथाः | अधिषाथाम् | अधिड्ढ्वम् | म. |
| | अधिषि | अधिष्वहि | अधिष्महि | उ. |
| लृङ् | अधास्यत | अधास्येताम् | अधास्यन्त । इत्यादि । | |

शेषं सर्वं 'ददति' (१०९१) वत् ।

**कृत्सु**—धायकः-यिका, धापकः-पिका, धित्सकः-त्सिका, देधीयकः[१]-यिका, धाता-त्री, धापयिता, धित्सिता-त्री, देधीयिता-त्री, प्रणिदधत्[२]-दधती, धापयन्-न्ती, धित्सन्-न्ती, धास्यन्-न्ती-ती, धापयिष्यन्-न्ती-ती, धित्सिष्यन्-न्ती-ती, प्रणिदधानः, धापयमानः, हितम्ः[३] प्रणिहितः-हितवान्, धापितः, धित्सितः, देधीयितः-तवान्, प्रधः[४]-दधः,[५] धायः,[६] किष्किन्धा,[७] धामा,[८] धीवा[९]-धीवरी, शिरोधिः[१०]-विधिः, प्रणिधिः, वालधिः-उपाधिः, भूतधात्री,[११] श्रद्धालुः,[१२] विधेयः,[१३] विधाता,[१४] धापः, धित्सुः, दाधाः,[१५] धातव्यम्, धापयितव्यम्, प्रणिधानीयम्,

१ यङन्ताण्वुलि, 'घुमास्था–' (६-४-६६) इत्यादिना इत्वे द्विर्वचनादिकम् । अभ्यासे गुणः । यङन्ते सर्वत्रै वमेव ।

२ शतरि जुहोत्यादिभ्य–' (२-४-७५) इति शपः श्लुः । 'श्लौ' (६-१-१०) इति द्विर्वचनम् । 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपः । 'नेर्गद–' (८-४-१७) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेः णत्वम् । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः ।

३ निष्ठायाम्, 'दधातेर्हिः' (७-४-४२) इति प्रकृतेः हिः आदेशः । एवं तकारादौ किति प्रत्यये सर्वत्र ज्ञेयम् ।

४ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः ।

५ 'ददातिदधात्योर्विभाषा' (३-१-१३९) इति शप्रत्यये, शित्वात् शपि तस्य श्लौ, द्विर्वचने, शप्रत्ययस्य सार्वधातुकत्वेन 'श्नाभ्यस्तयोः–' (६-४-११२) इत्याकारलोपे च दधः इति रूपम् ।

६ दधातेरस्य शप्रत्ययस्य विभाषितत्वात् पक्षे, 'श्याऽद्व्यध–' (३-१-१४१) इत्यादिना कर्तरि णप्रत्यये, युगागमे च धायः इति ।

७ किं किं दधातीत्यर्थे 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मण्युपपदे कर्तरि कप्रत्यये, 'प्रास्करप्रभृतीनि च' (६-१-१५७) इति सुडागमे, किमो मकारस्य लोपः षत्वं च भवति ।

८ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति निरुपपदादस्मात् मनिन्प्रत्यये रूपम् ।

९ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति निरुपपदादस्मात् क्वनिप् प्रत्यये, ईत्वे रूपम् । स्त्रियां 'वनो र च' (४-१-७) इति ङीब्रिकौ । बहुधीवा बहुधीवरी इत्यत्र तु 'अनो बहुव्रीहेः' (४-१-१२) इति निषेधात् ङीबभावः, 'डाबुभाभ्यामन्यतरस्याम्' (४-१-१३) इति पाक्षिक ङीप् रेफः डाप् च भवति ।

१० शिरो धत्ते इति शिरोधिः = ग्रीवा । बाहुलकात् कर्तरि कप्रत्यये आतो लोपः इटि च (६-४-६४) इत्याकारलोपः ।

११ भूतानि धत्ते इति भूतधात्री = पृथिवी । बाहुलकात् कर्तरि ष्ट्रन् प्रत्यये, स्त्रियां षित्वात् ङीष् ।

१२ तच्छीलादिषु कर्तृषु 'स्पृहिगृहि–' (३-२-१५८) इत्यालुच् प्रत्ययः ।

१३ 'अर्हे कृत्यतृचश्च' (३-३-१६९) इति कर्तरि यत् प्रत्ययः । 'ईद् यति' (६-४-६५) इति धातोरीत्वे गुणः ।

१४ विदधातीति विधाता = ब्रह्मा । 'तृन्' (३-२-१३५) तृन् प्रत्ययः ।

१५ यङन्तात् पचाद्यचि यङो लुकि ईत्वाभावे, अभ्यासे 'दीर्घोऽकितः' (७-४-८२) इति दीर्घः ।

छाता-त्री, छाययिता-त्री, चिच्छासिता-त्री, चाच्छायिता-त्री, छ्यन्[१]-न्ती, छाययन्-न्ती, चिच्छासन्-न्ती, छास्यन्-न्ती-ती, छाययिष्यन्-न्ती-ती, छाययमानः, छाययिष्यमाणः, काष्ठच्छाः[२]-काष्ठच्छौ-काष्ठच्छाः, छितम्,[३] छितः-छितवान्-छातम्-छातः-छातवान्, काष्ठच्छः,[४] छायः,[५] प्रच्छः,[६] चिच्छासुः, चाच्छः[७], छातव्यम्, छाययितव्यम्, छानीयम्, छायनीयम्[८], छेयम्,[९] छाय्यम्, छायमानः, छाय्यमानः, छातुम्, छाययितुम्, छातिः-छितिः, आच्छा[१०]-छायना, चिच्छासा, चाच्छाया, छानम्, छायनम्, छात्वा-छित्वा, छाययित्वा, प्रच्छाय,[११] प्रच्छाय्य, छाया,[१२] छागः[१३]।

(११४७) **षो (सो) —अन्तकर्मणी**। (विध्वंस करना, नष्ट करना, नष्ट होना, मग्न होना)। सक.। सेट्। परस्मै.। १ स्यति २ ससौ ३ स्यतु ४ अस्यत् ५ स्येत् इत्यादि 'श्यति' (११४५) वत्। **अव**—अवसाने। **प्रति + अव**- भोजने। **परि + अव**—परिणामे। **अधि + अव**- अध्यवसाने।

(११४८) **दो—अवखण्डने**। (कतरना, विभाग करना)। सक.। अनिट्। परस्मै.। द्यति ददौ इत्यादि 'श्यति' (११४५) वत्।

(११४९) **जनी—प्रादुर्भावे**। (उत्पन्न होना, पैदा होना)। **णिच्**—उत्पन्न होना। अक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | जायते[१४] | जायेते | जायन्ते | प्र. |
| | जायसे | जायेथे | जायध्वे | म. |
| | जाये | जायावहे | जायामहे | उ. |

१ अत्रापि अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वमभ्यासह्रस्वे, 'दीर्घोऽकितः' (७-४-८३) इति दीर्घे, 'दीर्घात्' (६-१-७५) इति तुकि, श्चुत्वे चाच्छायकः इति रूपम्। एवं यङन्ते सर्वत्र ज्ञेयम्।
२ शतरि, आत्वाभावे, 'दिवादिभ्यः—' (३-१-६९) इति विकरणप्रत्यये श्यनि, 'ओतः श्यनि' (७-३-७१) इति ओकारस्य लोपे रूपम्। स्त्रियाम्, 'श्यप् श्यनोर्नित्यम्' (७-१-८१) इति नित्यं नुम्।
३ 'आत्वे, क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विपि रूपम्।
४ 'शाच्छोरन्यतरस्याम्' (७-४-४१) इति तकारादौ किति प्रत्यये परतः इत्वविकल्पः। तेन रूपद्वयम्, एवं क्तिनि, क्त्वाप्रत्यये च ज्ञेयम्।
५ 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मण्युपपदे कः। 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः।
६ 'श्याऽऽद्व्यधास्रु—' (३-१-१४१) इति कर्तरि णप्रत्यये युगागमः।
७ 'आतश्चोपसर्गे' (३-१-१३६) इति कर्तरि कप्रत्ययः। आकारलोपः।
८ यङन्तात् पचाद्यचि (३-१-१३४) 'न धातुलोप—' (१-१-४) इति सूत्रस्य प्रत्याख्यानपक्षे, अकारस्य पृथगल्लोपे 'यङोऽचि च' (२-४-७४) इति यकारमात्रस्य लुकि, अकारलोपस्य स्थानिवद् भावेन, अजाद्यार्धधातु-कङित्परकत्वात् 'आतो लोप इटि च' (६-४-६४) इति यति, 'ईद्यति' (६-४-६५) इति आकारलोपे रूपम्।
९ 'अचो यत्' (३-१-९७) इति यति, 'ईद्यति' (६-४-६५) इति आकारस्य ईकारे गुणः।
१० 'आतश्चोपसर्गे' (३-३-१०६) इति स्त्रियां भावादावङ्।
११ 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परि ५५) इति वचनात् पूर्वं ल्यबादेशः। तादिकित्प्रत्ययपरकत्वाभावात् वैकल्पिकमित्वं न प्रवर्तते।
१२ 'माच्छाससि सूभ्यो यः' (द.उ. ८-१२) इति य प्रत्ययः। छ्यति छायते वा इति छाया = प्रतिरूपम्।
१३ 'छापूञ्खडिभ्यो गक्' (द.उ. ३-६९) इति गक् प्रत्ययः। छ्यति इति छागः = अजः।
१४ 'ज्ञाजनोर्जा' (७-३-७९) अनयोर्जादिशः स्याच्छिति।

| | | | | |
|---|---|---|---|---|
| लिट् | जज्ञे[1] | जज्ञाते | जज्ञिरे | प्र. |
| | जज्ञिषे | जज्ञाथे | जज्ञिध्वे | म. |
| | जज्ञे | जज्ञिवहे | जज्ञिमहे | उ. |
| लुट् | जनिता | जनितारौ | जनितारः | प्र. |
| | जनितासे | जनितासाथे | जनिताध्वे | म. |
| | जनिताहे | जनितास्वहे | जनितास्महे | उ. |
| लृट् | जनिष्यते | जनिष्येते | जनिष्यन्ते | प्र. |
| | जनिष्यसे | जनिष्येथे | जनिष्यध्वे | म. |
| | जनिष्ये | जनिष्यावहे | जनिष्यामहे | उ. |
| लोट् | जायताम् | जायेताम् | जायन्ताम् | प्र. |
| | जायस्व | जायेथाम् | जायध्वम् | म. |
| | जायै | जायावहै | जायामहै | उ. |
| लङ् | अजायत | अजायेताम् | अजायन्त | प्र. |
| | अजायथाः | अजायेथाम् | अजायध्वम् | म. |
| | अजाये | अजायावहि | अजायामहि | उ. |
| वि. लि. | जायेत | जायेयाताम् | जायेरन् | प्र. |
| | जायेथाः | जायेयाथाम् | जायेध्वम् | म. |
| | जायेय | जायेवहि | जायेमहि | उ. |
| आ. लि. | जनिषीष्ट | जनिषीयास्ताम् | जनिषीरन् | प्र. |
| | जनिषीष्ठाः | जनिषीयास्थाम् | जनिषीध्वम् | म. |
| | जनिषीय | जनिषीवहि | जनिषीमहि | उ. |
| लुङ् | अजनि[2]-अजनिष्ट | अजनिषाताम् | अजनिषत | प्र. |
| | अजनिष्ठाः | अजनिषाथाम् | अजनिढ्वम् | म. |
| | अजनिषि | अजनिष्वहि | अनजिष्महि | उ. |
| लृङ् | अजनिष्यत् | अजनिष्येताम् | अजनिष्यन्त | प्र. |
| | अजनिष्यथाः | अजनिष्येथाम् | अजनिष्यध्वम् | म. |
| | अजनिष्ये | अजनिष्यावहि | अजनिष्यामहि | उ. |

**भावे**—जन्यते-जायते। **णिचि**—जनयति[3]। **सनि**—जिजनिषते। **यङि**— जञ्जन्यते-जाजायते। **यङ्लुकि**—जञ्जनीति-जञ्जन्ति। **कृत्सु**—जनकः[4]-निका, जनकः[5]-निका,

१ गमहनजन–' (६-४-९८) इत्युधालोपः।

२ 'दीपजन–' (३-१-६१) इति वा चिण्। 'चिणो लुक्'।

३ 'बुधयुधनशजनेङ्–' (१-३-८६) इति परस्मैपदम्। 'जनीजृष्–' (ग.सू.) इति कित्वात् ह्रस्वः।

४ 'जनिवध्योश्च' (७-३-३५) इति निषेधात् 'अत उपधायाः' (७-२-११६) इति वृद्धि र्न भवति। एवं घञि, णमुल्यपि ज्ञेयम्।

५ णिचि, 'अत उपधायाः' (७-२-११६) इति प्राप्ता वृद्धिः 'जनिवध्योश्च' (७-३-३५) इति निषिध्यते। न च वृद्धौ सत्यामपि, 'जनीजृष–' (ग.सू. भ्वादौ) इति वचनेन मित्वात्, 'मितां ह्रस्वः' (६-४-९२) इति ह्रस्वः इति शङ्क्यम्, मित्त्वविधानस्य, चिण्णमुल्परकणौ दीर्घविकल्पविधानेन जागरूकत्वाच्च। एवं ण्यन्ते सर्वत्र ज्ञेयम्।

जिजनिषकः[१]-षिका, जञ्जनकः[२]-जन्जनकः-निका, जाजायकः-यिका, जनिता-त्री, जनयिता-त्री, जनयन्[३]-न्ती, जनयिष्यन्-न्ती-ती, जायमानः[४], जिजनिषमाणः, जञ्जन्यमानः-जाजायमानः, जनिष्यमाणः, प्रजा[५]-प्रजानौ-प्रजानः, जातम्[६]-जातः-जातवान्, जनितः, जनः, प्रजनिष्णुः,[७] जज्ञिः,[८] विजावा[९]-विजावानौ-विजावानः, विजावरी, जन्यः,[१०] मन्दुरजः,[११] प्रावृषिजः[१२]-शरदिजः- कालेजः-दिविजः, सरसिजम्[१३]-सरोजम्, वर्षेजः[१४]-वर्षजः-क्षरेजः-क्षरजः-शरेजः- शरजः- वरेजः-वरजः, संस्कारजः[१५]-अदृष्टजः, प्रजा[१६]-अनुजः, बीजम्,[१७] पुमनुजा[१८]-रामानुजः, पुंसानुजः,[१९] अजः[२०]-द्विजः, ब्राह्मणजः, क्षत्रियजः-नगजः[२१]-वनजः,

१ 'जनसनखनां सञ्झलोः' (६-४-४२) इति सूत्रेण आत्वं तु नात्र प्रवर्तते। झलादौ सनि तद्विधानात्। अत्र चेडागम प्रवृत्या सनः झलादित्वाभावात्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

२ 'ये विभाषा' (६-४-४३) इत्यनेन आत्वविकल्पः।

३ 'बुधयुधनशजनेङ्–' इति ण्यन्तात् परस्मैपदमेव न तु शानच्।

४ 'दिवादिभ्यः–' (३-१-६९) इति श्यन् प्रत्ययः। 'ज्ञाजनोर्जा–' (७-३-७९) इति प्रकृतेः जादेशः।

५ क्विपि 'अनुनासिकस्य क्विझलोः 'क्ङिति' (६-४-१५) इति दीर्घः। 'न लोपः प्रातिपदिकान्तस्य' (८-२-७) इति नकारलोपः।

६ ईदित्वेन् 'श्वीदितो निष्ठायाम्' (७-२-१४) इतीण्णिषेधः। 'जनसनखनां सञ् झलोः' (६-४-४२) इति नकारस्याकारः। सवर्णदीर्घः।

७ 'अलङ्कृञ्निराकृञ्प्रजनोत्पद–' (३-२-१३६) इत्यादिना तच्छीलादिषु कर्तृषु प्रोपसृष्टादस्मात् इष्णुच् प्रत्ययः।

८ 'भाषायां धाञ्–' (वा. ३-२-१७१) इति लिटः किः किन् वा आदेशः। लिड्वद्भावात् 'लिटि धातोरनभ्यासस्य' (६-१-८) इति द्विर्वचनम्। तच्छिलिकोऽयं प्रत्ययः। अभ्यासकार्यम्। 'गमहनजन–' (६-४-९८) इत्युपधालोपः। 'स्तोः श्नुचा श्चुः' (८-३-३०) इति श्चुत्वम्।

९ 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति वनिप् प्रत्यये, 'विड्वनोरनुनासिकस्यात्' (६-४-४१) इत्यात्वे, सवर्णदीर्घे, 'नलोपः प्राति–' (८-२-७) इति नकारलोपे रूपम्। नकारान्तोऽयं शब्दः। स्त्रियां 'वनो र च' (४-१-७) इति ङीब्रेफौ भवतः।

१० 'भव्यगेय–' (३-४-६८) इति कर्तरि यत् प्रत्ययान्तो निपातितः। पक्षे भावेऽप्ययं प्रत्ययः।

११ 'सप्तम्यां जनेर्डः' (३-२-९७) इति डप्रत्ययः। 'ङ्यापोः संज्ञाच्छसोर्बहुलम्' (६-३-६३) इति पूर्वपदस्य ह्रस्वः।

१२ 'प्रावृट् शरत्कालदिवां जे' (६-३-१५) इति सप्तम्या अलुक्।

१३ 'तत्पुरुषे कृति बहुलम्' (६-३-१४) इति वा सप्तम्या अलुक्।

१४ 'विभाषा वर्षक्षरशरवरात्' (६-३-१६) इति विभाषाया सप्तम्या अलुक्।

१५ 'पञ्चम्यामजातौ' (३-२-९८) इति डप्रत्ययः।

१६ 'उपसर्गे च संज्ञायाम्' (३-२-९९) इति डप्रत्ययः।

१७ विशेषेण जायते इति बीजम्। 'उपसर्गे च संज्ञायाम्' (३-२-९९) इति डप्रत्ययः। 'कृञो द्वितीयतृतीय-शम्बबीजात् कृषौ' (५-४-५८) इत्यत्र 'बीज' इति निर्देशात् पृषोदरादित्वेन (६-३-१०९) 'वि' इत्युपसर्गस्य दीर्घः, वकारस्य बकारादेशः।

१८ 'अनौ कर्मणि' (३-२-१००) इति डप्रत्ययः।

१९ 'पुंसाऽनुजो जनुषाऽन्ध इति वक्तव्यम्' (वा. ६-३-३) इति तृतीया अलुक्।

२० 'अन्येभ्योऽपि दृश्यते' (३-२-१०१) इति डप्रत्यय। '–सप्तभ्याम्–' (३-२-९७) इत्युक्तम्; असप्तम्यामपि दृश्यते– न जायते इत्यजः। द्विर्जाताः द्विजाः। 'पञ्चम्यामजातौ' (३-२-९८) इत्युक्तम्, अजातावपि दृश्यते– 'ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम्। 'उपसर्गे च संज्ञायाम्। असंज्ञायामपि दृश्यते अभिजाः परिजाः केशाः। 'अनौ कर्मणि' (३-२-१००) इत्युक्तम्, अकर्मण्यपि दृश्यते– अनुजातः = अनुजः। अपि शब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, कारकान्तरेऽपि– परितः खाता परिखा, आखा। इति काशिका (३-२-१०) अत्रानुसन्धेयः।

२१ 'न गजा नगजा दयिता दयिता विगतं विगतं वलितं वलितम्।' (भ.का. १०/९)

कौशल्याजः,[१] अभिज-परिजः(केशः)जनः,जिजनिषुः,जञ्जनः-जाजः,[२] जनितव्यम्,जनयितव्यम्, जननीयम्, जन्यम्,[३] जन्यमानः-जायमानः, प्रजनः, जनः, जिजनिषः, जञ्जनः-जाजायः, जनितुम्, जनयितुम्,जिजनिषितुम्,जञ्जनितुम्-जाजायितुम्,जातिः,[४] अजननिः,[५] जनना,जननम्,जनित्वा, जनयित्वा,प्रजन्य-प्रजाय,प्रजनय्य,[६] जन्तुः,[७] जनयित्नुः,[८] जनकः,[९] जन्म,[१०] जठरम्,[११] जनुः,[१२] जनानां समूहो जनता, जाया[१३] ।

( ११५० ) **दीपी—दीप्तौ** । (प्रकाशित होना, चमकना) । अकर्म. । सेट् । आत्मने. ।

| | | | | |
|---|---|---|---|---|
| लट् | दीप्यते | दीप्येते | दीप्यन्ते | प्र. |
| | दीप्यसे | दीप्येथे | दीप्यध्वे | म. |
| | दीप्ये | दीप्यावहे | दीप्यामहे | उ. |
| लिट् | दिदीपे | दिदीपाते | दिदीपिरे | प्र. |
| | दिदीपिषे | दिदीपाथे | दिदीपीध्वे | म. |
| | दिदीपे | दिदीपिवहे | दिदीपिमहे | उ. |
| लुट् | दीपिता | दीपितारौ | दीपितारः इत्यादि | |
| लृट् | दीपिष्यते | दीपिष्येते | दीपिष्यन्ते | प्र. |
| | दीपिष्यसे | दीपिष्येथे | दीपिष्यध्वे | म. |
| | दीपिष्ये | दीपिष्यावहे | दीपिष्यामहे | उ. |
| लोट् | दीप्यताम् | दीप्येताम् | दीप्यन्ताम् | प्र. |
| | दीप्यस्व | दीप्येथाम् | दीप्यध्वम् | म. |
| | दीप्यै | दीप्यावहै | दीप्यामहै | उ. |
| लङ् | अदीप्यत | अदीप्येताम् | अदीप्यन्त | प्र. |
| | अदीप्यथाः | अदीप्येथाम् | अदीप्यध्वम् | म. |
| | अदीप्ये | अदीप्यावहि | अदीप्यामहि | उ. |

१ 'कौशल्याज शशादीनां तेषां नैकोऽप्यह कपिः ॥ (म.का. ६/१३४)
२ यङन्तात् पचाद्यचि (३-१-१३४) पृथगलोपे, अकारस्य स्तानिवद्भावात् उत्तरखण्डाकारस्य लोपः ।
३ 'तकिशसिचतिजनिभ्यो यद्वाच्यः' (वा. ३-१-९७) इति ण्यदपवादो यत् ।
४ 'तितुत्र–' (७-२-९) इतीण्णिषेधे, 'जनसनखनां संज्झलोः' (६-४-४२) इति आत्वे, सवर्णदीर्घे रूपम् ।
५ स्त्रियां भावे 'आक्रोशे नञ्यनिः' (३-३-११२) इत्यनिप्रत्ययः ।
६ 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः ।
७ 'कमिमनिजनि–' (द.उ. १-१२५) इत्यादिना तुप्रत्ययः । जायते, जजन्ति इति वा जन्तुः = प्राणी ।
८ ण्यन्तादस्मात् औणादिके (द.उ. १-१४०) इत्यनुच् प्रत्यये जनयित्नुः = पिता । 'अयामन्ताल्वाय्येत्न्विष्णुषु च' (६-४-५५) इति णेरयादेशः ।
९ जनयतीति जनकः = पिता । 'क्वुन् शिल्पिसंज्ञयोः' (द.उ. ३-५) इति क्वुन् प्रत्ययः ।
१० 'मनिन्' (द.उ. ६-७३) इति मनिनि रूपम् । जायते जयन्ते वा जन्म ।
११ 'जनेरर ठः' (द.उ. ८-९८) इति अरप्रत्यय, इति । धातोश्च ठकारेऽन्तादेशे रूपम् ।
१२ 'जनेरुसिः' (द.उ. ९-३७) इत्युसिप्रत्ययः । जायते इति जनुः = जन्म ।
१३ 'जनेर्यक्' (द.उ. ८-१३) इति यक् प्रत्ययः । जायते जन्यते वा स्यापत्यमिति जाया = भार्या । 'ये विभाषा' (६-४-४३) इत्यात्वे, सवर्णदीर्घे च रूपम् ।

| | | | | |
|---|---|---|---|---|
| वि. लि. | दीप्येत | दीप्येयाताम् | दीप्येरन् | प्र. |
| | दीप्येथाः | दीप्येयाथाम् | दीप्येध्वम् | म. |
| | दीप्येय | दीप्येवहि | दीप्येमहि | उ. |
| आ. लि. | दीपिषीष्ट | दीपिषीयास्ताम् | दीपिषीरन् | प्र. |
| | दीपिषीष्ठाः | दीपिषीयास्थाम् | दीपिषीध्वम् | म. |
| | दीपिषीय | दीपिषीवहि | दीपिषीमहि | उ. |
| लुङ् | अदीपि-अदीपिष्ट | अदीपिषाताम् | अदीपिषत | प्र. |
| | अदीपिष्ठाः | अदीपिषाथाम् | अदीपिढ्वम् | म. |
| | अदीपिषि | अदीपिष्वहि | अदीपिष्महि | उ. |
| लृङ् | अदीपिष्यत | अदीपिष्येताम् | अदीपिष्यन्त इत्यादि। | |

**भावे**—दीप्यते। ९. अदीपि। **णिचि**—दीपयति-ते। **सनि**—दिदीपिषते। **यङि**—देदीप्यते। **यङ्लुकि**—देदीप्ति-देदीपीति। **कृत्सु**—दीपकः-पिका, दीपकः-पिका, दिदीपिषकः-षिका, देदीपकः-पिका, दीपिता-त्री, दीपयिता-त्री, दीपयन्-न्ती, दीपयिष्यन्-न्ती-ती, दीपमानः, दीपयमानः, दीपिष्यमाणः, दीपयिष्यमाणः, प्रदीप्-प्रदीपौ-प्रदीपः, दीप्तम्,[1] दीप्तः-तवान्, दीपितः, दीपः,[2] दीपिता, दीपनीयम्,[3] दीप्रः,[4] सन्दीपी, सन्दीपनः,[5] प्रदीपः, दिदीपिषुः, देदीपः। दीपितव्यम्, दीपयितव्यम्, प्रणिदीपनीयम्-प्रनिदीपनीयम्, दीप्यम्, दीप्यमानः, दीपितुम्, दीपयितुम्, दीप्तिः,[6] दीपना, दीपनम्, दीपित्वा, दीपयित्वा, सन्दीप्य, प्रदीप्य

**( ११५१ ) पूरी—आप्यायने**। (पूर्ण कनरा, भरना)। सक.। सेट्। आत्मने.। १. पूर्यते। २. पुपुरे। इत्यादि 'दीप्यति' (११५०) वत्।

**( ११५२ ) तूरी—गतित्वरणहिंसनयोः**। (जल्दी करना दुःख देना, सताना)। सक.। सेट्.। आत्मने.। १. तूर्यते। २. तुतूरे। इत्यादि 'दीप्यति' (११५०) वत्।

**( ११५३ ) धूरी—हिंसागत्योः**। (मारना, हिंसा करना, जाना)। हिंसायां सक.। सेट्। आत्मने.। १. धूर्यते। इत्यादि 'दीप्यति' (११५०) वत्। ९. अधूरिष्ट।

**( ११५४ ) गूरी—हिंसागत्योः**। (मारना, जाना)। सकर्म.। सेट्। आत्मने.। ईदित्। १. गूर्यते। २. जुगूरे। ३. गूरिता। ८. गूरिषीष्ट। ९. अगूरिष्ट। 'दीप्यति' (११५०) वत्।

१ 'श्वीदितो निष्टायाम्' (७-२-१४) इति इण्णिषेधो निष्ठायाम्।

२ इगुपलक्षणः कप्रत्ययः कर्तरि भवति।

३ दीपयतीति दीपनीयम् औषधम्। बाहुलकात् कर्तर्यनीयर् इति प्र. सर्वस्वे।

४ 'तच्छील-तद्धर्म-तत्साधुकारिष्वर्थेषु' 'नमिकम्पि स्म्यजसकमर्हिंसदीपो रः' (३-२-१६७) इति रप्रत्यये: रूपम्। 'नेड् वशि कृति' (७-२-८) इतीण्णिषेधः।

५ सम्यक् दीपयतीति सन्दीपनः नन्द्यादित्वात् कर्तरि ल्युः तस्यापत्यमित्यर्थे 'अत इञ्' (४-१-९५) इतीञि सन्दीपिनिः इति भवति।

६ 'गुरोश्च हलः' (३-३-१०३) इति प्राप्तम् अकारप्रत्ययं बाधित्वा, 'क्तिन् आबादिभ्यः' (वा. ३-३-९४) इति क्तिन्। आबादयः = आप्लृधातुप्रकाराः दीर्घोपधाः, हलादयोऽजादयो वा धातवः येषां प्रयोगे क्तिन् जायते।

(११५५-५६) **घूरी-जूरी—हिंसावयोहान्योः**। ईदित्। (हिंसा करना, दुख देना, वृद्ध होना)। सक.। सेट्। आत्मने.। घूर्यते। जुघूरे। जूर्यते। इत्यादि 'दीप्यति' (११५०) वत्।

(११५७) **शूरी—हिंसातस्तवनयोः**। (मार डालना, दुःख देना, निश्चल होना)। सक.। सेट्। आत्मने.। शूर्यते शुशुरे। इत्यादि 'दीप्यति' (११५०) वत्। अशूरिष्ट इत्येव

(११५८) **चूरी—दाहे**। (जलाना, भस्म करना)। सक.। सेट्। आत्म.। ईदित्। चूर्यते। चुचुरे 'गुरी धातुवत्'।

(११५९) **तप—ऐश्वर्ये वा**। अयं धातुरैश्वर्ये वा तङ्श्यनौ। उत्पादयति। अक.। अनिट्। आत्मने.। १.तप्यते। २.**प्र.** तेपे। **म.** तेपिषे। ३.तप्ता। ४.तप्स्यते। ५.तप्यताम्। ६. अतप्यत। ७. तप्येत। ८. तपिषीष्ट। ९. अतप्त। १०. अतप्सयत।

**कृत्सु**—तापकः-पिका, तितप्सकः-प्सिका, तातपकः-पिका, तप्ता-त्री, तापयिता-त्री, तितप्सिता-त्री, इत्यादि सर्वाणि रूपाणि भौवादिक 'तपति' (९८५) वत्।

(११६०) **वृतु—वरणे**। (पसन्द करना, सेवा कना, नौकरी करना)। सक.। सेट्। आत्मने.।

१. वृत्यते। २. **प्र.** ववृते ववृताते ववृतिरे। **म.** ववृतिषे ववृताथे ववृतिध्वे। **उ.** ववृते ववृतिवहे ववृतिमहे। ३. वर्तिता। ४. वत्तिष्यते। ५. वृत्यताम्। ६. अवृत्यत। ७. वृत्येत। ८. **प्र.** वर्तिषीष्ट वर्तिषीयास्ताम् वर्तिषीरन्। **म.** वर्तिषीष्ठाः वर्तिषीयास्थाम् वर्तिषीध्वम्। **उ.** वतिषीय वर्तिषीवहि वर्तिषीमहि। ९. **प्र.** अवर्तिष्ट अवर्तिषाताम् अवर्तिषत। **म.** अवर्तिष्ठाः अवर्तिषाथाम् अवर्तिड्ढ्वम्-ध्वम्। **उ.** अवर्तिषि अवर्तिष्वहि अवर्तिष्महि। १०. अवर्तिष्यत।

**कृत्सु**—वर्तकः-र्तिका, विवर्तिषकः-षिका, वरीवृतकः-तिका, वर्तयिता-त्री, वर्यति-त्री, विवर्तिषिता-त्री, वरीवृतिता-त्री, वृत्तम्, निष्ठायाम्-वृत्तः-वृत्तवान, क्यपि-वृत्यम्, वृत्त्वा-वर्तित्वा, इत्यादि भौवदिक 'पर्षति' वत्।

(११६१) **क्लिश—उपतापे**। उपतापः = रोगः। (रोगी होना, दुःखी होना, दुःख सहन करना)। अक.। सेट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | क्लिश्यते | क्लिश्येते | क्लिश्यन्ते | प्र. |
| | क्लिश्यसे | क्लिश्येथे | क्लिश्यध्वे | म. |
| | क्लिश्ये | क्लिश्यावहे | क्लिश्यामहे | उ. |
| लिट् | चिक्लिशे | चिक्लिशाते | चिक्लिशिरे | प्र. |
| | चिक्लिसिषे | चिक्लिशाथे | चिक्लिशिध्वे | म. |
| | चिक्लिशे | चिक्लिशिवहे | चिक्लिशिमहे | उ. |
| लुट् | क्लेशिता | क्लेशितारौ | क्लेशितारः इत्यादि। | |
| लृट् | क्लेशिष्यते | क्लेशिष्येते | क्लेशिष्यन्ते इत्यादि। | |

| | | | | |
|---|---|---|---|---|
| लोट् | क्लिश्यताम् | क्लेश्येताम् | क्लिश्यन्ताम् | प्र. |
| | क्लिश्यस्व | क्लिश्येथाम् | क्लिश्यध्वम् | म. |
| | क्लिश्यै | क्लिश्यावहै | क्लिश्यामहै | उ. |
| लङ् | अक्लिश्यत | अक्लिश्येताम् | अक्लिश्यन्त | प्र. |
| | अक्लिश्यथाः | अक्लिश्येथाम् | अक्लिश्यध्वम् | म. |
| | अक्लिश्ये | अक्लिश्यावहि | अक्लिश्यामहि | उ. |
| वि. लि. | क्लिश्येत | क्लिश्येयाताम् | क्लिश्येरन् | प्र. |
| | क्लिश्येथाः | क्लिश्येयाथाम् | क्लिश्येध्वम् | म. |
| | क्लिश्येय | क्लिश्येवहि | क्लिश्येमहि | उ. |
| आ. लि. | क्लेशिषीष्ट | क्लेषीयास्ताम् | क्लेषिषीरन् | प्र. |
| | क्लेशिषीष्ठाः | क्लेशिषीयास्थाम् | क्लेशिषीध्वम् | म. |
| | क्लेशिषीय | क्लेशिषीवहि | क्लेशिषीमहि | उ. |
| लुङ् | अक्लेशिष्ट | अक्लेशिषाताम् | अक्लेशिषत | प्र. |
| | अक्लेशिष्ठाः | अक्लेशिषाथाम् | अक्लेशिड्ढ्वम्-ध्वम् | म. |
| | अक्लेशिषि | अक्लेशिष्वहि | अक्लेशिष्महि | उ. |
| लृङ् | अक्लेशिष्यत | अक्लेशिष्येताम् | अक्लेशिष्यन्त इत्यादि। | |

**भावे**—क्लिश्यते। ९. अक्लेशि। **णिचि**—क्लेशयति-ते। ९. अचिक्लिशत्-त। **सनि**—चिक्लेशिषते-चिक्लिशिषते। **यङि**—चेक्लिश्यते। **यङ्लुकि**—चेक्लेष्टि-चेक्लिशीति। **कृत्सु**—क्लेशनीयम्, क्लेशनम्, क्लेशकः-शिका, क्लेशी, क्लेशः, क्लेशिता-त्री, क्लिष्टः, क्लिष्टिः, क्लेशितुम्, क्लेशितव्यम्, क्लिष्ट्वा, संक्लिश्य, क्लेश्यम्, क्लिश्यन्, क्लेशिष्यन्।

**(११६२) काशृ—दीप्तौ**। (चमकना, निर्—निष्। निकाल देना)। अक.। सेट्। आत्मने.।

१. काश्यते। २. चकाशे। ५. काश्यताम्। ६. अकाश्यत। ७. काश्येत। इत्यादि 'गाधति' (४) वत्।

**(११६३) वाशृ—शब्दे**। (शब्द करना)। अक.। सेट्। आत्मने.। १ वाश्यते। २ ववाशे। ३ वाशिता। ४ वाशिष्यते। ५ अवाशिष्ट। इत्यादि।

**(११६४) मृष—तितिक्षायाम्**। (सहन करना, क्षमा करना)। सकर्म.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | मृष्यति | मृष्यतः | मृष्यन्ति | प्र. |
| | मृष्यसि | मृष्यथः | मृष्यन्ति | म. |
| | मृष्यामि | मृष्यावः | मृष्यामः | उ. |
| लिट् | ममर्ष | ममृषतुः | ममृषुः | प्र. |
| | ममर्षिथ | ममृषथुः | ममृष | म. |
| | ममर्ष | ममृषिव | ममृषिम | उ. |

| | | | | |
|---|---|---|---|---|
| लुट् | मर्षिता | मर्षितारौ | मर्षितारः | प्र. |
| | मर्षितासि | मर्षितास्थः | मर्षितास्थ | म. |
| | मर्षितास्मि | मर्षितास्वः | मर्षितास्मः | उ. |
| लृट् | मर्षिष्यति | मर्षिष्यतः | मर्षिष्यन्ति | प्र. |
| | मर्षिष्यसि | मर्षिष्यथः | मर्षिष्यथ | म. |
| | मर्षिष्यामि | मर्षिष्यावः | मर्षिष्यामः | उ. |
| लोट् | मृष्यतु-तात् | मृष्यताम् | मृष्यन्तु | प्र. |
| | मृष्य-तात् | मृष्यतम् | मृष्यत | म. |
| | मृष्याणि | मृष्याव | मृष्याम | उ. |
| लङ् | अमृष्यत् | अमृष्यताम् | अमृष्यन् | प्र. |
| | अमृष्यः | अमृष्यतम् | अमृष्यत | म. |
| | अमृष्यम् | अमृष्याव | अमृष्याम | उ. |
| वि. लि. | मृष्येत् | मृष्येताम् | मृष्येयुः | प्र. |
| | मृष्येः | मृष्यतम् | मृष्येत | म. |
| | मृष्येयम् | मृष्येव | मृष्येम | उ. |
| आ. लि. | मृष्यात् | मृष्यास्ताम् | मृष्यासुः | प्र. |
| | मृष्याः | मृष्यास्तम् | मृष्यास्त | म. |
| | मृष्यासम् | मृष्यास्व | मृष्यास्म | उ. |
| लुङ् | अमर्षीत् | अमर्षिष्टाम् | अमर्षिषुः | प्र. |
| | अमर्षीः | अमर्षिष्टम् | अमर्षिष्ट | म. |
| | अमर्षिषम् | अमर्षिष्व | अमर्षिष्म | उ. |
| लृङ् | अमर्षिष्यत् | अमर्षिष्यताम् | अमर्षिष्यन् | प्र. |
| | अमर्षिष्यः | अमर्षिष्यतम् | अमर्षिष्यत | म. |
| | अमर्षिष्यम् | अमर्षिष्याव | अमर्षिष्याम | उ. |

**आत्मनेपदपक्षे**—१. मृष्यते। २. **प्र.** ममृषे ममृषाते ममृषिरे। **म.** ममृषिषे ममृषाथे ममृषिध्वे। **उ.** ममृषे ममृषिवहे ममृषिमहे। ३. मर्षिता। ४. मर्षिष्यते। ५. मृष्यताम्। ६. अमृष्यत। ७. मृष्येत। ८. मर्षिषीष्ट। ९. अमर्षिष्ट। १०. अमर्षिष्यत।

**कर्मणि**— मृष्यते। **णिचि**— मर्षयति-ते। अममर्षत्-त-अमीमृषत्[१]-त। **सनि**— मिमर्षिषति ते। **यङि**—मरीमृष्यते। **यङ्लुकि**—ममृषीति-मर्मष्टि। **कृत्सु**[१]—मर्षकः-र्षिका, ममर्षिकः-र्षिका, मरीमृषकः-षिका, मर्षिता-त्री, मर्षयिता-त्री, मिमर्षिषिता-त्री, मरीमृषिता-त्री, मर्षणीयम्, मर्षणम्, मर्षः, मर्षी, मर्षितुम्, मृष्टः, मृष्टिः, मृष्यन्, मर्षिष्यन्, मर्षिष्यमाणः, परिमृष्यन्[२]-न्ती,

१ 'उर्त्रत्' (७-४-७) उपधायाः ऋवर्णस्य स्थाने ऋद्वा चङ् परे णौ।

२ 'परेर्मृषः' (१-३-८२) इति परिपूर्वकस्यास्य कर्तृगामिन्यपि क्रियाफले परस्मैपदं भवति। तेन शतरि श्यनि अङ्गस्य गुणनिषेधे च रूपमेवम्।

मर्षितः[१]-मर्षितवान्, अपमृषितम् (वाक्यम्) दुर्मर्षणः[२], मर्षित्वा[३]-मृषित्वा, मर्षणः,[४] मृष्यमाणः, इत्यादि दैवादिक 'तृष्यति' (१२२८) वत्।

(११६५) **शुचिर्—पूतीभावे**। (शुद्ध होना, स्नान करना, पवित्र होना)। अकर्म.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | शुच्यते | शुच्येते | शुच्यन्ते | प्र. |
| | शुच्यसे | शुच्येथे | सुच्यध्वे | म. |
| | शुच्ये | शुच्यावहे | शुच्यामहे | उ. |
| लिट् | शुशुचे | शुशुचाते | शुशुचिरे | प्र. |
| | शुशुचिषे | शुशुचाथे | शुशुचिध्वे | म. |
| | शुशुचे | शुशुचिवहे | शुशुचिमहे | उ. |
| लुट् | शोचिता | शोचितारौ | शोचितारः इत्यादि। | |
| लृट् | शोचिष्यते | शोचिष्येते | शोचिष्यन्ते इत्यादि। | |
| लोट् | शुच्यताम् | शुच्येताम् | शुच्यन्ताम् | प्र. |
| | शुच्यस्व | शुच्येथाम् | शुच्यध्वम् | म. |
| | शुच्यै | शुच्यावहै | शुच्यामहै | उ. |
| लङ् | अशुच्यत | अशुच्येताम् | अशुच्यन्त | प्र. |
| | अशुच्यथाः | अशुच्येथाम् | अशुच्यध्वम् | म. |
| | अशुच्ये | अशुच्यावहि | अशुच्यामहि | उ. |
| वि. लि. | शुच्येत | शुच्येयाताम् | शुच्येरन् | प्र. |
| | शुच्येथाः | शुच्येयाथाम् | शुच्येध्वम् | म. |
| | शुच्येय | शुच्येवहि | शुच्येमहि | उ. |
| आ. लि. | शोचिषीष्ट | शोचिषीयास्ताम् | शोचिषीरन् | प्र. |
| | शोचिषीष्ठाः | शोचिषीयास्थाम् | शोचिषीध्वम् | म. |
| | शोषिषीय | शोचिषीवहि | शोचिषीमहि | उ. |
| लुङ् | अशोचिष्ट | अशोचिषाताम् | अशोचिषत | प्र. |
| | अशोचिष्ठाः | अशोचिषाताम् | अशोचिड्ढ्वम्-ध्वम् | म. |
| | अशोचिषि | अशोचिषिष्वहि | अशोचिष्महि | उ. |
| लृङ् | अशोचिष्यत | अशोचिष्येताम् | अशोचिष्यन्त इत्यादि। | |

**परस्मैपदपक्षे**—१. शुच्यति। २. प्र. शुशोच शुशुचतुः शुशुचुः म. शुशोचिथ शुशुचथुः शुशुच। उ. शुशोच शुशुचिव शुशुचिम। ३. शोचिता। ४. शोचिष्यति। ५. प्र. शुच्यतु।

१ 'मृषस्तितिक्षायाम्' (१-२-२०) इति सेटों निष्ठयाः कित्त्वनिषेधात् गुणे रूपमेवम्।

२ ईषदाद्युपपदेषु 'भाषायां शसि युधि–' (वा. ३-३-१३०) इति खलपवादो युच्। 'वा इत्येके' इति प्रक्रियाकौमुदी। तन्मते ईषन्मर्षः - दुर्मर्षः - सुमर्षः इति रूपाण्यपि बोध्यानि।

३ क्त्वायाम् 'तृषिमृषिकृशेः काश्यपस्य' इति कित्वविकल्पः। तेन रूपद्वयम्।

४ 'नन्द्यादेः' (३-१-१३४) आकृतिगणत्वात्, बाहुलकाद् वा कर्तरि, ण्यन्तात्, शुद्धाद् वा ल्युप्रत्यये रूपमेवम्।

शुच्यतात् शुच्यताम् शुच्यन्तु। म. शुच्य-शुच्यतात् शुच्यतम् शुच्यत। उ. शुच्यानि शुच्याव शुच्याम। ६. प्र. अशुच्यत् अशुच्यताम् अशुच्यन्। म. अशुच्यः अशुच्यतम् अशुच्यत। उ. अशुच्यम् अशुच्याव अशुच्याम। ७. प्र. शुच्येत् शुच्येताम् शुच्येयुः। म. शुच्येः शुच्येतम् शुच्येत। उ. शुच्येयम् शुच्येव शुच्येम। ८. प्र. शूच्यात् शुच्यास्ताम् शुच्यासुः। म. शुच्याः शुच्यास्तम् शुच्यास्त। उ. शुच्यासम् शुच्यास्व शुच्यास्म। ९. प्र. अशोचीत् अशोचिष्टाम् अशोचिषुः। म. अशोचीः अशोचिष्टम् अशोचिष्ट। उ. अशोचिषम् अशोचिष्व अशोचिष्म। पक्षे—प्र. अशुचत् अशुचताम् अशुचन्। म. अशुचः अशुचतम् अशुचत। उ. अशुचम् अशुचाव अशुचाम। १०. अशोचिष्यत्।

**कृत्सु**—शुचित्वा-शोचित्वा, शुक्तम्, शुक्तिः, शुक्तिका। इतराणि सर्वाणि रूपाणि दैवादिक दीप्यति (११५०) वत्।

**( ११६६ ) णह (नह) —बन्धने**। (बांधना)। सकर्म.। अनिट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | नह्यति | नह्यतः | नह्यन्ति | प्र. |
| | नह्यसि | नह्यथः | नह्यथ | म. |
| | नह्यामि | नह्यावः | नह्यामः | उ. |
| लिट् | ननाह | नेहतुः | नेहुः | प्र. |
| | नेहिथ-ननद्ध | नेहथुः | नेह | म. |
| | ननाह-ननह | नेहिव | नेहिम | उ. |
| लुट् | नद्धा | नद्धारौ | नद्धारः इत्यादि। | |
| लृट् | नत्स्यति | नत्स्यतः | नत्स्यन्ति इत्यादि। | |
| लोट् | नह्यतु-तात् | नह्यताम् | नह्यन्तु | प्र. |
| | नह्य-तात् | नह्यतम् | नह्यत | म. |
| | नह्यामि | नह्याव | नह्याम | उ. |
| लङ् | अनह्यत् | अनह्यताम् | अनह्यन् | प्र. |
| | अनह्यः | अनह्यतम् | अनह्यत | म. |
| | अनह्यम् | अनह्याव | अनह्याम | उ. |
| वि. लि. | नह्येत् | नह्येताम् | नह्येयुः | प्र. |
| | नह्येः | नह्येतम् | नह्येत | म. |
| | नह्येयम् | नह्येव | नह्येम | उ. |
| आ. लि. | नह्यात् | नह्यास्ताम् | नह्यासुः | प्र. |
| | नह्याः | नह्यास्तम् | नह्यास्त | म. |
| | नह्यासम् | नह्यास्व | नह्यास्म | उ. |
| लुङ् | अनात्सीत् | अनाद्धाम् | अनात्सुः | प्र. |
| | अनात्सीः | अनाद्धम् | अनाद्ध | म. |
| | अनात्सम् | अनात्सव | अनात्सम | उ. |
| लृङ् | अनत्स्यत् | अनत्स्यताम् | अनत्स्यन् इत्यादि। | |

**आत्मनेपदपक्षे**—१. नह्यते। २. **प्र.** नेहे नेहाते नेहिरे। **म.** नेहिषे नेहाथे नेहिढ्वे-ध्वे। **उ.** नेहे नेहिवहे नेहिमहे। ३. नद्धा। ४. नेत्स्यते। ५. नह्यताम्। ६. अनह्यत। ७. नह्येत। ८. नत्सीष्ट। ९. अनद्ध। १०. अनत्स्यत।

**कर्मणी**—नह्यते। ९. अनाहि। **णिचि**—नाहयति-ते। **सनि**—निनत्सति-ते। **यङि**—नानह्यते। **यङ्लुकि**—नानहीति-नानद्धि। **सम्**—कवचधारणे, सन्नह्यति-ते। **परि**—विशालतायाम्, परिणह्यति। **कृत्सु**—नाहकः-हिका, णिचि—नाहकः-हिका, निनत्सकः-त्सिका, नानहकः-हिका, नद्धा[1]-दध्री, नाहयिता-त्री, निनत्सिता-त्री, नानहिता-त्री, नह्यन्[2]-न्ती-ती, नाहयन्-न्ती, निनत्सन्-न्ती, नत्स्यन्-न्ती-ती, नाहयिष्यन्-न्ती-ती, नह्यमानः, नाह्यमानः, नत्स्यमानः, नाहयिष्यमाणः, उपानत्[3]-उपानद्-उपानहौ-उपानहः, अपिनद्धम्-पिनद्धः-सुनद्धम्- नद्धवान्, नाहितः, नहः, प्रणाही, नाहः, निनत्सुः, नानहः, नद्धव्यम्, नाहयितव्यम्, नहनीयम्, नाहनीयम्, नाह्यम्, नह्यमानः, नाह्यमानः, नाहः, संनाहः-परिणाहः-परीणाहः,[4] नद्धुम्, नाहयितुम्, नद्धिः, नाहना, नहनम्, नद्ध्वा, नाहयित्वा, पिणह्य, पिनह्य,[5] प्रणह्य-प्रणाह्य।

**( ११६७ ) रञ्ज—रागे**। (रंगना, किसी वस्तु में अनुरक्त होना, मोहित होना)। अक.। अनि.। उभय.। रज्यति-ते। रज्यतु-ताम्। अरज्यत्-त। रज्येत्-त। सर्वं 'रजति' (९९९) वत्।

**( ११६८ ) शप—आक्रोशे**। (शपथ करना, श्राप देना)। सकर्म.। अनि.। उभय.।

१. शप्यति शप्यतः शप्यन्ति। २. **प्र.** शशाप शेपतुः शेपुः। **म.** शेपिथ-शशप्थ शेपथुः शेप। **उ.** शशाप-शशप शेपिव शेपिम। ३. शप्ता शप्तारौ शप्तारः। ४. शप्स्यति शप्स्यतः शप्स्यन्ति। **म.** शप्स्यसि शप्स्यथः शप्स्यथ। **उ.** शप्स्यामि शप्स्यावः शप्स्यामः। ५. **प्र.** शप्यतु-शप्यतात् शप्यताम् शप्यन्तु। **म.** शप्य-शप्यतात् शप्यतम् शप्यत। **उ.** शप्यानि शप्याव शप्याम। ६. **प्र.** अशप्यत् अशप्यताम् अशप्यन्। **म.** अशप्यः अशप्यतम् अशप्यत्। **उ.** अशप्यम् अशप्याव अशप्याम। ७. **प्र.** शप्येत् शप्येताम् शप्येयुः। **म.** शप्येः शप्येतम् शप्येत। **उ.** शप्येयम् शप्येव शप्येम। ८. **प्र.** शप्यात् शप्यास्ताम् शप्यासुः। **म.** शप्याः शप्यास्तम् शप्यास्त। **उ.** शप्यासम् शप्यास्व शप्यास्म। ९. **प्र.** अशाप्सीत् अशाप्ताम् अशाप्सुः। **म.** अशाप्सीः अशाप्तम् अशाप्त **उ.** अशाप्सम् अशाप्स्व अशाप्स्म। १०. अशाप्स्यत्।

**आत्मनेपदपक्षे**—१. शप्यते। २. **प्र.** शेपे शेपाते शेपिरे। **म.** शेपिषे शेपाथे शेपिध्वे। **उ.** शेपे शेपिवहे शेपिमहे। ३. शप्ता। ४. शप्स्यते। ५. शप्यताम्। ६. अशप्यत। ७.

---

१ 'एकाच् उपदेशेऽनुदात्तात्' (७-२-१०) इतीण्णिषेधे धत्वचर्त्वयोश्च रूपम्। एवं तव्यदादिष्वपि बोध्यम्।
२ 'दिवादिभ्यः—' (३-१-६९) इति श्यन् विकरणप्रत्ययः।
३ उपनह्यते = बध्यते इति उपानत् = पादुका, शिक्यविशेषश्च। 'नहिवृति—' (६-३-११६) इति क्विबन्ते परतः पूर्वपदस्य दीर्घो भवति। एवं प्राणत् इत्यत्रापि। णत्वं प्राणदित्यत्राधिकमिति विशेषः।
४ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६-३-१२२) इति पूर्वपदस्य दीर्घः। णत्वम्।
५ 'दृप्योर्णुवानान् ककुभो बलौघान् वितत्य शार्ङ्गं कवचं पिनह्य।' (भ.का. ३-४७)

शप्येत। ८. **प्र.** शप्सीष्ट शप्सीयास्ताम् शप्सीरन्। **म.** शप्सीष्ठाः शप्सीयास्थाम् शप्सीध्वम्। **उ.** शप्सीय शप्सीवहि शप्सीमहि। ९. **प्र.** अशप्त अशप्साताम् अशप्सत। **म.** अशप्थाः अशप्साथाम् अशब्ध्वम्। **उ.** अशप्सि अशप्सवहि अशप्समहि। १०. अशप्स्यत।

**कृत्सु**—शापकः-पिका, **णिचि**—शापकः-पिका, शिशप्सकः-प्सिका, शाशपकः-पिका, शप्ता-त्री, शापयति-त्री, शिशप्सिता-त्री, शाशपिता-त्री, शप्यन्-न्ती, शापयन्-न्ती, शिशप्सन्-न्ती। 'खपति' (९८५) वत्।

**(११६९) पद—गतौ**। (जाना)। **अनु**—अनुशरण करना, **आ**—प्राप्त होना, **प्रति**—स्वीकार करना, **वि**—दुःख का अनुभव करना, **व्या**—मार डारना, **सम्**—वृद्धि को प्राप्त होना, **उत्**—उत्पन्न होना। सकर्म.। अनि.। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | पद्यते | पद्येते | पद्यन्ते | प्र. |
| | पद्यसे | पद्येथे | पद्यध्वे | म. |
| | पद्ये | पद्यावहे | पद्यामहे | उ. |
| लिट् | पेदे | पेदाते | पेदिरे | प्र. |
| | पेदिषे | पेदाथे | पेदिध्वे | म. |
| | पेदे | पेदिवहे | पेदिमहे | उ. |
| लुट् | पत्ता | पत्तारौ | पत्तारः इत्यादि। | |
| लृट् | पत्स्यते | पत्स्येते | पत्स्यन्ते इत्यादि। | |
| लोट् | पद्यताम् | पद्येताम् | पद्यन्ताम् | प्र. |
| | पद्यस्व | पद्येथाम् | पद्येध्वम् | म. |
| | पद्यै | पद्यावहै | पद्यामहै | उ. |
| लङ् | अपद्यत | अपद्येताम् | अपद्यन्त | प्र. |
| | अपद्यथाः | अपद्येथाम् | अपद्यध्वम् | म. |
| | अपद्ये | अपद्यावहि | अपद्यामहि | उ. |
| वि. लि. | पद्येत | पद्येताम् | पद्येरन् | प्र. |
| | पद्येथाः | पद्येथाम् | पद्येध्वम् | म. |
| | पद्येय | पद्येवहि | पद्येमहि | उ. |
| आ. लि. | पत्सीष्ट | पत्सीयास्ताम् | पत्सीरन् | प्र. |
| | पत्सीष्ठाः | पत्सीयास्थाम् | पत्सीध्वम् | म. |
| | पत्सीय | पत्सीवहि | पत्सीमहि | उ. |
| लुङ् | अपादि | अपत्साताम् | अपत्सत | प्र. |
| | अपत्थाः | अपत्साथाम् | अपद्ध्वम् | म. |
| | अपत्सि | अपत्स्वहि | अपत्स्महि | उ. |

लृङ् अपत्स्यत अपत्सयेताम् अपत्स्यन्। इत्यादि।

**कर्मणि**—पद्यते। **णिचि**—पादयति। ९. अपीपदत्। **सनि**—पित्सते। **यङि**—पनीपद्यते। **यङ्लुकि**—पनीपदीति-पनीपत्ति। **कृत्सु**—पादकः-दिका, **णिचि**—पादकः-दिका, पित्सकः[१]-त्सिका, पनीपदकः[२]-दिका, पत्ता-पत्त्री, पादयिता-त्री, पित्सिता, पनीपदिता-त्री, पादयन्-न्ती, पादयिष्यन्-न्ती-ती, प्रणिपद्यमानः[३], पादयमानः, पित्समानः, पनीपद्यमानः, पत्स्यमानः, पादयिष्यमाणः, पत्[४]-पद्-पदौ-पदः, प्रपन्नः[५]-पन्नवान्, पादितः, पित्सितः, पदः, उत्पदिष्णुः,[६] पदनः,[७] पादुकः,[८] पादुका, पादः,[९] सम्पद्य,[१०] सम्पादी, प्रणिपेदिवान्,[११] पादः, पित्सुः, पनीपदः, पत्तव्यम्, पादयितव्यम्, पदनीयम्, पादनीयम्, पाद्यम्, पद्यमानः, पदम्,[१२] आस्पदम्,[१३] गोष्पदम्,[१४] पत्तुम्, पादयितुम्, पित्सितुम्, पनीपदितुम्, सम्पत्[१५]- सप्पत्तिः-विपत्-प्रतिपत्-अपत्, पद्या,[१६] पादना, पित्सा, पनीपदा, पदनम्, आपादनम्, पत्त्वा, पादयित्वा, प्रणिपद्य, सम्पाद्य, पादूः,[१७] पद्मम्,[१८] पद्मिनी

---

१ 'सनि मीमाधरभ–' (७-४-५४) इति सनन्ते सर्वत्र इस्। 'अत्र लोपाभ्यासस्य' (७-४-५८) इत्यभ्यासलोपः। 'स्कोः संयोगाद्योरन्ते च' (८-२-२९) इति सकारलोपः। 'इको झल्' (१-२-९) इति सनः कित्त्वम्। 'खरि च' (८-४-५५) इति दकारस्य चर्त्वं भवति।

२ यङन्ताण्ण्वुलि, 'नीग् वञ्चुस्रंसु–' (७-४-८४) इत्यभ्यासस्य नीगागमः। अभ्यासदीर्घापवादः। एवं यङन्ते सर्वत्र ज्ञेयम्।

३ 'नेर्गदनदपतपद–' (८-४-१७) इत्यादिना नेर्णत्वम्।

४ पद्यतेऽनेनेति पत् = पादः। क्विबन्ते चर्त्वविकल्पः।

५ 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (८-२-४२) इति निष्ठातकारधातुदकारयोर्नत्वे रूपम्।

६ 'अलङ्कृञ् निराकृञ्–' (३-२-१३६) इत्यादिना इष्णुच् प्रत्ययः तच्छीलादिषु कर्तृषु भवति इति माधवः।

७ 'जुचङ्क्रम्य–' (३-२-१५०) इत्यादिना ताच्छीलिको युच् प्रत्ययः।

८ 'लषपतपद–' (३-२-१५४) इत्यादिना तच्छीलादिषु कर्तृषु उकञ् प्रत्ययः। अदन्तत्वात् स्त्रियां टाप्।

९ 'पदरुजविशस्पृशो घञ्' (३-३-१६) इति कर्तरि घञ्।

१० सम्पूर्वकादस्मात् कर्तरि शप्रत्यये, दिवादित्वात् श्यनि, पररूपे, रूपमेवम्। शप्रत्ययसद्भावे निदानं तु 'कृभ्वस्तियोगे सम्पद्यकर्तरि–' (५-४-५०) इति सूत्रे सम्पद्य इति निर्देश एव।

११ 'पपुष आगतं पपिवद्रूप्यम्' इति भाष्य (४-३-२४) प्रयोगात्, छान्दसोऽपि क्वसुः क्वचिद् भाषायां भवति इति ज्ञायते। तेन क्वसौ, एत्वाभ्यासलोपयोः, वस्वेकाजाद्धसाम्' (७-२-६७) इति इडागमे च रूपमेवम्।

१२ 'खनो घ च' (३-३-१२५) इत्यत्र चकारात् संज्ञायामन्यत्रापि घप्रत्ययो भवति इति ज्ञायते इत्याश्रयणेन घप्रत्यये रूपम्।

१३ आङ्पूर्वकादस्मात् संज्ञायां घप्रत्यये, 'आस्पदं प्रतिष्ठायाम्' (६-१-१४६) इत्यत्र निपातनात् सुडागमः।

१४ 'गोष्पदं सेवितासेवितप्रमाणेषु' (६-१-१४५) इत्यनेन सेविते असेविते प्रमाणे च विषये सुट् निपात्यते। षत्वं च भवति।

१५ 'सम्पदादिभ्यः–' (वा. ३-३-९४) इत्यनेन स्त्रियां भावादौ क्विप्। 'क्तिन्नपीष्यते' (भाष्येष्टि ३-३-९४) इति वचनात् क्तिनि सम्पत्तिः इत्यादिकमपि साध्वेव। प्रतिपत् = ज्ञानम् प्रथमतिथिश्च।

१६ 'संज्ञायां समजनिषद् निपत–' (३-३-९९) इत्यत्र 'निपद' इति क्षीरस्वामिपाठमाश्रित्यात्र क्यप् बोध्यः। पद्या = काव्यविशेषः 'एक प्रघट्टकं पद्या मुक्तकानां निबन्धनम्।' इति तल्लक्षणम्। अत्र पक्षे 'उपेयिवान्–' (३-२-१०९) इत्यत्र 'उप' इत्यस्येव अत्र 'नि' इत्यस्याविवक्षितत्वं ज्ञेयम्।

१७ 'णिच्च कसिपद्यर्तेः' (द.उ. १-१६८) इत्यूप्रत्ययः प्रत्ययस्य णित्वं च। पद्यते इति पादूः = पादुका। 'पादुका' इत्यत्र संज्ञायां कनि 'केऽणः' (७-४-१३) इति ह्रस्वो ज्ञेयः।

१८ औणादिके (द.उ. ७-२६) मनप्रत्ययेरूपम्। पद्यते मधुकरैरिति पद्मम् = कमलम्। अर्श आद्यजन्ते मत्वर्थीये पद्मा = लक्ष्मीः। मत्वर्थीय एव इनि प्रत्यये पद्मिनी इति च।

(११७०) **खिद—दैन्ये** (खिन्न होना, दुःख सहन करना, दीनता प्रकट करना)। अक.। अनि.। आत्मने.।

१. खिद्यते। २. **प्र.** चिखिदे चिखिदाते चिखिदिरे। **म.** चिखिदिषे चिखिदाथे चिखिदिध्वे। **उ.** चिखिदे चिखिदिवहे चिखिदिमहे। ३. खेता खेतारौ खेतारः। ४. खेत्स्यते खेत्स्येते खेत्स्यन्ते। ५. **प्र.** खिद्यताम् खिद्येताम् खिद्यन्ताम्। **म.** खिद्यस्व खिद्येथाम् खिद्यध्वम्। **उ.** खिद्यै खिद्यावहै खिद्यामहै। ६. **प्र.** अखिद्यत अखिद्येताम् अखिद्यन्त। **म.** अखिद्यथाः अखिद्येथाम् अखिद्यध्वम्। **उ.** अखिद्ये अखिद्यावहि अखिद्यामहि। ७. **प्र.** खिद्येत् खिद्येताम् खिद्यन्त। ८. **प्र.** खित्सीष्ट खित्सीयास्ताम् खित्सीरन्। **म.** खित्सीष्ठाः खीत्सीयास्थाम् खित्सीध्वम्। **उ.** खित्सीय खित्सीवहि खित्सीमहि। ९. **प्र.** अखित्त अखित्साताम् अखित्सत। **म.** अखित्थाः अखित्साथाम् अखिद्ध्वम्-द्ध्वम्। **उ.** अखित्सि अखित्स्वहि अखित्स्महि। १०. अखेत्स्यत।

**कर्मणि**—खिद्यते। **णिचि**—खेदयति-ते। **सनि**—चिकित्सते। **यङि**—चेखिद्यते। **यङ्लुकि**—चेखिदीति-चेखेत्ति। **कृत्सु**—खिन्नः, खेतुम्, खित्वा, प्रखिद्य, खेदः।

(११७१) **विद—सत्तायाम्**। (विद्यमान होना)। **निर्**—विरक्त होना। अक.। अनिट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | विद्यते | विद्येते | विद्यन्ते | प्र. |
| | विद्यसे | विद्येथे | विद्यध्वे | म. |
| | विद्ये | विद्यावहे | विद्यामहे | उ. |
| लिट् | विविदे | विविदाते | विविदिरे | प्र. |
| | विविदिषे | विविदाथे | विविदिध्वे | म. |
| | विविदे | विविदिवहे | विविदिमहे | उ. |
| लुट् | वेत्ता | वेत्तारौ | वेत्तारः इत्यादि। | |
| लृट् | वेत्स्यते | वेत्स्येते | वेत्स्यन्ते | प्र. |
| | वेत्स्यसे | वेत्स्येथे | वेत्स्यध्वे | म. |
| | वेत्स्ये | वेत्स्यावहे | वेत्स्यामहे | उ. |
| लोट् | विद्यताम् | विद्येताम् | विद्यन्ताम् | प्र. |
| | विद्यस्व | विद्येथाम् | विद्यध्वम् | म. |
| | विद्यै | विद्यावहै | विद्यामहै | उ. |
| लङ् | अविद्यत | अविद्येताम् | अविद्यन्त | प्र. |
| | अविद्यथाः | अविद्येथाम् | अविद्यध्वम् | म. |
| | अविद्ये | अविद्यावहि | अविद्यामहि | उ. |
| वि. लि. | विद्येत | विद्येयाताम् | विद्येरन् | प्र. |
| | विद्येथाः | विद्येयाथाम् | विद्येध्वम् | म. |
| | विद्येय | विद्येवहि | विद्येमहि | उ. |

| | | | | |
|---|---|---|---|---|
| आ. लि. | वित्सीष्ट | वित्सीयास्ताम् | वित्सीरन् | प्र. |
| | वित्सीष्ठाः | वित्सीयास्थाम् | वित्सीध्वम् | म. |
| | वित्सीय | वित्सीवहि | वित्सीमहि | उ. |
| लुङ् | अवित्त | अवित्साताम् | अवित्सत | प्र. |
| | अवित्थाः | अवित्साथाम् | अविद्ध्वम्-द्द्ध्वम् | म. |
| | अवित्सि | अवित्स्वहि | अवित्स्महि | उ. |
| लृङ् | अवित्स्यत | अवेत्स्याताम् | अवेत्स्यन्त इत्यादि । | |

**भावे**—विद्यते । ९. अवेदि । **णिचि**—वेदयति-ते । **सनि**—विवित्सते । **यङि**—वेविद्यते । **यङ्लुकि**—वेवेत्ति-वेविदीति । **कृत्सु**—वेदकः-दिका, **णिचि**—वेदकः-दिका, विवित्सकः-त्सिका, वेविदकः-दिका, वेदिता-त्री, वेदयिता-त्री, विवित्सिता-त्री, शानचि-विद्यमानः, णिनि प्रत्यये-वेदी, क्तिनि-वेत्तिः, वेत्तव्यम्, वेदनीयम्, वेद्यम्, विन्नम्-वित्तम्, वेत्तुम्, वेदनम्, वित्त्वा, संविद्य । इत्यादि दैवादिक 'खिद्यति' वत् ।

**(११७२) बुध—अवगमने**। (जानना)। **प्रति**—जागना, **सम्**—अच्छी तरह जानना । **अव**—जानना । सक. । अनि. । आत्मने. ।

१. **प्र.** बुध्यते[1] बुध्येते बुध्यन्ते । **म.** बुध्यसे बुध्येथे बुध्यध्वे । **उ.** बुध्ये बुध्यावहे बुध्यामहे । २. **प्र.** बुबुधे बुबुधाते बुबुधिरे । **म.** बुबुधिषे बुबुधाथे बुबुधिध्वे । **उ.** बुबुधे बुबुधिवहे बुबुधिमहे । ३. **प्र.** बोद्धा बोद्धारौ बोद्धारः । **म.** बोद्धासे बाद्धासाथे बोद्धाध्वे । **उ.** बोद्धाहे बोद्धास्वहे बोद्धास्महे । ४. **प्र.** भोत्स्यते[2] भोत्स्येते भोत्स्यन्ते । **म.** भोत्स्यथे भोत्स्येथे भोत्स्यध्वे । **उ.** भोत्स्ये भोत्स्यावहे भोत्स्यामहे । ५. **प्र.** बुध्यताम् बुध्येताम् बुध्यन्ताम् । **म.** बुध्यस्व बुध्येथाम् बुध्यध्वम् । **उ.** बुध्यै बुध्यावहै बुध्यामहै । ६. **प्र.** अबुध्यत अबुध्येताम् अबुध्यन्त । **म.** अबुध्यथाः अबुध्येथाम् अबुध्यध्वम् । **उ.** अबुध्ये अबुध्यावहि अबुध्यामहि । ७. **प्र.** बुध्येत बुध्येयाताम् बुध्येरन् । **म.** बुध्येथाः बुध्येयाथाम् बुध्येध्वम् । **उ.** बुध्येय बुध्येवहि बुध्येमहि । ८. **प्र.** भुत्सीष्ट बुत्सीयास्ताम् भुत्सीरन् । **म.** भुत्सीष्ठाः भुत्सीयास्थाम् भुत्सीध्वम् । **उ.** भुत्सीय भुत्सीवहि भुत्सीमहि । ९. **प्र.** अबुद्ध-अबोधि अभुत्साताम् अभुत्सत । **म.** अबुद्धाः अभुत्साताम् अबुद् ध्वम्-द् ध्वम् । **उ.** अभुत्सि अभुत्सावहि अभुत्सामहि । १०. **प्र.** अभोत्सयत अभोत्स्येताम् अभोत्स्यन्त । **म.** अभोत्स्यथाः अभोत्स्येथाम् अभोत्स्यध्वम् । **उ.** अभोत्स्ये अभोत्स्यावहि अभोत्स्यामहि ।

**कर्मणि**—बुध्यते । ९. अबोधि । **णिचि**—बोधयति[3] । **सनि**—बुभुत्सते । **यङि**—बोबुध्यते । **यङ्लुकि**—बोबुधीति-बोबोद्धि । **कृत्सु**—बोद्धव्यम्, बोधनीयम्, बोध्यम्, बुद्धः,[4] बुध्यमानः, बुबुध्यमानः, बोद्धुम्, बोदनम्, बुद्ध्वा, प्रबुद्धय, बोधकः-धिका,

१ यदि बुध्यते हरिशिशुस्तनन्धयः — इति जगन्नाथः ।
२ 'एकाचो बशो भष्—' (८-२-३७) इति भष् भावः ।
३ 'बुधयुधनश—' (१-३-८६) इति परस्मैपदम् । णिचश्चापवादः ।
४ 'क्तिच्क्तौ च संज्ञायम्' (३-३-१७४) इति संज्ञायाम् क्तप्रत्ययः बुध्यतीति बुद्धः = सिद्धार्थः ।

णिचि—बोधकः-धिका, बुभुत्सकः[१]-त्सिका, बोबुधकः-धिका, बुधानः,[२] बुबुधानः,[३] अन्यानि सर्वानि रूपाणि दैवादिक 'क्षुध्यति' (११९०) वत्।

**(११७३) युध—संप्रहारे।** (लड़ाई करना, युद्ध करना, संग्राम करना) अक.। अनिट्। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | युध्यते | युध्येते | युध्यन्ते | प्र. |
| | युध्यसे | युध्येथे | युध्यध्वे | म. |
| | युध्ये | युध्यावहे | युध्यामहे | उ. |
| लिट् | युयुधे | युयुधाते | युयुधिरे | प्र. |
| | युयुधिषे | युयुधाथे | युयुधिध्वे | म. |
| | युयुधे | युयुधिवहे | युयुधिमहे | उ. |
| लुट् | योद्धा | योद्धारौ | योद्धारः इत्यादि। | |
| लृट् | योत्स्यते | योत्स्येते | योत्स्यन्ते इत्यादि। | |
| लोट् | युध्यताम् | युध्येताम् | युध्यन्ताम् | प्र. |
| | युध्यस्व | युध्येथाम् | युध्यध्वम् | म. |
| | युध्यै | युध्यावहै | युध्यामहै | उ. |
| लङ् | अयुध्यत | अयुध्येताम् | अयुध्यन्त | प्र. |
| | अयुध्यथाः | अयुध्येथाम् | अयुध्यध्वम् | म. |
| | अयुध्ये | अयुध्यावहि | अयुध्यामहि | उ. |
| वि. लि. | युध्येत | युध्येयाताम् | युध्येरन् | प्र. |
| | युध्येथाः | युध्येयाथाम् | युध्येध्वम् | म. |
| | युध्येय | युध्येवहि | युध्येमहि | उ. |
| आ. लि. | युत्सीष्ट | सुत्सीयास्ताम् | युत्सीरन् | प्र. |
| | युत्सीष्ठाः | युत्सीयास्थाम् | युत्सीध्वम् | म. |
| | युत्सीय | युत्सीवहि | युत्सीमहि | उ. |
| लुङ् | अयुद्ध | अयुत्साताम् | अयुत्सत | प्र. |
| | अयुद्धाः | अयुत्साथाम् | अयुद्ध्वम् | म. |
| | अयुत्सि | अयुत्स्वहि | अयुत्स्महि | उ. |
| लृङ् | अयोत्स्यत | अयोत्स्येताम् | अयोत्स्यन्त | प्र. |
| | अयोत्स्यथाः | अयोत्स्येथाम् | अयोत्स्यध्वम् | म. |
| | अयोत्स्ये | अयोत्स्यावहि | अयोत्स्यामहि | उ. |

शेषं 'बुध्यति' (११७२) वत्।

१ सन्नन्ताण्णवुलि 'हलन्ताच्च' (१-२-१०) इति सनः कित्वे भष्भावे, चर्त्वे च रूपम्।

२ 'युधिबुधिदृशेः किच्च' (द.उ. ५-३३) इत्यानच् प्रत्ययः, किच्च। कित्वान्न गुणः। बुधानः = आचार्यः।

३ 'मुचिबुधिभ्यां सन्वच्च' इति मा.धा. वृत्युपात्तेन ओणादिक सूत्रेण आनच् प्रत्यये, तस्य सन्वद्भावात् द्वित्वे, कित्वे च रूपम्। बुबुधानः = बोद्धुमिच्छुः।

**कृत्सु**—योधकः-धिका, **णिचि**—योधकः-धिका, युयुत्सकः-त्सिका, योयुधकः-धिका, योद्धा-योद्‌ध्री, योधयिता-त्री, युयुत्सिता-त्री, योयुधिता-त्री, योधनीयम्, योधनम्, योधी, युद्धः, युद्धिः, योद्धव्यम्, योद्धुम्, युद्ध्वा, संयुध्य, योध्यः, युध्यमानः,[1] योत्स्यमानः, युयुत्सुः। राजयुध्वा,[2] सहयुध्वा,[3] चापयोधी,[4] प्रतियोधी[5], योधः[6]-यौधः, आयुधम्,[7] युद्धम्,[8] ईषद्योधनः[9], सुयोधनः, दुर्योधनः, युयुधानः,[10] योधयन्[11]-न्ती, युधानः,[12] युध्मः,[13] युयुत्सा,[14] आयोधनम्। इत्यादि 'दैवादिक बुध्यति' (११७२) वत्।

**( ११७४ ) रुध—कामे**। अनुपूर्वः। (कृपालु होना, दया करना, अनुमोदन देना, शोक करना, रोना, चाहना)। सक.। अनिट्। आत्मने.। अनुरुध्यते। अनुरुध्येते अनुरुध्यन्ते। अनुरुरुधे इत्यादि 'बुध्यति' (११७२) वत्।

**( ११७५ ) अण—प्राणने**। (जीना)। अक.। सेट्। आत्मने.। १. अण्यते। २. आणे। ३. अणिता। ४. अणिष्यते। ५. अण्यताम्। ६. आणयत। ७. अण्येत। ८. अणिषीष्ट। ९. अणिष्ट अणिषाताम्। १०. अणिष्यत।

**भावे**—अण्यते। **णिचि**—आणयति। **सनि**—अणिणिषते। **कृत्सु**—अणितव्यम्, अणनीयम्, आण्यम्, अणितम्, अण्यमानः, अणितुम्, प्राणनम्, अणित्वा, प्राण्य, प्राणः, प्राणी।

**( ११७६ ) मन—ज्ञाने**। (जानना, समझना)। **अनु**—अनुमोदन करना, अनुमान करना, **अव**—अपमान करना, भर्त्सना करना, **सम्**—अनुमोदन करना, कबूल करना,

---

१ शानचि दिवादित्वाच्छ्यनि रूपमेवम्। युध्यति इत्यादिप्रयोगानामुपपत्तिस्तु—'सुपः आत्मनः क्यच्' (३-१-८) इति क्यजन्तत्वेन, दिवादेरवृक्तृतत्वेनाकृति गणत्वाद्वा साधुत्वमिति बोध्यम्।

२ 'राजनि युधि कृञः' (३-२-९५) इति कर्मण्युपपदे क्वनिप्प्रत्ययः। राजानं योधितवान् राजयुध्वा। अत्रान्तर्भावितण्यर्थाद् धातोः सकर्मकत्वमिति बोध्यम्। 'भूते' (३-२-८४) इत्यधिकारे प्रत्ययस्यास्य विधानात् भूतेकालिकत्वम्। स्त्रियां 'वनो न हशः—' (वा. ४-१-७) इति निषेधात् ङीब्रेफौ न।

३ 'सहे च' (३-२-९६) इत्यनेन सह शब्द उपपदे धातोः क्वनिप्। सह योधितवान् सहयुध्वा।

४ 'बहुलमाभीक्ष्ण्ये' (३-२-८१) इति णिनिः। चापयोधी = किरातादिजातिविशेषः।

५ गम्यादिषु (३-३-३) पाठात् भविष्यत् काल औणादिके णिनिः। प्रतियोधी = यः प्रतिद्वन्द्वितया युद्धं करिष्यति स उच्यते।

६ प्रज्ञादिषु (५-४-३८) योधशब्दस्य पाठात् इगुपधलक्षणं कप्रत्ययं बाधित्वा पचादिपाठपरिकल्पनेनाच्। स्वार्थे तद्धितेऽणि विकल्पेन प्रवृत्ते तु योधः-यौधः इति रूपद्वयम्।

७ आदाय युध्यन्तेऽनेनेति आयुधम्। 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (वा. ३-३-५८) इति वचनाद् घञर्थे करणे कप्रत्यये, कित्वेन गुणनिषेधे च रूपमेवम्।

८ 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तप्रत्यये घत्वजश्त्वयोश्च रूपम्।

९ ईषदाद्युपपदेषु, 'भाषायां शासियुधि—' (वा. ३-३-१३०) इति खलपवादो युच्प्रत्ययः। अत्रापि अन्तर्भावितण्यर्थाद्धातोः, विवक्षया वा सकर्मकत्वं बोध्यम्। कर्मणि प्रत्ययोऽयम्।

१० 'बाहुलकादानचि द्वित्वम्' इति मा.धा. वृत्तिः। बाहुलकादेव प्रत्ययस्य कित्वमपि बोध्यम्। तेन न गुणः।

११ 'बुधयुध—' (१-३-८६) इति कर्तृगामिन्यपि क्रियाफले ण्यन्तात् परस्मैपदमेव।

१२ 'युधिबुधिदृशिभ्यः किच्च' (द.उ. ५-३३) इत्यानच् प्रत्यये। तस्य कित्वेन गुणनिषेधे च युधानः इति। युधानः = रिपुः।

१३ 'इषियुधि—' (द.उ. ७-३१) इति मक्प्रत्ययः। युध्यतेऽस्मिन् राजेति युध्मः = शरत्कालः

१४ युयुत्सारहितो रामं ममापहरन् वने॥ (भ.का. ९/१२५)

**अभि**—अभिमान करना, इच्छा करना। सक.। अनि.। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | मन्यते | मन्येते | मन्यन्ते | प्र. |
| | मन्यसे | मन्येथे | मन्यध्वे | म. |
| | मन्ये | मन्यावहे | मन्यामहे | उ. |
| लिट् | मेने | मेनाते | मेनिरे | प्र. |
| | मेनिषे | मेनाथे | मेनिध्वे | म. |
| | मेने | मेनिवहे | मेनिमहे | उ. |
| लुट् | मन्ता | मन्तारौ | मन्तारः इत्यादि। | |
| लृट् | मंस्यते | मंस्येते | मंस्यन्ते इत्यादि। | |
| लोट् | मन्यताम् | मन्येताम् | मन्यन्ताम् | प्र. |
| | मन्यस्व | मन्येथाम् | मन्यध्वम् | म. |
| | मन्यै | मन्यावहै | मन्यामहै | उ. |
| लङ् | अमन्यत | अमन्येताम् | अमन्यन्त | प्र. |
| | अमन्यथाः | अमन्येथाम् | अमन्यध्वम् | म. |
| | अमन्ये | अमन्यावहे | अमन्यामहे | उ. |
| वि. लि. | मन्येत | मन्येताम् | मन्येरन् | प्र. |
| | मन्येथाः | मन्येयाथाम् | मन्येध्वम् | म. |
| | मन्येय | मन्येवहि | मन्येमहि | उ. |
| आ. लि. | मंसीष्ट | मंसीयास्ताम् | मंसीरन् | प्र. |
| | मंसीष्ठाः | मंसीयास्थाम् | मंसीध्वम् | म. |
| | मंसीय | मंसीवहि | मंसीमहि | उ. |
| लुङ् | अमंस्त | अमंसाताम् | अमंसत | प्र. |
| | अमंस्थाः | अमंसाथाम् | अमन्द्ध्वम्-ध्वम् | म. |
| | अमंसि | अमंस्वहि | अमंसमहि | उ. |
| लृङ् | अमंस्यत | अमंसयेताम् | अमंस्यन्त इतायदि। | |

**कर्मणि**—मन्यते। २. मेने। ९. अमानि। **णिचि**—मानयति। **सनि**—मिमंसते। **यङि**—मंमन्यते। **यङ्लुकि**—मंमनीति। **कृत्सु**—मानकः-निका, **णिचि**—मानकः-निका, मिमंसकः[१]-सिका, मन्मनकः[२]- मंमनकः-निका, मन्ता-त्री, मानयिता-त्री, मिमंसिता-त्री, मन्मनिता-मंमनिता-त्री, मानयन्-न्ती, मानयिष्यन्-न्ती-ती, मन्यमानः,[३] मानयमानः, मिमंसमानः, मंमन्यमानः, मंस्यमानः, मानयिष्यमाणः, सुमत्[४]-सुमतौ-सुमतः, हरिमत्, मतम्-राज्ञांमतः-मतवान्,

१ सन्नन्तात् ण्वुलि, द्विर्वचनादिकेषु कृतेषु 'नश्चापदान्तस्य झलि' (८-३-२४) इत्यनेन धातुनकारस्यानुस्वार रूपमेवम्। एवमेव सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।

२ यङन्ते सर्वत्र द्विर्वचनादिकेषु कृतेषु अभ्यासे 'नुगतोऽनुनासिकान्तस्य' (७-४-८५) इति नुगागमः, तस्य च पदान्तवदभाववचनात् परसवर्णविकल्पः तेन रूपद्वयम्।

३ शतरि दिवादित्वात् शपोऽपवादः श्यन्प्रत्ययोऽत्रेति ज्ञेयम्।

४ क्विपि, 'अनुदात्तोपदेशवनति–' (६-४-३७) इत्यनुनासिकलोपः। 'ह्रस्वस्य पिति कृति–' (६-१-७१) इति तुक्।

मानितः, मनः, दर्शनीयमानी, पण्डितम्मन्यः-पण्डितमानी, शूरमानी, कालिम्मन्या, दिवामन्या-दोषामन्यम्, गाम्मन्यः, स्त्रियम्मन्यः-स्त्रीम्मन्यः, नरम्मन्यः, भुवम्मन्यः, श्रिमन्यं (कुलम्) उपकुम्भमन्यः, श्रियम्मन्या, श्रीमन्मन्यः, रजनिम्मन्यः, साधुम्मन्यः, पटुमानिनी,[१] मेनकाः,[२] मानः, मिमंसुः, मन्मनः, मन्तव्यम्, मानयितव्यम्, मननीयम्, माननीयम्, मान्यम्, मन्यमानः, मन्तुम्, मानयितुम्, मन्या, सुमत्, मतिः, मन्तिः, अनुमतिः, मननम्, माननम्, मत्वा, मानयित्वा, अनुमत्य, अनुमान्य, मुनिः,[३] मनुः[४]-मनुष्यः-मनुषी, मन्तुः,[५] मन्युः,[६] मन्त्रः,[७] मठरः,[८] मांसम्,[९] मधु,[१०] मनः[११]।

**(११७७) युज—समाधौ**। समाधिश्चित्तवृत्तिनिरोधः। (चित्त स्थिर करना, मन को रोकना)। अकर्म.। अनिट्। आत्मने.।

१. युज्यते। २. **प्र.** युयुजे युयुजाते युयुजिरे। **म.** युयुजिषे युयुजाथे युयुजिध्वे। **उ.** युयुजे युयुजिवहे युयुजिमहे। ३. योक्ता। ४. योक्ष्यते योक्ष्येते योक्ष्यन्ते। ५. युज्यताम्। ६. अयुज्यत। ७. **प्र.** युज्येत युज्येताम् युज्येरन्। **म.** युज्येथाः युज्येयाथाम् युज्येध्वम्। **उ.** युज्येय युज्येवहि युज्येमहि। ८. **प्र.** युक्षीष्ट युक्षीयास्ताम् युक्षीरन्। **म.** युक्षीष्ठाः युक्षीयास्थाम् युक्षीध्वम्। **उ.** युक्षीय युक्षीवहि युक्षीमहि। ९. **प्र.** अयुक्त अयुक्षाताम् अयुक्षत। **म.** अयुक्थाः अयुक्षाथाम् अयुग्ध्वम्-अयुग्ढ्वम्। **उ.** अयुक्षि अयुक्ष्वहि अयुक्ष्महि। १०. अयोक्ष्यत।

**भावे**—युज्यते। ९. अयोजि। **णिचि**—योजयति। **सनि**—युयुक्षते। **यङि**—योयुज्यते। **यङ्लुकि**—योयुजीति-योयोक्ति। **कृत्सु**—योक्तव्यम्, योजनीयम्,

१ पट्वीमात्मानं मन्यते इत्यर्थे, पाक्षिके णिनि प्रत्यये। 'स्त्रियाः पुंवत्–' (६-३-३४) इति पुंवद्भावे रूपमेवम्। पक्षे पटुम्मन्या इत्यपि भवति।

२ 'आशिषि च' (३-१-१५०) इति वुन् प्रत्यये, 'प्रत्ययस्था–' (७-३-४४) इति प्राप्तस्येत्वस्य 'आशिषि वुनश्च न' (वा. ७-३-४५) इति निषेधः। 'आशीरर्थे के मनेः एवं वाच्यम्' इति वचनेन एकारः इति (प्र.कौ.) मेनका = अप्सरो विशेषः।

३ 'मनेरुच्च' (द.उ. १-५१) इति इन् प्रत्यये अकारस्य उकारादेशे च रूपमेवम्। मुनिः = ऋषिः।

४ औणादिके उप्रत्यये रूपमेवम् मन्यते मनुते वा मनुः। मनुशब्दात् मनोर्जाताव्यतौ षुक् च' (४-१-१६१) इति अञ् यत् इत्येतौ प्रत्ययौ भवतः, तत्सन्नियोगेन षुगागमश्च। मानुषः, मनुष्यः इति जातिशब्दौ एतौ। स्त्रियाम्, 'हयगवयमुकय–' (वा. ४-१-६३) इति प्रतिप्रसवेन ङीपि, 'हलस्तद्धितस्य' (६-४-१५०) इति यलोपे मनुषी इति रूपम्।

५ 'कमिमनि–' (द.उ. १-१२५) इति तुप्रत्यये रूपमेवम्। मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ इति मेदिनी इति अमरकोशव्याख्याने (२-२६) वत्।

६ 'यजिमनि–' (द.उ. १-१३४) इति युच् प्रत्यये रूपमेवम्। मन्युः = दैन्यम्, यागः, अन्तर्गतः क्रोधश्च।

७ 'गुधृवीपचिवचियमिमनि–' (द.उ. ८-८९) इति त्रप्रत्यये रूपमेवम्। 'वेदभेदे गुह्यवादे मन्त्रः–' इति अमरः (३-१६७)।

८ 'वनिमनिभ्याम्–' (द.उ. ८-९९) इति अरप्रत्यये उकारे चान्तादेशे रूपमेवम्। मठरः = ज्ञानी गोत्रञ्च। मूढः - इति क्षीरस्वामी।

९ 'मनेदीर्घश्च' (द.उ. ९-२३) इति सप्रत्यये दीर्घे च रूपमेवम्। मन्यते तदिति मांसम् = पिशितम् इत्यर्थः।

१० 'फलिपाटिनमिमनि–' (द.उ. १-१०३) इति उप्रत्यये धकारादेशे च रूपम्। मन्यते तदतिशयेन इति मधु = माध्वी।

११ 'असुन्' (द.उ. ९-४९) इति असुन्प्रत्यये रूममेवम्।

योजकः-जिका, युयुक्षकः-क्षिका, योयुजकः-जिका, योक्ता-योक्ती, योजयिता-त्री, युयुक्षिता-त्री, प्रयुक्-प्रयुजौ-प्रयुजः, युक्,[१] योगी,[२] युक्तः,[३] युज्यमानः, योजयमानः, योगः[४]-परियोगः-पतियोगः, युगम्[५]-संयुगः,[६] युयुक्षमाणः, इत्यादि। शेषं रौधादिक मुनक्तिवत्।

**(११७८) सृज—विसर्गे।** (छोड़ना, विविध प्रकार से उत्पन्न करना, रचना करना)। **सम्**—मिलाप करना या होना, **उत्-वि-नि**—छोड़ देना। सक.। अनि.। आत्मने.।

| | | | | |
|---|---|---|---|---|
| लट् | सृज्यते | सृज्येते | सृज्यन्ते | प्र. |
| | सृज्यसे | सृज्येथे | सृज्यध्वे | म. |
| | सृज्ये | सृज्यावहे | सृज्यामहे | उ. |
| लिट् | ससृजे | ससृजाते | ससृजिरे | प्र. |
| | ससृजिषे | ससृजाथे | ससृजिध्वे | म. |
| | ससृजे | ससृजिवहे | ससृजिमहे | उ. |
| लुट् | स्रष्टा | स्रष्टारौ | स्रष्टारः | प्र. |
| | स्रष्टासे | स्रष्टासाथे | स्रष्टाध्वे | म. |
| | स्रष्टाहे | स्रष्टास्वहे | स्रष्टास्महे | उ. |
| लृट् | स्रक्ष्यते | स्रक्ष्येते | स्रक्ष्यन्ते | प्र. |
| | स्रक्ष्यसे | स्रक्ष्येथे | स्रक्ष्यध्वे | म. |
| | स्रक्ष्ये | स्रक्ष्यावहे | स्रक्ष्यामहे | उ. |
| लोट् | सृज्यताम् | सृज्येताम् | सृज्यन्ताम् | प्र. |
| | सृज्यस्व | सृज्येथाम् | सृज्यध्वम् | म. |
| | सृज्यै | सृज्यावहै | सृज्यामहै | उ. |
| लृङ् | असृज्यत | असृज्येताम् | असृजन्यन्त | प्र. |
| | असृज्यथाः | असृज्येथाम् | असृज्यध्वम् | म. |
| | असृज्ये | असृज्यावहि | असृज्यामहि | उ. |
| वि. लि. | सृज्येत | सृज्येयाथाम् | सृज्येरन् | प्र. |
| | सृज्येथाः | सृज्येयाथाम् | सृज्येध्वम् | म. |
| | सृज्येय | सृज्येवहि | सृज्येमहि | उ. |

१ स्त्रियां भावादौ सम्पदादित्वेन (वा. ३-३-१०८) क्विपि रूपम्। 'युजमापन्ना महर्षयः' इति धातुवृत्ता वुदाहृतम्। अत्र युजम् = गोमित्यर्थः।

२ 'सम्पृचानुरुधाङ्—' (३-२-१४२) इत्यादिना यथासम्भवं तच्छीलतद्धर्म तत्साधुकारिष्वर्थेषु घिनुण् प्रत्यये। 'चजोः कुघिण्ण्यतोः' (७-३-५२) इति कुत्वम्।

३ धातोरस्याकर्मकत्वात् 'क्तोऽधिकरणे च ध्रौव्य–' (३-३-७६) इति क्तप्रत्ययः।

४ 'हलश्च- (३-३-१२१) इति संज्ञायां घञि, कुत्वम्। योगः = चित्तवृत्तिनिरोधः। 'योगे च' (वा. ८-२-२२) इति वचनात्। 'परि' इति उपसर्गस्थस्य रेफस्य पाक्षिकलत्वम्।

५ 'संज्ञायाम् घञि, कुत्वे, उच्छादि (६-१-१६०) पाठाद् गुणो न। युगम् = चेतनाचेतनां समाधिः।

६ संज्ञायां घञि, कुत्वे, प्रतिजनादिषु (४-४-९९) पाठाद् गुणो न। संयुगः = समरः।

| | | | | |
|---|---|---|---|---|
| आ. लि. | सृक्षीष्ट | सृक्षीयास्ताम् | सृक्षीरन् | प्र. |
| | सृक्षीष्ठाः | सृक्षीयास्थाम् | सृक्षीध्वम् | म. |
| | सृक्षीय | सृक्षीवहि | सृक्षीमहि | उ. |
| लुङ् | असृष्ट | असृक्षाताम् | असृक्षत | प्र. |
| | असृष्ठाः | असृक्षाथाम् | असृढ्वम् | म. |
| | असृक्षि | असृक्षवहि | असृक्ष्महि | उ. |
| लृङ् | अस्रक्ष्यत | अस्रक्ष्येताम् | अस्रक्ष्यन्त | प्र. |
| | अस्रक्ष्यथाः | अस्रक्ष्येथाम् | अस्रक्ष्यध्वम् | म. |
| | अस्रक्ष्ये | अस्रक्ष्यावहि | अस्रक्ष्यामहि | उ. |

**कृत्सु**—सर्जकः-जिका, स्रष्टा, पणिसर्ग्या रज्जुः, समवसर्ग्या, स्रक्, स्रज्वा, सिसृक्षकः, सरीसृजकः-जिका, इत्यादि मृजूधातु (१०६६) वत्।

**( ११७९ ) लिश—अल्पीभावे**। (कम करना)। सक.। अनि.। आत्म.। १. लिश्यते। २. लिलिशे। ३. लेष्टा। ४. लेक्ष्यते। ८. लिक्षीष्ट। ९. अलिक्षत। इत्यादि।

**( ११८० ) राध—वृद्धौ**। (बढ़ना)। अक.। अनि.। परस्मै.।

१. राध्यति। २. रराध रराधतुः रराधुः। ३. राद्धा। ४. रात्स्यति। ५. राध्यतु। ६. अराध्यत्। ७. राध्येत्। ८. राध्यात्। ९. अरात्सीत् अरासिद्धाम् अरात्सुः। अपराधयति, विराधयति = द्रुह्यति। आराधयति = अर्चति।

**( ११८१ ) व्यध**—ताडने। (मारना, पीटना, दुःख देना, चुभाना, छेदना)। सक.। अनि.। पर.।

| | | | | |
|---|---|---|---|---|
| लट् | विध्यति | विध्यतः | विध्यन्ति | प्र. |
| | विध्यसि | विध्यथः | विध्यथ | म. |
| | विध्यामि | विध्यावः | विध्यामः | उ. |
| लिट् | विव्याध | विविधतुः | विविधुः | प्र. |
| | विव्यधिथ-विव्यद्ध | विविधथुः | विविध | म. |
| | विव्याध-विव्यध | विविधिव | विविधिम | उ. |
| लुट् | व्यद्धा | व्यद्धारौ | व्यद्धारः | प्र. |
| | व्यद्धासि | व्यद्धास्थः | व्यद्धास्थ | म. |
| | व्यद्धास्मि | व्यद्धास्वः | व्यद्धास्मः | उ. |
| लृट् | व्यत्स्यति | व्यत्स्यतः | व्यत्स्यन्ति | प्र. |
| | व्यत्स्यसि | व्यत्स्यथः | व्यत्स्यथ | म. |
| | व्यत्स्यामि | व्यत्स्यावः | व्यत्स्यामः | उ. |
| लोट् | विध्यतु-तात् | विध्यताम् | विध्यन्तु | प्र. |
| | विध्य-तात् | विध्यतम् | विध्यत | म. |
| | विध्यानि | विध्याव | विध्याम | उ. |

(१-२-२६) इति कित्त्वविकल्पो न। तेन एकमेव रूपम्। विस्फुरन्, विस्फारः[१], निष्फारः[२]-निः स्फारः निष्फारः निस्फारः विष्फारः विस्फारः।

स्फुलिङ्ग = अग्निकणः पूर्वोक्तसूत्रेण षत्व विकल्पे विस्फुलन्-विष्फुलन्-न्ती। स्फालः[३], निष्फालः-निस्फालः विष्फालः-विस्फालः।

**(१३९१) स्फुड—सम्वरणे।** (वस्त्रादि से वेष्टित करना, लपेटना, आच्छादित करना)। सक.। सेट्। परस्मै.। कुटादिः। स्फुडति। पुस्फोड। 'स्फुटति' (१३७३) वत्।

**(१३९२) चुड—संवरणे।** (लपेटना)। सक.। सेट्। परस्मै.। कुटादिः। चुडति। चुचोड। 'कुचति' (१३६८) वत्। स्त्रियां भावादौ भिदादि (३-३-१०४) पाठाद् अङ् उपधायाः, दीर्घश्च, चूडा = शिखा इति भवति।

**(१३९३) व्रुड—संवरणे।** (डूबना, ढेर करना, ढकना)। सकर्म.। सेट्। परस्मै.। कुटादिः। व्रुडति। वुव्रोड। श्यनं बिना 'त्रुटति' (१३७५) वत्। व्रोडकः-डिका, व्रुडिता-त्री, व्रोडयिता-त्री, व्रुडन्-न्ती-ती।

**(१३९४) क्रुड—निमज्जने।** (डूबना)। सक.। सेट्। परस्मै.। कुटादिः। क्रुडति। चुक्रोड। 'त्रुटति' (१३७५) वत्।

**(१३९५) मृड—निमज्जने।** (डूबना)। अकर्म.। सेट्। परस्मै.। कुटादिः। मृडति ममर्ड 'कृडति' (१३८२) वत्।

**(१३९६) गुरी—उद्यमने।** (प्रयत्न करना, उद्योग करना)। अकर्म.। सेट्। आत्मने.। कुटादिः।

१. गुरते। २. जुगुरे। ३. गुरिता। ४. गुरिष्यते। ८. गुरिषीष्ट। ९. अगुरिष्ट। १०. अगुरिष्यत। गूर्यते। गूर्णः

**(१३९७) णू—स्तवने।** (स्तुति करना)। सकर्म.। सेट्। परस्मै.।

१ नुवति। २ प्र. नुनाव नुनुवतुः। म. नुनुविथ। उ. नुनाव-नुनव। ३ नुविता। ४ नुविष्यति। ५ नुवतु। ६ अनुवत्। ७ नुवेत्। ८ नूयात्। ९ अनुवीत्। अनुविष्टाम्। १० अनुविष्यत्।

**कर्मणि**—नूयते। **णिचि**—नावयति-ते। **सनि**—नुनूषति। **यङि**—नोनूयते। **यङ्लुकि**—नोनोति-नोनवीति। **कृत्सु**—नावकः-विका, नुविता[४]-त्री, नुवन्-न्ती-ती, नुविष्यन्-न्ती-ती, प्रणूः, प्रण्वौ[५]-प्रण्वः, नुतम्-नूतः-नूतवान्, नुवः, नुवितव्यम्, नुवनीयम्,

१ घञि 'स्फुरतिस्फुल्योर्घञि' (६-१-४७) इत्यात्वमत्रेति ज्ञेयम्।

२ 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' (८-३-७६) इति विकल्पेन षत्वं भवति। तेन प्रत्येकं रूपद्वयं भवति।

३ 'स्फुरतिस्फुलत्योर्घञि' (६-१-४७) इति घञि आत्वम्।

४ अस्य धातोः कुटादिषु पाठात् 'गाङ्कुटादिभ्यः–' (१-२-१) इति ञित् णिद्भिन्नानां प्रत्ययानां ङिद्वद्भावातिदेशात् 'क्ङिति च' (१-१-५) इति गुणनिषेधे, उवङादेशे च नुविता, नुविष्यन् इत्यादीनि रूपाणि बोध्यानि।

५ क्विबन्ते द्विवचनादौ 'उपसर्गादिसमासेऽपि–' (८-४-१४) इति णत्वे, 'ओः सुपि' (६-४-८३) इति यण्।

नव्यम्, अवशयनाव्यम्[1], ईषन्नुवः-दुर्नुवः-सुनुवः, नुवः, नुवितुम्, नूतिः, नुवनम्, नूत्वा, प्रणूय।

**(१३९८) धू—विधूनने।** (कम्पित करना, कांपना)। सकर्म.। सेट्। कुटादिः। धुवति। दुधाव। इत्यादि 'नुवति' (१३६७) वत्। धावकः-विका, धुविता-त्री, धुवन्-ती, धावयन्[2]-न्ती, धुवनः[3], धुवित्रम्[4], धुवकः[5]।

**(१३९९) गु—पुरीषोत्सर्गे।** गुरीषोत्सर्गः = मलत्यागः। (मल त्याग करना, दस्त करना, पैखाना करना)। अकर्म.। अनिट्। परस्मै.। कुटादिः।

| | | | | |
|---|---|---|---|---|
| लट् | गुवति | गुवतः | गुवन्ति | प्र. |
| | गुवसि | गुवथः | गुवथ | म. |
| | गुवामि | गुवावः | गुवामः | उ. |
| लिट् | जुगाव | जुगुवतुः | जुगुवुः | प्र. |
| | जुगुविथ | जुगुवथुः | जुगुव | म. |
| | जुगुव-जुगाव | जुगुविव | जुगुविम | उ. |
| लुट् | गुता | गुतारौ | गुतारः | प्र. |
| | गुतासि | गुतास्थः | गुतास्थ | म. |
| | गुतास्मि | गुतास्वः | गुतास्मः | उ. |
| लृट् | गुष्यति | गुष्यतः | गुष्यन्ति | प्र. |
| | गुष्यसि | गुष्यथः | गुष्यथ | म. |
| | गुष्यामि | गुश्यावः | गुष्यामः | उ. |
| लोट् | गुवतु-गुवतात् | गुवताम् | गुवन्तु | प्र. |
| | गुव-गुवतात् | गुवतम् | गुवत | म. |
| | गुवानि | गुवाव | गुवाम | उ. |
| लङ् | अगुवत् | अगुवताम् | अगुवन् | प्र. |
| | अगुवः | अगुवतम् | अगुवत | म. |
| | अगुवम् | अगुवाव | अगुवाम | उ. |
| वि. लि. | गुवेत् | गुवेताम् | गुवेयुः | प्र. |
| | गुवेः | गुवेतम् | गुवेत | म. |
| | गुवेयम् | गुवेव | गुवेम | उ. |

१ 'ओरावश्यके' (३-१-१२५) इति ण्यत्। आवादेशः।
२ 'निगरणचलनार्थेभ्यः–' (१-३-८७) इति ण्यन्तान्नित्यं शतैव।
३ 'चलनशब्दार्थादकर्मकात्–' (३-२-१४८) इति ताच्छीलिको वुच्। अकर्मकत्वमस्य धातोर्विवक्षायां भवति।
४ 'अर्तिलूधूसुखनसहचरः इत्रः' (३-२-१८४) इति करणे इत्र प्रत्ययः। इत्र प्रत्ययस्य ङिद्वद्भावेन गुणनिषेधात् उवङादेशे धुवित्रम् इति भवति। केचित्तु गुणे धवित्रमित्युदाहरन्ति। 'प्राणा वै धवित्राणि' इति प्रयोगे छन्दसत्वाद् गुणः इति हरदत्तः।
५ 'आशिषि च' (३-१-१५०) इति वुन्। क्षिपकादिषु (वा. ७-३-४५) इति पाठात् धुवका इत्यत्र 'प्रत्ययस्थात्–' (७-३-४४) इति इत्वं न।

| | | | | |
|---|---|---|---|---|
| आ. लि. | गूयात् | गूयास्ताम् | गूयासुः | प्र. |
| | गूयाः | गूयास्तम् | गूयास्त | म. |
| | गूयासम् | गूयास्व | गूयास्म | उ. |
| लुङ् | अगुषीत् | अगुताम्[१] | अगुषुः | प्र. |
| | अगुषीः | अगुतम् | अगुत | म. |
| | अगुषम् | अगुष्व | अगुष्म | उ. |
| लृङ् | अगुष्यत् | अगुष्यताम् | अगुष्यन् | प्र. |
| | अगुष्यः | अगुष्यतम् | अगुष्यत | म. |
| | अगुष्यम् | अगुष्याव | अगुष्याम | उ. |

**भावे**—गूयते। **णिचि**—गावयति-ते। **सनि**—जुगुषति। **यङि**—जोगूयते। **यङ्लुकि**—जोगवीति-जोगुति। **कृत्सु**—गुवितव्यम्, गुवनीयम्, गुवम्-गाव्यम्, गूनः,[२] गुवन्, गुवती-गुवन्ती, गुतुम्, गुवनम्, गुत्वा, प्रगुत्य।

**(१४००) ध्रु**[३]—**गतिस्थैर्ययोः**। (जाना, स्थिर होना)। अकर्म.। अनिट्। परस्मै.। उकारान्तः। कुटादिः। ध्रुवति। दुध्राव। 'गुवति' (१३९९) वत्।

**कृत्सु**—ध्रुवितव्यम्, ध्रुवनीयम्, ध्रुवन्, ध्रुतुम्, ध्रुवनम्, ध्रुत्वा, प्रध्रुत्य। ध्रुवः पचाद्यच्।

**(१४०१) कुङ्**—**शब्दे**। (शब्द करना। भौंरे के समान शब्द करना। अस्पष्ट बोलना)। अकर्म.। अनिट्। आत्मने.। उकारान्तः। कुटादिः।

१ कुवते। २ चुकुवे। ३ कुता। ४ कुष्यते। ५ कुवताम्। ६ अकुवत। ७ कुवेत। ८ कुषीष्ट। **म.** ध्वम्। ९ अकुत। १० अकुष्यत।

**कृत्सु**—कुवितव्यम्, कुवनीयम्, कुवम्, आवश्यके काव्यम्, कुतः, कुवानः, कुतुम्, कुवनम्, कुत्वा, विकुत्य।

**(१४०२) पृङ्**—**व्यायामे**। व्यायामः = उद्योगः। (उद्यम करना)। प्रायेणायं वि, आङ् इत्युपसर्गद्वयपूर्वकः। अकर्म.। अनिट्। आत्मने.। ऋकारान्तः।

१ व्याप्रियते। २ व्यापप्रे। ३ व्यापर्ता। ८ व्यापृषीष्ट। ९ अपर्चिष्ट।

**कृत्सु**—पारकः-रिका, व्यापर्ता-व्यापर्त्री, व्यापारयिता-त्री, व्यापरिष्यन्-न्ती-ती, व्याप्रियमाणः, व्यापृत्-व्यापृतौ-व्यापृतः, व्यापृतम्-तः-तवान्, व्यापारितः, व्यापर्तव्यम्, व्यापरयितव्यम्, व्यापरिणीयम्, व्यापार्यम्, व्यापर्तुम्, व्यापरणम्, व्यापृत्य।

**(१४०३) मृङ्**[४]—**प्राणत्यागे**। (मरना, देह त्याग करना)। अकर्म.। अनिट्। आत्मने.।

---

१ कुटादित्वेन ङित्वात् गुणनिषेधे 'ह्रस्वादङ्गात्' इति सिचो लोपः।
२ 'दुग्वोर्दीर्घश्च' इति निष्ठानत्वं दीर्घश्च।
३ 'ध्रुव—' इति केचित् पठन्ति। तेषां मते सेडयं धातुः इट्पक्षे ध्रुवितः, ध्रुवितव्यम् इत्यादीनि रूपाणि ऊह्यानि। क्तिनि ध्रूतिः इति भवति।
४ अयं लिट् लुट् लृट् लृङ्क्षु परस्मैपदी।

| | | | | |
|---|---|---|---|---|
| लट् | म्रियते | म्रियेते | म्रियन्ते | प्र. |
| | म्रियसे | म्रियेथे | म्रियध्वे | म. |
| | म्रिये | म्रियावहे | म्रियामहे | उ. |
| लिट् | ममार | मम्रतुः | मम्रुः | प्र. |
| | ममर्थ | मम्रथुः | मम्र | म. |
| | ममार-ममर | मम्रिव | मम्रिम | उ. |
| लुट् | मर्ता | मर्तारौ | मर्तारः | प्र. |
| | मर्तासि | मर्तास्थः | मर्तास्थ | म. |
| | मर्तास्मि | मर्तास्वः | मर्तास्मः | उ. |
| लृट् | मरिष्यति | मरिष्यतः | मरिष्यन्ति | प्र. |
| | मरिष्यसि | मरिष्यथः | मरिष्यथ | म. |
| | मरिष्यामि | मरिष्यावः | मिरष्यामः | उ. |
| लोट् | म्रियताम् | म्रियेताम् | म्रियन्ताम् | प्र. |
| | म्रियस्व | म्रियेथाम् | म्रियध्वम् | म. |
| | म्रियै | म्रियावहै | म्रियामहै | उ. |
| लङ् | अम्रियत | अम्रियेताम् | अम्रियन्त | प्र. |
| | अम्रियथाः | अम्रियेथाम् | अम्रियध्वम् | म. |
| | अम्रिये | अम्रियावहि | अम्रियामहि | उ. |
| वि. लि. | म्रियेत | म्रियेयाताम् | म्रियेरन् | प्र. |
| | म्रियेथाः | म्रियेयाथाम् | म्रियेध्वम् | म. |
| | म्रियेय | म्रियेवहि | म्रियेमहि | उ. |
| आ. लि. | मृषीष्ट[1] | मृषीयास्ताम् | मृषीरन् | प्र. |
| | मृषीष्ठाः | मृषीयास्थाम् | मृषीढ्वम् | म. |
| | मृषीय | मृषीवहि | मृषीमहि | उ. |
| लुङ् | अमृत[2] | अमृषाताम् | अमृषत | प्र. |
| | अमृथाः | अमृषाथाम् | अमृड्ढ्वम्-ढ्वम् | म. |
| | अमृषि | अमृष्वहि | अमृष्महि | उ. |
| लृङ् | अमरिष्यत् | अमरिष्यताम् | अमरिष्यन् | प्र. |
| | अमरिष्यः | अमरिष्यतम् | अमरिष्यत | म. |
| | अमरिष्यम् | अमरिष्याव | अमरिष्यत | उ. |

**भावे**—म्रियते। **णिचि**—मारयति।९ अमीमरत्। **सनि**—मुमूर्षति। **यङि**—मोम्रीयते। **यङ्लुकि**– मर्मति-मरीमर्ति-मर्मरीति। **कृत्सु**– मारकः-रिका, मर्ता-मर्त्री, मारयिता-त्री, म्रियमाणः[3]

१ 'उश्च' इति लिङ्सिचोः कित्वान्न् गुणः।

२ 'ह्रस्वादङ्गात्' इति सिचो लोपः।

३ शानचि 'तुदादिभ्यः–' (३-१-७७) इति शप्रत्यये, 'रिङ् शयग् लिङ् क्षु' (७-४-२८) इति रिङादेशे इयङादेशे रूपमेव।

मरिष्यन्[1]-न्ती-ती, मुमूर्षन्, अमृतम्[2], मरः,[3] अमरः, दुर्मरम्, मुमूर्षा, मरीचिः, मरुः, मृत्युः, मरुत्, मर्तः-मर्त्यः, मर्तव्यम्, मरणीयम्, मार्यम्, मृतः, मर्तुम्, मरणम्, मृत्वा, उन्मृत्य ।

( १४०४-०५ ) **रि-पि—गतौ** । (जाना) । सकर्म. । अनिट् । पर. । रियति । पियति । पियाय । 'क्षियति' (१४०७) वत् ।

( १४०६ ) **धि—धारणे** । (धारण करना, पास रखना या होना) । सकर्म. । अनि. । परस्मै. । धियति । दिधाय दिध्यतुः । दिधयिथ-दिधेथ । 'क्षियति' (१४०७) वत् ।

**कृत्सु**—धायकः, धायिका, शतरि-धियन्-धियन्ती धियती, आधितः ।

( १४०७ ) **क्षि—निवासगत्योः** । (निवास करना, जाना) । अकर्म. । अनि. । परस्मै. । १. क्षियति क्षियतः क्षियन्ति । लिडादिषु 'क्षयति' (२३६) वत् । ५. क्षियतु । ६. अक्षियत् । ७. क्षियेत् ।

**कृत्सु**—क्षियन्-न्ती-ती । क्षीणः, क्षितः, क्षित्वा, क्षेतुम् ।

( १४०८ ) **षू—प्रेरणे** । (प्रेरणा करना, कार्य में लगाना, उड़ाना) सकर्म. । सेट् । परस्मै. ।

१ सुवति । २ सुषाव सुषुवतु सुषुवुः **म.** सुषुविथ सुषुवथुः । ३ सविता । **म.** सवितासि । ४ सविष्यति । ५ सुवतु । ६ असुवत् । ७ सुवेत् । ८ सूयात् । ९ असावीत् । असाविष्टाम् । १० असोविष्यत् ।

**भावे**—सूयते । **णिचि**—सावयति-ते । **सनि**—सुसूषति । **यङि**—सोषूयते । **यङ्लुकि**—सोषोति-सोषवीति । **कृत्सु**—सोष्यन्-न्ती,-ती, सुवन्-ती, सावयमानः, सुतम्-तः, सोतव्यम्, सवनीयम्, सव्यम्, सूर्यः,[4] सविता,[5] सवित्रम्[6], सूतः,[7] प्रसवी,[8] सूरः,[9] सूर्या, सूरी मानवी चेत् ।

( १४०९ ) **कृ—विक्षेपे** । फेंक देना । **अप**—अलग करना । **अव**—फेंकना, **आ**—मरना, **प्रति**—दुःख देना, हिंसा करना, **वि**—विरल करना, **सम्**—एकत्र करना,

---

१ 'म्रियते लुंङ्लिङोश्च' (१-३-६१) इत्यात्मनेपदस्य नियमितत्वात्, स्यप्रत्ययस्य च शित् प्रत्ययत्वादिनिदानाभावादत्र परस्मैपदं भवति । विस्तरस्तु माधवीय धातुवृत्यादिषु बोध्यः । 'ऋद्धनोः स्ये' (७-२-७०) इतीडागमोऽत्रेति विशेषः ।

२ न म्रियते इत्यमृतम्, 'मतिबुद्धिपूजार्थेभ्यश्च' (३-२-१८८) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः ततो नञ् समासः ।

३ पचाद्यचि—मरः नञ् समासे अमरः = देवः

४ सुवति प्राणिनस्तत्तत्कर्मसु इति सूर्यः । 'राजसूयसूर्य–' (३-१-११४) इत्यत्र निपातनात् क्यप्, रुडागमश्च ।

५ 'तृन्' (३-२-१३५) इति ताच्छीलिकस्तृन्प्रत्ययः । सविता = सूर्यः प्रेरणशील इत्यर्थः ।

६ 'अर्तिलूधूसू–' (३-२-१८४) इति करणे इत्र प्रत्ययः ।

७ संज्ञायां क्तप्रत्यये रूपम् । सूतः = रथादीनां प्रेरकः सारथिः ।

८ 'जिदृक्षिविश्रीण्वमाव्यथाभ्यपरिभूप्रसूभ्यश्च' (३-२-१५६) इति इनि प्रत्ययः । प्रसवी = आज्ञप्ता ।

९ औणादिके कन् प्रत्यये रूपमेवम् । सूरः = सूर्यः । 'सूरसूर्यार्यमादित्य' इत्यमरः ।

**अभि**—उलांघना, नष्ट होना, **उप**—छेदन करना, हिंसा करना। सकर्म.। सेट्। परस्मै.। १ किरति। २ चकार चकरतुः चकरः। **म.** चकरिथ। **उ.** चकार चकर चकरिव। ३ करिता-करीता। ४ करिष्यति-करीष्यति। ५ किरतु। ६ अकिरत्। ७ किरेत्। ८ कीर्यात्। ९ अकारीत् अकारिष्टाम्। १० अकरिष्यत्। उपस्किरति। उपचस्कार, उपास्किरत्, प्रतिस्किरति। अवकिरति। अवकिरत्। अपस्किरते।

**कर्मणि**—कीर्यते। २ चकरे। **णिचि**—कारयति-ते। ९ अचीकरत्। **सनि**—चिकरिषति[1]। **यङि**—चेकीर्यते। **यङ्लुकि**—चाकर्ति-चाकरीति। **कृत्सु**—करितव्यम्, करीतव्यम्, करणम्, करणीयम्, कार्यम्, कीर्णः, किरन्, किरन्ती, किरती, करितुम्-करीतुम्, कीर्त्वा, विकीर्य, उपस्करः, अवकरः, विष्किरः, विकिरः, अवकीर्णी।

**( १४१० ) गॄ—निगरणे**। (खाना, निगलना)। सकर्म.। सेट्। पर.।

१ गिरति-गिलति[2]। २ **प्र.** जगार-जगाल जगरतुः-जगलतुः जगरुः जगलुः। **म.** जगरिथ जगलिथ। ३ गरिता-गरीता, गलिता-गलीता। ४ गरिष्यति-गरीष्यति-गलिष्यति-गलीष्यति। ५ गिरतु-गिलतु। ६ अगिरत्-अगिलत्। ७ गिरेत्-गिलेत्। ८ गीर्यात्। ९ अगारीत्-अगालीत्। १० अगरिष्यत्। सङ्गिरन्ते[3], सञ्जगरिरे। अवगिरते[4]। उद्-उद्गमने। उद्गिरति।

**कर्मणि**—गीर्यते। **णिचि**—गारयति[5]-गालयति। **सनि**—जिगरिषति-जिगलिषति। **यङि**—जेगिल्यते[6]। **यङ्लुकि**—जागरीति-जागलीति-जागर्ति। **कृत्सु**—गरितव्यम्-गलितव्यम्, गरणीयम्-गलनीयम्, गार्यम्, गिरन्-गिलन्, गिरन्ती-गिलन्ती, गिरती-गिलती, गरितुम्-गलितुम्, गरीतुम्-गलीतुम्, गरणम्-गलनम्, गीर्त्वा, गलो ग्रीवा, गरो विषः, निगारः, उद्गारः, गुरुः, गरिमा, गरिष्ठः, गरीयान्, गर्भः, मुदं गिरतीति मुद्गरः।

**( १४११ ) दृङ्—आदरे**। (आदर करना, सत्कार करना)। सकर्म.। अनिट्। आत्मने.। प्रायेणायमाङ्पूर्वः

| | | | | |
|---|---|---|---|---|
| लट् | आद्रियते | आद्रियेते | आद्रियन्ते | प्र. |
| | आद्रियसे | आद्रियेथे | आद्रियध्वे | म. |
| | आद्रिये | आद्रियावहे | आद्रियामहे | उ. |
| लिट् | आदद्रे | आदद्राते | आदद्रिरे | प्र. |
| | आदद्रिषे | आदद्राथे | आदद्रिढ्वे-ध्वे | म. |
| | आदद्रे | आदद्रिवहे | आदद्रिमहे | उ. |

१ 'किरश्च पञ्चभ्यः' इति इट्।
२ 'ऋत इद्धातोः'। 'अचि विभाषा च' गिरते रेफस्य लत्वं वा स्यादजादौ।
३ 'समः प्रतिज्ञाने' इत्यात्मनेपदम्।
४ 'अवाद्ग्रः' इत्यात्मनेपदम्। तथाऽवगिरमाणैश्च पिशाचैर्मांसशोणितम्। इति भट्टिः।
५ 'निगरणचलनार्थेभ्यश्च।' इति परस्मैपदमेव।
६ 'लुपसदचरे–' ति भावगर्हायां यङ्। गर्हितं गिरति। 'ग्रो यङि' गिरते रेफस्य लत्वं स्याद्यङि।

| | | | | |
|---|---|---|---|---|
| लुट् | आदर्ता | आदर्तारौ | आदर्तारः | प्र. |
| | आदर्तासे | आदर्तासाथे | आदर्ताध्वे | म. |
| | आदर्ताहे | आदर्तास्वहे | आदर्तास्महे | उ. |
| लृट् | आदरिष्यते | आदरिष्येते | आदरिष्यन्ते | प्र. |
| | आदरिष्यसे | आदरिष्येथे | आदरिष्यध्वे | म. |
| | आदरिष्ये | आदरिष्यावहे | आदरिष्यामहे | उ. |
| लोट् | आद्रियताम् | आद्रियेताम् | आद्रियन्ताम् | प्र. |
| | आद्रियस्व | आद्रियेथाम् | आद्रियध्वम् | म. |
| | आद्रियै | आद्रियावहै | आद्रियामहै | उ. |
| लङ् | आद्रियत | आद्रियेताम् | आद्रियन्त | प्र. |
| | आद्रियथाः | आद्रियेथाम् | आद्रियध्वम् | म. |
| | आद्रिये | आद्रियावहि | आद्रियामहि | उ. |
| वि. लि. | आद्रियेत | आद्रियेयाथाम् | आद्रियेरन् | प्र. |
| | आद्रियेथाः | आद्रियेयाथाम् | आद्रियेध्वम् | म. |
| | आद्रियेय | आद्रियेवहि | आद्रियेमहि | उ. |
| आ. लि. | आदृषीष्ट | आदृषीयास्ताम् | आदृषीरन् | प्र. |
| | आदृषीष्ठाः | आदृषीयास्थाम् | आदृषीढ्वम् | म. |
| | आदृषीय | आदृषीवहि | आदृषीमहि | उ. |
| लुङ् | आदृत | आदृषाताम् | आदृषत | प्र. |
| | आदृथाः | आदृषाथाम् | आदृढ्वम् | म. |
| | आदृषि | आदृष्वहि | आदृष्महि | उ. |
| लृङ् | आदरिष्यत | आदरिष्येताम् | अदरिष्यन्त | प्र. |
| | आदरिष्यथाः | आदरिष्येथाम् | आदरिष्यध्वम् | म. |
| | आदरिष्ये | आदरिष्यावहि | आदरिष्यामहि | उ. |

**कर्मणि**—आद्रियते। २. आदद्रे। **णिचि**—आदारयति-ते। ९. **यङ्लुकि**— आददर्ति-आदरीदर्ति। **कृत्सु**—आदारकः-रिका, आदर्ता-आदर्त्री, आदरयिता-त्री, दारयन्-न्ती, आद्रियमाणः[१], दारयमाणः, आदरिष्यमाणः[२], आदृत्[३], आदृतौ-आदृतः। आदृतम्, आदृतः, आदृतवान्, दरः, आदरी[४], दारः, आदर्तव्यम्, दारयितव्यम्, आदरणीयम्, आदृत्य[५], दार्यम्, आदरः[६], आदर्तुम्, दारयितुम्, आदृतिः, दरणम्, दारणम्, दृत्वा, दारयित्वा, आदृत्य।

---

१ 'तुदादिभ्यः—' (३-१-७७) इति शप्रत्यये। 'रिङ् शयग् लिङ्क्षु' (७-४-२८) इति रिङादेशे, इयङादेशे च।
२ 'ऋद्धनोः स्ये' (७-२-७०) इति स्यप्रत्ययस्येडागमः।
३ क्विपि तुगागमे रूपम्। एवं ल्यप्यपि तुगागमो ज्ञेयः।
४ तच्छीलादिषु कर्तृषु 'जिदृक्षि—' (३-२-१५७) इत्यादिना इनि प्रत्यये।
५ 'एतिस्तुशास्वृदृजुषः—' (३-१-१०९) इति क्यपि, तुगागमे च।
६ 'ग्रहवृदृनिश्चिगमश्च' (३-३-५८) इति घञपवादोऽप् प्रत्ययः।

**(१४१२) धृङ्—अवस्थाने** । (रहना, स्थिर रहना, धारण करना) । अकर्म. । अनिट् । आत्मने. । १.ध्रियते । २.दध्रे । इत्यादि सर्वं 'द्रियति' (१४११) वत् । पुरन्ध्री,[१] महीध्रः[२]-कुध्रः । आधारः,[३] धर्मः[४], इमानि रूपाणि कृत्सु विशेषः ।

**(१४१३) प्रच्छ—ज्ञीप्सायाम्** । (पूछना, जानने की इच्छा करना) । सकर्म. । अनिट् । परस्मै. ।

| | | | | |
|---|---|---|---|---|
| लट् | पृच्छति[५] | पृच्छतः | पृच्छन्ति | प्र. |
| | पृच्छसि | पृच्छथः | पृच्छथ | म. |
| | पृच्छामि | पृच्छावः | पृच्छामः | उ. |
| लिट् | पप्रच्छ | पप्रच्छतुः | पप्रच्छुः | प्र. |
| | पप्रच्छिथ-पप्रष्ठ | पप्रच्छथुः | पप्रच्छ | म. |
| | पप्रच्छ | पप्रच्छिव | पप्रच्छिम | उ. |
| लुट् | प्रष्टा | प्रष्टारौ | प्रष्टारः | प्र. |
| | प्रष्टासि | प्रष्टास्थः | प्रष्टास्थ | म. |
| | प्रष्टास्मि | प्रष्टास्वः | प्रष्टास्मः | उ. |
| लृट् | प्रक्ष्यति | प्रक्ष्यतः | प्रक्ष्यन्ति | प्र. |
| | प्रक्ष्यसि | प्रक्ष्यथः | प्रक्ष्यथ | म. |
| | प्रक्ष्यामि | प्रक्ष्यावः | प्रक्ष्यामः | उ. |
| लोट् | पृच्छतु-तात् | पृच्छताम् | पृच्छन्तु | प्र. |
| | पृच्छ | पृच्छतम् | पृच्छत | म. |
| | पृच्छानि | पृच्छावः | पृच्छामः | उ. |
| लङ् | अपृच्छत् | अपृच्छताम् | अपृच्छन् | प्र. |
| | अपृच्छः | अपृच्छतम् | अपृच्छत | म. |
| | अपृच्छम् | अपृच्छावः | अपृच्छामः | उ. |
| वि. लि. | पृच्छेत् | पृच्छेताम् | पृच्छेयुः | प्र. |
| | पृच्छेः | पृच्छेतम् | पृच्छेत | म. |
| | पृच्छेयम् | पृच्छेव | पृच्छेम | उ. |
| आ. लि. | पृच्छ्यात् | पृच्छ्यास्ताम् | पृच्छ्यासुः | प्र. |
| | पृच्छ्याः | पृच्छ्यास्तम् | पृच्छ्यास्त | म. |
| | पृच्छ्यासम् | पृच्छ्यास्व | पृच्छ्यास्म | उ. |

१ पुरं धारयतीत्यर्थे 'संज्ञायां भृ—' (३-२-४६) इति खचि, पृषोदरादित्वात् उपधालोपे साधुः । स्त्रियां गौरादित्वात् ङीप् ।

२ 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' । (वा. ३-२-५) इति कः, एवं कुं धरतीति कुध्रः इत्यत्रापि बोध्यम् ।

३ 'अवहाराधारावायानामुपसंख्यानम्' (वा. ३-३-१२२) इति घञन्तः निपात्यते । आध्रियतेऽस्मिन्नित्यर्थे = आधारः ।

४ धरति ध्रियते वाऽस्मिनाधार इति धर्मः = न्यायः । 'अर्तिस्तुसुहुसृधृ—' इति मन् प्रत्ययः ।

५ 'ग्रहिज्ये—' ति सम्प्रसारणम् ।

| | | | | |
|---|---|---|---|---|
| लुङ् | अप्राक्षीत् | अप्राष्टाम् | अप्राक्षुः | प्र. |
| | अप्राक्षीः | अप्राष्टम् | अप्राष्ट | म. |
| | अप्राक्षम् | अप्राक्ष्व | अप्राक्ष्म | उ. |
| लृङ् | अप्रक्ष्यत् | अप्रक्ष्यताम् | अप्रक्ष्यन् | प्र. |
| | अप्रक्ष्यः | अप्रक्ष्यतम् | अप्रक्ष्यत | म. |
| | अप्रक्ष्यम् | अप्रक्ष्याव | अप्रक्ष्याम | उ. |

आपृच्छते । संपृच्छते । **कर्मणि**—पृच्छयते । **सनि**—पिपृच्छिषति । **णिचि**—प्रच्छयति-ते । **यङि**—परीपृच्छयते । **यङ्लुकि**—पाप्रष्टि-पाप्रच्छीति । **कृत्सु**—प्रष्टव्यम्, प्रच्छनीयम्, प्रच्छयम्, पृष्टः, पृच्छन्, पृच्छती-पृच्छन्ती, प्रक्ष्यन्, प्रष्टुम्, प्रच्छनम्, पृष्ट्वा, आपृच्छ्य, प्रश्नः, पृच्छा, सम्पृच्छमानः, पृष्टिः ।

**( १४१४ ) सृज—विसर्गे** । (रचना कनरा, बनाना)। **उत्-वि-नि**—छोड़ देना । सकर्म. । अनिट् । परस्मै. ।

१ **प्र.** सृजति सृजतः सृजन्ति । **म.** सृजसि सृजथः सृजथ । **उ.** सृजामि सृजावः सृजामः । २ **प्र.** ससर्ज ससर्जतुः ससृजुः । **म.** ससर्जिथ-सस्रष्ठ ससृजथुः ससृज । उ. ससर्ज ससृजिव ससृजिम । ३ **प्र.** स्रष्टा स्रष्टारौ स्रष्टारः । **म.** स्रष्टासि स्रष्टास्थः स्रष्टास्थ । **उ.** स्रष्टास्मि स्रष्टास्वः स्रष्टास्मः ४ **प्र.** स्रक्ष्यति स्रक्ष्यतः स्रक्ष्यन्ति । **म.** स्रक्ष्यसि स्रक्ष्यथः स्रक्ष्यथ । **उ.** स्रक्ष्यामि स्रक्ष्यावः स्रक्ष्यामः । ५ **प्र.** सृजतु-सृजतात् सृजताम् सृजन्तु । **म.** सृज सृजतम् सृजत । **उ.** सृजानि सृजाव सृजाम । ६ **प्र.** असृजत् असृताम् असृजन् । **म.** असृजः असृजतम् असृजत । **उ.** असृजम् असृजाव असृजाम । ७ **प्र.** सृजेत् सृजेताम् सृजेयुः । **म.** सृजेः सृजेतम् सृजेत । **उ.** सृजेयम् सृजेव सृजेम । ८ **प्र.** सृज्यात् सृज्यास्ताम् सृज्यासुः । **म.** सृज्याः सृज्यास्तम् सृज्यास्त । उ. सृज्यासम् सृज्यास्व सृज्यास्म । ९ **प्र.** अस्राक्षीत् अस्राष्टाम् अस्राक्षुः । **म.** अस्राक्षीः अस्राष्टम् अस्राष्ट । **उ.** अस्राष्टम् अस्राक्ष्व अस्राक्ष्म । १० **प्र.** अस्रक्ष्यत् अस्रक्ष्यताम् अस्रक्ष्यन् । **म.** अस्रक्ष्यः अस्रक्ष्यतम् अस्रक्ष्यत । **उ.** अस्रक्ष्यम् अस्रक्ष्याव अस्रक्ष्याम ।

**कर्मणि**—सृज्यते । **णिचि**—सर्जयति-ते । **सनि**—सिसृक्षति । **यङि**—सरीसृज्यते । **यङ्लुकि**—सरीसर्ष्टि । **कृत्सु**—स्रष्टव्यम्, सर्जनीयम्, सृज्यम्, पाणिभ्यां सृज्यते पाणिसर्ग्या = रज्जुः । सृष्टः, सृजन्, सृजन्ती, सृजती, स्रक्ष्यन्, स्रष्टुन्, सर्जनम्, सृष्ट्वा, विसृज्य, सृष्टिः, स्रक्, रज्जुः, उद् - उत्सर्गे । उत्सृजति ।

**( १४१५ ) टुमस्जो—शुद्धौ** । (स्नान करना, नहाना, **नि**—डूबना, डुबकी लगाना)। अकर्म. । अनिट् । परस्मै. । १ मज्जति[1] । २ **प्र.** ममज्ज ममज्जतुः ममज्जुः । **म.** ममज्जिथ[2] ममङ्क्थ । उ. ममज्ज ममज्जिव ममज्जिम । ३ मङ्क्ता । ४ मङ्क्ष्यति । ५ मज्जतु । ६

१ मस् ज् + अ + ति इत्यत्र सस्यं चुत्वेन शः । तस्य पुनर्जश्त्वेन जः । सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा इति भवभूतिः ।

२ भारद्वाजनियमात्थलि इड्विकल्पः । अनिट् 'मस्जिनशो— रिति नुम् ।

अमज्जत् । ७ मज्जेत् । ८ मज्ज्यात् । ९ अमाङ्क्षीत् अमाङ्क्तम् अमाङ्क्षुः । १० अमङ्क्ष्यत् ।

**भावे**—मज्ज्यते । **णिचि**—मज्जयति । ९ अमज्जत् । **सनि**—मिमङ्क्षति । **यङि**—मामज्ज्यते । **यङ्लुकि**—मामङ्क्ति । **कृत्सु**—मङ्क्तव्यम्, मज्जनीयम्, मज्जः, मग्नः[१], मग्नवान्, मज्जितः, सुमक्[२]-ग्-सुमजौ-सुमजः, मङ्क्ष्यन्-न्ती-ती, मज्जन्[३]-न्ती, मज्जयन्-न्ती, मङ्क्ता[४]-मङ्क्त्री, मज्जयिता-त्री, मज्जकः-ज्जिका, मद्ग्यम्[५], मद्ग्यः, मज्ज्यमानः, मद्गः, मज्जथुः[६], मज्जः, मङ्क्तुम्, मज्जयितुम्, मज्जा, मज्जना, मज्जनम्, मङ्क्त्वा[७]-मक्त्वा, मज्जयित्वा, प्रमज्ज्य । मद्गुः[८] मञ्जूषा[९], मद्गुरः ।

**( १४१६ ) रुजो—भङ्गे** । (दुःख या रोग से पीडित होना, टेढा होना, टूट जाना) । सक. । अनिट् । परस्मै. । १ रुजति । २ रुरोज । ३ रोक्ता । ४ रोक्ष्यति । ९ अरौक्षीत् ।

**कृत्सु**—रुजन्, रोजकः-जिका, रोक्ता-रोक्त्री, कूलमुद्रुजः, रोगः,[१०] हृद्रोगः[११]-हृदयरोगः, रुजा[१२], रुक्[१३], रुग्णः, रुग्णवान्, लुग्नम्, वीरुक् ।

**( १४१७ ) भुजो—कौटिल्ये** । (वक्र होना, टेढा होना) । अकर्म. । अनिट् । परस्मै. । ओदित् ।

१ भुजति । २ बुभोज । म. बुभोजिथ । ३ भोक्ता । ४ भोक्ष्यति । ८ भुज्यात् भुज्यास्ताम् । ९ अभौक्षीत् अभौक्ताम् ।

**कृत्सु**—भुजन्-न्ती-ती, भोक्ष्यन्-न्ती-ती, भुजानः, भोक्ष्यमाणः, भोक्तव्यम्, भोजनीयम्, भुज्यमानः, भोक्तुम्, भुक्तिः, भोजनम्, भुक्त्वा, उपभुज्य, भुग्नः, भुग्नवान्, विभुजन्-न्ती-ती, मूलविभुजः, भुजः, भोगः ।

**( १४१८ ) छुप—स्पर्शे** । (छूना, स्पर्श करना) । सकर्म. । अनिट् । परस्मै. ।

---

१ निष्ठायाम्, 'मस्जिनशोः—' (७-१-६०) इति नुमि, सकारस्य संयोगादिलोपे, नुमो नकारस्य 'अनिदिताम्—' ६-४-२४) इति लोपे, 'ओदितश्च' (८-२-४५) इति निष्ठानत्वे, नत्वस्यासिद्धत्वेन झल्परकत्वात् 'चोः कुः' (८-२-३०) इति कुत्वे च ।

२ क्विपि, संयोगदिलोपे, जकारस्य कुत्वे च ।

३ शतरि, तुदादित्वात् शपोऽपवादेन शप्रत्यये जश्त्वश्चुत्वयोश्च रूपमेवम् ।

४ तृचि अन्त्यात् पूर्वं नुमि, 'स्कोः संयोगाद्योरन्ते च' (८-२-२९) इति संयोगादिलोपे, रूपमेवम् ।

५ ण्यति, 'चजोः कु घिण्ण्यतोः' (७-३-५२) धातु जकारस्य कुत्वे, सकारस्य जश्त्वेन दकारे च ।

६ भावे, 'ट्वितोऽथुच्' (३-३-८९) इत्यथुच् प्रत्यये रूपमेवम् ।

७ क्त्वाप्रत्यये, 'जान्तनशां विभाषा' (६-४-३२) इत्यनुनासिकलोपनिषेधविकल्पः । निषेधविकल्पे विधिविकल्पपर्यवसानात् अनुनासिकलोपो विभाषा भवतीति बोध्यम् ।

८ मज्जत्यम्भसीति मद्गुः = जलपक्षिविशेषः । 'न्यङ् क्वादि' (७-३-५३) पाठात् जकारस्य कुत्वेन गकारः ।

९ मज्जत्यस्यामिति मञ्जूषा = पेटिका । 'मस्जेर्नुम् च' इत्युषन् प्रत्यये, नुमागमे च ।

१० 'पदरुजविशस्पृशो घञ्' (३-३-१६) इति कर्तरि घञ् । रुजतीति रोगः । 'चजोः—' (७-३-५२) इति कुत्वम् ।

११ 'वा शोकष्यञ् रोगेषु' (६-३-५१) इति हृदय शब्दस्य रोगशब्दे परे हृद्भावविकल्पः ।

१२ भिदादेः (३-३-१०४) आकृतिगणत्वेन तत्र पाठादङ् । प्रत्ययस्य ङित्वान्न गुणः ।

१३ 'रोगाख्यायां ण्वुल् बहुलम्' (३-३-१०८) इत्यत्र बहुलग्रहणात् रोगवाचकत्वेऽपि स्त्रियां सम्पदादि (वा. ३-३-१०८) पाठात् क्विप् ।

१ छुपति। २ चुच्छोप। म. चुच्छोपिथ। ३ छोप्ता। ८ छुप्यात्। ९ अच्छोप्सीत्। छुप्तः, छोप्तुम्, छुप्त्वा।

**(१४१९) रुश—हिंसायाम्।** (मार डालना)। सकर्म.। अनिट्। परस्मै.। रुशति। 'विशति' (१४१४) वत्।

**(१४२०) रिश—हिंसायाम्।** (मार डालना)। सकर्म.। अनि.। परस्मै.। रिशति। 'विशति' (१४२४) वत्।

**(१४२१) लिश—गतौ** (जाना)। सक.। अनिट्। पर.। लिशति। 'रिशति' (१४२०) वत्।

**(१४२२) स्पृश—संस्पर्शने।** (छूना, स्पर्श करना)। सकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | स्पृशति | स्पृशतः | स्पृशन्ति | प्र. |
| | स्पृशसि | स्पृशथः | स्पृशथ | म. |
| | स्पृशामि | स्पृशावः | स्पृशामः | उ. |
| लिट् | पस्पर्श | पस्पृशतुः | पस्पृशुः | प्र. |
| | पस्पर्शिथ | पस्पृशथुः | पस्पृश | म. |
| | पस्पर्श | पस्पृशिव | पस्पृशिम | उ. |
| लुट् | स्त्रष्टा | स्त्रष्टारौ | स्त्रष्टारः | प्र. |
| | स्त्रष्टासि | स्त्रष्टास्थः | स्त्रष्टास्थ | म. |
| | स्त्रष्टास्मि | स्त्रष्टास्वः | स्त्रष्टास्मः | उ. |
| लृट् | स्त्रक्ष्यति | स्त्रक्ष्यतः | स्त्रक्ष्यन्ति | प्र. |
| | स्त्रक्ष्यसि | स्त्रक्ष्यथः | स्त्रक्ष्यथ | म. |
| | स्त्रक्ष्यामि | स्त्रक्ष्यावः | स्त्रक्ष्यामः | उ. |

पक्षे—स्पर्क्ष्यति स्पर्क्ष्यतः स्पर्क्ष्यन्ति इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | स्पृशतु-तात् | स्पृशताम् | स्पृशन्तु | प्र. |
| | स्पृश-तात् | स्पृशतम् | स्पृशत | म. |
| | स्पृशानि | स्पृशाव | स्पृशाम | उ. |
| लङ् | अस्पृशत् | अस्पृशताम् | अस्पृशन् | प्र. |
| | अस्पृशः | अस्पृशतम् | अस्पृशत | म. |
| | अस्पृशम् | अस्पृशाव | अस्पृशाम | उ. |

पक्षे—अस्पार्क्षीत् अस्पार्ष्टाम् अस्पार्क्षुः इत्यादि।

| | | | | |
|---|---|---|---|---|
| वि.लि. | स्पृशेत् | स्पृशेताम् | स्पृशेयुः | प्र. |
| | स्पृशेः | स्पृशेताम् | स्पृशेत | म. |
| | स्पृशेयम् | स्पृशेव | स्पृशेम | उ. |
| आ.लि. | स्पृश्यात् | स्पृश्यास्ताम् | स्पृश्यासुः | प्र. |
| | स्पृश्याः | स्पृश्यास्तम् | स्पृश्यास्त | म. |
| | स्पृश्यासम् | स्पृश्यास्व | स्पृश्यास्म | उ. |

| | | | | |
|---|---|---|---|---|
| लुङ् | अस्राक्षीत् | अस्राष्टाम् | अस्राक्षुः | प्र. |
| | अस्राक्षीः | अस्राष्टम् | अस्राष्ट | म. |
| | अस्राक्षम् | अस्राक्ष्व | अस्राक्ष्म | उ. |

पक्षे—अस्पृक्षत् अस्पृक्षताम् अस्पृक्षन् इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृङ् | अस्रक्ष्यत् | अस्रक्ष्यताम् | अस्रक्ष्यन् | प्र. |
| | अस्रक्ष्यः | अस्रक्ष्यतम् | अस्रक्षयत | म. |
| | अस्रक्ष्यम् | अस्रक्ष्याव | अस्रक्ष्याम | उ. |

पक्षे—अस्पर्क्ष्यत् अस्पर्क्ष्यताम् अस्पर्क्ष्यन् इत्यादि।

**कर्मणि**—स्पृश्यते। **णिचि**—स्पर्शयति। **सनि**—पिस्पृक्षति। **यङि**—परीस्पृश्यते। **यङ्लुकि**—परीस्पर्ष्टि-पस्पर्ष्टि-परिस्पष्टि-परीस्पृशीति-परिस्पृशीति इत्यादि। **कृत्सु**—स्पर्शनीयम्, स्पर्शनम्, णिचः स्पर्शनम्-दानमित्यर्थः। स्पर्शः, स्पर्शकः, स्पर्शी, स्रष्टा-स्पर्ष्टा, स्पृष्टः, स्पृष्टिः, स्रष्टव्यम्, स्पर्ष्टव्यम्, स्प्रष्टुम्-स्पर्ष्टुम्, स्पृष्ट्वा, संस्पृश्य, स्पृश्यम्, स्पृशन्, स्रश्यन्-स्पर्क्ष्यन्, **कर्मणि**—स्पृश्यमाणः, स्रक्ष्यमाणः, स्पर्क्ष्यमाणः, उप-उपस्पृश्य-आचभ्य इत्यर्थः, मन्त्रस्पृक्, उदकस्पर्शः, व्योमस्पृक्,[१] जलस्पृक्, दिविस्पृक्, हृदिस्पृक्, शीतस्पर्शः, पृष्ठम्,[२] पार्श्वम्[३]।

(१४२३) **विच्छ—गतौ**। (जाना)। सक.। सेट्। परस्मै.। १ विच्छायति। २ विच्छायाञ्चकार विविच्छ। ३ विच्छयिता-विच्छिता।

**कृत्सु**—विच्छायकः-यिका, विच्छायिता-त्री, विच्छायन्-न्ती-ती, विच्छायिष्यन्, विच्छायितम्-तः, विच्छायितव्यम्, विच्छायनीयम्, विच्छायित्वा, प्रविच्छाय।

(१४२४) **विश—प्रवेशने**। प्रवेशनम् = अन्तर्गमनम्। (अन्दर प्रवेश करना, घुसना)। **प्र**- प्रवेश करना। **उप**—बैठना। **अभिनि**—समक्ष या सामने बैठना। आराम करना। **निर्**—मूच्छित होना, बाहर जाना, **परि**—उपहार देना, **सम्**—आराम करना, **सन्नि**—पास जाना या रहना, **समा**—प्रचार में लाना, समाना, **नि**—निवेश करना, वास करना)। सकर्म.। अनिट्. परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | विशति | विशतः | विशन्ति | प्र. |
| | विशसि | विशथः | विशथ | म. |
| | विशामि | विशावः | विसामः | उ. |

१ 'स्पृशोऽनुदके क्विन्' (३-२-५८) इति सुबन्त उपपदे क्विन्प्रत्यये रूपमेवम्। घृतं स्पृशति घृतस्पृक्, मन्त्रेण स्पृशति घृतस्पृक्, मन्त्रेण स्पृशति मन्त्रस्पृक्, जलेन स्पृशति जलस्पृक्। दिविस्पृक् हृदिस्पृक् इत्यत्र 'हृद्द्युभ्यां उपसंख्यानम्' (वा. ६-३-९) इति वचनात् सप्तम्या अलुक्।

२ औणादिके थक् प्रत्यये निपादनात् सकारलोपः। 'व्रश्च–' (८-२-३६) इत्यादिना शकारस्य षत्वम्। ष्टुत्वम्। पृष्ठम् = शरीरैकदेशः।

३ औणादिके श्वण् प्रत्यये सकारलोपे च।

| | | | | |
|---|---|---|---|---|
| लिट् | विवेश | विविशतुः | विविशुः | प्र. |
| | विवेशिथ | विविशथुः | विविश | म. |
| | विवेश | विविशिव | विविशिम | उ. |
| लुट् | वेष्टा | वेष्टारौ | वेष्टारः | प्र. |
| | वेष्टासि | वेष्टास्थः | वेष्टास्थ | म. |
| | वेष्टास्मि | वेष्टास्वः | वेष्टास्मः | उ. |
| लृट् | वेक्ष्यति | वेक्ष्यतः | वेक्ष्यन्ति | प्र. |
| | वेक्ष्यसि | वेक्ष्यथः | वेक्ष्यथ | म. |
| | वेक्ष्यामि | वेक्ष्यावः | वेक्ष्यामः | उ. |
| लोट् | विशतु-तात् | विशताम् | विशन्तु | प्र. |
| | विश-तात् | विशतम् | विशत | म. |
| | विशानि | विशाव | विशाम | उ. |
| लङ् | अविशत् | अविशताम् | अविशन् | प्र. |
| | अविशः | अविशतम् | अविशत | म. |
| | अविशम् | अविशाव | अविशाम | उ. |
| वि. लि. | विशेत् | विशेताम् | विशेयुः | प्र. |
| | विशेः | विशेतम् | विशेत | म. |
| | विशेयम् | विशेव | विशेम | उ. |
| आ. लि. | विश्यात् | विश्यास्ताम् | विश्यासुः | प्र. |
| | विश्याः | विश्यास्तम् | विश्यास्त | म. |
| | विश्यासम् | विश्यास्व | विश्यास्म | उ. |
| लुङ् | अविक्षत् | अविक्षताम् | अविक्षन् | प्र. |
| | अविक्षः | अविक्षतम् | अविक्षत | म. |
| | अविक्षम् | अविक्षाव | अविक्षाम | उ. |
| लृङ् | अवेक्ष्यत् | अवेक्ष्यताम् | अवेक्ष्यन् | प्र. |
| | अवेक्ष्यः | अवेक्ष्यतम् | अवेक्ष्यत | म. |
| | अवेक्ष्यम् | अवेक्ष्याव | अवेक्ष्याम | उ. |

**कर्मणि**—विश्यते। ९ अवेशि। **णिचि**—वेशयति-ते। **सनि**—विविक्षति। **यङि**—वेविश्यते। **यङ्लुकि**—वेविशीति-वेवेष्टि। **कृत्सु**—प्रविशन्-न्ती-ती, प्रवेक्ष्यन्-न्ती-ती, वेशयिष्यन्-न्ती-ती, निविशमानः, व्यतिविशमानः, वेशयमानः, व्यतिवेक्ष्यमानः, वेशयिष्यमाणः, विट्-ड्-विशौ विशः, विष्टम्[1]-ष्टः-ष्टवान्, वेशितम्-तः, वेष्टव्यम्, वेशनयीम्, वेश्यम्, विष्टः, वेष्टुम्, वेशनम्, विष्ट्वा, प्रविश्य, वेशः, वेश्म, वेशन्तः, देवविशा, विषयी-विशयी, प्रायोपवेशिका, कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, विटपः, विष्टपम् त्रिविष्टम्, विशालम्,[2] विश्वम्[3]।

१ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायाम् क्तप्रत्ययः
२ औणादिके कालच् प्रत्यये रूपमेवम्। विशन्ति तस्मिन् वहवोऽनेनेति विशालं = प्रथु। वस्तुतः 'वेः शालच्-' (५-२-२८) इति वे शालच् प्रत्ययेनैव सिद्धमिदम्।
३ औणादिके क्वन् प्रत्यये रूपम्। विशन्ति तस्मिन् सर्वम् इति विश्वम्।

**(१४२५) मृश—आमर्शने**। आमर्शनं स्पर्शः। (स्पर्श करना, छूना)। परा– सलाह देना, **वि**—विचार करना, मनन करना, **सम्**—स्पर्श करना। सकर्म.। अनिट्। परस्मै.।

१ मृशति। २ ममर्श। ३ म्रष्टा-मर्ष्टा। ४ म्रक्ष्यति-मर्क्ष्यति। **कर्मणि**—मृश्यते। **णिचि**—मर्शयति-ते। **सनि**—मिमृक्षति। **कृत्सु**—मर्शनीयम्, मर्शनम्, मर्शः, मर्शकः, मर्शी, म्रष्टा, मर्ष्टा, मृष्टः, मृष्टिः, म्रष्टुम्, मर्ष्टुम्, म्रष्टव्यम्, मर्ष्टव्यम्, मृष्ट्वा, सम्मृश्य, मृश्यम्, मृशन्, मृश्यमानः, म्रश्यन्-माणः, मर्क्ष्यन्-माणः, परामर्शः, विमर्शः, अभिमर्षनम्।

**(१४२६) णुद-(नुद) —प्रेरणे** (प्रेरणा करना)। सकर्म.। अनिट्। परस्मै.। नुदति। सर्वं परस्मैपदि 'नुदति' (१२८२) वत्। इह पुनः पाठे कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः।

**(१४२७) षद्लृ—विशरणगत्यावसादनेषु**। (चलना, शक्तिहीन होना, जाना, खिन्न होना)। विशरणे अकर्म.। सेट्। परस्मै. सीदति। सर्वं भौवादिकं 'सीदति' वत्। दह पुनः पाठे प्रयोजनं तु शतरि स्त्रियां सीदती सीदन्ती इति नुम् विकल्पः।

**(१४२८) शद्लृ—शातने**। पूर्ववत्। स्वरे विशेषः।

**(१४२९) मिल—सङ्गमे**। (मिलना, संयुक्त होना, जुड़ना)। अकर्म.। सेट्। उभयपदी।

१ मिलति-ते। २ मिमेल-मिमिले। ३ मेलिता। **म.** मेलितासि-से। ४ मेलिष्यति-ते। ५ मिलतु-ताम्। ६ अमिलत्-त। ७ मिलेत्-त। ८ मिल्यात्-मिलिषीष्ट। ९ अमेलीत्। अमेलिष्ट। १० अमेलिष्यत्-त।

**भावे**—मिल्यते। **णिचि**—मेलयति-ते। **सनि**—मिमिलिषते-मिमेलिषते। **यङि**—मेमिल्यते। **यङ्लुकि**—मेमिलीति-मेमेल्ति। **कृत्सु**—मेलितव्यम्, मेलनीयम्, मेल्यम्, मिलिता, मिलन्, मिलती-मिलन्ती, मिलमानः, मेलुतम्, मेलनम्, मिलित्वा-मेलित्वा, संमिल्य।

**(१४३०) मुच्लृ—मोक्षणे**। (मुक्त करना, छोड़ना, त्याग करना)। सकर्म.। अनिट्। उभय.।

१ **प्र.** मुञ्चति मुञ्चतः मुञ्चन्ति। **म.** मुञ्चसि मुञ्चथः मुञ्चथ। **उ.** मुञ्चामि मुञ्चावः मुञ्चामः। २ **प्र.** मुमोच मुमुचतुः मुमुचुः। **म.** मुमोचिथ मुमुचथुः मुमुच। **उ.** मुमोच मुमुचिव मुमुचिम। ३ **प्र.** मोक्ता मोक्तारौ मोक्तारः **म.** मोक्तासि मोक्तास्थः मोक्तास्थ। **उ.** मोक्तास्मि मोक्तास्वः मोक्तास्मः। ४ **प्र.** मोक्ष्यति मोक्ष्यतः मोक्ष्यन्ति। **म.** मोक्ष्यसि मोक्ष्यथः मोक्ष्यथ। **उ.** मोक्ष्यामि मोक्ष्यावः मोक्ष्यामः। ५ **प्र.** मुञ्चतु-मुञ्चतात् मुञ्चताम् मुञ्चन्तु। **म.** मुञ्च-मुञ्चतात् मुञ्चतम् मुञ्चत। **उ.** मुञ्चानि मुञ्चाव मुञ्चाम। ६ **प्र.** अमुञ्चत् अमुञ्चताम् अमुञ्चन्। **म.** अमुञ्चः अमुञ्चतम् अमुञ्चत। **उ.** अमुञ्चम् अमुञ्चाव अमुञ्चाम। ७ मुञ्चेत् मुञ्चेताम् मुञ्चेयुः। **म.** मुञ्चेः मुञ्चेतम् मुञ्चेत। **उ.** मुञ्चेयम् मुञ्चेव मुञ्चेम। ८ **प्र.** मुच्यात् मुच्यास्ताम् मुच्यासुः। **म.** मुच्याः मुच्यास्तम् मुच्यास्त। **उ.** मुच्यासम् मुच्यास्व मुच्यास्म। ९ **प्र.** अमुचत् अमुचताम् अमुचन्। **म.** अमुचः

**अमुचतम्** अमुचत। **उ.** अमुचम् अमुचाव: अमुचाम:। १० **प्र.** अमोक्ष्यत् अमोक्ष्यताम् अमोक्ष्यन्। **म.** अमोक्ष्य: अमोक्ष्यतम् अमोक्ष्यत। **उ.** अमोक्ष्यम् अमोक्ष्याव अमोक्ष्याम।

आत्मनेपदपक्षे—१ मुञ्चते। २ ममुचे। ३ मोक्ता। ४ मोक्ष्यते। ५ मुञ्चताम्। ६ अमुञ्चत। ७ मुञ्चेत। ८ मुक्षीष्ट। ९ अमुक्त। **म.** अमुक्था:। **उ.** अमुक्षि अमुञ्चवहि अमुञ्चमहि। १० अमोक्ष्यत।

**कर्मणी**—मुच्यते। **णिचि**—मोचयति-ते। **सनि**—मुमुक्षति अकर्मकस्य, मुमुक्षते, मोक्षते। **यङि**—मोमुच्यते। **यङ्लुकि**—मोमुचीति-मोमोक्ति। **कृत्सु**—मोक्तव्यम्, मोचनीयम्, मोक्यम्, अवश्यमोच्यम्, मुक्त:, मुञ्चन्,[1] मुञ्चती, मुञ्चन्ती, मुञ्चमान:, मोक्ष्यन्-मोक्ष्यमाण:, मोक्तुम्, मोचनम्, मुक्त्वा, उन्मुच्य, मोक्ष:, मुक्ति:, जलमुक्,[2] आमुञ्चति = धारयति। प्रतिमुञ्चति = प्रत्यर्पयति। विमुञ्चति। मोच:।

**(१४३१) लुप्लृ—छेदने।** (छेद करना, कतरना, चीरना, टुकड़े-टुकड़े करना, वि—लुप्त करना)। सकर्म.। अनिट्। उभयपदी। मुचादि:

१ लुम्पति-ते। २ परस्मैपदे—**प्र.** लुलोप लुलुपतु: लुलुपु:। **म.** लुलोपिथ लुलुपथु: लुलुप। **उ.** लुलोप लुलोपिव लुलुपिम। आत्म. **प्र.** लुलुपे लुलुपाते। **म.** लुलुपिषे। **उ.** लुलुपे लुलुपिवहे लुलुपिमहे। ३ **प्र.** लोप्ता। **म.** लोप्तासि-से। ४ लोप्स्यति-ते। ५ लुप्यात्-लुप्सीष्ट। अलुपत् अलुपताम् अलुपन्। आत्म. अलुप्त अलुप्साताम् अलुप्सत। अलोप्यत्-त।

**कर्मणि**—लुप्यते। **णिचि**—लोपयति-ते। ९. अलूलुपत्-त-अलुलोपत्त-त[3]। **सनि**—लुलुप्सति-ते। **यङि**—लोलुप्यते। **यङ्लुकि**—लोलोप्ति-लोलोपीति। **कृत्सु**—लोप्तव्यम्, लोपनीयम्, लोप्यम्, लुप्त:, लुम्पन्, लुम्पन्ती-लुम्पती, लुम्पमान:, लोप्स्यन्-लोप्स्यमान:, लोप्तुम्, लोपनम्, लुप्त्वा, विलुप्य, लोप:, लोप्त्रम्।

**(१४३२) विद्लृ—लाभे।** (प्राप्त करना)। सकर्म.। अनिट्। व्याघ्रमूत्यादिमते सेट्। कोऽयं धातु:। उभय.। मुचादि:।

१ विन्दति-त। २ विवेद-विविदे। ३ वेत्ता-वेदिता। ४ वेत्स्यति-ते। वेदिष्यते-ते। विन्दतु-विन्दताम्। ६ अविन्दत्-त। ७ विन्देत्-त। ८ विद्यात्-वित्सीष्ट-वेदिषीष्ट। ९ अविदत्-अवित्त, अविदिताम्-अवित्साताम्-अवेदिषाताम्-अवेदिषत। अविदन्-अवित्सत। १० अवेदिष्यत्-त अवेदिष्ट।

**कर्मणि**—विद्यते। **णिचि**—वेदयति-ते। **सनि**—विविदिषति-ते। विवेदिषति-ते। **यङि**—वेविद्यते। **यङ्लुकि**—वेवेत्ति। **कृत्सु**—वेत्तव्यम्-वेदितव्यम्, वेदनीयम्, वेद्यम्,

१ शतरि 'तुदादिभ्य:–' (३-१-७७) इति शप्रत्यये 'शे मुचादीनाम्' (७-१-५९) इति नुमि, च मुञ्चन् इति रूपम्। एवमेव शानजन्तेऽपि मुञ्चान इत्यत्र प्रक्रिया बोध्या।

२ जल मुञ्चतीत्यर्थे 'क्विप् च' (३-२-७६) इति कर्मणि उपपदे क्विप्। कर्मण्यण् अत्र न भवति।

३ 'काव्यादीनां वेति वक्तव्यम्' इति उपधाह्रस्वविकल्प:।

वित्तम्[१] = धनम्, वित्तः = पुरुषः, अन्यत्र विन्नः, विन्दन्-न्ती-ती, विन्दमानः, वेत्तुम्-वेदितुम्, वेदनम्, वित्त्वा-विदित्वा-वेदित्वा, संविद्य, विन्दः,[२] गोविन्दः,[३] कुविन्दः, अरविन्दम्, परिवेत्ता, वेदना[४], परिवृत्तिः,[५] ब्राह्मणवेदं[६] (भोजयति), यावद्वेदं[७] (भोजयति) चोरवेदं[८] (निहन्त्यसौ)।

**(१४३३) लिप—उपदेहे**। उपदेहो लेपनम्। (लीपना, पोतना, विलेपन करना)। सकर्म.। अनिट्। उभयपदी मुचादिः।

१ लिम्पति-ते। २ लिलेप-लिलिपे। ३ लेप्तासि-से। ६ अलिम्पत-त। ८ लिप्यात्। ९. अलिपत-अलिपत-अलिप्त।

**कर्मणि**—१ लिप्यते। ९ अलेपि। **णिचि**—लेपयति-ते। अलीलिपत्-त। इत्यादि 'लुम्पति' (१४३१) वत्। **कृत्सु**—लेपनीयम्, लेपनम्, लेपः, लेपकः, लेप्ता, लिप्तः, लिप्तिः, लेप्तव्यम्, लिप्ता, संलिप्य, लेप्यम्, लिम्पन्, लिम्पमानः, लिप्यमानः, लेप्स्यन्, लेप्स्यमानः, अव = गर्वे। अक.। अवलिम्पति। अवलेपः, अनु = चन्दनादिविमर्दने। अनुलिम्पति। अनुलेपः

**(१४३४) षिच्—क्षरणे**। (सींचना, छींटा देना)। सकर्म.। अनिट्। उभयपदी मुचादिः।

| | | | | |
|---|---|---|---|---|
| लट् | सिञ्चति | सिञ्चतः | सिञ्चन्ति | प्र. |
| | सिञ्चसि | सिञ्चथः | सिञ्चथ | म. |
| | सिञ्चामि | सिञ्चावः | सिञ्चामः | उ. |
| लिट् | सिषेच | सिषिचतुः | सिसिचुः | प्र. |
| | सिषेचिथ | सिषिचथुः | सिषिच | म. |
| | सिषेच | सिषिचिव | सिषिचिम | उ. |
| लुट् | सेक्ता | सेक्तारौ | सेक्तारः | प्र. |
| | सेक्तासि | सेक्तास्थः | सेक्तास्थ | म. |
| | सेक्तास्मि | सेक्तास्वः | सेक्तास्म | उ. |

१ 'वित्तो भोगप्रत्यययोः' (८-२-६८) इति निष्ठान्तस्य निपातः।

२ 'अनुपसर्गाल्लिम्पविन्द–' (३-१-१३८) इति शप्रत्यये मुचादित्वात् 'शे मुचादीनाम्' (७-१-५९) इति नुमि, शपि, पररूपे च।

३ गवादिषु विन्देः सत्तायाम् (वा. ३-१-१३८) इति शः। गां विन्दतीति गोविन्दः।

४ ण्यन्तात्। 'घट्टिवन्दिविदिभ्यश्च' (३-३-१०७) इति युचि।

५ 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७४) इति क्तिच्। 'परिवृत्तिस्तु तज्जायान्' इत्यमरः।

६ 'कर्मणि दृशिविदोः साकल्ये' (३-४-२९) इति साकल्यविशिष्टे कर्मण्युपपदे णमुल्। यं यं ब्राह्मणं = ब्राह्मणत्वेन जानाति लभते वा तं भोजयतीत्यर्थः।

७ 'यावति विन्दजीवोः' (३-४-३०) इति णमुल् प्रत्ययः। यावत् लभते तावद् भुक्त इत्यर्थः।

८ 'कर्मणि दृशिविदोः–' (३-४-२०) इति णमुल्। चोरवेदम् = यान् चोरभूतान् लभते विचारयति वेत्ति वा तान् सर्वानपि हन्तीत्यर्थः। 'चोरवेदं निहन्त्यसौ–' इति प्रक्रिया सर्वस्वे।

| | | | | |
|---|---|---|---|---|
| लृट् | सेक्ष्यति | सेक्ष्यतः | सेक्ष्यन्ति | प्र. |
| | सेक्ष्यसि | सेक्ष्यथः | सेक्ष्यथ | म. |
| | सेक्ष्यामि | सेक्ष्यावः | सेक्ष्यामः | उ. |
| लोट् | सिञ्चतु-तात् | सिञ्चताम् | सिञ्चन्तु | प्र. |
| | सिञ्च-तात् | सिञ्चतम् | सिञ्चत | म. |
| | सिञ्चानि | सिञ्चाव | सिञ्चाम | उ. |
| लङ् | असिञ्चत् | असिञ्चताम् | असिञ्चन् | प्र. |
| | असिञ्चः | असिञ्चतम् | असिञ्चत | म. |
| | असिञ्चम् | असिञ्चाव | असिञ्चाम | उ. |
| वि. लि. | सिञ्चेत् | सिञ्चेताम् | सिञ्चेयुः | प्र. |
| | सिञ्चेः | सिञ्चेतम् | सिञ्चेत | म. |
| | सिञ्चेयम् | सिञ्चेव | सिञ्चेम | उ. |
| आ. लि. | सिच्यात् | सिच्यास्ताम् | सिच्यासुः | प्र. |
| | सिच्याः | सिच्यास्तम् | सिच्यास्त | म. |
| | सिच्यासम् | सिच्यास्व | सिच्यास्म | उ. |
| लुङ् | असिचत् | असिचताम् | असिचन् | प्र. |
| | असिचः | असिचतम् | असिचत | म. |
| | असिचम् | असिचाव | असिचाम | उ. |
| लृङ् | असेक्ष्यत् | असेक्ष्यताम् | असेक्ष्यन् | प्र. |
| | असेक्ष्यः | असेक्ष्यतम् | असेक्ष्यत | म. |
| | असेक्ष्यम् | असेक्ष्याव | असेक्ष्याम | उ. |

**आत्मनेपदपक्षे**—१ सिञ्चते। २ सिषिचे। ३ सेक्ता। ४ सेक्ष्यते। ५ सिञ्चताम्। ६ असिञ्चत। ७ सिञ्चेत। ८ सिक्षीष्ट। ९ असिचत। १० असेक्ष्यत।

**कर्मणि**—सिच्यते। **णिचि**—सेचयति-ते। ९ असीषिचत्-त। **सनि**—सिसिक्षति[१]। **यङि**—सेसिच्यते[२]। **यङ्लुकि**—सेषिचीति-सेषेक्ति। **कृत्सु**—सेक्तव्यम्, सेचनीयम्, सेच्यम्, सिक्तः, सिञ्चन्, सिञ्चन्ती, सिचती, सिञ्चमानः, सेचनम्, सिक्त्वा, निषिच्य, सेक्रम्, अभिषिञ्चति, अभिषेकः, निषिञ्चति, निषेकः, उत्सिञ्चति, उत्सिषिचे, उत्सेको गर्वः।

**(१४३५) कृती—छेदने**। (कतरना, काटना)। सकर्म.। सेट्। परस्मै.। मुचादिः।

| | | | | |
|---|---|---|---|---|
| लट्. | कृन्तति | कृन्ततः | कृन्तन्ति | प्र. |
| | कृन्तसि | कृन्तथः | कृन्तथ | म. |
| | कृन्तामि | कृन्तावः | कृन्तामः | उ. |

१ 'स्तौतिण्योरेवेति नियमान्न षत्वम्।
२ 'सिचो 'यङि' इति न षत्वम्।

| | | | | |
|---|---|---|---|---|
| लिट् | चकर्त | चकृततुः | चकृतुः | प्र. |
| | चकर्तिथ | चकृतथुः | चकृत | म. |
| | चकर्त | चकृतिव | चकृतिम | उ. |
| लुट् | कर्तिता | कर्तितारौ | कर्तितारः | प्र. |
| | कर्तितासि | कर्तितास्थः | कर्तितास्थ | म. |
| | कर्तितास्मि | कर्तितास्वः | कर्तितास्मः | उ. |
| लृट् | कर्तिष्यति | कर्तिष्यतः | कर्तिष्यन्ति | प्र. |
| | कर्तिष्यसि | कर्तिष्यतः | करिष्यन्ति | म. |
| | कर्तिष्यामि | कर्तिष्यावः | कर्तिष्यामः | उ. |
| | कर्त्स्यति | कर्त्स्यतः | कर्त्स्यन्ति इत्यादि | |
| लोट् | कृन्ततु-कृन्ततात् | कृन्तताम् | कृन्तन्तु | प्र. |
| | कृन्त-तात् | कृन्ततम् | कृन्तत | म. |
| | कृन्तानि | कृन्ताव | कृन्ताम | उ. |
| लङ् | अकृन्तत् | अकृन्तताम् | अकृन्तन् | प्र. |
| | अकृन्तः | अकृन्तम् | अकृन्तत | म. |
| | अकृन्तम् | अकृन्ताव | अकृन्ताम | उ. |
| वि. लि. | कृन्तेत् | कृन्तेताम् | कृन्तेयुः | प्र. |
| | कृन्तेः | कृन्तेतम् | कृन्तेत | म. |
| | कृन्तेयम् | कृन्तेव | कृन्तेम | उ. |
| आ. लि. | कृत्यात् | कृत्यास्ताम् | कृत्यासुः | प्र. |
| | कृत्याः | कृत्यास्तम् | कृत्यास्त | म. |
| | कृत्यासम् | कृत्यास्व | कृत्यास्म | उ. |
| लुङ् | अकर्तीत् | अकर्तिष्टाम् | अकर्तिषुः | प्र. |
| | अकर्तीः | अकर्तिष्टम् | अकर्तिष्ट | म. |
| | अकर्तिषम् | अकर्तिष्व | अकर्तिष्म | उ. |
| लृङ् | अकर्तिष्यत् | अकर्तिष्यताम् | अकर्तिष्यन् | प्र. |
| | अकर्तिष्यः | अकर्तिष्यतम् | अकर्तिष्यत | म. |
| | अकत्तिष्यम् | अकर्तिष्याव | अकत्तिष्याम | उ. |
| | अकर्त्स्यत् | अकर्त्स्यताम् | अकर्त्स्यन् इत्यादि। | |

**कर्मणि**—कृत्यते। **णिचि**—कर्तयति-ते। **सनि**—चिकर्तिषति-चिकृत्सति। **यङि**—चरीकृत्यते। **यङ्लुकि**—चरीकर्ति-चरीकृतीति। **कृत्सु**—कर्तकः-र्तिका, कर्तिता-त्री, कर्तयिता-त्री, कृन्तन्[१]-न्ती-ती, कर्तयन्-न्ती, कर्तिष्यन्-कर्त्स्यन्-न्ती-ती, कर्तयिष्यन्-न्ती-ती, व्यतिकृन्तमानः[२], कर्तयमानः, व्यतिकर्तिष्यमाण-व्यतिकर्त्स्यमानः, कर्तयिष्यमाणः,

१ 'शे मुचादीनाम्' (७-१-५९) इति नुम्।
२ 'कर्तरि कर्मव्यतिहारे' (१-३-१४) इति शानच्।

काष्टकृत्-कृतौ-कृतः, कृत्तम्[१], त्तः, कर्तितः, कृतः[२], विकर्तनः,[३] कर्तः, कर्तितव्यम्, कर्तयितव्यम्, कर्तनीयम्, कृत्यम्,[४] कर्त्यम्, कृत्यमानः, कर्त्यमानः, कर्तितुम्, कर्तयितुम्, कृतिः, कर्तना, कर्तनम्, कर्तित्वा, कर्तयित्वा, विकृत्य, विकर्त्य ।

( १४३६ ) **खिद—परिघाते**। (दुःख देना, सताना)। सकर्म.। अनिट्। परस्मै.। मुचादिः।

| | | | | |
|---|---|---|---|---|
| लट् | खिन्दति | खिन्दतः | खिन्दन्ति | प्र. |
| | खिन्दसि | खिन्दथः | खिन्दथ | म. |
| | खिन्दामि | खिन्दावः | खिन्दामः | उ. |
| लिट् | चिखेद | चिखिदतुः | चिखिदुः | प्र. |
| | चिखेदिथ | चिखिदथुः | चिखिद | म. |
| | चिखेद | चिखिदिव | चिखिदिम | उ. |
| लुट् | खेता | खेतारौ | खेतारः | प्र. |
| | खेतासि | खेतास्थः | खेतास्थ | म. |
| | खेतास्मि | खेतास्वः | खेतास्मः | उ. |
| लृट् | खेत्स्यति | खेत्स्यतः | खेत्स्यन्ति | प्र. |
| | खेत्स्यसि | खेत्स्यथः | खेत्स्यथ | म. |
| | खेत्स्यामि | खेत्स्यावः | खेत्स्यामः | उ. |
| लोट् | खिन्दतु-खिन्दतात् | खिन्दताम् | खिन्दन्तु | प्र. |
| | खिन्द-खिन्दतात् | खिन्दतम् | खिन्दत | म. |
| | खिन्दानि | खिन्दाव | खिन्दाम | उ. |
| लङ् | अखिन्दत् | अखिन्दताम् | अखिन्दन् | प्र. |
| | अखिन्दः | अखिन्दतम् | अखिन्दत | म. |
| | अखिन्दम् | अखिन्दाव | अखिन्दाम | उ. |
| वि. लि. | खिन्देत् | खिन्देताम् | खिन्देयुः | प्र. |
| | खिन्देः | खिन्देतम् | खिन्देत | म. |
| | खिन्देयम् | खिन्देव | खिन्देम | उ. |
| आ. लि. | खिद्यात् | खिद्यास्ताम् | खिद्यासुः | प्र. |
| | खिद्याः | खिद्यास्तम् | खिद्यास्त | म. |
| | खिद्यासम् | खिद्यास्व | खिद्यास्म | उ. |

१ 'श्वीदितो निष्ठायाम्' (७-२-१४) इति इण्णिषेधः ।

२ 'इगुपध–' (३-१-१३५) इति कर्तरि कः प्रत्ययः ।

३ नन्द्यादिपाठात् 'नन्दिग्रहि–' (३-१-१३४) इति कर्तरि ल्युः । विशेषेण कर्तयति भक्तानां रोगादिकमिति विकर्तनः = सूर्यः ।

४ 'ऋगुपधाच्चाक्लृपि–' (३-१-११०) इति क्यप् ।

| | | | | |
|---|---|---|---|---|
| लुङ् | अखैत्सीत् | अखैत्ताम् | अखैत्सुः | प्र. |
| | अखैत्सीः | अखैत्तम् | अखैत्त | म. |
| | अखैत्सम् | अखैत्स्व | अखैत्स्म | उ. |
| लृङ् | अखेत्स्यत् | अखेत्स्यताम् | अखेत्स्यन् | प्र. |
| | अखेत्स्यः | अखेत्स्यतम् | अखेत्स्यत | म. |
| | अखेत्स्यम् | अखेत्स्याव | अखेत्स्याम | उ. |

**कर्मणि**—खिद्यते। **णिचि**—खेदयति। **सनि**—चिखित्सति। **यङि**—चेखिद्यते। **यङ्लुकि**—चेखिदीति-चेखेत्ति। **कृत्सु**—खेतव्यम्, खेदनीयम्, खेद्यम्, खिन्नः, खिन्दन्, खिन्दन्ती, खिन्दती, खेतुम्, खेदनम्, खित्वा, परिखिद्य।

**( १४३७ ) पिश—अवयवे**। (टुकड़े-टुकड़े करना, चीरना, पीसना)। सकर्म.। सेट्। परस्मै.। मुचादिः।

१ पिशति। २ **प्र.** पिपेश पिपिशतुः पिपिशुः। **म.** पिपेशिथ पिपिशथुः पिपिश। **उ.** पिपेश पिपिशिव पिपिशिम। ३ पेशिता। ४ पेशिष्यति। ५ पिशतु। ६ अपिशत्। ७ पिशेत्। ८ पिश्यात्। ९ **प्र.** अपेशीत् अपेशिष्टाम् अपेशिषुः। **म.** अपेशीः अपेशिष्टम् अपेशिष्ट। **उ.** अपेशिषम् अपेशिष्व अपेशिष्म।

**कृत्सु**—पेशकः-शिका, पिशित्वा-पेशित्वा, पिशितम्, पेशी, पिशुनः, पिशङ्गः, पिशङ्गी, पिंशन्[1]-ती।

इति तुदादयः ॥ ६ ॥



१ शतरि तुदादित्वात् शप्रत्यये, 'शे मुचादीनाम्' (७-१-५९) इति नुमि रूपमेवम्।

# अथ रुधादयः (७)

(१४३८) **रुधिर—आवरणे**। (रोकना, घेर लेना, घेरना, **अभिसम्**—प्रतिरोध करना, मना करना, **अव**—सावधान रहना, चतुरता से रहना। **उप**—घेरना, **प्रति**—रोकना। **सन्नि**—बन्द करना। द्विकर्म.। अनिट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | रुणद्धि[१] | रुन्धः[२] | रुन्धन्ति | प्र. |
| | रुणत्सि | रुन्धः | रुन्ध | म. |
| | रुणध्मि[३] | रुन्ध्वः | रुन्ध्मः | उ. |
| लिट् | रुरोध | रुरुधतुः | रुरुधुः | प्र. |
| | रुरोधिथ | रुरुधथुः | रुरुध | म. |
| | रुरोध | रुरुधिव | रुरुधिम | उ. |
| लुट् | रोद्धा | रोद्धारौ | रोद्धारः | प्र. |
| | रोद्धासि | रोद्धास्थः | रोद्धास्थ | म. |
| | रोद्धास्मि | रोद्धास्वः | रोद्धास्मः | उ. |
| लृट् | रोत्स्यति | रोत्स्यतः | रोत्स्यन्ति | प्र. |
| | रोत्स्यसि | रोत्स्यथः | रोत्स्यथ | म. |
| | रोत्स्यामि | रोत्स्यावः | रोत्स्यामः | उ. |
| लोट् | रुणद्धु-रुन्धात् | रुन्धाम् | रुन्धन्तु | प्र. |
| | रुन्धि[४]-रुन्धात् | रुन्धम् | रुन्ध | म. |
| | रुणधानि | रुणधाव | रुणधाम | उ. |
| लङ् | अरुणत्-द् | अरुन्धाम् | अरुन्धन् | प्र. |
| | अरुणः[५]-त्-द् | अरुन्धम् | अरुन्ध | म. |
| | अरुणधम् | अरुन्ध्व | अरुन्ध्म | उ. |
| वि. लि. | रुन्ध्यात् | रुन्ध्याताम् | रुन्ध्युः | प्र. |
| | रुन्ध्याः | रुन्ध्यातम् | रुन्ध्यात | म. |
| | रुन्ध्याम् | रुन्ध्याव | रुन्ध्याम | उ. |
| आ. लि. | रुध्यात् | रुध्यास्ताम् | रुध्यासुः | प्र. |
| | रुध्याः | रुध्यास्तम् | रुध्यास्त | म. |
| | रुध्यासम् | रुध्यास्व | रुध्यास्म | उ. |

१ रुध् + लट् इति स्थिते 'रुधादिभ्यः श्नम्' इति श्नम् अनुबन्धलोपे, श्नमो मित्वात्सोन्त्याचः परो भवति। नित्यत्वात्स गुणं बाधते। रु न ध् ति इति जाते। झषस्तथोर्धोऽधः' इति तकारस्यय धत्वे रुनध् ति जाते धकारस्य जश्त्वेन दकारे, 'रषाभ्यां नो ण' इति नस्य णत्वे। 'रुणद्धि' इति रूपम्। अत्र 'रुनध' इत्यङ्गम्।

२ रुणध् + तस् इति स्थिते श्नसोरल्लोपः इत्यकारलोपे, णत्वस्यासिद्धत्वादनुस्वारे 'रुन्धः' इति।

३ 'रुणध्मि सवितुर्मार्गम्' भट्टिः' (६-३५)।

४ 'सेर्ह्यपिच्च' इति हेरपित्वात् 'श्नसो' रित्यलोपे 'हुझल्भ्योहेर्धिः' इति हेर्धित्वे 'रुन्धि' इति रूपम्।

५ हल्ड्यादिति सिचो लोपे जश्त्वे च विकल्पे 'दश्च' इति वा रुत्वे च रूपाणि।

| | | | | |
|---|---|---|---|---|
| लुङ् | अरुधत् | अरुधताम् | अरुधन् | प्र. |
| | अरुध: | अरुधतम् | अरुधत | म. |
| | अरुधम् | अरुधाव | अरुधाम | उ. |
| पक्षे— | अरौत्सीत् | अरौद्धाम् | अरौत्सु: | प्र. |
| | अरौत्सी: | अरौद्धम् | अरौद्ध | म. |
| | अरौत्सम् | अरौत्स्व | अरौत्स्म | उ. |
| लृङ् | अरोत्स्यत् | अरोत्स्यताम् | अरोत्स्यन् | प्र. |
| | अरोत्स्य: | अरोत्स्यतम् | अरोत्सत | म. |
| | अरोत्स्यम् | अरोत्स्याव | अरोत्स्याम | उ. |
| | | आत्मनेपदपक्षे | | |
| लट् | रुन्धे | रुन्धाते | रुन्धते[1] | प्र. |
| | रुन्त्से | रुन्धाथे | रुन्द्ध्वे | म. |
| | रुन्धे | रुन्ध्वहे | रुन्ध्महे | उ. |
| लिट् | रुरुधे | रुरुधाते | रुरुधिरे | प्र. |
| | रुरुधिषे | रुरुधाथे | रुरुधिध्वे | म. |
| | रुरुधे | रुरुधिवहे | रुरुधिमहे | उ. |
| लुट् | रोद्धा | रोद्धारौ | रोद्धार: | प्र. |
| | रोद्धासे | रोद्धासाथे | रोद्धाध्वे | म. |
| | रोद्धाहे | रोद्धास्वहे | रोद्धास्महे | उ. |
| लृट् | रोत्स्यते | रोत्स्येते | रोत्स्यन्ते | प्र. |
| | रोत्स्यसे | रोत्स्येथे | रोत्स्यध्वे | म. |
| | रोत्स्ये | रोत्स्यावहे | रोत्स्यामहे | उ. |
| लोट् | रुन्द्धाम् | रुन्धाताम् | रुन्धताम् | प्र. |
| | रुन्त्स्व | रुन्धाथाम् | रुन्दध्वम् | म. |
| | रुणधै | रुणधावहै | रुणधामहै | उ. |
| लङ् | अरुन्ध | अरुद्धाताम् | अरुन्धत | प्र. |
| | अरुन्धा: | अरुन्धाथाम् | अरुन्ध्वम् | म. |
| | अरुन्धि | अरुन्ध्वहि | अरुन्ध्महि | उ. |
| वि. लि. | रुन्धीत | रुन्धीयाताम् | रुन्धीरन् | प्र. |
| | रुन्धीथा: | रुन्धीयाथाम् | रुन्धीध्वम् | म. |
| | रुन्धीय | रुन्धीवहि | रुन्धीमहि | उ. |
| आ. लि. | रुत्सीष्ट | रुत्सीयास्ताम् | रुत्सीरन् | प्र. |
| | रुत्सीष्ठा: | रुत्सीयास्थाम् | रुत्सीध्वम् | म. |
| | रुत्सीय | रुत्सीवहि | रुत्सीमहि | उ. |
| लुङ् | अरुद्ध | अरुत्साताम् | अरुत्सत | प्र. |
| | अरुद्धा: | अरुत्साथाम् | अरुद्ध्वम् | म. |
| | अरुत्सि | अरुत्स्वहि | अरुत्स्महि | उ. |

१ 'आत्मनेपदेष्वनत:' इति झस्य अत् इत्यादेशे रूपम्।

| | | | | |
|---|---|---|---|---|
| लृङ् | अरोत्स्यत | अरोत्स्येताम् | अरोत्स्यन्त | प्र. |
| | अरोत्स्यथाः | अरोत्स्येथाम् | अरोत्स्यध्वम् | म. |
| | अरोत्स्ये | अरोत्स्यावहि | अरोत्स्यामहि | उ. |

**कर्मणि**—रुध्यते। **णिचि**—रोधयति। ९ अरूरुधत्। **सनि**—रुरुत्सति[१]-रुरुत्सते। **यङि**—रोरुध्यते। **यङ्लुकि**—रोरुधीति-रोरोद्धि। **कृत्सु**—रोधकः-धिका, रोद्धा-रोद् ध्री, रोधयिता-त्री, रोद्धव्यम्, रोधनीयम्, रोध्यम्, रुद्धः, रुन्धन्, रुन्धती, रुन्धानः, रोत्स्यन्, रोत्स्यती-रोत्स्यन्ती, रोद्धुम्, रोधनम्, अङ्गरोधी[२], उपरोधी, प्रतिरोधी,[३] अनुरोधी[४], वज्रे[५] उपरुध्य-वज्रोपरोधम्, रोधनः,[६] मार्गरुत्[७]-द्-रुधौ-रुधः, विरोधी[८]। उपरुणद्धि, विरुणद्धि, अनुरुणद्धि = उपकरोति अनुगृह्णाति वा।

**(१४३९) भिदिर्**—विदारणे। (चीरना, तोड़ना)। सकर्म.। अनिट्। उभयपदी।

परस्मैपदे—१ प्र. भिनत्ति भिन्तः भिन्दन्ति। म. भिनत्सि भिन्थः भिन्थ। उ. भिनद्मि भिन्द्वः भिन्द्मः। २ प्र. बिभेद बिभिदतुः बिभिदुः। म. बिभेदिथ बिभिदथुः बिभिद। उ. बिभेद बिभिदिव बिभिदिम। ३ प्र. भेत्ता भेत्तारौ भेत्तारः। म. भेत्तासि भेत्तास्थः भेत्तास्थ। उ. भेत्तास्मि भेत्तास्वः भेत्तास्मः। ४ प्र. भेत्स्यति भेत्सयतः भेत्स्यन्ति। म. भेत्स्यसि भेत्स्यथः भेत्स्यथ। उ. भेत्स्यामि भेत्स्यावः भेत्स्यामः। ५ प्र. भिनत्तु-भिन्तात् भिन्ताम् भिन्दन्तु। म. भिन्दि-भिन्दतात् भिन्तम् भिन्त। उ. भिनदानि भिनदाव भिनदाम। ६ प्र. अभिनत् अभिन्ताम् अभिन्दन्। म. अभिनः-अभिनत् अभिन्तम् अभिन्त। उ. अभिनदम् अभिन्दव अभिन्दम। ७ भिन्द्यात् भिन्द्याताम् भिन्द्युः। म. भिन्द्याः भिन्द्यातम् भिन्द्यात। उ. भिन्द्याम् भिन्द्याव भिन्द्याम। ८ प्र. भिद्यात् भिद्यास्ताम् भिद्यासुः। म. भिद्याः भिद्यास्तम् भिद्यास्त। उ. भिद्यासम् भिद्यास्व भिद्यास्म। ९ प्र. अभिदत् अभिदताम् अभिदन्। म. अभिदः अभिदतम् अभिदत। उ. अभिदम् अभिदाव अभिदाम। पक्षे—अभैत्सीत् अभैत्ताम् अभैत्सुः। इत्यादि। १० प्र. अभेत्स्यत् अभेत्स्यताम् अभेत्स्यन्। अभेत्स्यः अभेत्स्यतम् अभेत्स्यत। अभेत्स्यम् अभेत्स्याव अभेत्स्याम।

**आत्मनेपदपक्षे**—१ प्र. भिन्ते भिन्दाते भिन्दते। म. भिन्दसे भिन्दाथे भिन्द्ध्वे। उ. भिन्दे भिन्द्वहे भिन्द्महे। २ प्र. बिभिदे बिभिदाते बिभिदिरे। म. बिभिदिषे बिभिदाथे

१ 'हलन्ताच्च' इति कित्वान्न गुणः।

२ अङ्गानि रुणद्धीति अङ्गरोधी। 'ग्रह्यादिषु' (३-१-१३४) इति कर्मण्यणोपवादो णिनिप्रत्ययः। एवम् उपरुणद्धीति उपरोधी इत्यत्रापि ग्रह्यादित्वादेव णिनिः।

३ 'भविष्यति सप्तम्यादयः' (३-३-३) इत्यत्रापि गणे पाठात् भविष्यत् काले, औणादिको णिनिरत्र।

४ 'सम्पृचानुरुध–' (३-२-१४२) इत्यादिना ताच्छीलिको घिनुण् प्रत्ययः।

५ 'सप्तम्यां चोपपीडरुधकर्षः' (३-४-४९) इति 'सप्तम्यन्ते तृतीयान्ते चोपपदे उपसर्गादस्मात् णमुल्। 'तृतीया प्रभृतीनि–' (२-२-२१) इति समासविकल्पः।

६ नन्द्यादिषु पाठपरिकल्पनादत्र कर्तरि ल्युप्रत्ययः।

७ मार्गं रुणद्धीति मार्गरुध् 'क्विप् च' (३-२-७६) इति कर्मण्युपपदे क्विप्।

८ विशेषेण रुणद्धीति विरोधी 'सुप्यजातौ–' (३-२-७८) इति ताच्छील्ये णिनिः।

विभिदिध्वे। उ. विभिदे विभिदिवहे विभिदिमहे। ३ प्र. भेत्ता भेत्तारौ भेत्तारः। म. भेत्तासे भेतासाथे भेत्ताध्वे। उ. भेत्ताहे भेत्तास्वहे भेत्तास्महे। ४ प्र. भेत्स्यते भेत्स्येते भेत्स्यन्ते। म. भेत्स्यसे भेत्स्येथे भेत्स्यध्वे। उ. भेत्स्ये भेत्स्यावहे भेत्स्यामहे। ५ प्र. भिन्ताम् भिन्दाताम् भिन्दताम्। म. भिन्त्स्व भिन्दाथाम् भिन्दध्वम्। उ. भिनदै भिनदावहै भिनदामहै। ६ प्र. अभिन्त अभिन्दाताम् अभिन्दत। म. अभिन्त्थाः अभिन्दाथाम् अभिन्द्ध्वम्। उ. अभिन्दि अभिन्द्वहि अभिन्द्महि। ७ प्र. भिन्दीत भिन्दीयाताम् भिन्दीरन्। म. भिन्दीथाः भिन्दीयाथाम् भिन्दीध्वम्। उ. भिन्दीय भिन्दीवहि भिन्दीमहि। ८ प्र. भित्सीष्ट भित्सीयास्ताम् भित्सीरन्। म. भित्सीष्ठाः भित्सीयास्थाम् भित्सीध्वम्। उ. भित्सीय भित्सीवहि भित्सीमहि। ९ प्र. अभित्त अभित्साताम् अभित्सत। म. अभित्थाः अभित्साथाम् अभिद्ध्वम्-अभद्ध्वम्। उ. अभित्सि अभित्स्वहि अभित्स्महि। १० प्र. अभेत्स्यत अभेत्स्येताम् अभेत्स्यन्ते। म. अभेत्स्यथाः अभेत्स्येथाम् अभेत्स्यध्वम्। उ. अभेत्स्ये अभेत्स्यावहि अभेत्स्यामहि।

**कर्मणि**—भिद्यते। **णिचि**—भेदयति-ते। **सनि**—बिभित्सति-बिभित्सते। **यङि**—बेभिद्यते। **यङ्लुकि**—बेभिदीति-बेभेत्ति। **कृत्सु**—भेत्तव्यम्, भेदनीयम्, भेद्यम्, भित्तम्,[1] भिन्नम्, भिन्दन्, भिन्दती-भिन्दन्ती, भिन्दानः, भेत्तुम्, भित्त्वा, विभिद्य, भिदेलिमानि[2] = काष्ठानि, भिद्यो[3] = नदः, भिदुरम्, भिदा, भिदिरम् = वज्रम्, भेदः, विभेदः प्रकाशः, संभेदः = संश्लेषः। भेदकः- दिका, भेत्ता-भेत्री, भेदयिता-त्री, भेत्स्यन्-न्ती, भेदयिष्यन्- न्ती-ती, भेत्स्यमानः, भेदयिष्यमाणः, गोत्रभिद्[4] काष्ठभिद्, उद्भित्, प्रभित्-प्रभिदौ-प्रभिदः, भित्तम् (शकलम्), भित्तः, भिन्नवान्, भेदितम्-तः, उद्भिदः,[5] कर्णभेदी[6], भिन्दुरम्[7]।

**(१४४०) छिदिर्—द्वैधी करणे**। (छिन्न-भिन्न करना)। **आ**—बलपूर्वक टुकड़े करना, **उत्**—हिंसा करना, कतरना, **वि**—अलग-अलग करना या होना। सकर्म.। अनिट्। उभय.। छिनति-छिनते इत्यादि। भिनति (१४३९) वत्।

**कृत्सु**—छिदिरम्, छिदा, शीर्षच्छेद्यः, छिन्नम्[8]-छिन्नः, छिन्नवान्, छेदितः, छेदः, छिदः,[9] छिदुरः,[10] छेत्तव्यम्, छेदयितव्यम्, छेदनीयम्, छेद्यम्, छिदेलिमः,[11] (जीर्णरज्जुः)

१ भित्तं शकलम्। भिन्नमन्यत्।
२ 'केलिमर उपसंख्यानम्' (वा. ३-१-९६) इत्यनेन केलिमर प्रत्ययः।
३ भिनत्ति कूलमित्यर्थेऽनदेऽभिधेये कर्तरि 'भिद्योद्ध्यौ नदे' (३-१-११५) इति क्यप् निपात्यते।
४ गोत्र भिनत्तीति गोत्रभित् इन्द्रः। 'सत्सूद्विषद्रुहदुह्युजविदभिद–' (३-२-६१) इत्यादिना कर्मण्युपपदे उपसर्गे उपपदेऽपि क्विप् प्रत्ययः।
५ 'इगुपध–' (३-१-१३५) इत्यादिना कर्तरि कप्रत्ययः कित्वान्न गुणः।
६ कर्णं भिनत्तीति कर्णभेदी रुक्षध्वनिः पिशुनश्च। ताच्छील्ये णिनि प्रत्यये रूपमेवम्।
७ 'विदिभिदिच्छिदेः कुरच्' (३-१-१६२) इति ताच्छीलिकः कुरच्प्रत्ययः।
८ 'रदाभ्यां निष्टातो नः पूर्वस्य च दः' (८-२-४२) इति निष्ठानत्वम्।
९ 'इगुपधज्ञा–' (३-१-१३५) इति कर्तरि कः।
१० 'विदिभिदिच्छिदेः कुरच्' (३-२-१६२) इति ताच्छीलिकः कुरच् प्रत्ययः। प्रत्ययस्य कित्वान्न गुणः।
११ 'केलिमर उपसंख्यानम्' (वा. ३-१-९६) इति केलिमर प्रत्ययः। प्रत्ययस्य कित्वान्न गुणः

छेद्यम्, छिद्यमानः, छेद्यमानः, छेत्तुम्, छेदयितुम्, विच्छित्तिः,[१] छिदा, छेदना, छेदनम्, छित्वा, छेदयित्वा, प्रच्छिद्य, छेदकः[२]-दिका, छेत्ता-त्री, छेदयिता-त्री, छिन्दन्[३], छेत्स्यन्[४]-न्ती-ती, छेदयिष्यन्-न्ती-ती, छिन्दानः, छेदयमानः, छेत्स्यमानः।

(**१४४१**) **रिचिर्—विरेचने**। विरेचनम् = पृथग् भावः। निःसारणमिति क्षीरस्वामी। (अलग होना, मलशुद्धि होना गर्भपात कराना, झाड़ा होना)। **अति**—अतिक्रमण करना। **वि**—मल शुद्धि होना। सकर्म.। अनिट्। उभय.।

१ **प्र.** रिणक्ति रिक्तः रिञ्चन्ति। **म.** रिणक्षि रिङ्क्थः रिङ्क्थ। **उ.** रिणच्मि रिञ्च्वः रिञ्च्मः। २ **प्र.** रिरेच रिरिचतुः रिरिचुः। **म.** रिरेचिथ रिरिचथुः रिरिच। **उ.** रिरेच रिरिचिव रिरिचिम। ३ **प्र.** रेक्ता रेक्तारौ रेक्तारः। ४ रेक्ष्यति। ५ **प्र.** रिणक्तु-रिङ्क्तात् रिङ्क्ताम् रिञ्चन्तु। **म.** रिङ्ग्धि-रिङ्क्तात् रिङ्क्तम् रिङ्क्त। **उ.** रिणचानि रिणचाव रिणचाम। ६ **प्र.** अरिणक्-ग् अरिङ्क्ताम् अरिञ्चन्। **म.** अरिणक्-ग् अरिङ्क्तम् अरिङ्क्त। **उ.** अरिणचम् अरिञ्च्व अरिञ्च्म। ७ **प्र.** रिञ्च्यात् रिञ्च्याताम् रिञ्च्युः **म.** रिञ्च्याः रिञ्च्यातम् रिञ्च्यात। **उ.** रिञ्च्याम् रिञ्च्याव रिञ्च्याम। ८ **प्र.** रिच्यात् रिच्यास्ताम् रिच्यासुः। **म.** रिच्याः रिच्यास्तम् रिच्यास्त। **उ.** रिच्यासम् रिच्यास्व रिच्यास्म। ९ **प्र.** अरिचत् अरिचताम् अरिचन्। **म.** अरिचः अरिचतम् अरिचत। **उ.** अरिचम् अरिचाव अरिचाम। पक्षे— **प्र.** अरैक्षीत् अरैक्ताम् अरैक्षुः। **म.** अरैक्षीः अरैक्तम् अरैक्त। **उ.** अरैक्षम् अरैक्ष्व अरैक्ष्म। १० अरेक्ष्यत्।

**आत्मनेपदपक्षे**—१ रिङ्क्ते। २ रिरिचे। **म.** रिरिचिषे। **उ.** रिरिचिवहे। ३ **म.** रेक्तासे। ४ रेक्ष्यते। ५ रिङ्क्ताम्। **म.** रिङ्क्ष्व। **उ.** रिणचै। ६ अरिङ्क्त अरिञ्चाताम्। **म.** अरिङ्क्थाः। **उ.** अरिञ्चि अरिञ्च्वहि। ७ रिञ्चीत रिञ्चीयाताम्। ८ रिक्षीष्ट। ९ अरिक्त अरिक्षाताम् अरिक्षत। **म.** अरिक्थाः। **उ.** अरिक्षि अरिक्ष्वहि। १० अरेक्ष्यत।

**कर्मणि**—रिच्यते। **णिचि**—रेचयति। ९ अरीचित्-त। **सनि**—रिरिक्षति-ते। **यङि**—रेरिच्यते। **यङ्लुकि**—रेरेक्ति-रेरिचीति। **कृत्सु**—रेक्तव्यम्, रेचनीयम्, रेच्यम्, रिक्तः,[५] रिञ्चन्,[६] रिञ्चती, रिञ्चानः, रेक्तुम्, रेचनम्, रिक्तवा, विरिच्य, रेकः, रिक्थम्,[७] रेचकः-चिका, रेक्ता-रेक्ती, रेचयिता-त्री, रेक्ष्यन्-न्ती-ती, रिञ्चानः, रेचयमानः, रेक्ष्यमाणः, रेचयिष्यमाणः, रेकः-अतिरेकः-व्यतिरेकः-उद्रेकः, विरेचनम्,

१ 'छिदा द्वैधी-भावे' (गणसूत्रम् ३-३-१०४) इति वचनात् अङ्। अन्यत्र विच्छित्तिः इति क्तिन्नपि भवति।
२ 'पुगन्तलघूपदस्य च' (७-३-८६) इत्युपधायाः गुणः।
३ 'रुदादिभ्यः–' (३-१-७८) इति श्नम् विकरणप्रत्ययः। 'श्नसोरल्लोपः' (६-४-१११) इत्यकारलोपः। एवं छिन्दानः इत्यत्रापि ज्ञेयम्।
४ इडभावः, लघूपधगुणश्च। 'खरि च' इति दकारस्य चर्त्वेन तकारः।
५ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां कर्तरि क्तप्रत्ययः। रिक्तः = निर्धनः।
६ शतरि विकरणप्रत्यये श्नमि, 'श्नसोरल्लोपः' (६-४-१११) इत्यकार लोपे, नकारस्य अनुस्वारे परसवर्णेचेति रूपम्।
७ 'पातृतुदिवचिरिचि–' इति थक् प्रत्ययः। कित्वान्न गुणः। रिच्यते तदिति रिक्थम् = गृहमूलधनम्। गोत्रजद्रव्यमिति केचित्।

विरिञ्चः[1]-विरिञ्चिः-विरिचिनः, रेक्णः[2]।

**( १४४२ ) विचिर्—पृथग् भावे।** (अलग करना या होना, टूटना, छूटना)। सकर्म.। अनिट्। उभय.। विनक्ति-विङ्क्ते। इत्यादि रिणक्ति (१४४१) वत्।

**कृत्सु**—वेचकः-चिका, वेत्ता-त्री, वेचयिता-त्री, क्तप्रत्यये विक्तम्[3]-क्तः, घञि-विवेकः,[4] विवेकी[5] विविचः[6]। शेषं सर्वाणि रूपाणि रिञ्चति वत्।

**( १४४३ ) क्षुदिर्—सम्पेषणे।** (कूटना, पीसना, चूर्ण बनाना)। सकर्म.। अनिट्। उभय.।

१ **प्र.** क्षुणत्ति, क्षुन्तः क्षुन्दन्ति। **म.** क्षुणत्सि क्षुन्थः। **उ.** क्षुणद्मि क्षुन्द्वः। २ **प्र.** चुक्षोद चक्षुदतुः चुक्षुदुः। **म.** चुक्षोदिथ चुक्षुदथुः। **उ.** चुक्षुदिव। ३ क्षोत्ता। ४ क्षोत्स्यति। ५ **प्र.** क्षुणतु-क्षुन्तात् क्षुन्ताम्। **म.** क्षुन्धि। **उ.** क्षुणदानि। ६ **प्र.** अक्षुणत् अक्षुन्ताम् अक्षुन्त। **उ.** अक्षुणदम् अक्षुन्द्व। ७ क्षुन्द्यात्। ८ क्षुद्यात् क्षुद्यास्ताम्। ९ **प्र.** अक्षुदत् अक्षुदताम्। पक्षे-अक्षौत्सीत् अक्षौत्ताम् अक्षौत्सुः। १० अक्षोत्स्यत्।

**आत्मनेपदपक्षे**—१ **प्र.** क्षुन्ते क्षुन्दाते। **म.** क्षुन्त्से क्षुन्दाथे क्षुन्ध्वे। **उ.** क्षुन्दे क्षुन्द्वहे। २ **प्र.** चुक्षुदे चुक्षुदाते चुक्षुदिरे। **म.** चुक्षुदिषे। **उ.** चुक्षुदिवहे। ३ क्षोत्ता। ४ क्षोत्स्यते। ५ क्षुन्ताम् क्षुन्दाताम्। **म.** क्षुन्त्स्व। **उ.** क्षुणदै। ६ **प्र.** अक्षुन्त अक्षुन्दाताम् अक्षुन्दत। **म.** अक्षुन्थाः। **उ.** अक्षुन्दि। ७ क्षुन्दीत क्षुन्दीयाताम् क्षुन्दीरन्। ८ क्षुत्सीष्ट क्षुत्सीयास्ताम्। ९ अक्षुत्त अक्षुत्साताम्। १० अक्षोत्स्यत।

**कर्मणि**—क्षुद्यते। **णिचि**—क्षोदयति। **सनि**—चुक्षुत्सति-ते। **यङि**—चोक्षुद्यते। **यङ्लुकि**—चोक्षोत्ति-चोक्षुदीति। **कृत्सु**—क्षोतव्यम्, क्षोदनीयम्, क्षोद्यम्, क्षुण्णः, क्षुदन्, क्षुन्दन्ती-ती, क्षुन्दानः, क्षोत्तुम्, क्षोदनम्, क्षुत्वा, संक्षुद्य, क्षुदः, क्षोदीयान्, क्षोदिष्टः, क्षोदिमा, क्षौद्रम्।

**( १४४४ ) युजिर्—योगे।** (जुड़ना, मिलाप करना, एकत्र करना)। **अनु**—पूछना, प्रश्न करना। **अभि**—बोलना, दोष लगाना। **उप**—उपकार करना, उपयोग करना। **नि**—आज्ञा करना, हुक्म करना। **प्र**—योग्य होना, दिखाना, **वि**—अलग करना, पृथक् करना। **विनि**—व्यय करना, नियमित करना, गूंथना, एकत्र करना। **विप्र**—अलग-अलग करना। **सम्**—युक्त करना। मिलाप करना। **समा**—बहुत विचार करना। अकर्म.। अनिट्। उभय.।

१ 'विरिञ्चः - विरिञ्चिः - विरिचिनः' एते पृषोदरादयः (६-३-१०९) इति माधवीयधातुवृत्तिः।

२ 'रिचेर्धने धिच्च' इति असुन्प्रत्ययः। धित्वात् कुत्वम्। रेक्णः = धनम्।

३ 'रम्या इति प्राप्तवती पताका रागं विविक्ता इति वर्धयन्ति'। (शिशु.व. ३-५३)।

४ निष्ठाया अनिट्त्वात् 'चजोः कु घिण्यतोः' (७-३-५२) इति कुत्वे।

५ 'संपृचानुरुध-विविच-' (३-२-१४२) इति चाच्छीलादिषु कर्तृषु घिनुण् प्रत्यये, कुत्वे च रूपमेव। विवेकी = युक्तायुक्तविशेषज्ञः।

६ 'किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्' (वा. ३-२-१७१) इति वचनेन भाषायां किप्रत्यये, एत्वाभ्यास-लोपयोश्चेति रूपम्।

१ प्र. युनक्ति युङ्क्तः युञ्जन्ति। म. युनक्षि। उ. युनज्मि। २ प्र. युयोज युयुजतुः युयुजुः। म. युयोजिथ। उ. युयुजिव। ३ योक्ता। ४ योक्ष्यति। ५ युनक्तु। म. युङ्धि। उ. युनजानि। ६ अयुनक् अयुङ्क्ताम् अयुञ्जन्। म. अयुनक्। उ. अयुनजम्। ७ युज्ज्यात् युज्ज्याताम्। ८ युज्यात् युज्यास्ताम्। ९ अयुजत् पक्षे- अयोक्षीत्। १० अयोक्ष्यत्।

**आत्मनेपदपक्षे**—१ प्र. युङ्क्ते युञ्जाते। म. युङ्क्षे। उ. युञ्जे। २ प्र. युयुजे युयुजाते युयुजिरे। म. युयुजिषे युयुजाथे युयुजिध्वे। उ. युयुञ्जे युयुजिवहे युयुजिमहे। ३ योक्ता। ४ योक्ष्यते। ५ प्र. युङ्क्ताम् युञ्जाताम् युञ्जताम्। म. युङ्क्ष्व युञ्जाथाम् युञ्जध्वम्। उ. युनजे युनजावहै युनजामहै। ६. प्र. अयुङ्क्त अयुञ्जाताम् अयुञ्जत। म. अयुञ्क्थाः अयुञ्जाथाम् अयुञ्जध्वम्-ढ्वम्। उ. अयुक्षि अयुक्ष्वहि अयुक्ष्महि। ७ युञ्जीत युञ्जीयाताम्। ८ प्र. युक्षीष्ट युक्षीयास्ताम् युक्षीरन्। म. युक्षीष्ठाः युक्षीयास्थाम् युक्षीध्वम्। उ. युक्षीय युक्षीवहि युक्षीमहि। ९ प्र. अयुक्त अयुक्षाताम् अयुक्षत। म. अयुक्थाः अयुक्षाथाम् अयुग्ध्वम् अयुगड्ढ्वम्। उ. अयुक्षि अयुक्ष्वहि अयुक्ष्महि। १० अयोक्ष्यत अयोक्ष्येताम्।

**कर्मणि**—युज्यते। **णिचि**—योजयति-ते। **सनि**—युयुक्षति-ते। **यङि**—योयुज्यते। **यङ्लुकि**—योयुजीति-योयोक्ति। **कृत्सु**—योक्तव्यम्, योजनीयम्, युग्यः[1] = गौः, प्रयोज्यः,[2] नियोज्यः, अवश्ययोज्यः, योग्यः,[3] यौगिकः, युक्तः, युञ्जन्-न्ती-ती, युञ्जानः, योक्तुम्, योजनम्, युक्त्वा, प्रयुज्य, योक्त्रम् = युगबन्धनम्, योगी, प्रयोगः, युगम्। योजकः-जिका, योक्ता-योक्त्री, योजयिता। प्रयुङ्क्ते[4]। उपड्युक्ते, नियुङ्क्ते, उद्युङ्क्ते, अनुयुङ्क्ते।

**( १४४५ ) उच्छृदिर—दीप्तिदेवनयोः।** (चमकना, प्रकाशित होना, क्रीडा करना, खेलना)। दीप्तावकर्म.। देवने सकर्म.। सेट्। उभय.।

१ छृणत्ति-छृन्तः। छृन्ते। २ चच्छर्द चच्छृदतुः। चच्छृदे। ३ छर्दिता। ४ सेसिचि-छर्दिष्यति-ते-छत्सर्यति-ते। ८ छृद्यात्-छर्तिषीष्ट-छृत्सीष्ट। ९ अच्छृदत्-अच्छर्दीत्। अच्छर्दि अछृत। १० अच्छर्दिष्यत्-अच्छत्सर्यत्-त। छृत्वा-छर्दित्वा। इत्यादि छिनत्ति (१४४०) वत्।

**( १४४६ ) उतृदिर—हिंसाऽनादरयोः।** (हिंसा करना, अपमान करना)। सक.। सेट्। उभय.। तृणति 'उछृदिर' धातुवत्।

**( १४४७ ) कृती—वेष्टने।** (घेर लेना, वेष्टति करना)। सकर्म.। सेट्। परस्मै.। ईदित्। कृणत्ति कृन्तः कृन्तति 'मृणत्ति' वत्।

**( १४४८ ) ञिइन्धी—दीप्तौ।** (प्रकाशित होना)। अकर्म.। सेट्। आत्मने.।

---

१ 'युग्यं च पत्रे' इति कर्मणि करणे वा क्यपि कुत्वं निपात्यते।
२ 'प्रयोज्यनियोज्यौ शक्यार्थे', इति ण्यति कुत्वाभावो निपात्यते।
३ योगायप्रभवति इत्यर्थे 'योगाद्यच्च' इति यद्व्रत्रौ।
४ 'स्वाराद्यन्तोपसर्गादिति वक्तव्यम्' इत्यात्मनेपदम्।

१ प्र. इन्धे इन्धाते इन्धते। म. इन्त्से इन्धाथे इन्ध्वे। उ. इन्धे इन्ध्वहे इन्ध्महे। २ इन्धाञ्चक्रे-इन्धाम्बभूव-इन्धामास। ३ इन्धिता। ४ इन्धिष्यते। ५ प्र. इन्धाम् इन्धाताम् इन्धताम्। म. इन्त्स्व इन्धाथाम् इन्ध्वम्। उ. इनधे। ६ प्र. ऐन्ध ऐन्धाताम् ऐन्धत। म. ऐन्धाः ऐन्धाथाम् ऐन्ध्वम्। उ. ऐन्धि ऐन्ध्वहि। ७ इन्धेत इन्धेयाताम्। ८ इन्धिषीष्ट इन्धिषीयास्ताम्। म. इन्धिषीष्ठाः इन्धिषीध्वम्। उ. ऐन्धिष्ट ऐन्धिषाताम्। १० ऐन्धिष्यत।

**भावे**—इध्यते। **णिचि**—इन्धयति-ते। ९ ऐन्दिधत्-त। **सनि**—इन्दिधिषते। **कृत्सु**—इन्धितव्यम्, इन्धनीयम्, इन्ध्यम्, इद्धः, इन्धानः, इन्धितुम्, इन्धनम्, इन्धित्वा, समिद्धय, एधः, समित्। इन्धकः-न्धित्वा, इन्धिता-त्री, समिध्-समिधौ-समिधः, अग्नीध्, भ्राष्ट्रमिन्धः, अग्निमिन्धः, इद्धवान्, इन्धिताम्।

**( १४४९ ) खिद—दैन्य**। (खिन्न होना, दुःखी होना)। अकर्म. अनिट्। आत्मने.।

१ खिन्ते। म. खिन्त्से। उ. खिन्दे खिन्द्वहे। २ प्र. चिखिदे। म. चिखिदिषे। उ. चिखिदिवहे। ३ खेत्ता। ४ खेत्स्यते। ५ खिन्ताम् खिन्दाताम्। म. खिन्त्स्व। उ. खिनदै। ६ अखिन्त। म. अखिन्थाः। उ. अखिन्दि। ७ खिन्दीत। ८ खित्सीष्ट खित्सीयास्ताम्। ९ अखित्त अखित्साताम्। १० अखेत्स्यत।

**भावे**—खिद्यते। **णिचि**—खेदयति। **सनि**—चिखित्सते। **यङि**—चेखिद्यते। **यङ्लुकि**—चेखिदीति-चेखेत्ति। **कृत्सु**—खेतव्यम्, खेदनीयम्, खेद्यम्, खिन्नः, खिन्दानः, खेत्तुम्, खेदनम्, खित्वा, संखिद्य, खेदः।

**( १४५० ) विद—विचारणे**। (मनन करना, विचार करना)। सकर्म.। अनिट्। आत्मने.। विन्ते विदाते। इत्यादि 'खिनत्ति' (१४४९) वत्।

**कृत्सु**—वित्तः[१]-विन्नः, वेदकः-दिका, वेत्ता-त्री, वेदयिता-त्री, शानचि विन्दानः,[२] वेदिः[३]।

**( १४५१ ) शिष्लृ—विशेषणे**। विशेषणं गुणान्तरोत्पादनम्। (विशेषता बताना, भिन्नता दिखाना, गुण दोष दिखाना)। सकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | शिनष्टि | शिष्टः | शिषन्ति | प्र. |
| | शिनक्षि | शिष्ठः | शिष्ठ | म. |
| | शिनष्मि | शिष्वः | शिष्मः | उ. |
| लिट् | शिशेष | शिशिषतुः | शिशषुः | प्र. |
| | शिशेषिथ | शिशिषथुः | शिशिष | म. |
| | शिशेष | शिशिषिव | शिशिषिम | उ. |

१ 'नुदविदोन्दत्र–' (८-२-५६) इति निष्ठातकारस्य नकारादेशो विकल्पेन भवति। तेन रूपद्वयम्। तथा च भाष्यम्– (७-२-५८) 'वेत्तेस्तु विदितो निष्ठा विद्यतेः विन्न इष्यते।'

२ 'रुदादिभ्यः श्नम्' (३-१-७८) इति विकरणप्रत्यये श्नमि, 'श्नसोरल्लोपः' (६-४-१११) अल्लोपे च रूपमेवम्।

३ औणादिके (१-४७) इ प्रत्यये रूपम्। वेत्ति विदन्ति विन्ते वा वेदिः = त्रेतारन्यभिष्ठानम्।

| | | | | |
|---|---|---|---|---|
| लुट् | शेष्टा | शेष्टारौ | शेष्टारः | प्र. |
| | शेष्टासि | शेष्टास्थः | शेष्टास्थ | म. |
| | शेष्टास्मि | शेष्टास्वः | शेष्टास्मः | उ. |
| लृट् | शेक्ष्यति | शेक्ष्यतः | शेक्ष्यन्ति | प्र. |
| | शेक्ष्यसि | शेक्ष्यथः | शेक्ष्यथ | म. |
| | शेक्ष्यामि | शेक्ष्यावः | शेक्ष्यामः | उ. |
| लोट् | शिनष्टु-शिष्टात् | शिष्टाम् | शिषन्तु | प्र. |
| | शिण्ढि-ण्ढितात् | शिष्टम् | शिष्ट | म. |
| | शिनषाणि | शिनषाव | शिनषाम | उ. |
| लङ् | अशिनट्-ड् | अशिष्टाम् | अशिषन् | प्र. |
| | अशिनट्-ड् | अशिष्टम् | अशिष्ट | म. |
| | अशिनषम् | अशिष्व | अशिष्म | उ. |
| वि. लि. | शिष्यात् | शिष्याताम् | शिष्युः | प्र. |
| | शिष्याः | शिष्यातम् | शिष्यात | म. |
| | शिष्याम् | शिष्याव | शिष्याम | उ. |
| आ. लि. | शिष्यात् | शिष्यास्ताम् | शिष्यासुः | प्र. |
| | शिष्याः | शिष्यास्तम् | शिष्यास्त | म. |
| | शिष्यासम् | शिष्यास्व | शिष्यास्म | उ. |
| लुङ् | अशिषत् | अशिषताम् | अशिषन् | प्र. |
| | अशिषः | अशिषतम् | अशिषत | म. |
| | अशिषम् | अशिषाव | अशिषाम | उ. |
| लृङ् | अशेक्ष्यत् | अशेक्ष्यताम् | अशेक्ष्यन् | प्र. |
| | अशेक्ष्यः | अशेक्ष्यतम् | अशेक्ष्यत | म. |
| | अशेक्ष्यम् | अशेक्ष्याव | अशेक्ष्याम | उ. |

**कर्मणि**—शिष्यते। **णिचि**—शेषयति। ९ अशीषिषत्। **सनि**—शिशिक्षति। **यङि**—शेशिष्यते। **यङ्लुकि**—शेशीषीति-शेशेष्टि। **कृत्सु**—शेष्टव्यम्, शेषणीयम्, शेष्यम्, शिष्टः, शिषन्, शिषती, शेष्टुम्, शिष्णम्, शिष्ट्वा, विशिष्य, विशेषः[1] वैशेषिकः, शेषः, महाविशिष्टः[2]।

(१४५२) **पिष्लृ—सञ्चूर्णने हिंसायाञ्च**। (चूर्ण करना, पीसना, मारना)। सकर्म.। अनिट्। परस्मै.।

१ **प्र.** पिनष्टि पिष्टः पिषन्ति। **म.** पिनक्षि पिष्टः पिष्ट। **उ.** पिनष्मि पिष्वः पिष्मः। २ **प्र.** पिपेष पिपिषतुः पिपिषुः। **म.** पिपेषिथ। **उ.** पिपेष पिपिषिव। ३ पेष्टा। ४ पेक्ष्यति।

१ विशिष्यते इति विशेषः — कणादसंमतः पदार्थविशेषः। विशेष एव वैशेषिकः विनयादित्वात् (५-४-३४) स्वार्थे ठक् तस्य इकादेशः।

२ महत्या विशिष्टः महाविशिष्टः संज्ञा विशेषः। 'महदात्वे घासकरविशिष्टेषूपसंख्यानम्' (वा. ६-३-४६) इत्यात्वम्। पुंवद्भावश्च।

५ पिनष्टु। ६ अपिनट्-ड्। ७ पिष्यात् पिष्याताम्। ८ पिष्यात् पिष्यास्ताम्। ९ अपिषम्। १० अपेक्ष्यत्। सर्वं शिनष्टि (१४५३) वत्।

कृत्सु—पेष्टव्यम्, पेषणीयम्, पेष्यम्, पिष्यमाणः, पेक्ष्यमाणः, पेषः, पेष्टुम्, पिष्टिः, पेषणा, पेषणम्, पिष्ट्वा, विनिष्पिष्य, पिषः, पिष्टम्[1]-ष्टः, पिट्-पिषौ पिषः, पेक्ष्यम्;-न्ती-ती, (चौरस्य) पिषन्[2]-न्ती-ती, पेषकः-षिका, पेष्टा-पेष्ट्री, पेशयिता-त्री, शुष्कपेषम्[3]-चूर्णपेषम्, उरः प्रतिपेषम्,[4] उदपेषं[5] पिनष्टि। मूर्धपेषम्। पिनाकः,[6] पिष्याकम्।

(१४५३) **भञ्जो**—आमर्दने। (नष्ट करना)। सकर्म.। अनिट्। परस्मै.।

१ **प्र.** भनक्ति भङ्क्तः भञ्जन्ति। **म.** भनक्षि भङ्क्थः भङ्क्थ। **उ.** भनज्मि भञ्ज्वः भञ्ज्मः। २ **प्र.** बभञ्ज बभञ्जतु बभञ्जुः। **म.** बभञ्जिथ-बभङ्क्थ बभञ्जथुः बभञ्ज। **उ.** बभञ्ज बभञ्जिव बभञ्जिम। ३ भङ्क्ता। ४ भङ्क्ष्यति। ५ **प्र.** भनक्तु-भङ्क्तात् भङ्क्ताम् भञ्जन्तु। **म.** भङ्ग्धि भङ्क्तम् भङ्क्त। **उ.** भनजानि भनजाव भनजाम। ६ **प्र.** अभनक्-ग् अभङ्क्ताम् अभञ्जन्। **म.** अभनक्-ग् अभङ्क्तम् अभङ्क्त। **उ.** अभनजम् अभञ्ज्व अभञ्ज्म। ७ भञ्ज्यात्। ८ भज्यात् भज्यास्ताम् भज्यासुः **म.** भज्याः भज्यास्तम् भज्यास्त। **उ.** भज्यासम् भज्यास्व भज्यास्म। ९ **प्र.** अभाङ्क्षीत् अभाङ्क्ताम् अभाङ्क्षुः। **म.** अभाङ्क्षीः, अभाङ्क्तम् अभाङ्क्त। **उ.** अभाङ्क्षम् अभाङ्क्ष्व अभाङ्क्ष्म। १० अभङ्क्ष्यत्।

**कर्मणि**—भज्यते। ९ अभाजि अभञ्जि। **णिचि**—भञ्जयति। ९ अभञ्जत्। **सनि**—बिभङ्क्षति। **यङि**—बम्भज्यते। **यङ्लुकि**—बम्भञ्जीति-बम्भङ्क्ति। **कृत्सु**— भङ्क्तव्यम्, भञ्जनीयम्, भङ्ग्यम्, भग्नः, भञ्जन्, भञ्जती, भङ्क्तुम्, भञ्जनम्, प्रभञ्जनः, भक्त्वा-भङ्क्त्वा, विभज्य, भङ्गुरम्, भङ्गः।

(१४५४) **भुज**—**पालनाभ्यवहारयोः**। अभ्यवहारः = भोजनम्। (संरक्षण करना, पालन करना, खाना, भक्षण करना)। सकर्म.। अनिट्। पालने-परस्मै अन्यत्र आत्मने.।

१ भुनक्ति भुङ्क्तः भुञ्जन्ति। २ **प्र.** बुभोज बुभुजतुः। **म.** बुभोजिथ। **उ.** बुभुजिव। ३ भोक्ता। ४ भोक्ष्यति। ५ भुनक्तु। ६ अभुनक्-ग्। ७ भुञ्ज्यात्। ८ भुज्यात् भुज्यास्ताम्। ९ अभौक्षीत् अभौक्ताम् अभौक्षुः। १० अभोक्ष्यत्।

---

१ 'क्तिच् क्तौ च संज्ञायाम्' (३-३-१७४) इति संज्ञायां क्तप्रत्ययः। पिष्टः = सक्तुः।

२ 'जासिनि प्रहणनाटक्राथपिषां हिंसायाम्' (२-३-५६) इति कर्मणि षष्ठी। हिंसाभिन्नार्थे तु 'धानाः पिषन्' इत्यत्र न।

३ 'शुष्क चूर्णरूक्षेषु पिषः' (३-४-३५) इति ण्वुल्। 'कषादिषु यथाविध्यनुप्रयोगः' (३-४-४६) इति णमुलन्तधातोरेवानुप्रयोगः। एवं चूर्णपेषम्, रुक्षपेषम् इत्यत्रापि ज्ञेयम्।

४ 'स्वाङ्गे–' (३-४-५४) इत्यनुवर्तमाने 'परिक्लिश्यमाने च' (३-४-५५) इति द्वितीयान्तात् ण्वुल्। कृत्स्नमुरः पीडयन्तो युध्यन्ते इत्यर्थः।

५ 'स्नेहने पिषः' (३-४-३८) इति णमुल्। 'पेषंवासवाहनधिषु च' (६-३-५८) इति उदकशब्दस्योदादेशः। उदकेन पिनष्टीत्यर्थः।

६ 'पिनाकादयश्च' (३-३४) इति आकप्रत्यये, षकारस्य नकारः गुणभावश्च निपानात् युगागमः, षकारस्य णकारः गुणाभावश्च। अतः पिण्याकम् इत्यपि सिद्धम्। पिण्याकम् = तिलपिष्टकल्कः।

**पालनभिन्नेऽर्थे आत्मनेपदम्**—१ भुङ्क्ते भुञ्जाते भुञ्जते। म. भुङ्क्षे। उ. भुञ्जे भुञ्ज्वहे। २ प्र. बुभुजे। ३ भोक्तासे। ४ भोक्ष्यते। ५ प्र. भुङ्क्ताम् भुञ्जाताम्। म. भुङ्क्ष्व भुञ्जाथाम् भुङ्ग्ध्वम्। उ. भुनजै। ६ अभुङ्क्त। म. अभुङ्क्थाः। उ. अभुञ्जि। ७ भुञ्जीत। ८ भुक्षीष्ट। ९ अभुक्त अभुक्षाताम् अभुक्षत १० अभोक्ष्यत।

**कर्मणि**—भुज्यते। **णिचि**—भोजयति। **सनि**—बुभुक्षति-बुभुक्षते। **यङि**—बोभुज्यते। **यङ्लुकि**—बोभोक्ति-बोभुजीति। **कृत्सु**—भोक्तव्यम्, भोजनीयम्, भोज्यम्-भोग्यम्, भुक्तः, भुञ्जन्[१]-ती, भुञ्जानः,[२] भोक्तुम्, भोजनम्, भुक्त्वा, संभुज्य, भोगः, भुजः। भोजकः-जिका, भोक्ता-त्री, भोजयिता-त्री, भोजयन्-न्ती, भोक्ष्यन्-न्ती-ती, भोजयिष्यन्-न्ती-ती, भोजयमानः, बुभुक्षमाणः, भोक्ष्यमाणः, भोजयिष्यमाणः, हुतभुक्, हव्यभुक्, बलिभुक्[३]-बलिभुजौ-बलिभुजः, भुक्तवान्, प्रभुक्तः,[४] भोजितः, बुभुक्षितः, भोजः[५], विश्वभोजः[६], उष्णभोजी[७]-शीतभोजी, कलहभोजी, अश्राद्धभोजी,[८] भुज्यमानः, भोज्यमानः, उपभुज्य-उपभोज्य। अग्रेभोजं[९] भुक्त्वा, भुज्युः,[१०] भुजिष्यम्[११] भुजिष्या।

**( १४५५ ) तृह—हिंसायाम्**। (मार डालना, दुःख देना)। सक.। सेट्। परस्मै.।

१ प्र. तृणेढि तृण्ढः तृहन्ति। म. तृणेक्षि तृण्ढः तृण्ढ। उ. तृणेह्मि तृह्वः तृह्मः। २ प्र. ततर्ह ततृहतुः ततृहुः। म. ततर्हिथ ततृहथुः ततृह। उ. ततर्ह ततृहिव ततृहिम। ३ प्र. तर्हिता तर्हितारौ तर्हितारः। म. तर्हितासि तहितास्थः तर्हितास्थ। उ. तर्हितास्मि तर्हितास्व तर्हितास्म। ४ प्र. तर्हिष्यति तर्हिष्यतः तर्हिष्यन्ति। म. तर्हिष्यसि तर्हिष्यथः तहिष्यथ। उ. तार्हिष्यामि तर्हिष्यावः तर्हिष्यामः ५ प्र. तृणेढु तृण्ढात् तृण्ढाम् तृहन्तु। म. तृण्ढि-तृण्ढात् तृण्ढम् तृण्ढ। उ. तृणहानि तृणहाव तृणहाम। ६ प्र. अतृणेट्-ड् अतृण्ढाम् अतृंहन्। म. अतृणेट्-ड् अतृण्ढम्

१ शतरि शपो रुधादित्वेन श्नमि, 'श्नसोरल्लोपः' (६-४-१११) इति श्नमोऽकारस्य लोपे नकारस्य श्चुत्वेन ञकारे चेति रूपम्।

२ भुजोऽनवने (१-३-६६) इत्यनेन अवनभिन्नार्थे आत्मनेपदं शानच्। ण्यन्तेऽपि पालनार्थे शानज् ज्ञेयः। सन्नन्तेऽपि पालनार्थे 'पूर्ववत् सनः' (१-३-६२) इति शानज् भवतीति ज्ञेयम्।

३ कर्मणि उपपदे 'क्विप् च' (३-२-७६) इति कर्तरि क्विप्। बलिभुक् = वायसः।

४ 'आदिकर्मणि क्तः कर्तरि च' (३-४-७१) इति कर्तरि क्तः। प्रभुक्तो गोरसं कृष्णः प्रभुक्तोऽनेन गोरसः। इति प्रः सर्वस्वे। अस्य भक्षणार्थकत्वात् 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३-४-७६) इति अधिकरणेऽपि क्त प्रत्ययो बोध्यः।

५ इगुपधलक्षणं कप्रत्ययं बाधित्वा 'अज्विधिः सर्वधातुभ्यः षठ्यन्ते च पचादयः' (का. ३-१-१३४) इति वचनात् कर्तरि अच् प्रत्ययः।

६ विश्वं भुनक्ति इति विश्वभोजः। 'कर्मण्यण्' (३-२-१) इत्यण् प्रत्ययः।

७ 'सुप्यजातौ णिनिस्ताच्छील्ये' (३-२-७८) इति ताच्छील्ये णिनिः प्रत्ययः। एवं शीतभोजी कलहभोजी इत्यत्रापि बोध्यम्। कलहं भुनक्ति = पालयति इति कलहभोजी = नारदः।

८ 'व्रते' (३-२-८०) इति णिनिप्रत्ययः। सति भोजनेऽश्राद्धमेव भुङ्क्ते इत्यत्र व्रतं गम्यते।

९ 'विभाषाऽग्रेप्रथमपूर्वेषु' (३-४-२४) इति अग्रेप्रथमपूर्वशब्देषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ विकल्पेन भवतः।

१० 'भुजभृड्भ्याम्–' इति युक् प्रत्ययः। भुज्युः = गन्धर्वः।

११ 'रुचिभुजिभ्याम् किप्यन्' इति किप्यन् प्रत्ययः। भुजिष्यम् = भोग्यम्। भिजुष्या = दासी।

अतृण्ढ। उ. अतृणहम् अतृह्व अतृह्म। ७ प्र. तृह्यात् तृह्याताम् तृह्युः। म. तृह्याः तृह्यातम् तृह्यात। उ. तृह्याम् तृह्याव तृह्याम। ८ प्र. तृह्यात् तृह्यास्ताम् तृह्यासुः। म. तृह्याः तृह्यास्तम् तृह्यास्त। उ. तृह्यासम् तृह्यास्व तृह्यास्म। ९ प्र. अतर्हीत् अतर्हिष्टाम् अतर्हिषुः म. अतर्हीः अतर्हिष्टम् अतर्हिष्ट। उ. अतर्हिषम् अतर्हिष्व अतर्हिष्म। १० प्र. अतर्हिष्यत्। म. अतर्हिष्यः। उ. अतर्हिष्यम्।

**कर्मणि**—तृह्यते। **णिचि**—तर्हयति। ९ अतीतृहत्। **सनि**—तितर्हिषति। **यङि**—तरीतृह्यते। **यङ्लुकि**—तरीतर्ढि-तरीतृहीति। **कृत्सु**—तर्हितव्यम्, तर्हयितव्य्, तर्हणीयम्, तृह्यम्,[1] तर्ह्यम, तृह्यमाणः, तर्ह्यमाणः, तर्हः, तर्हितुम्, तर्हयितुम्, तृढिः[2], तर्हणा, तर्हणम्, तर्हित्वा,[3] तर्हयित्वा, प्रतृह्य, प्रतर्ह्य, तर्हकः-र्हिका, तर्हिता-त्री, तर्हयिता-त्री, तृहन्[4]-न्ती, व्यतितृहन्[5]-न्ती, तर्हयन्, तर्हिष्यन्-न्ती-ती, तर्हमाणः, तर्हयिष्यमाणः, तृहितम्-तः-तवान्, तृहः, तर्हः।

**( १४५६ ) हिसि—हिंसायाम्।** (मारना, दुःख देना)। सकर्म.। सेट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | हिनस्ति | हिंस्तः | हिंसन्ति | प्र. |
| | हिनस्ति | हिंस्थः | हिंस्थ | म. |
| | हिनस्मि | हिंस्वः | हिंस्मः | उ. |
| लिट् | जिहिंस | जिहिंसतुः | जिहिंसुः | प्र. |
| | जिहिंसिथ | जिहिंसथुः | जिहिंस | म. |
| | जिहिंस | जिहिंसिव | जिहिंसिम | उ. |
| लुट् | हिंसिता | हिंसितारौ | हिंसितारः | प्र. |
| | हिंसितासि | हिंसितास्थः | हिंसितास्थ | म. |
| | हिंसितास्मि | हिंसितास्वः | हिंसितास्मः | उ. |
| लृट् | हिंसिष्यति | हिंसिष्यतः | हिंसिष्यन्ति | प्र. |
| | हिंसिष्यसि | हिंसिष्यथः | हिंसिष्यथ | म. |
| | हिंसिष्यामि | हिंसिष्यावः | हिंसिष्यामः | उ. |
| लोट् | हिंनस्तु-हिंस्तात् | हिंस्ताम् | हिंसन्तु | प्र. |
| | हिन्धि-न्धि-तात् | हिंस्तम् | हिंस्त | म. |
| | हिनसानि | हिनसाव | हिंनसाम | उ. |
| लङ् | अहिनत्-द् | अहिंस्ताम् | अहिंसन् | प्र. |
| | अहिनत्-द् | अहिंस्तम् | अहिंस्त | म. |
| | अहिनसम् | अहिंस्व | अहिंस्म | उ. |

१ 'ऋदुपधाच्चाक्लृपि चृतेः' (३-१-११०) इति भावकर्मणोः क्यप्।

२ 'तितुत्र—' (७-२-९) इति इण्णिषेधे, ढत्वधत्वष्टुत्वढलोपः।

३ 'न क्त्वा सेट्' (१-२-१८) इति कित्वनिषेधाद् गुणः।

४ 'रुधादिभ्यः श्नम्' (३-१-७८) इति श्नम्, विकरणप्रत्ययः, तस्य मित्वात् अन्त्यादचः परो भवति। 'श्नसोरल्लोपः (६-४-१११) इति अल्लोपः। 'नश्चापदान्तस्य झलि' (८-३-२४) इति नकारस्यानुस्वारः।

५ 'न गतिहिंसार्थेभ्यः—' (१-३-१५) इति कर्मव्यतिहारे शानचो निषेधः।

| | | | | |
|---|---|---|---|---|
| वि. लि. | हिंस्यात् | हिंस्याताम् | हिंस्युः | प्र. |
| | हिंस्याः | हिंस्यातम् | हिंस्यात | म. |
| | हिंस्याम् | हिंस्याव | हिंस्याम | उ. |
| आ. लि. | हिंस्यात् | हिंस्यास्ताम् | हिंस्यासुः | प्र. |
| | हिंस्याः | हिंस्यास्तम् | हिंस्यास्त | म. |
| | हिंस्यासम् | हिंस्यास्व | हिंस्यास्म | उ. |
| लुङ् | अहिंसीत् | अहिंसिष्टाम् | अहिंसिसुः | प्र. |
| | अहिंसीः | अहिंसिष्टम् | अहिंसिष्ट | म. |
| | अहिंसिषम् | अहिंसिष्व | अहिंसिष्म | उ. |
| लृङ् | अहिंसिष्यत् | अहिंसिष्यताम् | अहिंसिष्यन् | प्र. |
| | अहिंसिष्यः | अहिंसिष्यतम् | अहिंसिष्यत | म. |
| | अहिंसिष्यम् | अहिंसिष्याव | अहिंसिष्याम | उ. |

**कर्मणि**—हिंस्यते। **णिचि**—हिंसयति-ते। ९. अजिहिंसत्-त। **सनि**—जिहिंसिषति। **यङि**—जेहिंस्यते। **यङ्लुकि**—जेहिंसीति-जेहिंस्ति। **कृत्सु**—हिंसितव्यम्, हिंसनीयम्, हिंस्यम्, हिंसितः, हिंसन्, हिंसती, हिंसितुम्, हिंसनम्, हिंसित्वा, प्रहिंस्य, हिंसकः,[1] हिंस्रः,[2] हिंसा,[3] हिंसः, सिंहः[4]।

**(१४५७) उन्दी—क्लेदने**। (आर्द होना, गीला होना)। सकर्म.। सेट्। परस्मै.।

१ **प्र.** उनत्ति उन्तः उन्दन्ति। **म.** उनत्सि। **उ.** उनद्मि। २ उन्दाञ्चकार। ३ उन्दिता। ४ उन्दिष्यति। ५ उनत्तु। **म.** उन्धि **उ.** उनदानि उनदाव। ६ औनद्-त् औन्ताम्। **म.** औनः-औनद्-त् औन्तम् औन्त। उ. औनदम् औद्व। ७ उन्द्यात् उन्द्याताम्। ८ उद्यात् उद्यास्ताम्। ९ औन्दीत् औन्दिष्टाम् १० औन्दिष्यत्।

**कर्मणि**—उद्यते। **णिचि**—उन्दयति-ते। **सनि**—उन्दिदीषति। ९. औन्दिदिषत्। **कृत्सु**—उन्दितव्यम्, उन्दनीयम्, उन्द्यम्, उत्तम्-उन्नम्, उन्दन्, उन्दती, उन्दितुम्, उन्दनम्, उन्दित्वा, समुद्य, ओदनः, उदकम् इन्दुः।

**(१४५८) अञ्जू—व्यक्ति म्रक्षणं कान्तिगतिषु**। (जोड़ना)। सकर्म.। वेट्। परस्मै.। व्यक्तिः = प्रकटता। म्रक्षणं = घृतादिसेकः (प्रकट करना सराहना, विख्यात करना, तेल मर्दन करना, चमकना, जाना)। **अभि**—अभ्यञ्जन् करना, तेल मर्दन करना, **वि**—स्पष्ट करना, उत्पन्न करना। **अधि**—मरना, संवारना। **आ**—तेल मलना। **नि**—तेल मलना, छिपना। **प्रति**—तेल मलना, संवारना, सजाना। **सम्**—तेल मलना, मान करना, मरना, एकत्र करना।

१ 'निन्दहिंस–' (३-२-१४६) इति ताच्छीलिको वुञ्। हिंसकः = क्रूरः।

२ 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (३-२-१६७) इति ताच्छीलिको र प्रत्ययः। 'नेड् वशि कृति' (७-२-८) इतीण्निषेदः।

३ 'गुरोश्च हलः' (३-२-१०३) इति स्त्रियामकारप्रत्ययः।

४ पचाद्यचि हिनस्तीति सिंहः। सिंहो वर्णविपर्यात् इत्युक्तेः पृषोदरादित्वात् (६-३-१०९) वर्णयोर्विपर्ययः।

| | | | | |
|---|---|---|---|---|
| लट् | अनक्ति | अङ्क्तः | अञ्जन्ति | प्र. |
| | अनक्षि | अङ्क्थः | अङक्थ | म. |
| | अनज्मि | अञ्ज्वः | अञ्ज्मः | उ. |
| लिट् | आनञ्ज | आनञ्जतुः | आनञ्जुः | प्र. |
| | आनञ्जिथ | आनञ्जथुः | आनञ्ज | म. |
| | आनञ्ज | आनञ्जिव | आनञ्जिम | उ. |
| लुट् | अङ्क्ता | अङ्क्तारौ | अङ्क्तारः | प्र. |
| | अङ्क्तासि | अङ्क्तास्थः | अङ्क्तास्थ | म. |
| | अङ्क्तास्मि | अङ्क्तास्वः | अङ्क्तास्मः | उ. |

**इट् पक्षे—प्र.** अञ्जिता अञ्जितारौ अञ्जितारः। **म.** अञ्जितासि अञ्जितास्थः अञ्जितास्थ। **उ.** अञ्जितास्मि-स्वः-स्मः।

| | | | | |
|---|---|---|---|---|
| लृट् | अञ्जिष्यति | अञ्जिष्यतः | अञ्जिष्यन्ति | प्र. |
| | अञ्जिष्यसि | अञ्जिष्यथः | अञ्जिष्यथ | म. |
| | अञ्जिष्यामि | अञ्जिष्यावः | अञ्जिष्यामः | उ. |

**इड्विकल्पे—प्र.** अङक्ष्यति। **म.** अङक्ष्यसि। **उ.** अङक्ष्यामि।

| | | | | |
|---|---|---|---|---|
| लोट् | अनक्तु-अङ्क्तात् | अङ्क्ताम् | अञ्जन्तु | प्र. |
| | अङ्ग्धि-अङ्क्तात् | अङ्क्तम् | अङ्क्त | म. |
| | अनजानि | अनजाव | अनजाम | उ. |
| लङ् | आनक् | आङ्क्ताम् | आञ्जन् | प्र. |
| | आनक्-ग् | आङ्क्तम् | आङ्क्त | म. |
| | आनजम् | आञ्ज्व | आञ्ज्म | उ. |
| वि. लि. | अञ्ज्यात् | अञ्ज्याताम् | अञ्ज्युः | प्र. |
| | अञ्ज्याः | अञ्ज्यातम् | अञ्ज्यात | म. |
| | अञ्ज्याम् | अञ्ज्याव | अञ्ज्याम | उ. |
| आ. लि. | अज्यात् | अज्यास्ताम् | अज्यासुः | प्र. |
| | अज्याः | अज्यास्तम् | अज्यास्त | म. |
| | अज्यासम् | अज्यास्व | अज्यास्म | उ. |
| लुङ् | आञ्जीत् | आञ्जिष्टाम् | आञ्जिषुः | प्र. |
| | आञ्जीः | आञ्जीष्टम् | आञ्जिष्ट | म. |
| | आञ्जिषम् | आञ्जिष्व | आञ्जिष्म | उ. |
| लृङ् | आञ्जिष्यत् | आञ्जिष्यताम् | आञ्जिष्यन् | प्र. |
| | आञ्जिष्यः | आञ्जिष्यतम् | आञ्जिष्यत | म. |
| | आञ्जिष्यम् | आञ्जिष्याव | आञ्जिष्याम | उ. |

**इड्विकल्पे प्र.** आङ्क्ष्यत्। **म.** आङ्क्ष्यः। **उ.** आङ्क्ष्यम्।

**कर्मणि**—अज्यते। **णिचि**—अञ्जयति। ९ आञ्जिजत्। १० आञ्जयिष्यत्। **सनि**—अञ्जिजिषति। ९ आञ्जिजिषीत्। १० आञ्जिजिषिष्यत्।

**कृत्सु**—व्यञ्जितव्यम्-अङ्क्तव्यम्, अञ्जयितव्यम्, व्यञ्जनीयम्, व्यङ्ग्यम्[१]-आज्यम्[२], व्यञ्जयम्, ईषदञ्जः-दुरञ्जः-स्वञ्जः, व्यज्यमानः,[३] अङ्गः, अञ्जः, व्यञ्जितुम्-व्यङ्क्तुम्, अञ्जयितुम्, व्यक्तिः, व्यञ्जा, अञ्जनम्, व्यञ्जना, अञ्जित्वा, अक्त्वा[४]-अङ्त्वा, व्यञ्जयित्वा, अभिव्यज्य, अञ्जलिः[५], व्यक्तम्-क्तः-क्तवान्, व्यञ्जितम्, व्यञ्जकः-ञ्जिका, व्यञ्जिता-त्री, अञ्जयिता-त्री, व्यङ्क्ता[६]-त्री, व्यञ्जन्[७]-न्ती, व्यञ्जयन्-न्ती, व्यञ्जिष्यन्-व्यङ्क्ष्यन्-न्ती-ती, व्यञ्जयमानः, व्यञ्जयिष्यमाणः। द्वयञ्जलिः, द्वयञ्जलम्,[८] व्यञ्जलम्।

**( १४५९ ) तुञ्चु—सङ्कोचने**। (सङ्कुचित होना, सङ्कोच होना)। सकर्म.। वेट्। परस्मै.।

१ तनक्ति तङ्क्तः तञ्चन्ति। २ **प्र.** ततञ्च। **म.** ततञ्चिथ-ततङ्क्थ। **उ.** ततञ्चिव-ततञ्च्व। ३ तञ्चिता-तङ्क्ता। ४ तञ्चिष्यति-तङ्क्षयति। ५ तनक्तु। **म.** तङ्ग्धि। **उ.** तनचानि। ६ अतनक् अतङ्क्ताम्। ७ तञ्च्यात् तञ्च्याताम्। ८ तच्यात् तच्यास्ताम्। ९ अतञ्चीत्-अताङ्क्षीत्।

**कर्मणि**—तच्यते। **कृत्सु**—तञ्चितव्यम्-तङ्क्तव्यम्, तञ्चयितव्यम्, तञ्चनीयम्, तङ्क्यम्, तञ्चयम्, तच्यमान, तञ्च्यमानः, आतङ्कः, तञ्चः, तञ्चितुम्-तङ्क्तुम्, तञ्चयितुम्, तञ्चा, तञ्चना, तञ्चनम्, तञ्चित्वा-तक्त्वा, तञ्चयित्वा, प्रतच्य, प्रतञ्च्य, तक्तम्-क्तः-क्तवान्, तञ्चितः, संतक्-संतग्-संतचौ-संतचः, तञ्चन्-ती, तञ्चयन्-न्ती, तञ्चिष्यन्-तङ्क्षन्-न्ती-ती, तञ्चयिष्यन्-न्ती-ती, तञ्चयमानः, तञ्चयिष्यमाणः, तञ्चकः-ञ्चिका, तञ्चिता-तङ्क्ता-त्री, तञ्चयिता-त्री,।

**( १४६० ) ओविजी—भयचलनयोः**। (डरना, डर से कम्पित होना, कांपना, आपद् ग्रस्त होना, चलना।) अकर्म.। सेट्। परस्मै.। प्रायेणायम् उत्पूर्वः।

१ **प्र.** विनक्ति विङ्क्तः विञ्जन्ति। **म.** विनक्षि विङ्क्थः विङ्क्थ। **उ.** विनज्मि विञ्ज्वः विञ्ज्मः। २ **प्र.** विवेज विविजतुः। **म.** विविजिथ विविजथुः। **उ.** विवेज विविजिव विविजिम। ३ विजिता। ४ विजिष्यति। ५ **प्र.** विनक्तु। विङ्क्ताम् विञ्जन्तु। **म.** विङ्ग्धि। विङ्क्तम्। **उ.** विनजानि। ६ **प्र.** अविनक्-ग् अविङ्क्ताम् अविञ्जन्। **म.** अविनक्-ग् अविङ्क्तम्। **उ.** अविजम् अविञ्ज्व। ७. विज्यात् विञ्ज्याताम्। ८ विज्यात् विज्यास्ताम्। ९ अविचीत् अविजिष्टाम्। १० अविजिष्यत्।

**भावे**—विज्यते। **णिचि**—वेजयति। **सनि**—विविजिषति। **यङि**—वेविज्यते। **यङ्लुकि**—वेविजीति-वेवेक्ति। **कृत्सु**—उद्वेजकः-जिका, उद्विजिका[९]-त्री, उद्वेजयिता-

१ 'चचोः कु घिण्ण्यतोः' (७-३-५२) इति कुत्वम्।
२ 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' (वा. ३-१-१०९) इति क्यपि रूपम्। उपधानकारलोपः।
३ 'अनिदिताम्—' (६-४-२४) इति नलोपः।
४ 'जान्तनशां विभाषा' (६-४-३२) इति वा उपदानकारलोपः।
५ औणादिके अलिच् प्रत्ययः।
६ 'स्वरतिपूति—' (७-२-४४) इति ऊदित्वाद् इड्विकल्पः।
७ 'रुदादिभ्यः' (३-१-७८) इति श्नम् प्रत्यये 'श्नलोपे' (६-४-२३) 'श्नसोरल्लोपः' (६-४-१११)।
८ द्वे अञ्जली परिमाणमस्येत्यत्र 'द्वित्रिभ्यामञ्जलेः' इति टज्वा।
९ तृचि, 'विज इट्' (१-२-२) इति इडादिप्रत्ययः, ङिद्वद्भावाद् गुणो न भवति। एवं तव्यतादिषु च ज्ञेयम्।

त्री, उद्वेजयन्-न्ती, उद्वेजयिष्यन्-न्ती-ती, उद्विजमानः, उद्विजिष्यमाणः, वेविज्यमानः, उद्विक्-ग्, उद्विजौ-उद्विजः, उद्विग्नम्[1]-नः-नवान्, उद्वेजितः, उद्वेगः, उद्वेगनः, विजितव्यम्, वेजयितव्यम्, वेजनीयम्, उद्वेजनीयम्, उद्वेग्यम्[2], उद्वेज्यम्, विज्यमानः, वेज्यमानः, ईषद्वेजः-दुर्वेजः-सुवेजः, उद्विजितुम्, उद्वेजयितुम्, वेगितम्[3], उद्वेक्तिः, उद्वेजना, उद्वेजनम्, विजित्वा,[4] वेजयित्वा, उद्वेज्य।

**(१४६१) वृजी—वर्जने**। (छोड़ना, वर्जित करना)। सकर्म.। सेट्। परस्मै.।

१ वृणक्ति वृङ्क्तः वृञ्जन्ति। **म.** वृणक्षि। **उ.** वृणज्मि वृञ्ज्वः वृञ्ज्मः। २ **प्र.** ववर्ज ववृजतुः ववृजुः। **म.** ववर्जिथ ववृजथुः। **उ.** ववर्ज ववृजिव ववृजिम। ३ वर्जिता। ४ वर्जिष्यति। ५ वृणक्तु-वृङ्क्तात् वृङ्क्ताम् वृञ्जन्तु। **म.** वृङ्ग्धि। उ. वृणजानि। ६ **प्र.** अवृणक्-ग् अवृङ्क्ताम् अवृञ्जन्। **म.** अवृणक्-ग् अवृङ्क्तम्। **उ.** अवृणजम् अवृञ्ज्व अवृञ्ज्म। ७ वृञ्ज्यात् वृञ्ज्याताम्। ८ वृज्यात् वृज्यास्ताम्। ९ अवर्जीत् अवर्जिष्टाम्। १० अवर्जिष्यत्।

**कर्मणि**—वृज्यते। **णिचि**—वर्जयति-ते। **सनि**—विवर्जिषति। **यङि**—वरीवृज्यते। **यङ्लुकि**—वरिवृजीति-वरीवृजीति-वर्वक्ति-वरिवक्ति-वर्वृजीति। **कृत्सु**—वर्जकः-र्जिका, वर्जिता-त्री, वर्जयिता-त्री, वृञ्जन्-ती, वर्जयन्-न्ती, वृक्तः,[5] प्रवर्ग्यम्[6], वर्जित्वा,[7] वृजिनम्,[8] वर्णः, वर्जितव्यम्, वर्जनीयम्, वृज्यम्, वर्जितुम्, वर्जनम्, विवृज्य।

**(१४६२) पृची—सम्पर्के**। (सम्पर्क करना, स्पर्श करना, संयोग करना)। सक.। सेट्। परस्मै.। पृणक्ति। इत्यादि 'वृणक्ति' (१४६१) वत्।

**कृत्सु**—पर्चकः-र्चिका, पिपर्चिषकः-र्षिका, परीपृचकः-चिका, पृञ्चन्[9]-ती, घञि-सम्पर्कः[10], घिनुणि सम्पर्की,[11] निष्ठायाम्-पृक्तः।

इति रुदादयः ॥ ७ ॥



१ निष्ठायाम्, ईदित्वात् 'श्वीदितो निष्ठायाम्' (७-२-१४) इति अनिट्त्वात् इण्निषेधे ओदित्वात् निष्ठातकारस्य नकारे चकारस्य कुत्वे च रूपमेवम्।

२ निष्ठायामनिट्त्वात् 'चजोः—' (७-३-५२) इति कुत्वे रूपमेवम्।

३ घञन्तात् वेगशब्दात् तारकादित्वात्, इतचि रूपमेवम्।

४ 'न क्त्वा सेट्' (१-२-१८) इति कित्त्वनिषेधं बाधित्वा 'विज इट्' (१-२-२-) इति नित्यं ङित्वम्।

५ ईदित्वात् 'श्वीदितो निष्ठायाम्' (७-२-१४) इति निष्ठायामिडागमनिषेधः।

६ ण्यति, 'चजोः कु घिण्ण्यतोः' (७-३-५२) इति कुत्वम्।

७ 'न क्त्वा सेट्' (१-२-१८) इति कित्वनिषेधाद् गुणः।

८ 'वृजेः किञ्च' इति इनच् प्रत्ययः किच्च भवति। कित्वान्न गुणः। वृज्यते वृणक्ति वा वृजिनम् = पापम्।

९ शतरि 'रुदादिभ्यः—' (३-१-७८) इति श्नम् विकरणप्रत्ययः। मित्वादन्त्यादचः परो भवति। 'श्नसोरल्लोपः' (६-४-१११) इति श्नमोऽकारस्य लोपः। नकरस्यानुस्वारे, परसवर्णे च रूपमेवम्।

१० निष्ठायामनिट्त्वेन 'चजोः कु—' (७-३-५२) इति घञि कुत्वम्। 'वागथाविव सम्पृक्तौ' इति रघु.।

११ 'सम्पृचानुरुध—' (३-२-१४२) इत्यादिना सम्पूर्वकादस्मात् कर्तरि, तच्छीलादिष्वर्थेषु घिनुण् प्रत्ययः। 'चजोः—' (७-३-५२) इति कुत्वम्।

# अथ तनादयः ( ८ )

( १४६३ ) **तनु—विस्तारे**। विस्तारः = दैर्घ्यम्। (फैलाना, बढ़ाना)। सक.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | तनोति[१] | तनुतः[२] | तन्वन्ति[३] | प्र. |
| | तनोषि | तनुथः | तनुथ | म. |
| | तनोमि | तनुवः[४]-तन्वः | तनुमः-तन्मः | उ. |
| लिट् | ततान | तेनतुः[५] | तेनुः | प्र. |
| | तेनिथ | तेनथुः | तेन | म. |
| | ततान-ततन | तेनिव | तेनिम | उ. |
| लुट् | तनिता | तनितारौ | तनितारः | प्र. |
| | तनितासि | तनितास्थः | तनितास्थ | म. |
| | तनितास्मि | तनितास्वः | तनितास्मः | उ. |
| लृट् | तनिष्यति | तनिष्यतः | तनिष्यन्ति | प्र. |
| | तनिष्यसि | तनिष्यथः | तनिष्यथ | म. |
| | तनिष्यामि | तनिष्यावः | तनिष्यामः | उ. |
| लोट् | तनोतु-तनुतात् | तनुताम् | तन्वन्तु | प्र. |
| | तनु[६]-तनुतात् | तनुतम् | तनुत | म. |
| | तनवानि | तनवाव | तनवाम | उ. |
| लङ् | अतनोत् | अतनुताम् | अतन्वन् | प्र. |
| | अतनोः | अतनुतम् | अतनुत | म. |
| | अतनवम् | अतन्व | अतन्म | उ. |
| वि. लि. | तनुयात् | तनुयाताम् | तनुयुः | प्र. |
| | तनुयाः | तनुयातम् | तनुयात | म. |
| | तनुयाम् | तनुयाव | तनुयाम | उ. |
| आ. लि. | तन्यात् | तन्यास्ताम् | तन्यासुः | प्र. |
| | तन्याः | तन्यास्तम् | तन्यास्त | म. |
| | तन्यासम् | तन्यास्व | तन्यास्म | उ. |

१ तन् + ति इति स्थिते, 'तनादिभ्यः उः' इति 'उ' प्रत्ययः, तन् उ ति इति जाते, सार्वधातुके' इति गुणे रूपम्।

२ तसादौ ङित्वान्न गुणः।

३ 'हुश्नुवो—' इति यण्।

४ 'लोपश्चास्यान्यतरस्यां म्वोः' इत्युकारलोपविकल्पः।

५ 'अत एकहल्मध्ये—' इति एत्वाभ्यासलोपौ।

६ 'उतश्च प्रत्यया—' इति हेर्लुक्।

| | | | | |
|---|---|---|---|---|
| लुङ् | अतानीत्[१] | अतानिष्टाम् | अतानिषुः | प्र. |
| | अतानीः | अतानिष्टम् | अतानिष्ट | म. |
| | अतानिषम् | अतानिष्व | अतानिष्म | उ. |

पक्षे– अतनीत् अतनिष्टाम् अतनिषुः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृङ् | अतनिष्यत् | अतनिष्यताम् | अतनिष्यन् | प्र. |
| | अतनिष्यः | अनिष्यतम् | अतनिष्यत | म. |
| | अतनिष्यम् | अतनिष्याव | अतनिष्याम | उ. |

आत्मनेपदपक्षे

| | | | | |
|---|---|---|---|---|
| लट् | तनुते | तन्वाते | तन्वते | प्र. |
| | तनुषे | तन्वाथे | तनुध्वे | म. |
| | तन्वे | तन्वहे-तनुवहे | तन्महे-तनुमहे | उ. |
| लिट् | तेने | तेनाते | तेनिरे | प्र. |
| | तेनिषे | तेनाथे | तेनिध्वे | म. |
| | तेने | तेनिवहे | तेनिमहे | उ. |
| लुट् | तनिता | तनितारौ | तनितारः | प्र. |
| | तनितासे | तनितासाथे | तनिताध्वे | म. |
| | तनिताहे | तनितास्वहे | तनितास्महे | उ. |
| लृट् | तनिष्यते | तनिष्येते | तनिष्यन्ते | प्र. |
| | तनिष्यसे | तनिष्येथे | तनिष्यध्वे | म. |
| | तनिष्ये | तनिष्यावहे | तनिष्यामहे | उ. |
| लोट् | तनुताम् | तन्वाताम् | तन्वताम् | प्र. |
| | तनुष्व | तन्वाथाम् | तनुध्वम् | म. |
| | तनवै | तनवावहै | तनवामहै | उ. |
| लङ् | अतनुत | अतन्वाताम् | अतन्वत | प्र. |
| | अतनुथाः | अतन्वाथाम् | अतनुध्वम् | म. |
| | अतन्वि | अतन्वहि-अतनुवहि | अतन्महि अतनुमहि | उ. |
| वि. लि. | तन्वीत | तन्वीयाताम् | तन्वीरन् | प्र. |
| | तन्वीथाः | तन्वीयाथाम् | तन्वीध्वम् | म. |
| | तन्वीय | तन्वीवहि | तन्वीमहि | उ. |
| आ. लि. | तनिषीष्ट | तनिषीयास्ताम् | तनिषीरन् | प्र. |
| | तनिषीष्ठाः | तनिषीयास्थाम् | तनिषीध्वम् | म. |
| | तनिषीय | तनिषीवहि | तनिषीमहि | उ. |
| लुङ् | अतत[२]-अतनिष्ट | अतनिषाताम् | अतनिषन् | प्र. |
| | अतथाः, अतनिष्ठाः | अतनिषाथाम् | अतनिड्ढ्वम्-निध्वम् | म. |
| | अतनिषि | अतनिष्वहि | अतनिष्महि उ. | |

१ 'अतो हलादे लघोः' इति परस्मैपदपरे सिचिवा वृद्धिः।

२ 'तनादिभ्यस्तथासोः' इति वा सिज् लोपः, 'अनुदात्तोपदेशे–' इति अनुनासिकलोपः।

| लृङ् | अतनिष्यत | अतनिष्यताम् | अतनिष्यन्त | प्र. |
| --- | --- | --- | --- | --- |
| | अतनिष्यथाः | अतनिष्येथाम् | अतनिष्यध्वम् | म. |
| | अतनिष्ये | अतनिष्यावहि | अतनिष्यामहि | उ. |

**कर्मणि**—तायते[१]-तन्यते। ७ तायताम्-तन्यताम्। आर्धधातुकेषु कर्तरिवत्। ९ अतानि। इति विशेषः। **णिचि**—तानयति-ते। ९ अतीतनत्। **सनि**—तितनिषति[२]-ते। तितंसति[३]-ते-तितांसति-ते। **यङि**—तन्तन्यते। **यङ्लुकि**—तन्तनीति-तन्तन्ति। **कृत्सु**—तनितव्यम्, तननीयम्, तान्यम्, तन्वती, तनितुम्, तननम्, तानना, तनित्वा-तत्वा, वितत्य,[४] प्रतान्य, तन्तुः, तनूः, तनुः, तातः, तन्त्रम्, तितउः = चालनी। तानकः-निका, तनिता-त्री, तानयिता-त्री, तन्वन्[५]-ती, तानयन्-न्ती, तनिष्यन्-न्ती-ती, तानयिष्यन्-न्ती-ती, तन्वानः, तानयमानः, तनिष्यमाणः, तानयिष्यमाणः, परीतत्, पुरीतत्[६]-पुरीततौ-पुरीततः, ततः[७]-ततम्-सन्ततम्-सततम्-तवान्, तनितः,[८] तानितः, अवतानः[९], तानयितव्यम्, तानवीयम्, तान्यम्, तन्यमानः[१०]-तानयमानः, तान्यमानः, तानः-वितानः-सन्तानः, तानयितुम्, ततिः, विततिः[११]-सन्ततिः, तन्तिः,[१२] तानना, तानयित्वा।

(१४६४) **षणु**—**सनु** = दाने। सनुते (देना, दान करना)। सकर्म.। सेट्। उभय.।

८. सनोति[१३]। इत्यादि 'तनोति' (१४६४) वत्। विशेषस्तु ८ सायात्[१४]-सन्यात्-सनिषीष्ट। सायास्ताम्-सन्यास्ताम्-सनिषीयास्ताम्। ९ असानीत्- असनीत्-असातः-असनिष्ट। असानीः-असनीः, असाथाः-असनिष्ठाः।

---

१ 'तनातेर्यकि' इति वा आत्वम्।

२ 'तनिपतिदरिद्रातिभ्यः सन इड्वा वक्तव्यः' इति इड्विकल्पः।

३ इडभावे 'तनोतेर्विभाषा' इति झलादौ सनि वा दीर्घः।

४ 'वा ल्यपि' (६-६-३८) इत्यत्र व्यवस्थितविभाषाश्रयणात् तनोत्यादीनां नित्यमनुनासिकलोपः।

५ 'तनादिभ्य उः' (३-१-७९) इति उः विकरणप्रत्ययः। यणादेशः। एवं तन्वान इत्यत्रापि बोध्यम्।

६ क्विपि, 'गमः क्वौ' (६-४-४०) इत्यत्र 'गमादीनमिति वक्तव्यम्' (वा. ६-४-४०) इत्युक्तत्वात् गमप्रकाराणां ग्रहणेनास्यापि अनुनासिकलोपे, तुकि, 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (६-३-१६) इति पूर्वपदस्य दीर्घे च रूपम्। पुरि = शरीरे तनोति = विस्तृतो भवति इत्यर्थे, 'हलन्तात् सप्तम्याः संज्ञायाम्' (६-३-९) इत्यलुकि, 'महिवृत्ति—' (६-३-११६) इति पूर्वपदस्य दीर्घे च रूपम्। पुरीतत् = नाडीविशेषः।

७ सनि वैकल्पिकेट्त्वादस्य, 'यस्य विभाषा' (७-२-१५) इति निष्ठायामिण्णिषेधे, 'अनुनासिकस्य क्विझलोः क्ङिति' (६-४-१५) इति नलोपे रूपम्। 'समो वा हिततततयोः—' (वा. ६-३-१०९) इति समो मकारस्य वा लोपः।

८ 'द्वितीयाश्रितातीतपतित—' (२-१-१४) इत्यत्र पतितेति निपातनात् 'यस्य विभाषा' (७-२-१५) इत्यस्यानित्यत्वं कुत्रचित् बोध्यते। तेन धावितमिमराजभिया इत्यादि। कुत्रचित् निष्ठायामिड् भवतीति ज्ञेयम्। एवमत्रापि निष्ठायामिटि तनितमिति भवतीति प्रक्रियासर्वस्वे।

९ 'तनोतेरुपसंख्यानम्' (वा. ३-१-१४०) इति कर्तरि णप्रत्ययः, पचाद्यचोऽपवादः। अवतनोतीत्यवतानः।

१० 'तनोतेर्यकि' (६-४-४४) इति धातुनकारस्य आत्वविकल्पः। आत्वपक्षे सवर्णदीर्घे तायमानः इति भवति।

११ 'तितुत्र—' (७-२-९) इति इण्णिषेधः नकारलोपः

१२ 'क्तिच्क्तौ च संज्ञायाम् (३-३-१७४) इति क्तिचि, 'तितुत्र—' (७-२-९) इतीण्णिषेधे, 'न क्तिचि दीर्घश्च (६-४-३९) इति दीर्घ अनुनासिकलोपयोनिषेधः।

१३ 'तनादिभ्यस्तथासोः' इति वा सिज्लोपः। 'अनुदात्तोपदेशे—' ति अनुनासिकलोपः।

१४ 'तनोतेर्यकि इति वा आत्वम्।

**कर्मणि**—सायते-सन्यते। **सनि**—सिषासति-सिसनिषति। **यङि**—सासायते-संसन्यते। सातः[1] सतिः।

**( १४६५ ) क्षिणु—हिंसायाम्।** (मारना, जान से मारना, दुःख देना, सताना, तोड़ना)। सक.। सेट्। उभय.।

१ प्र. क्षिणोति-क्षेणोति। म. क्षिणोषि-क्षेणोषि। उ. क्षिणोमि-क्षेणोमि। २ प्र. चिक्षेण चिक्षिणतुः चिक्षिणुः। म. चिक्षेणिथ। उ. चिक्षिणिव। ३ क्षेणितासि। ४ क्षेणिष्यति। ५ क्षिणोतु-क्षेणोतु। म. क्षिणु-क्षेणु। उ. क्षिणवानि-क्षेणवानि क्षिणवाव-क्षेणवाव। ६ प्र. अक्षिणोत्-अक्षेणोत्। म. अक्षिणोः-अक्षेणोः। उ. अक्षिणवम्-अक्षेणवम् अक्षिणुव-अक्षिण्व-अक्षेणुव-अक्षेण्व। ७ क्षिणुयात्-क्षेणुयात्। ८ क्षिण्यात्। ९ अक्षेणीत् अक्षेणिष्टाम्। १० अक्षेणिष्यत्।

**आत्मनेपदे**—१ क्षिणुते-क्षेणुते क्षिण्वाते-क्षेण्वाते। म. क्षिणुषे-क्षेणुषे। उ. क्षिणुवहे-क्षेणुवहे-क्षिण्वहे-क्षेण्वहे। २ प्र. चिक्षिणे। म. चिक्षिणिषे। उ. चिक्षिणिवहे। ३. क्षेणितासे। ४ क्षेणिष्यते। ५ क्षिणुताम्-क्षेणुताम्। म. क्षिणुष्व-क्षेणुष्व। उ. क्षिणवै-क्षेणवै। ६ अक्षिणुत-अक्षेणुत। ७ क्षिण्वीत-क्षेण्वीत। ८ क्षेणिषीष्ट। ९ अक्षित-अक्षेणिष्ट अक्षेणिषाताम् अक्षिथाः अक्षिष्ठाः। १० अक्षेणिष्यत।

**कर्मणि**—क्षिण्यते। **णिचि**—क्षेणयति। **सनि**—चिक्षिणिषति-चिक्षेणिषति। **यङि**—चेक्षिण्यते। **यङ्लुकि**—चेक्षेणीति-चेक्षेति। **कृत्सु**—क्षेणितव्यम्, क्षेणनीयम्, क्षेण्यम्, क्षितः, क्षिण्वन्-क्षेण्वन्, क्षिण्वती-क्षेण्वती, क्षिण्वानः-क्षेण्वानः, क्षेणुतुम्, क्षेणनम्, क्षिणित्वा-क्षेणित्वा-क्षित्वा, प्रक्षित्य क्षितिः।

**( १४६६ ) क्षणु—हिंसायाम्।** (मारना, जान से मार देना)। सकर्म.। सेट्। उभय.। उदित्।

१ क्षणोति-क्षणुते। उ. क्षण्वः-क्षणुवः। क्षण्वहे-क्षणुवहे। २ चक्षाण-चक्षणे। ९ अक्षणीत्-अक्षत-अक्षणिष्ट। म. अक्षथाः-अक्षणिष्ठाः। 'सनोति' (१४६४) वत्। क्षत्वा-क्षणित्वा, क्षतः, क्षतम्।

**( १४६७ ) ऋणु—गतौ।** (जाना)। सक.। सेट्। उभय.। उदित्।

ऋणोति-अर्णोति, ऋणुते-अर्णुते। २ आनर्ण-आनृणे। ३ अर्णिता। ९ आर्णीत्-आर्त आर्णिष्ट। **कृत्सु**—अर्णितव्यम्, अर्णयितव्यम्, अर्णनीयम्, अर्णकः[2]-र्णिका, अर्णिता-त्री, अर्णयिता-त्री, अर्णुवन्[3]-वती, अर्णयन्-न्ती, अर्णिष्यन्-न्ती-ती, अर्णयिष्यन्-न्ती-ती, अर्णुवानः, अर्णयमानः, अर्णिष्यमाणः, अर्णयिष्यमाणः, ऋत्[4]-ऋतौ- ऋतः,

१ 'यस्य विभाषा' इत्यनिट्त्वम्। अनिटि क्त्वादावनुनासिकलोपं बाधित्वा 'जनसने–' त्यात्वम्।

२ 'पुगन्तलघूपधस्य–' (७-३-८६) इति गुणः।

३ 'तनादिकृञ्भ्यः उः' (३-१-७९) इति उः विकरणप्रत्ययः। विकरणनिमित्तके गुणे, उर्वाङ च रूपम्।

४ 'अनुदात्तोपदेशवनतितनोत्यादीनाम्–' (६-४-३७) इति अनुनासिकलोपे तुक्।

ऋतम्[१]-ऋतः, अर्णतम्-तः, ऋणः[२], अर्णः, अर्णिषुः, ऋण्यम्, ऋण्वन्, अर्ण्यम्, अर्ण्यमाणः, अर्णः, स्वर्णम्[३] सुवर्णम्, अर्णितुम्, अर्णयितुम्, ऋतिः, अर्णना, अर्णिनिषा अर्णनम्, अर्णित्वा[४]-ऋत्वा, समृत्य,[५] प्रार्त्य,[६] समर्ण्य, अर्णवः।

**(१४६८) तृणु**—अदने। अदनम् = भक्षणम्। (खाना)। सक.। सेट्। उभय.। तृणोति-तर्णोति-तृणुते-तर्णुते। 'तनोति' (१४६३) वत्।

**कृत्सु**—तर्णितव्यम्, तर्णयितव्यम्, तर्णनीयम्, तृण्यमानः, तर्ण्यमानः, तर्णिष्यन्-न्ती-ती, तर्णयिष्यन्-न्ती-ती, तर्णुवानः, तर्णिष्यमाणः, तर्णकः-र्णिका, तर्णिता-त्री, तर्णयिता-त्री, तर्णुवन्[७]-तृण्वन-ती, तर्णयन्[८]-न्ती, तृण्[९]-तृणौ-तृणः, तृत्[१०]-तृतौ-तृतः, तृतम्[११]-तः-तवान्, तर्णितः, तृणः, तर्णः,[१२] तृण्यम्[१३], तर्ण्यम्, तृणम्,[१४] कर्तृणम्,[१५] तर्णः, तर्णितुम्, तर्णयितुम्, तृतिः,[१६] तृण्टि, तर्णना, तर्णनम्, तर्णित्वा[१७], तृत्वा, तर्णयित्वा, प्रतृत्य[१८]-प्रतृण्य, प्रतर्ण्य।

**(१४६९) घृणु**—दीप्तौ। (चमकना, प्रकाशित होना)। सक.। सेट्। उभय.। उदित्।

उप्रत्ययनिमित्तौ लघूपधगुणः संज्ञापूर्वको विधिरनित्य इति न भवतीति मैत्रादयः। भवत्येवेत्यन्ये। रूपद्वयम्। घृणोति-घर्णोति। घृणुते-घर्णुते। जघर्ण-जघृणे। अघर्णीत्-अघृत-अघर्णिष्ट। घृतः, घर्णित्वा-घृत्वा, घृणा।

---

१ उदित्वात् क्त्वायामिड्विकल्पात् 'यस्य विभाषा' (७-२-१५) इति क्तिनि, इडभावपक्षे क्त्वाप्रत्यये च बोध्यम्।
२ 'इगुपधज्ञा—' (३-१-१३५) इति कर्तरि कः।
३ 'हलश्च' (३-३-१२१) इति संज्ञायां घञ्'। 'लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्य' इति न्यायात् नपुंसकलिङ्गत्वम्।
४ 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (१-२-१८) इति कित्वनिषेधाद् गुणः।
५ 'वा ल्यपि' (६-२-१८) इत्यत्र व्यवस्थितविभाषाश्रयणात् अनुनासिकलोपो नित्यः। तुक्।
६ 'उपसर्गादृति धातौ' (६-१-९१) इति वृद्धिरेकादेशः।
७ 'तनादिकृञ्भ्यः उः' (३-१-७९) इति उः विकरणप्रत्ययः, 'श्नुधातु—' (६-४-७७) इत्युवङ्, स्त्रियाम् उगित्वेन ङीप्। आत्रेयादयस्तु 'संज्ञापूर्वको विधिरनित्यः' इत्याश्रित्य गुणाभावं मत्वा, तृण्वन्-ती इति रूपमाहुः।
८ 'ण्यन्तात् निगरणचलनार्थेभ्यश्च' (१-३-८७) इति परस्मैपदमेव। तेन शानच् न भवति।
९ विधिरूपमेव। तेन अनुनासिक लोपो न भवति।
१० क्विपि तु 'गमः क्वौ' (६-४-४०) इत्यत्र 'गमादीनामिति वक्तव्यम्' (वा. ६-४-४०) इति वार्तिकात् अनुनासिकलोपे, तुकिरूपमेवं भवति।
११ 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६-४-३७) इत्यनुनासिकलोपे रूपम्।
१२ 'आशिषि च' (३-१-१५०) इति वुन्।
१३ ऋदुपधाच्चाक्लृपिचृतेः' (३-१-११०) इति क्यप्।
१४ 'घञर्थे कविधानम्' (वा. ३-३-५८) इति कप्रत्ययः। कित्वान्न गुणः।
१५ 'तृणे च जातौ' (६-३-१०३) इति तत्पुरुषे कद्भावः।
१६ क्तिनि, 'अनुदात्तोपदेश—' (६-१-३७) इत्यनुनासिकलोपे रूपम्।
१७ 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (१-२-१८) इति कित्वनिषेधात् गुणे तर्णित्वा इति रूपम्। इडभावपक्षे अनुनासिकलोपे गुणाभावः।
१८ 'वा ल्यपि' (६-४-३८) इति अनुनासिकलोपविकल्पः। लोपपक्षे तुकि प्रतृत्य इति रूपम्।

**( १४७० ) वनु—याचने** । (याचना करना, मांगना) । सकर्म. । सेट् । आत्मने.[1] ।

१ वनुते वन्वाते वन्वते । **म.** वनुषे । **उ.** वन्वे वनुवहे-वन्वहे । २ ववने ववनाते । ३ वनिता । **म.** वनितासे । ४ वनिष्यते । ५ वनुताम् वन्वाताम् वन्वताम् । **म.** वनुष्व । **उ.** वनवै । ६ अवनुत अवन्वाताम् । **म.** अवनुथाः । **उ.** अवन्वि । ७ वन्वीत । ८ वनिषीष्ट । ९. अवत-अवनिष्ट अवनिषाताम् । **म.** अवथाः-अवनिष्ठाः । १० अवनिष्यत ।

**कर्मणि**—वन्यते । **णिचि**—वानयति । **सनि**—विवनिषते । **यङि**—ववन्यते । **यङ्लुकि**—ववनीति-ववन्ति । **कृत्सु**—वनितव्यम्, वननीयम्, वान्यम्, वतः, वन्वानः, वनितुम्, वननम्, वनित्वा-वत्वा, प्रवत्य, प्रवीयकः-पनीपकः

**( १४७१ ) मनु—अवबोधने** । (जानना, समझना, विचार करना, मानना) । सक. । सेट् । आत्मने. । मनुते । मनुताम् । इत्यादि 'वनोति' (१४७०) वत् । २ मेने मेनाते मेनिरे ।

**कर्मणि**—मन्यते । **णिचि**—मानयति-ते । **सनि**—मिमनिषते । **यङि**—मंमन्यते । **यङ्लुकि**—मंमनीति-मंमन्ति । **कृत्सु**—मनितव्यम्, मननीयम्, मान्यम्, मनितम्, मन्वानः, मननम्, मनित्वा-मत्वा, संमत्य ।

**( १४७२ ) टुकृञ्—करणे** । (करना) । **अति**—(आत्म) अधिक करना । **अधि**—(आत्म) जीतना, अधिकार होना । दूसरे के अनुकूल करना । **अप**—(आत्म) उपकार कना । **आ**—(आत्म) वेषान्तर करना, भेष बदलना । **उत्**—(आत्म) मार डालना, मरणोन्मुख होना, बटोरना । **उदा**—(आत्म) दूषण लगाना, छलना । **उप**—(पर) उपकार करना, **उपस्**—(उभय) पलटना, बदलना, स्वच्छ करना, जमा करना । **तिरस्**—(परस्मै) अषमान करना, तिरस्कार करना । दुस् (दुष्) (परस्मै) दुष्कर्म करना । खराब काम करना । **निरा**—(आत्मने) भर्त्सना करना, निन्दा करना, तिनके समान मानना, त्यागना । परिस् (परिष्) (परस्मै) स्वच्छ करना, परिष्कार करना । **परा**—(पर) निराकरण करना, अच्छी रीति से वर्तना । **प्र**—(आत्मने) प्रारम्भ करना, जल्दी करना । **प्रति**—(आत्मने. ।) प्रतीकार करना, बदला लेना । **प्रत्युप**—(आत्मने) प्रत्युपकार करना । **वि**—(आत्मने) ढूढना, शब्द करना । **वि**—(पर) बदलना, कम्पित करना । **व्या**—(आत्मने) स्पष्ट करना, समझाना । **संस्**—(पर) स्वच्छ करना, सुसंस्कृत करना । **सु**—(पर) अच्छा करना ।

| | | | | |
|---|---|---|---|---|
| लट् | करोति | करुतः | कुर्वन्तु | प्र. |
| | करोषि | कुरुथः | कुरुथ | म. |
| | करोमि | कुर्वः | कुर्मः | उ. |
| लिट् | चकार | चक्रतुः | चक्रुः | प्र. |
| | चकर्थ | चक्रथुः | चक्र | म. |
| | चकार-चकर | चकृव | चकृम | उ. |

१ चान्द्रास्त्वमु परस्मैपदिनमाहुः । तन्मते वनोति ववान इत्यादि परस्मैपद 'तनोति' (१४६३) वत् ।

| | | | | |
|---|---|---|---|---|
| लुट् | कर्ता | कर्तारौ | कर्तारः | प्र. |
| | कर्तासि | कर्तास्थः | कर्तास्थ | म. |
| | कर्तास्मि | कर्तास्वः | कर्तास्म | उ. |
| लृट् | करिष्यति | करिष्यतः | करिष्यन्ति | प्र. |
| | करिष्यसि | करिष्यथः | करिष्यथ | म. |
| | करिष्यामि | करिष्यावः | करिष्यामः | उ. |
| लोट् | करोतु-करुतात् | कुरुताम् | कुर्वन्तु | प्र. |
| | कुरु-कुरुतात् | कुरुतम् | कुरुत | म. |
| | करवानि | करवाव | करवाम | उ. |
| लङ् | अकरोत् | अकुरुताम् | अकुर्वन् | प्र. |
| | अकरोः | अकुरुतम् | अकुरुत | म. |
| | अकरवम् | अकुर्व | अकुर्म | उ. |
| वि. लि. | कुर्यात् | कुर्याताम् | कुर्युः | प्र. |
| | कुर्याः | कुर्यातम् | कुर्यात | म. |
| | कुर्याम | कुर्याव | कुर्याम | उ. |
| आ. लि. | क्रियात् | क्रियास्ताम् | कुर्यासुः | प्र. |
| | क्रियाः | क्रियास्तम् | क्रियास्त | म. |
| | क्रियासम् | क्रियास्व | क्रियास्म | उ. |
| लुङ | अकार्षीत् | अकार्ष्टाम् | अकार्षुः | प्र. |
| | अकार्षीः | अकार्ष्टम् | अकार्ष्ट | म. |
| | अकार्षम् | अकार्ष्व | अकार्ष्म | उ. |
| लृङ् | अकरिष्यत् | अकरिष्यताम्. | अकरिष्यन् | प्र. |
| | अकरिष्यः | अकरिष्यतम् | अकरिष्यत | म. |
| | अकरिष्यम् | अकरिष्याव | अकरिष्याम | उ. |
| | | आत्मनेपदे | | |
| लट् | कुरुते | कुर्वाते | कुर्वते | प्र. |
| | कुरुषे | कुर्वाथे | कुरुध्वे | म. |
| | कुर्वे | कुर्वहे | कुर्महे | उ. |
| लिट् | चक्रे | चक्राते | चक्रिरे | प्र. |
| | चकृषे | चक्राथे | चकृढ्वे | म. |
| | चक्रे | चकृवहे | चकृमहे | उ. |
| लुट् | कर्ता | कर्तारौ | कर्तारः | प्र. |
| | कर्तासे | कर्तासाथे | कर्ताध्वे | म. |
| | कर्ताहे | कर्तास्वहे | कर्तास्महे | उ. |
| लृट् | करिष्यते | करिष्येते | करिष्यन्ते | प्र. |
| | करिष्यसे | करिष्येथे | करिष्यध्वे | म. |
| | करिष्ये | करिष्यावहे | करिष्यामहे | उ. |

| | | | | |
|---|---|---|---|---|
| लोट् | कुरुतात् | कुर्वाताम् | कुर्वताम् | प्र. |
| | कुरुष्व | कुर्वाथाम् | कुरुध्वम् | म. |
| | करवै | करवावहै | करवामहै | उ. |
| लङ् | अकुरुत | अकुर्वाताम् | अकुर्वन्त | प्र. |
| | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् | म. |
| | अकुर्वि | अकुर्वहि | अकुर्महि | उ. |
| वि. लि. | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् | प्र. |
| | कुर्वीथाः | कुर्वीयाथाम् | कुर्वीध्वम् | म. |
| | कुर्वीय | कुर्वीवहि | कुर्वीमहि | उ. |
| आ. लि. | कृषीष्ट | कृषीयास्ताम् | कृषीरन् | प्र. |
| | कृषीष्ठाः | कृषीयास्थाम् | कृषीढ्वम् | म. |
| | कृषीय | कृषीवहि | कृषीमहि | उ. |
| लुङ् | अकृत | अकृषाताम् | अकृषत | प्र. |
| | अकृथाः | अकृषाथाम् | अकृढ्वम्-ड्ढ्वम् | म. |
| | अकृषि | अकृष्वहि | अकृष्महि | उ. |
| लृङ् | अकरिष्यत | अकरिष्येताम् | अकरिष्यन्त | प्र. |
| | अकरिष्यथाः | अकरिष्येथाम् | अकरिष्यध्वम् | म. |
| | अकरिष्ये | अकरिष्यावहे | अकरिष्यामहे | उ. |

**कर्मणि**—क्रियते । २ चक्रे । ९ अकारि । **णिचि**—कारयति-ते । २. कारयाञ्चकार-चक्रे । ९. अचीकरत्-त । **सनि**—चिकीर्षति-त । **यङि**—चेक्रीयते । **यङ्लुकि**— चर्करीति-चरीकरीति । **कृत्सु**—कारकः-रिका, चिकीर्षकः[1]-र्षिका, चेक्रीयकः[2]-यिका, कर्ता-त्री, कारयिता-त्री, चिकिर्षिता-त्री, चेक्रीयता-त्री, कुर्वन्[3], उपकुर्वन्, चित्रंविकुर्वन्[4], अनुकुर्वन्,[5] पराकुर्वन्, कारयन्-न्ती, चिकीर्षन्-न्ती, करिष्यन्[6]-न्ती-ती, कारयिष्यन्-न्ती-ती, चिकीर्षिष्यन्-न्ती-ती, कुर्वाणः, उत्कुर्वाणः, उदाकुर्वाणः, उपकुर्वाणः, प्रकुर्वाणः, अधिकुर्वाणः, विकुर्वाणः, कारयमाणः, चिकीर्षमाणः, चेक्रीयमाणः, संचेस्क्रीयमाणः,[7] करिष्यमाणः, कारयिष्यमाणः, चिक्रीर्षिष्यमाणः, चेक्रीयिष्यमाणः, सुकृत्,[8] कर्मकृत्, पापकृत्-मन्त्रकृत-पुण्यकृत्

१ 'अज्झनगमां सनि' (६-४-१६) इति दीर्घे, 'इको झल्' (१-२-९) इति सनः कित्वे, 'ऋत इद् धातोः' (७-१-१००) इति इत्वे रपरत्वे, 'सन्यङोः' (६-१-९) इति द्वित्वादिकम् ।

२ 'रिङ् शयग् लिङक्षु' (७-४-२८) इति रिङादेशे, द्वित्वे, 'गुणो यङ्लुकोः' (७-४-८२) इत्यभ्यासस्य गुणे, 'अकृत्सार्वधातुकयोः—' (७-४-२५) इति दीर्घः ।

३ 'तनादिभ्यः उः' (३-१-७९) इत्युप्रत्यये, गुणे, 'अत उत् सार्वधातुके' (६-४-११०) इत्युत्वे, उप्रत्ययस्य यणादेशः ।

४ वे शब्दकर्मणः । (१-३-३४) इत्यत्र 'शब्दकर्मणः' इत्युक्तत्वादत्र न शानच् ।

५ 'अनुपराभ्यां कृञः' (१-३-७९) इति शतृप्रत्ययः ।

६ 'ऋद्धनोः स्ये' (७-२-७०) इतीडागमः स्यप्रत्ययस्य ।

७ 'संपरिभ्यां करोतौ भूषणे' (६-१-१३७) इति सुट् । 'सुटः कात् पूर्वः' (६-१-१३५) ।

८ 'सुकर्मपापमन्त्रपुण्येषु कृञः' (३-२-८९) इति स्वादिषु भूते कर्तरि क्विप् । तुक् ।

शास्त्रकृत्[१]-भाष्यकृत्-कृतौ-कृतः, कृतम्-कृतः, कृतवान्, उपस्कृता[२] (ब्राह्मणाः) परिष्कृता[३] (कन्या), उपस्कृतं[४] (भुक्ते), कारितम्, चिकीर्षितः, चेक्रीयितः-तवान् करः,[५] क्षेमकरः,[६] किङ्करः-किङ्करा-किङ्करी-यत्करः- यत्करा-तत्करः-तत्करा- तस्करः- तस्करा-बहुकर-बहुकरा, कुम्भकारः, अन्धकारः, सत्यङ्कारः, अगदङ्कारः, अस्तुङ्कारः, शङ्करः-शङ्करा-शङ्करी, यशस्करः, यशस्करी (विद्या), शोककर, दर्वीकरः, त्रासकरी, ज्योतिष्करः, क्रीडाकरः, श्राद्धकरः, वचनकरः, कार्यकरः, पारस्करः (देशः) मस्करः (वेणुः) दिवाकरः,[७] विभाकरः, निशाकरः, प्रभाकरः, भास्करः, कारकरः, कारस्करः (वृक्षः) अन्तकरः, अनन्तकरः, आकरः-नान्दीकरः, लिपिकरः, लिविकरः, बलिकरः, भक्तिकरः, कर्तृकरः चित्रकरः क्षेत्रकरः, एककरः, (द्विकरः-त्रिकरः), जङ्घाकरः[८] बाहुकरः[९], अहस्करः[१०] धनुष्करः, अरुष्करः,[११] कर्मकर[१२], कर्मकारः, शब्दकारः, श्लोककारः, कलहकारः, गाधाकारः, वैराकारः, चाटुकारः-सूत्रकारः, मन्त्रकारः, पदकारः, स्तम्बकारि (व्रीहिः), शरत्करिः (वत्सः), स्तम्बकारः, शकृत्कारः, मेघङ्करः, ऋतिङ्करः, भयङ्करः, अभयङ्करः, क्षेमङ्करः, प्रियङ्करः, क्षेमकारः,[१३] प्रियकारः, मद्रकारः, कडङ्करः[१४], मस्करी, अकारी[१५], अपकारी,[१६] प्रियकारी अनपकारी, उपकारी, राजकृत्वा,[१७] राजकृत्वरी, सहकृत्वा,[१८] सहकृत्वरी, विश्वकर्मा,[१९]

---

१ 'सुकर्म–' (३-२-८९) इति सूत्रे उपपदनियमाभावात्, क्विप् च (३-२-७६) इति क्विपि 'शास्त्रकृत्' इत्यादिसिसद्धिः ।

२ 'समवाये च' (६-१-१३८) इति सुट् । उपस्कृताः = सङ्घीभूता = इत्यर्थः

३ सुटः परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' (८-३-७०) इति षत्वम् ।

४ विकृतं भुङ्क्ते, वाक्याध्याहारेण ब्रवीति, इति क्रमेणार्थः । 'उपात् प्रतियत्न–' (६-१-१३९) इति सुट् ।

५ 'शिवशमरिष्टस्य करे' (४-४-१४३) 'कर्मणि घटोऽठच्' (५-२-३५) इति निर्देशाभ्यां 'पचादेः' (३-१-१३४) आकृतिगणत्वं बोध्यते । तेन सर्वेभ्यो धातुभ्योऽच् प्रत्ययो भवति ।

६ 'पचाद्यचि' (३-१-१३४) गङ्गाधरमूघरादिवत् षष्ठीसमासे साधुः । अत एव 'अल्पारम्भः क्षेमकरः' इति प्रयोग उपपद्यते ।

७ 'दिवाविभा–' (३-२-२१) इति टः प्रत्ययः । दिवा = दिवसे प्राणिनः चेष्टायुक्तान् करोतीति दिवाकरः ।

८ 'जङ्घाकरः' इत्यत्र जङ्घाशब्देन लक्षणया तत्साध्यवेगो लक्ष्यते ।

९ 'बाहुकरः' इत्यत्र बाहुशब्देन बाहुसाध्या गतिः प्रवृत्तिर्वा बोध्यते ।

१० 'कस्कादिषु च' (८-३-४८) इति सूत्रे गणपाठात् सत्वम् तेन जिह्वामूलीयो न भवति ।

११ 'धनुष्करः अरुष्करः' इत्यत्र 'नित्यं समासेऽनुत्तरपदस्थस्य' (४-३-४५) इति षत्वम् ।

१२ 'कर्मणि भृतौ (३-२-२२) इति टः । भृतिं यः सेवते स कर्मकरः, अन्यत्र कर्मकारः ।

१३ 'क्षेमप्रियभद्रेऽण् च' (३-२-४४) इति खजनौ ।

१४ 'कडङ्करदक्षिणाच्छ च' (५-१-६९) इति सूत्रे निपातनात् मुम् ।

१५ 'ग्रह्यादि–' (३-१-१३४) गणे पाठात् अताच्छीलिको णिनिः नञ्युपपदे ।

१६ 'सुप्यजातौ णिनिस्ताच्छील्ये' (३-२-७८) इति ताच्छीलिको णिनिः ।

१७ 'राजनि युधिकृञः (३-२-९५) इति भूते क्वनिप् । राजनं कृतवान् राजकृत्वा । तुक् । स्वशक्त्या नृपं कृतवान् इत्यर्थः (प्रक्रियासर्वस्वे) ।

१८ 'सहे च' (३-२-९६) इति क्वनपि तुका सहकृत्वा = सहकारी । स्त्रियां वनो र च (४-१-७) इति ङीपि रेफादेशे च सहकृत्वरी इति रूपम् ।

१९ 'अन्येभ्योऽपि दृश्यते' (३-२-७५) इति मनिन् प्रत्यये, नेड् वशि कृति' (७-२-८) इति इण्णिषेधे च रूपम् । विश्वं कर्म अस्मात् अस्य वा इति विश्वकर्मा = देवशिल्पी ।

अलङ्करिष्णुः,[१] निराकरिषुः, चक्रिः,[२] कारकः, कारिका, कारः, चिकीर्षुः, चकारयिषुः चेक्रियः, कर्तव्यम्, कारायितव्यम्, चिकीर्षितव्यम्, चेक्रीयितव्यम्, करणीयम्, कारणीयम्, चिकीर्षणीयम्, चेक्रीयणीयम्, कृत्यम्-कार्यम्, ईषत्करः-दुष्करः-सुकरः, ईषदाढ्यङ्करः-दुराढ्यङ्करः-स्वाढ्यङ्करः, क्रियमाणः, संस्क्रियमाणः, कार्यमाणः, चिकीर्ष्यमाणः, चेक्रीय्यमाणः, कारः, उपकारः अपकारः-प्राकारः, चक्रम्, कृत्रिमम्, असंस्कृत्रिमम्, कर्तुम्-व्याकर्तुम्, कृतिः, क्रिया, कृत्या, कारिः कारिका, कारणा, चिकीर्षा, चिकारयिषा, चेक्रीया, करणम्, आढ्यङ्करणम्, सुभगङ्करणम्, स्थूलङ्करणम्, पलितङ्करणम्-नग्नङ्करणम्-अन्धङ्करणम्-अन्धङ्करणी, प्रियङ्करणम्, उष्णङ्करणम्, भद्रङ्करणम्, स्वाढ्यङ्करणम्,[३] कारणम्, चिकीर्षणम्, चेक्रीयणम्, कृत्वा, तिरस्कृत्वा[४]-तिरः कृत्वा, उपाजेकृत्वा[५]-अन्वाजेकृत्वा, साक्षात्कृत्वा[६], उरसिकृत्वा,[७] मनसिकृत्वा, मध्येकृत्वा, पदेकृत्वा-निवचनेकृत्वा[८], नीचैःकृत्वा-उच्चैःकृत्वा[९], तिर्यक्कृत्वा[१०], मुखतः कृत्वा, नानाकृत्वा[११]-विनाकृत्वा-द्विधाकृत्वा-द्वैधंकृत्वा-द्वेधाकृत्वा, कारयित्वा, चिकीर्षित्वा, चेक्रीयित्वा, उपकृत्य, नीचैःकृत्य, उच्चैःकृत्य, तिर्यक्कृत्य, गलतःकृत्य, नानाकृत्य-विनाकृत्य, द्विधाकृत्य-द्वैधंकृत्य-द्वेधाकृत्य, कारिकाकृत्य,[१२] ऊरीकृत्य-उररीकृत्य-शुक्लीकृत्य[१३]-वषट्कृत्य-पटपटाकृत्य, खाट्कृत्य, सत्कृत्य-असत्कृत्य[१४], अलङ्कृत्य[१५], पुरस्कृत्य[१६],

---

१ अलङ्कृञ् निराकृञ्–' (३-२-१३६) इत्यादिना ताच्छीलिक इष्णुच् प्रत्ययः ।
२ 'भाषायां धाञ् कृ–' (वा. ३-२-१७१) इत्यनेन किः, किन् वा प्रत्ययः । चक्रिः = कर्त्ता ।
३ 'भयाढ्यादिषु तदन्तग्रहणम्' (भाष्यम् १-१-७२) इति वचनात् तदन्तविधिः ।
४ 'विभाषा कृञि' (१-४-७२) इति गतिसंज्ञाविकल्पः । यदि गतिसंज्ञा, तदानी, तिरसोऽन्यतरस्याम्' (८-३-४२) इति विसर्जनीयस्य सत्वविकल्पः । यदा गतिसंज्ञा न तदानीं विसर्जनीयः, समासोऽपि न । एवं ल्यबपि ।
५ 'उपाजेऽन्वाजे' (१-४-७३) इति गतिसंज्ञायां समासविकल्पः । यदा समासः, तदानी ल्यबपि ।
६ 'साक्षात्प्रभृतीनि च' (१-४-७४) इति गतिसंज्ञा । 'साक्षात् प्रभृतिषु च्व्यर्थवचनम्' (वा. १-४-७४) इति वचनात् च्व्यर्थे एव गतिसंज्ञा । समासे तु ल्यप् ।
७ 'अनत्याधान उरसिमनसी' (१-४-७५) इति गतिसंज्ञायां समासविकल्पः । एवं ल्यप्यपि । अत्याधानम् = उपश्लेषनम् तदभावोऽनत्याधानम् ।
८ 'मध्ये पदे निवचने च' (१-४-७६) इति गति संज्ञायां समासविकल्पः । अत्रापि चकारात् 'अनत्याधाने' इत्यनुवर्तते । निवचनम् = वचनाभावः । निवचने-कृत्वा = वाचं नियम्येत्यर्थः ।
९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (३-४-५९) इति क्त्वाणमुलौ । 'तृतीयाप्रभृतीन्यतरस्याम्' (२-२-२१) इति समासविकल्पः । ततश्च ल्यबपि । अन्यथाभिप्रेताख्यानं नाम = अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम् ।
१० 'तिर्यच्यपवर्गे' (३-४-६०) इति कृञः क्त्वाणमुलौ । अपवर्गः = समाप्तिः । ल्यबप्येवम् ।
११ 'नानार्थप्रत्यये च्व्यर्थे' (३-४-६२) इति कृञः क्त्वाणमुलौ, ल्यबपि । 'धार्थत्वेन' द्वित्र्योश्च' (५-३-४५) इति धमुञः, 'एधाच्च' (५-३-४६) इति एधावश्च ग्रहणम् ।
१२ 'कारिकाशब्दस्योपसंख्यानम्–' (वा. १-४-६०) इति गतिसंज्ञायां समासे ल्यप् ।
१३ 'अनुकरणं चनितिपरम्' (१-४-६२) इति गतिसंज्ञायां समासे ल्यपि रूपम् ।
१४ 'आदरानादरयोः सदसती' (१-४-६३) इति गतिसंज्ञायां समासे ल्यपि रूपम् । प्रीत्यतिशयः = आदरः । परिभवः, औदासीन्यं वा अनादरः ।
१५ अनेकार्थकस्यालंशब्दस्य 'भूषणेऽलम्' (१-४-६४) इति भूषणेऽर्थे गतिसंज्ञायां समासे ल्यप् ।
१६ 'पुरोऽव्ययम्' (१-४-६७) इति गतिसंज्ञायां, 'नमस्पुरसोर्गत्योः' (८-३-४०) इति विसर्जनियस्य सत्वे च रूपम् ।

नमस्कृत्य, हस्तेकृत्य[१], पाणौकृत्य, प्राध्वंकृत्य,[२] जीविका-कृत्य[३]-उपनिषत्कृत्य, तिरस्कृत्य-तिरः-कृत्य, उपाजेकृत्य-अन्वाजेकृत्य, साक्षात्कृत्य, उरसिकृत्य-मनसिकृत्य, मध्येकृत्य-पदेकृत्य-निवचनेकृत्य, लवणङ्कृत्य[४], विकार्य प्रचिकीर्ष्य, प्रचेक्रीय्य।

## इति तनादयः ॥ ८ ॥



१ 'नित्यं हस्ते पाणावुपयमने' (१-४-७७) इति नित्यं गतिसंज्ञायां समासे ल्यप्। उपयमनम् = दारकर्म।

२ 'प्राध्वं बन्धने' (१-४-७८) इति जित्ये गतिसंज्ञायां समासे ल्यप्, प्राध्वं कृत्य = बन्धनेनाकूलं कृत्वेत्यर्थः।

३ 'जीविकोपनिषदावौपम्ये' (१-४-७९) इति नित्यगतिसंज्ञायां समासे ल्यप्।

४ साक्षात्प्रभृतिषु (१-४-७४) लवणशब्दस्य गतिसंज्ञासन्नियोगेन मान्तत्वं निपात्यते, तेन लवणाकृत्येति भवति।

# अथ क्र्यादयः ( ९ )

( १४७३ ) **डुक्रीञ्—द्रव्यविनिमये।** (खरीदने, बदले मे लेना, **वि**—बेचना)। सकर्म.। अनिट्। उभयपदी।

| | | | | |
|---|---|---|---|---|
| लट् | क्रीणाति | क्रीणीतः[1] | क्रीणन्ति[2] | प्र. |
| | क्रीणासि | क्रीणीथः | क्रीणीथ | म. |
| | क्रीणामि | क्रीणीवः | क्रीणीमः | उ. |
| लिट् | चिक्राय | चिक्रियतुः | चिक्रियुः | प्र. |
| | चिक्रयिथ-चिक्रेथ | चिक्रियथुः | चिक्रिय | म. |
| | चिक्राय-चिक्रिय | चिक्रियिव | चिक्रियिम | उ. |
| लुट् | क्रेता | क्रेतारौ | क्रितारः | प्र. |
| | क्रेतासि | क्रेतास्थः | क्रेतास्थ | म. |
| | क्रितास्मि | क्रेतास्वः | क्रेतास्मः | उ. |
| लृट् | क्रेष्यति | क्रेष्यतः | क्रेष्यन्ति | प्र. |
| | क्रेष्यसि | क्रेष्यथः | क्रेष्यथ | म. |
| | क्रेष्यामि | क्रेष्यावः | क्रेष्यामः | उ. |
| लोट् | क्रीणातु-क्रीणीतात् | क्रीणीताम् | क्रीणन्तु | प्र. |
| | क्रीणीहि-क्रीणीतात् | क्रीणीतम् | क्रीणीत | म. |
| | क्रीणानि | क्रीणाव | क्रीणाम | उ. |
| लङ् | अक्रीणीत् | अक्रीणीताम् | अक्रीणन् | प्र. |
| | अक्रीणाः | अक्रीणीतम् | अक्रीणीत | म. |
| | अक्रीणाम् | अक्रीणीव | अक्रीणीम | उ. |
| वि. लि. | क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः | प्र. |
| | क्रीणीयाः | क्रीणीयातम् | क्रीणीयात | म. |
| | क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम | उ. |
| आ. लि. | क्रीयात् | क्रीयास्ताम् | क्रियासुः | प्र. |
| | क्रीयाः | क्रीयास्तम् | क्रीयास्त | म. |
| | क्रियासम् | क्रीयास्व | क्रीयास्म | उ. |
| लुङ् | अक्रैषीत् | अक्रैष्टाम् | अक्रैषुः | प्र. |
| | अक्रैषीः | अक्रैष्टम् | अक्रैष्ट | म. |
| | अक्रैषम् | अक्रैष्व | अक्रैष्म | उ. |
| लृङ् | अक्रेष्यत् | अक्रेष्यताम् | अक्रेष्यन् | प्र. |
| | अक्रेष्यः | अक्रेष्यतम् | अक्रेष्यत | म. |
| | अक्रेष्यम् | अक्रेष्याव | अक्रेष्याम | उ. |

१ 'ई हल्यघोः' इत्यनेन ईत्वम्।
२ 'श्नाभ्यस्तयोरातः' इत्याकारलोपः।

आत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट् | क्रीणीते | क्रीणाते | क्रीणते | प्र. |
| | क्रीणीषे | क्रीणाथे | क्रीणीध्वे | म. |
| | क्रीणे | क्रीणीवहे | क्रीणीमहे | उ. |
| लिट् | चिक्रिये | चिक्रियाते | चिक्रियिरे | प्र. |
| | चिक्रियिषे | चिक्रियाथे | चिक्रियिध्वे | म. |
| | चिक्रिये | चिक्रियिवहे | चिक्रियिमहे | उ. |
| लुट् | क्रेता | क्रेतारौ | क्रेतारः | प्र. |
| | क्रेतासे | क्रेतासाथे | क्रेतासाध्वे | म. |
| | क्रेताहे | क्रेतास्वहे | क्रेतास्महे | उ. |
| लृट् | क्रेष्यते | क्रेष्येते | क्रेष्यन्ते | प्र. |
| | क्रेष्यसे | क्रेष्येथे | क्रेष्यध्वे | म. |
| | क्रेष्ये | क्रेष्यावहे | क्रेष्यामहे | उ. |
| लोट् | क्रीणीताम् | क्रीणाताम् | क्रीणताम् | प्र. |
| | क्रीणीष्व | क्रीणीथाम् | क्रीणीध्वम् | म. |
| | क्रीणै | क्रीणावहै | क्रीणामहै | उ. |
| लङ् | अक्रीणीत | अक्रीणाताम् | अक्रीणत | प्र. |
| | अक्रीणीथाः | अक्रीणाथाम् | अक्रीणीध्वम् | म. |
| | अक्रीणि | अक्रीणीवहि | अक्रीणीमहि | उ. |
| वि. लि. | क्रीणीत | क्रीणीयाताम् | क्रीणीरन् | प्र. |
| | क्रीणीथाः | क्रीणीयाथाम् | क्रीणीध्वम् | म. |
| | क्रीणीय | क्रीणीवहि | क्रीणीमहि | उ. |
| आ. लि. | क्रेषीष्ट | क्रेषीयास्ताम् | क्रेषीरन् | प्र. |
| | क्रेषीष्ठाः | क्रेषीयास्थाम् | क्रेषीध्वम् | म. |
| | क्रेषीय | क्रेषीवहि | क्रेषीमहि | उ. |
| लुङ् | अक्रेष्ट | अक्रेषाताम् | अक्रेषत | प्र. |
| | अक्रेष्ठाः | अक्रेषाथाम् | अक्रेढ्वम् | म. |
| | अक्रेषि | अक्रेष्वहि | अक्रेष्महि | उ. |
| लृङ् | अक्रेष्यत | अक्रेष्येताम् | अक्रेष्यन्त | प्र. |
| | अक्रेष्यथाः | अक्रेष्येथाम् | अक्रेष्यध्वम् | म. |
| | अक्रेष्ये | अक्रेष्यावहि | अक्रेष्यामहि | उ. |

**कर्मणि**—क्रीयते। **णिचि**—क्रापयति[१]-ते। ९ अचिक्रपत्। **सनि**—चिक्रीषति-ते। **यङि**—चेक्रीयते। **यङ्लुकि**—चेक्रेति-चेक्रयीति।

१ 'क्रीङ्जीनां णौ' इत्यात्वे, अर्तिह्रीब्लीरी–ति पुक्।

**कृत्सु**—क्रेतव्यम्। क्रयणीयम्। क्रेतुं शक्यं-क्रय्यम्[१]। क्रेतुं योग्यं-क्रेयम्। क्रीतः। क्रीतवान्। क्रीणती। क्रीणानः। क्रेतुम्। क्रयणम्। क्रीत्वा। विक्रीय। क्रयः। विक्रयः। ण्यन्तस्य क्रापयित्वा। क्रापयितुम्। क्रापयन्-माण। विक्रीणाति। विक्रीणीते। परिक्रीणीते[२]। अवक्रीणीते।

**(१४७४) प्रीञ्—तर्पणे कान्तौ च**। कान्तिः = कामना। (प्रीति करना, तृप्त करना, कामना करना)। सक.। अनिट्। उभय.। प्रीणाति - प्रीणीते। इत्यादि '**क्रीणाति**' (१४७३) वत्। **णिचि**– प्रीणयति-ते। ९ अपिप्रीणत्-त।

**कृत्सु**—प्रीणकः, प्रायकः[३]-यिका, प्रीणकः-णिका, वत्सप्रीः,[४] प्रियः, प्रेयान्।

**(१४७५) श्रीञ्—पाके**। (पकाना)। सकर्म.। अनिट्। उभय.। श्रीणाति-श्रीणीते। इत्यादि 'क्रीणाति' (१४०३) वत्। **णिचि**—श्राययति-ते। ९ अशिश्रियत्-त।

**(१४७६) मीञ्—बन्धने हिंसायाञ्च**। (बाँधना, मार डालना या दुःख देना)। सक.। अनिट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | मीनाति | मीनीतः | मीनन्ति | प्र. |
| | मीनासि | मीनीथः | मीनीथ | म. |
| | मीनामि | मीनीवः | मीनीमः | उ. |
| लिट् | ममौ | मिम्यतुः | मिम्युः | प्र. |
| | ममिथ-ममाथ | मिम्यथुः | मिम्य | म. |
| | ममौ | मिम्यिव | मिम्यिम | उ. |
| लुट् | माता | मातारौ | मातारः | प्र. |
| | मातासि | मातास्थः | मातास्थ | म. |
| | मातास्मि | मातास्वः | मातास्मः | उ. |
| लृट् | मास्यति | मास्यतः | मास्यन्ति | प्र. |
| | मास्यसि | मास्यथः | मास्यथ | म. |
| | मास्यामि | मास्यावः | मास्यामः | उ. |
| लोट् | मीनातु-मीनीतात् | मीनीताम् | मीनन्तु | प्र. |
| | मीनीहि-मीनीतात् | मीनीतम् | मीनीत | म. |
| | मीनानि | मीनाव | मीनाम | उ. |
| लङ् | अमीनात् | अमीनीताम् | अमानन् | प्र. |
| | अमीनाः | अमीनीतम् | अमीनीत | म. |
| | अमीनाम् | अमीनीव | अमीनीम | उ. |

१ क्रय्यस्तदर्थे।
२ 'परिव्यवेभ्यः क्रियः' इति अकर्त्रभिप्रायेऽपिआत्मनेपदम्।
३ 'धूञ्प्रीञोर्नुग् वक्तव्यः' (वा. ७-३-३७) इति ण्यन्ते सर्वत्र नुगागमे णत्वे च प्राणिकः, प्रीणयिता-इत्यादीनि रूपाणि भवन्ति।
४ वत्सान् प्रीणातीति वत्सप्रीः। क्विपि रूपमेवम् काशिकायां (६-४-१४८) रूपमेतदुदाहृतम्।

| | | | | |
|---|---|---|---|---|
| वि. लि. | मीनीयात् | मीनीयाताम् | मीनीयुः | प्र. |
| | मीनीयाः | मीनीयातम् | मीनीयात | म. |
| | मीनीयाम् | मीनीयाव | मीनीयाम | उ. |
| आ. लि. | मीयात् | मीयास्ताम् | मीयासुः | प्र. |
| | मीयाः | मीयास्तम् | मीयास्त | म. |
| | मीयासम् | मीयास्व | मीयास्म | उ. |
| लुङ् | अमासीत् | अमासिष्टाम् | अमासिषुः | प्र. |
| | अमासीः | अमासिष्टम् | अमासिष्ट | म. |
| | अमासिषम् | अमासिष्व | अमासिष्म | उ. |
| लृङ् | अमास्यत् | अमास्यताम् | अमास्यन् | प्र. |
| | अमास्यः | अमास्यतम् | अमास्यत | म. |
| | अमास्यम् | अमास्याव | अमास्याम | उ. |

आत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट् | मीनीते | मीनाते | मीनते | प्र. |
| | मीनीषे | मीनाथे | मीनीध्वे | म. |
| | मीने | मीनीवहे | मीनीमहे | उ. |
| लिट् | मिम्ये | मिम्याते | मिम्यिरे | प्र. |
| | मिम्यिषे | मिम्याथे | मिम्यिध्वे-मिम्यिढ्वे | म. |
| | मिम्ये | मिम्यिवहे | मिम्यिमहे | उ. |
| लुट् | माता | मातारौ | मातारः | प्र. |
| | मातासे | मातासाथे | माताध्वे | म. |
| | माताहे | मातास्वहे | मातास्महे | उ. |
| लृट् | मास्यते | मास्येते | मास्यन्ते | प्र. |
| | मास्यसे | मास्येथे | मास्यध्वे | म. |
| | मास्ये | मास्यावहे | मास्यामहे | उ. |
| लोट् | मीनीताम् | मीनाताम् | मीनताम् | प्र. |
| | मीनीष्व | मीनाथाम् | मीनीध्वम् | म. |
| | मीनै | मीनावहै | मीनामहै | उ. |
| लङ् | अमीनीत | अमीनाताम् | अमीनत | प्र. |
| | अमीनीयाः | अमीनाथाम् | अमीनीध्वम् | म. |
| | अमीनि | अमीनीवहि | अमीनीमहि | उ. |
| वि. लि. | मीनीत | मीनीयाताम् | मीनीरन् | प्र. |
| | मीनीथाः | मीनीयाथाम् | मीनीध्वम् | म. |
| | मीनीय | मीनीवहि | मीनीमहि | उ. |
| आ. लि. | मासीष्ट | मासीयास्ताम् | मासीरन् | प्र. |
| | मासीष्ठाः | मासीयास्थाम् | मासीध्वम् | म. |
| | मासीय | मासीवहि | मासीमहि | उ. |

| | | | | |
|---|---|---|---|---|
| लुङ् | अमास्त | अमासाताम् | अमासत | प्र. |
| | अमास्थाः | अमासाथाम् | अमाद्ध्वम्-अमाध्वम् | म. |
| | अमासि | अमास्वहि | अमास्महि | उ. |
| लृङ् | अमास्यत | अमास्येताम् | अमास्यन्त | प्र. |
| | अमास्यथाः | अमास्येथाम् | अमास्यध्वम् | म. |
| | अमास्ये | अमास्यावहि | अमास्यामहि | उ. |

**कर्मणि**—मीयते। **णिचि**—मापयति-ते। **सनि**—मित्सति-ते। **यङि**—मेमीयते। **यङ्लुकि**—मेमयीति-मेमेति। **कृत्सु**—मायकः[१]-यिका, मापकः[२]-पिका, मित्सक[३]-त्सिका, मेमीयकः-[४]यिका, माता-मात्री, मापयिता-त्री, मीनन्-प्रमीमन्-ती, प्रमीणानः, मीतम्-मीतः, मीतवान्, मीत्वा, प्रमाय,[५] ईषत्प्रमयः-दुष्प्रमयः-सुमयः, मयः-प्रमयः, मीनानः, मातव्यः, मानीयः, मेयः, मातुम्, मानम्, मीत्वा, प्रमाय, मेयूः, प्रमीणाति।

**( १४७७ ) षिञ्—बन्धने।** (बांधना, गूंथना, फन्दे से पकड़ना)। सकर्म.। अनिट्। उभयपदी।

१ सिनाति-सिनीते। २ सिषाय, सिष्यतुः सिष्युः। **म.** सिषयिथ-सिषेथ सिष्यथुः सिष्य। **उ.** सिषाय-सिषय सिष्यिव सिष्यिम। **आत्मनेपदे**—**प्र.** सिष्ये सिष्याते सिष्यिरे। **म.** सिष्यषे सिष्याथे सिष्यिढ्वे-ध्वे। **उ.** सिष्ये सिष्यिवहे सिष्यिमहे। ३ सेता। **म.** सेतासि-सेतासे। ४ सेष्यति-सेष्यते। ५ **प्र.** सिनातु-सिनीताम्। ६ असिनात्-असिनीत। ७ सिनीयात्-सिनीत। ८ सीयात् सेषीष्ट। **म.** ढ्वम्। ९ असैषीत्। असैष्टाम्-असेष्ट। असेषाताम्। १० असेष्यत्-त।

**कर्मणि**—सीयते। **णिचि**—साययति। **सनि**—सिसीषति-ते। **यङि**—सेषीयते। **यङ्लुकि**—सेषयीति-सेषेति। **कृत्सु**—सेतव्यम्, , सयनीयम्, सेयः, सितः, सिनन्, सिनती, सिनानः, सेतुम्, सयनम्, सित्वा, प्रसित्य।

**( १४७८ ) स्कुञ्—आप्रवणे।** (कूदना, फुदकना, उड़ाना, ऊपर उठाना, आच्छादित करना, ढकना)। सकर्म.। अनिट्। उभय.। उकारान्तः।

**स्तन्भुस्तम्भु**-इति श्नुः। श्ना च। २ स्कुनोति स्कुनुतः स्कुन्वन्ति-स्कुनुते स्कुन्वाते स्कुन्वते। स्कुनाति स्कुनीतः स्कुनन्ति-स्कुनीते स्कुनाते स्कुनते। २ चुस्काव-चुस्कुवे। ३ स्कोता। **म.** स्कोतासि-से। ४ स्कोष्यति-ते। ८ स्कूयात् स्कूयास्ताम्। स्कोषीष्ट, स्कोषीयास्ताम्। ९ अस्कौषीत्, अस्कौष्टाम्। अस्कोष्ट अस्कोषाताम्।

१ 'मीनातिमिनोतिदीङां ल्यपि च' (६-१-५०) इति एज्विषये आकारः। युगागमः। एवमेव णवुल् प्रभृतिष्वपि ज्ञेयम्।
२ ष्यन्तेऽप्येज् विषत्वेनाकारे, आदन्तलक्षणो पुगागमे च रूपमेव सर्वत्र ज्ञेयम्।
३ 'सनि मीमा–' (७-४-५४) इत्यनेन इस्, अभ्यासलोपतकारादिकं यथायथं सन्नन्ते सर्वत्र ज्ञेयम्।
४ यङ एज्विषयत्वाभावेन आकारो न। अभ्यासे गुणः। एवमेव यङन्ते सर्वत्र ज्ञेयम्।
५ 'मीनातिमिनोतिदीङां ल्यपि च' (६-१-५०) इत्यनेन ल्यप्यप्याकारः।

**सनि**—चुस्कूषति-ते। **यङि**—चोस्कूयते। **यङ्लुकि**—चोस्कोति। **णिचि**—स्कावयति। ९. अचुस्कुवत्। **कृत्सु**—स्कुत्वा, स्कुतः, स्कपकः विका, स्कुन्वन्- स्कुन्वती-स्कुन्वान, इति श्नुक्किरण विशिष्टोऽपि शतरि, शानचि चाधिकः। क्रमप्राप्तः श्नाप्रत्ययोऽपि भवत्येव, स्कुनन्-न्ती-स्कुनानः।

**( १४७९ ) युञ्—बन्धने**। (बांधना)। सकर्म.। अनिट्। उभय.।

१ युनाति-युनीते। २ **प्र.** युयाव, युयुवतुः युयुवुः। **म.** युयविथ-युयोथ युयुवथुः युयुव। **उ.** युयाव-युयव युयुविव युयुविम। **आत्म. प्र.** युयुवे युयुवाते। **म.** युयुविषे। **उ.** युयुविवहे। ३ **प्र.** योता। ६ योतासि-योतासे। ४ योष्यति-त। ५ युनातु-युनीताम्। ६ अयुनात्-अयुनीत। ७ युनीयात्-युनीत। ८ यूयात् यूयास्ताम्। **आत्मने.** योषीष्ट, योषीयास्ताम्। ९ अयौषीत्-अयोष्ट। १० ओयष्यत्-त।

**कर्मणि**—यूयते। **णिचि**—यावयति-ते। **सनि**—युयूषति-ति। **यङि**—योयूयते। **यङ्लुकि**—योयोति। **कृत्सु**—योतव्यः, यवनीयः, याव्यः-यव्यः, युतः, युतवान्, युनन्, युनती, युनानः, योतुम्, यवनम्, युत्वा, संयुत्य।

**(१४८०) क्नूञ्—शब्दे**। (शब्द करना, आवाज करना)। सक.। सेट्। ञित्। उभय.।

१.क्नूनाति-क्नूनीते।२.चुक्नाव-चुक्नुवे।४.क्नविष्यति।९.अक्नावीत्-अक्नविष्ट। इत्यादि क्रीणति (१४७३) वत्।

**( १४८१ ) द्रूञ्—हिंसायाम्**। (हिंसा करना,मार डालना)। सकर्म.। सेट्। उभय.। ऊकारान्तः। ञित्। १ द्रूणाति-द्रूणीते. २ दुद्राव-दुद्रवे। ९ अद्रावीत्-अद्रविष्ट। इत्यादि 'क्रीणाति' (१४७३) वत्।

**( १४८२ ) पूञ्—पवने**। (पवित्र करना, स्वच्छ करना)। सकर्म.। सेट्। उभय.। प्वादिः।

| | | | | |
|---|---|---|---|---|
| लट् | पुनाति[१] | पुनीतः | पुनन्ति | प्र. |
| | पुनासि | पुनीथः | पुनीथ | म. |
| | पुनामि | पुनावः | पुनामः | उ. |
| लिट् | पुपाव | पुपुवतु | पुपुवुः | प्र. |
| | पुपविथ | पुपुवथुः | पुपुव | म. |
| | पुपाव-पुपव | पुपुविव | पुपुविम | उ. |
| लुट् | पविता | पवितारौ | पवितारः | प्र. |
| | पवितासि | पवितास्थः | पवितास्थ | म. |
| | पवितास्मि | पवितास्वः | पवितास्मः | उ. |

१ 'प्वादीनां ह्रस्वः' इति शिति ह्रस्वः।

| | | | | |
|---|---|---|---|---|
| लृट् | पविष्यति | पविष्यतः | पविष्यन्ति | प्र. |
| | पविष्यसि | पविष्यथः | पविष्यथ | म. |
| | पविष्यामि | पविष्यावः | पविष्यामः | उ. |
| लोट् | पुनातु-पुनीतात् | पुनीताम् | पुनन्तु | प्र. |
| | पुनीहि-पुनीतात् | पुनीतम् | पुनीत | म. |
| | पुनानि | पुनाव | पुनाम | उ. |
| लङ् | अपुनात् | अपुनीताम् | अपुनन् | प्र. |
| | अपुनाः | अपुनीतम् | अपुनीत | म. |
| | अपुनाम् | अपुनीव | अपुनीम | उ. |
| वि. लि. | पूनीयात् | पुनीयाताम् | पुनीयुः | प्र. |
| | पुनीयाः | पुनीयातम् | पुनीयात | म. |
| | पुनीयाम् | पुनीयाव | पुनीयाम | उ. |
| आ. लि. | पूयात् | पूयास्ताम् | पूयासुः | प्र. |
| | पूयाः | पूयास्तम् | पूयास्त | म. |
| | पूयासम् | पूयास्व | पूयास्म | उ. |
| लुङ् | अपावीत् | अपाविष्टाम् | अपाविषुः | प्र. |
| | अपावीः | अपाविष्टम् | अपाविष्ट | म. |
| | अपाविषम् | अपाविष्व | अपाविष्म | उ. |
| लृङ् | अपविष्यत् | अपविष्यताम् | अपविष्यन् इत्यादि। | |

आत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट् | पुनीते | पुनाते | पुनते | प्र. |
| | पुनीषे | पुनाथे | पुनीध्वे | म. |
| | पुने | पुनीवहे | पुनीमहे | उ. |
| लिट् | पुपुवे | पुपुवाते | पुपुविरे | प्र. |
| | पुपुविषे | पुपुवाथे | पुपुविध्वे | म. |
| | पुपुवे | पुपुविवहे | पुपुविमहे | उ. |
| लुट् | पविता | पवितारौ | पवितारः | प्र. |
| | पवितासे | पवितासाथे | पविताध्वे | म. |
| | पविताहे | पवितास्वहे | पवितास्महे | उ. |
| लृट् | पविष्यते | पविष्येते | पविष्यन्ते | प्र. |
| | पविष्यसे | पविष्येथे | पविष्यध्वे | म. |
| | पविष्ये | पविष्यावहे | पविष्यामहे | उ. |
| लोट् | पुनीताम् | पुनाताम् | पुनताम् | प्र. |
| | पुनीष्व | पुनाथाम् | पुनीध्वम् | म. |
| | पुनै | पुनावहै | पुनामहै | उ. |

| | | | | |
|---|---|---|---|---|
| लङ् | अपुनीत | अपुनाताम् | अपुनत | प्र. |
| | अपुनीथाः | अपुनाथाम् | अपुनीध्वम् | म. |
| | अपुनि | अपुनीवहि | अपुनीमहि | उ. |
| वि. लि. | पुनीत | पुनीयाताम् | पुनीरन् | प्र. |
| | पुनीथाः | पुनीयाथाम् | पुनीध्वम् | म. |
| | पुनीय | पुनीवहि | पुनीमहि | उ. |
| आ. लि. | पविषीष्ट | पविषीयास्ताम् | पविषीरन् | प्र. |
| | पविषीष्ठाः | पविषीयास्थाम् | पविषीध्वम्-ढ्वम् | म. |
| | पविषीय | पविषीवहि | पविषीमहि | उ. |
| लुङ् | अपविष्ट | अपविषाताम् | अपविषत | प्र. |
| | अपविष्ठाः | अपविषाथाम् | अपविध्वम्-ढ्वम् | म. |
| | अपविषि | अपविष्वहि | अपविष्महि | उ. |
| लृङ् | अपविष्यत | अपविष्येताम् | अपविष्यन्त | प्र. |
| | अपविष्यथाः | अपविष्येथाम् | अपविष्यध्वम् | म. |
| | अपविष्ये | अपविष्यावहि | अपविष्यामहि | उ. |

**कर्मणि**—पूयते। ९ अपावि। **णिचि**—पावयति-ते। ९ अपीवत्-त। **सनि**—पुपूषति-ते। **यङि**—पोपूयते। **यङ्लुकि**—पोपोति-पोपवीति। **कृत्सु**—पवितव्यम्, पावयितव्यम्, पावकः-विका, पविता-त्री, पावयिता-त्री, पुनन्[१]-पुनती, पावयन्-न्ती, पविष्यन्-न्ती-ती, पावयिष्यन्-न्ती-ती, पुनानः, पावयमानः, पविष्यमाणः पाविष्यमाणः, खलपूः,[२] खलप्वौ-खलप्वः, पूतम्[३]-पूतः-तवान्-पूनः[४]-पूनवान्, पवितुः, पवः-पवनः,[५] पुपविवान्,[६] पवित्रम्,[७] पोता,[८] पानः, पावनः,[९] प्रपवनीमय्,[१०] प्रपावनीयम्,[११] विपूयः,[१२] पव्यम्, अवश्यपाव्यम्, पाव्यम्, पूयमानः, पाव्यमानः, पावः,

१ शतरि 'क्र्यादिभ्य–' (३-१-८१) इति श्ना विकरण प्रत्ययः। 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपः, 'प्वादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वे रूपमेवम्। एवं शानजन्तेऽपि प्रक्रिया ज्ञेया।

२ खलं पुनातीति खलपूः। क्विपि रूपमेवम्। द्विवचनादौ 'ओः सुपि' (६-४-८३) इति यण्।

३ 'श्र्युकः क्किति' (७-२-११) इति निष्ठायामिण्निषेधः। एवं क्तिनि, क्त्वायाम्, ल्यपि चेण्निषेधो ज्ञेयः।

४ ल्वादित्वेन नित्यं निष्ठानत्वे प्राप्ते, 'पूञो विनाशे' (वा. ८-२-४४) इत्यर्थविशेषे निष्ठानत्वम्। पूनाः यवाः विनष्टा इत्यर्थः।

५ 'नन्द्यादित्वात्' (३-१-१३४) कर्तरि युप्रत्ययः।

६ लिटः क्वसौ, द्विर्वचने, इडागमे, उत्तरखण्डे गुणे, न शसददवादिगुणानाम्' (६-४-१२६) इति न एत्वाभ्यासलोपः।

७ 'कर्तरि चर्षिदेवतयोः' (३-२-१८६) इति कर्तरि करणे च इत्रप्रत्ययः।

८ ण्यन्तादस्मात् नन्द्यादित्वात् कर्तरि ल्युप्रत्ययः।

९ 'तृन्' (३-२-१३५) इति कर्तरि तच्छीलादिषु तृन् प्रत्ययः। बाहुलकादिडागमो न।

१० 'न मापूपूकमि–' (८-४-३४) इति णत्वनिषेधः।

११ 'ण्यन्तभादीनामुपसंख्यानम्' (वा. ८-४-३४) इति णत्वनिषेधः।

१२ 'विपूयविनीयजित्या मुञ्जकल्कहलिषु (३-१-११७) इति मुञ्जेऽभिधेये क्यपि रूपमेवम।

निष्पावः,[1] निष्पावः[2], उत्पावः,[3] पोत्रम्[4]-पोत्रः, पवित्रम्,[5] पवितुम्, पावयितुम्, पूतिः, पविः,[6] पावना, पवनम्, पावनम्, पूत्वा, पावयित्वा, प्रपूय, प्रयात्र, पूगः,[7] पोतः[8] प्रण्यम्,[9] पुत्रः[10] ।

**(१४८३) लूञ्—छेदने।** (कतरना, काटना, चीरना)। सकर्म.। सेट्। उभय.। प्वादिः। ल्वादिश्च। लुनाति-लुनीते। इत्यादि 'पुनाति' (१४८२) वत्। विशेषः लवित्रम्, लूत्वा, लूनः, लावकः।

**(१४८४) स्तृञ्—आच्छादने।** (वस्त्रादि से आच्छादित करना, वस्त्र ओढाना)। सकर्म.। सेट्। उभय.। प्वादिः ल्वादिश्च।

१ **प्र.** स्तृणाति-णीते। २ **प्र.** तस्तार[11] तस्तरतुः[12] तस्तरुः[13]। **म.** तस्तरिथ तस्तरथुः तस्तर। **उ.** तस्तार-तस्तर तस्तरिव तस्तरिम। **आत्मने.—प्र.** तस्तरे तस्तराते तस्तरिरे। **म.** तस्तरिषे तस्तराथे तस्तरिध्वे। **उ.** तस्तरे तस्तरिवहे तस्तरिमहे। ३ स्तरिता[14] स्तरीता। ४ स्तरिष्यति-ते-स्तरीष्यति-ते। ५ स्तृणातु-स्तृणीयात्। **म.** स्तृणीहि-स्तृणीयात्।

**उ.** स्तृणानि- स्तृणै। ६ अस्तृणात्-अस्तृणीत। ७ स्तृणीयात्-स्तृणीत। ८ स्तीर्यात्[15]-स्तरिषीष्ट-स्तीर्षीष्ट। ९ अस्तारीत्-अस्तारिष्टाम्[16] अस्तारिषुः। **आत्म.—** अस्तीर्ष्ट[17] अस्तरीष्ट-अस्तरिष्ट। १० अस्तरिष्यत्-अस्तरीष्यत्-त।

**कर्मणि**—स्तीर्यते। **णिचि**—स्तारयति-ते। ९. अतिस्तरत्। **सनि**—तिस्तीर्षति-ते-तिस्तरीषति-ते-तिस्तरिषति-ते। **यङि**—तेस्तीर्यते। **यङ्लुकि**—तास्तरीति-तास्तर्ति। **कृत्सु**—स्तरितव्यः-स्तरीतव्यः, स्तरणीयः, स्तार्यः, स्तृणन्-स्तृणती, स्तृणानः, स्तरितुम्-स्तरीतुम्,

१ 'निरभ्यो—पूल्वोः' (३-३-२८) इति निष्पूर्वकादस्मात् घञ् प्रत्ययः। निष्पावः = धान्यविशेषः।

२ 'परिमाणाख्यायां सर्वेभ्यः' (३-३-२०) इति घञ्। निष्पावः = सूर्यः। निष्पूयते = शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः सः निष्पावः। शूर्पस्यापि प्राक्काले परिमाणवाचकत्वात् प्रत्ययोत्पत्तिरिति ज्ञेयम्।

३ 'उदि श्रयति यौतिपूद्रुवः' (३-३-४९) इति भावे घञ्।

४ 'हलसूकरयोः पुवः' (३-२-१८३) इति करणे ष्ट्रन् प्रत्यये रूपम्।

५ 'पुवः संज्ञायाम्' (३-२-१८५) इति करणे इत्र प्रत्ययः। पवित्रम् = दर्भः चक्रं च।

६ 'इणजादिभ्यः' (वा. ३-३-९४) इति भावे इण् प्रत्ययः। बाहुलकात् वृद्धि र्न। गुणस्तु भवत्येव। पविः = वज्रम्। अजादिः = अजधातुप्रकारः।

७ 'छापूञ्—' इति गक् प्रत्ययः। पूगः = संघातः।

८ औणादिके तन् प्रत्यये रूपम्। पुनाति इति पोतः = अग्निः। पुत्रः।

९ 'पूञो यण्णुट् ह्रस्वश्च' इति यत्प्रत्यये णुडागमे, उपधाया ह्रस्वे च रूपमेवम्। ह्रस्वविधानात् गुणो न।

१० 'पुञों ह्रस्वश्च इति त्रप्रत्यये। धातो ह्रस्वे च रूपमेवम्।

११ 'अचो ञ्णिति' इति वृद्धिः।

१२ 'ऋच्छत्यृताम्' इति गुणः।

१३ कम्बलान्परितस्तरुः। भट्टिः १४/११।

१४ 'वृतो वा' इति दीर्घविकल्प।

१५ 'ऋत इद्धातो इति इत्वे', हलि च' इति दीर्घे च रूपम्। आत्मनेपदे तु' लिङ्सिचोरात्मनेपदेषु' इति इड्विकल्पः। इडभावपक्षे— 'उश्च इति कित्वाद्गुणनिषेधः।

१६ 'वृतो वा' इति प्राप्तो दीर्घविकल्पः 'सिचि च परस्मैपदेषु' इत्यनेन निषिद्ध्यते।

१७ 'लिङ्सिचो' रिति इडभावपक्षे, 'ऋत इद्धातोः' इति इत्वे, 'हलि चे' ति दीर्घः।

स्तरणम्, स्तीर्त्वा, विस्तीर्य, स्तॄः = धूमः, स्तारकः-रिका, स्तरीता-स्तरिता-त्री, स्तारयिता-त्री, मणिप्रस्तारः,[1] (हविषाम्) प्रस्तरः, पटस्य विस्तारः[2] शब्द विषये तु विस्तरः विष्टारः,[3] विष्टरः[4], अवस्तारः[5], आस्तीर्णः, स्तीर्णिः[6] तरी-मेघः, शय्या च, स्तरीमास्तीर्य।

**( १४८५ ) कॄञ्—हिंसायाम्**। (हिंसा करना, मार डालना)। सकर्म.। सेट्। उभय.। प्वादिः ल्वादिश्च। कृणाति-कृणीते। चकार-चकरे। चकरतुः-चकराते। इत्यादि 'स्तृणाति' (१४८४) वत्।

**( १४८६ ) वॄञ्—वरणे**। (पसन्द करना, स्वीकार करना)। सकर्म.। सेट्। उभय.। प्वादिः ल्वदिश्च।

१ वृणाति-वृणीते। २ ववार-ववरे। ३ वरिता-वरीता। **म.** वरितासि-वरीतासि-ते। ४ वरिष्यति-वरीष्यति-ते। ५ वृणातु-वृणीताम्। ६ अवृणात्-अवृणीत। ७ वृणीयात्- वृणीत। ८ वूर्यात्-वरिषीष्ट-वूर्षीष्टा। ९ अवारीत्-अवरिष्ट-अवरीष्ट-अवूर्ष्ट। १० अवरिष्यत्-त-अवरीष्यत्-त।

**कर्मणि**—वूर्यते। **णिचि**—वारयति-ते। ९. अवीवरत्-त। **सनि**—वुवूर्षति-ते। विवरिषति-ते। विवरीषति-ते। **यङि**—वोवूर्यते। **यङ्लुकि**—वावरीति-वावर्ति। **कृत्सु**—वरि (री) तव्यः वरणीयः, वर्यः, वूर्णः, वृणन्, वृणती, वृणानः। वूर्त्वा, आवूर्य।

**( १४८७ ) धूञ्—कम्पने**। (कम्पित कनरा, हिलाना, क्षोभित करना) सक.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | धुनाति | धुनीतः | धुनन्ति | प्र. |
| | धुनासि | धुनीथः | धुनीथ | म. |
| | धुनामि | धुनीवः | धुनीमः | उ. |
| लिट् | दुधाव | दुधुवतुः | दुधुवुः | प्र. |
| | दुधविथ-दुधोथ | दुधुवथुः | दुधुव | म. |
| | दुधाव-दुधुव | दुधुविथ | दुधुविम | उ. |
| लुट् | धविता | धवितारौ | धवितारः | प्र. |
| | धवितासि | धवितास्थः | धवितास्थ | म. |
| | धवितास्मि | धवितास्वः | धवितास्मः | उ. |

पक्षे—धोता धोतारौ धोतारः इत्यादि।

---

१ 'प्रे स्त्रोऽयज्ञे' (३-३-३२) इति प्रशब्द उपपदे यज्ञभिन्नविषये घञ्। यज्ञ विषये हविषाम् प्रस्तारः इति अप् प्रत्यय एव।

२ 'प्रथने वावशब्दे' (३-३-३३) इति वि इत्युपसर्गे उपपदे प्रथने गम्यमाने घञ् प्रत्ययः। शब्दविषये विस्तारः।

३ 'छन्दोनाम्नि च' (३-३-३४) इति छन्दो विषये नाम्नि घञ् प्रत्यये, छन्दोनाम्नि च' (८-३-९४) इति षत्वे च रूपमेवम्।

४ विस्तीर्यते इति विष्टरः। विपूर्वकात् स्तृधातोः 'ऋदोरप्' (३-३-५७) इत्यप् प्रत्यये 'वृक्षासनयोर्विष्टरः' (८-३-९३) इति षत्वे च रूपमेवम्। विष्टरः = आसनम्, अश्वत्थवृक्षश्च।

५ 'अवेतृस्त्रोर्घञ्। (३-३-१२०) इति करणाधिकरणयोर्घञ्।

६ 'ऋल्वादिभ्यः क्तिन्–' (३-३-९४) इति क्तिनस्तकारस्य नकारः। णत्वञ्च।

| | | | | |
|---|---|---|---|---|
| लृट् | धविष्यति | धविष्यतः | धविष्यन्ति | प्र. |
| | धविष्यसि | धविष्यथः | धविष्यथ | म. |
| | धविष्यामि | धविष्यावः | धविष्यामः | उ. |

पक्षे—धोष्यति धोष्यतः धोष्यन्ति इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | धुनातु-धुनीतात् | धुनीताम् | धुनन्तु | प्र. |
| | धुनीहि | धुनीतम् | धुनीत | म. |
| | धुनानि | धुनाव | धुनाव | उ. |
| लङ् | अधुनात् | अधुनीताम् | अधुनन् | प्र. |
| | अधुनाः | अधुनीतम् | अधुनीत | म. |
| | अधुनाम् | अधुनीव | अधुनीम | उ. |
| वि. लि. | धुनीयात् | धुनीयाताम् | धुनीयुः | प्र. |
| | धुनीयाः | धुनीयातम् | धुनीयात | म. |
| | धुनीयाम् | धुनीयाव | धुनीयाम | उ. |
| आ. लि. | धूयात् | धूयास्ताम् | धूयासुः | प्र. |
| | धूयाः | धूयास्तम् | धूयास्त | म. |
| | धूयासम् | धूयास्व | धूयास्म | उ. |
| लुङ् | अधावीत् | अधाविष्टाम् | अधाविष्ट | प्र. |
| | अधावीः | अधाविष्टम् | अधाविष्ट | म. |
| | अधाविषम् | अधाविष्व | अधाविष्म | उ. |
| लृङ् | अधाविष्यत् | अधाविष्यताम् | अधाविष्यन् | प्र. |
| | अधाविष्यः | अधाविष्यतम् | अधाविष्यत | म. |
| | अधविष्यम् | अधविष्याव | अधविष्याम | उ. |

पक्षे—अधोष्यत् अधोष्यताम् अधोष्यन् प्र.

आत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट् | धुनीते | धुनाते | धुनते | प्र. |
| | धुनीषे | धुनाथे | धुनीध्वे | म. |
| | धुने | धुनीवहे | धुनीमहे | उ. |
| लिट् | दुधुवे | दुधुवाते | दुधुविरे | प्र. |
| | दिधुविषे | दुधुवाथे | दुधुविध्वे-ढ्वे | म. |
| | दुधुवे | दुधुविवहे | दुधुवमहे | उ. |
| लुट् | धविता | धवितारौ | धवितारः | प्र. |
| | धवितासे | धवितासाथे | धविताध्वे | म. |
| | धविताहे | धवितास्वहे | धवितास्महे | उ. |

पक्षे—धोता धोतारौ धोतारः इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृट् | धविष्यते | धविष्येते | धविष्यन्ते | प्र. |
| | धविष्यसे | धविष्येथे | धविष्यध्वे | म. |
| | धविष्यसे | धविष्यावहे | धविष्यामहे | उ. |

पक्षे—धोष्यते धोष्येते धोष्यन्ते इत्यादि।

| | | | | |
|---|---|---|---|---|
| लोट् | धुनीताम् | धुनाताम् | धुनताम् | प्र. |
| | धुनीष्व | धुनाथाम् | धुनीध्वम् | म. |
| | धुनै | धुनावहै | धुनामहै | उ. |
| लङ् | अधुनीत | अधुनाताम् | अधुनत | प्र. |
| | अधुनीथाः | अधुनाथाम् | अधुनीध्वम् | म. |
| | अधुनि | अधुनीवहि | अधुनीमहि | उ. |
| वि. लि. | धुनीत | धुनीयाताम् | धुनीरन् | प्र. |
| | धुनीथाः | धुनीयाथाम् | धुनीध्वम् | म. |
| | धुनीय | धुनीवहि | धुनीमहि | उ. |
| आ. लि. | धविषीष्ट | धविषीयास्ताम् | धविषीरन् | प्र. |
| | धविषीष्ठाः | धविषीयास्थाम् | धविषीढ्वम्-ध्वम् | म. |
| | धविषीय | धविषीवहि | धविषीमहि | उ. |

पक्षे—धोषीष्ट धोषीयास्ताम् धोषीरन्

| | | | | |
|---|---|---|---|---|
| लुङ् | अधविष्ट | अधविषाताम् | अधविषत | प्र. |
| | अधविष्ठाः | अधविषाथाम् | अधविषिध्वम्-ढ्वम् | म. |
| | अधविषि | अधविष्वहि | अधविष्महि | उ. |

पक्षे—अधोष्ट अधोषाताम् अधोषत इत्यादि।

| | | | | |
|---|---|---|---|---|
| लृङ् | अधविष्यत | अधविष्येताम् | अधविष्यन्त | प्र. |
| | अधविष्यथाः | अधविष्येथाम् | अधविष्यध्वम् | म. |
| | अधविष्ये | अधविष्यावहि | अविष्यामहि | उ. |

पक्षे—अधोष्यत अधोष्येताम् अधोष्यन्त इत्यादि।

**कर्मणि**—धूयते। **णिचि**—धूनयति-ते। ९ अदुधुनत्-त। **सनि**—दुधूषति-ते। **यङि**—दोधूयते। **यङ्लुकि**—दोधोति-दोधवीति। **कृत्सु**—धवितव्यम्-धोतव्यम्, धवनीयम्, धव्यम्-धाव्यम्, धुनः, धुनन्,[१] धुनती, धुनानः, धवितुम्-धोतुम्, धवन्, धूत्वा, विधूय, धावकः-विका, धूनकः-निका, धूनिः[२]।

**(१४८८) शॄ—हिंसायाम्**। (हिंसा करना, मार डालना)। सकर्म.। सेट्। परस्मै.। प्वादिः ल्वादिश्च।

१ **प्र.** श्रृणाति श्रृणीतः। **म.** श्रृणासि। **उ.** श्रृणामि। २ **प्र.** शशार शश्रतुः[३]-

१ शतरि 'क्र्यादिभ्यः–' (३-१-८१) इति शना प्रत्यये 'प्वादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वे च रूपम्। एवं शानजन्तेऽपि प्रक्रिया ज्ञेया।

२ 'ॠल्वादिभ्यः क्तिन् निष्ठावद् वक्तव्यः' (वा. ८-२-४४) इति क्तिनस्तकारस्य नकारः।

३ 'असंयोगात्–' इति अपितो लिटः कित्वे श्रृदृपां ह्रस्वे वा' इति ह्रस्वपक्षे यणादेशः। 'अन्यदा ऋच्छत्यृताम्' इति गुणः।

शशरतुः शश्रुः-शशरुः। म. शशरिथ शशरथुः-शश्रथुः शशर-शश्र। उ. शशार-शशर-शशरिव[1]-शश्रिव शशरिम-शश्रिम। ३ शरिता-शरीता। ४ शरिष्यति-शरीष्यति। ५ श्रृणातु। म. श्रृणीहि। उ. श्रृणानि। ६ अश्रृणात् अश्रृणीताम्। म. अश्रृणाः। उ. अश्रृणाम्। ७ श्रृणीयात् श्रृणीयाताम्। ८ शीर्यात् शीर्यास्ताम्। ९ अशारीत् अशारिष्टाम्। १० अशरिष्यत्-अशरीष्यत्।

**कर्मणि**—शीर्यते। **णिचि**—शारयति-ते। ९ अशीशरत्। **सनि**—शिशरिषति-शिशरीषति-शिशीर्षति। **यङि**—शेशीर्यते। **यङ्लुकि**—शाशरीति शाशर्ति। **कृत्सु**—शरितव्यः-शरीतव्यः, शरणीयः, शीर्यः, शीर्णः, श्रृणन्, श्रृणती, शरितुम्-शरीतनम्, शरणम्, शीर्त्वा, विशीर्य, शारो = वायुः वर्णश्च, शशरुः, शरीरम्, शरत्।

**(१४८९) पॄ—पालनपूरणयोः**। (पालन करना, पूर्ति करना, पूर्ण करना, भरना)। सकर्म.। सेट्। परस्मै.। ल्वादिश्च।

१ **प्र.** पृणाति पृणीतः पृणन्ति। **म.** पृणासि। **उ.** पृणामि। २ **प्र.** पपार पपरतुः पप्रतुः। **म.** पपरिथ। **उ.** पपरिव पप्रिव। ३ परिता-परीता। ४ परिष्यति-परीष्यति। ५ **प्र.** पृणातु। **म.** पृणीहि। **उ.** पृणानि। ६ अपृणात्। ७ पृणीयात् पृणीयाताम्। ८ पूर्यात् पूर्यास्ताम्। ९ अपारीत् अपारिष्टाम्। १० अपरिष्यत्-अपरीष्यत्।

**कर्मणि**—पूर्यते। **णिचि**—पारयति-ते। ९ अपीपरत्-त। **सनि**—पिपरिषति-पिपरीषति-पुपूर्षति। **यङि**—पोपूर्यते। **यङ्लुकि**—पापरीति-पपार्ति। **कृत्सु**—परितव्यम्-परीतव्यम्, परणीयम्, पार्यम्, पूर्णः, पृणन्, पृणती, परितुम्-परीतुम्, परणम्, पूर्त्वा, परिपूर्य।

**(१४९०) वॄ—वरणे**। (वरण करना, पसन्द करना, आश्रय देना, सम्भालना)। सकर्म.। सेट्। परस्मै.। वृणाति। ववारेत्यादि 'वृञ्-वरणे धातुवत्।

**(१४९१) भॄ—भर्त्सने भरणे च**। (घुड़कना, तिरस्कार करना, संरक्षण करना, पालन करना, धारण करना)। सकर्म॥ सेट्। परस्मै.। ऋकारान्तः। प्वादिः ल्वादिश्च. भृणाति। इत्यादि परस्मैपदि– 'स्तृणाति' (१३८४) वत्।

**(१४९२) मॄ—हिंसायाम्**। (मार डालना या दुःख देना)। सकर्म.। सेट्। परस्मै.। प्वादिः ल्वादिश्च। मृणाति। ममार ममरतुः। मूर्यात् 'मृणाति' (१३८९) वत्। मारकः-रिका, मरिता-त्री, मारयिता-त्री, मृणन्[2]-मृणती, मूर्णम्[3]-मूर्णः-मूर्णवान्, मूर्णिः[4]।

---

१ 'असंयोगात्–' इति कित्वेन श्र्युकः किती–' ति प्राप्तस्य इण्णिषेधस्य क्रादिनियमेन बाधे नित्यमिट्।
२ शतरि क्र्यादित्वात् श्ना प्रत्यये, 'प्वादीनां ह्रस्व' (७-३-८०) इति ह्रस्वे, 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे णत्वे च रूपमेवम्।
३ धातोरुत्वे रपरत्वे 'ल्वादिभ्यः' (८-२-४४) इति निष्ठानत्वे, दीर्घे णत्वे च रूपमेवम्।
४ 'ऋल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. ८-२-४४) इति क्तिनस्तकारस्य नत्वे उत्वादिके च रूपमेवम्।

**(१४९३) दॄ—विदारणे।** (चीरना, फाड़ना, टुकड़े-टुकड़े करना)। सकर्म.। सेट्। परस्मै.। प्वादिः।

१ दृणाति। २ **प्र.** ददार दद्रतुः-ददरतुः दद्रुः-ददरुः। **म.** ददरिथ दद्रथुः-ददरथुः। दद्र-ददर। **उ.** ददार-ददर दद्रिव-ददरिव। दद्रिम-ददरिम। ३ दरिता-दरीता। ४ दरिष्यति। ५ दृणातु। ६ अदृणात्। ७ दृणीयात्। ९ अदारीत्। १० अदरिष्यत् अदरीष्यत्। इत्यादि 'श्रृणाति' (१४८८) वत्। भयेर्थे दरयति। अन्यत्र दारयति।

**कृत्सु**—पुरन्दरः, भगन्दरो: रोगः। दाराः, दृषद्। दारकः[१]-रिका, दरिता[२]-दरीता-त्री, दारयिता-दरयिता-त्री, दृणन्[३]-ती, दारयन्-दरयन्-न्ती, दरिष्यन्-दरीष्यन्-दारयिषन्यन्-दरयिष्यन-न्ती-ती, व्यतिदृणानः,[४] दारयमाणः-दरयमाणः, व्यतिदरिष्यमाणः-व्यतिदरीष्यमाणः, प्रदीः[५]-प्रदिरौ-प्रदिरः, ददृत,[६] दीर्णम्[७]-दीर्णः-दीर्णवान्, दारितः-दरितः, दरः[८]-दरी, दाराः,[९] पुरन्दरः,[१०] भगन्दरः[११], विदारी, दरितव्यम्, दरीतव्यम्, दारयितव्यम्, दरयितव्यम्, दरणीयम्-दारणीयम्,-दार्यम्, दर्यम्, ईषद्दरःदुर्दरः-सुदरः, दीर्यमाणः, दार्यमाणः-दर्यमाणः, दरितुम्-दरीतुम्, दारयितुम्, दरयितुम्, दीर्णिः,[१२] दारणा-दरणा, दरणम्, दारणम्-दरणम्, दीर्त्वा,[१३] दारयित्वा-दरयित्वा, विदीर्य, विदार्य[१४]-विदरय्य, उरोविदारं[१५] दृतिः,[१६] दारुः,[१७]

---

१ 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा. ७-१-१०२) इति वचनात् इत्वं बाधित्वाऽत्र वृद्धिः। एवं गुणवृद्धियोग्यस्थलेषु ज्ञेयम्।

२ तृचि, इटो दीर्घक्किल्पाद्रूपद्वयम्। एवं तव्यंदादिष्वपि ज्ञेयम्।

३ शतरि, 'क्र्यादिभ्यः–' (३-१-८१) इति श्नाप्रत्यये, 'प्वादीनां ह्रस्वः' (७-३-८०) इत्यङ्गस्य ह्रस्वे, 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे ण्त्वे च रूपम्। एवं शानजन्तेऽपि प्रक्रिया ज्ञेया।

४ 'कर्तरि कर्मव्यतिहारे च' (१-३-१४) इति शानच्।

५ क्विपि, इत्वे रपरत्वे च, 'र्वोरुपधाया दीर्घ इकः' (८-२-७६) इति दीर्घे विसर्गे च रूपम्।

६ भयार्थादस्मात्, तच्छीलादिषु कर्तृषु 'दृणाते र्ह्रस्वश्च' (वा. ३-२-१७८) इति क्विपि, अङ्गस्य द्वित्वे ह्रस्वे च 'ह्रस्वस्य पिति कृति–' (६-१-७१) इति तुकि च रूपम्।

७ निष्ठायाम्, इत्वे रपरत्वे, दीर्घे च 'रदाभ्याम्' (८-२-४२) इति निष्ठानत्वे णत्वे च रूपम्।

८ पचादिषु पाठात् अच्। स्त्रियाम् गौरादिपाठात् (४-१-४१) ङीष् इति माधवः। पचादिषु दरट् इति पाठात् टित्वेन 'टिड्ढा–' (४-१-१५) इति ङीप् इति क्षीरस्वामी।

९ 'दारजारौ कर्तरि णिलुक् च' (वा. ३-३-२०) इति कर्तरि घञ्। दारयन्ति इति द्वाराः = पत्नी। बहुवचनं तु लोकाद् भवति।

१० 'पूः सर्वयोर्दारिसहोः' (३-२-४१) इति ण्यन्तात् खच् 'खित्यनव्ययस्य (६-३-६६) इति वर्तमाने, 'अरुर्द्विषदजन्तस्य–' (६-३-६७) इति मुम्। 'खचि ह्रस्वः' (६-४-९४) इति वा, 'मितां ह्रस्वः' (६-४-९२) इति वा ह्रस्वः। 'वार्चयमपुरन्दरौ च' (६-३-६९) इत्यनेन निपातनादमन्तत्वम्। पुरं दारयतीति पुरन्दरः = इन्द्रः।

११ भगे च दारेति वक्तव्यम् (वा. ३-२-४१) इति खचि, मुमि च रूपम्। भगन्दरः— व्याधिविशेषः।

१२ 'ऋल्वादिभ्यः–' (वा. ८-२-४२) इति क्तिनस्तकारस्य नत्वे णत्वे च रूपम्।

१३ 'श्र्युकः क्किति' (७-२-११) इति क्त्वाया इण्निषेधः।

१४ भवार्थे ण्यन्तात् ल्यपि, उपधाह्रस्वे, 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।

१५ 'परिक्लेश्यमाने च' (३-४-५५) इति णमुल्।

१६ 'दृणाते क्रिद्घ्रस्वश्च' इति ति प्रत्यये रूपम्। ह्रस्वश्च। दृतिः = भस्त्रा।

१७ 'दृसनिजनि–' इति ञुण् प्रत्यये वृद्धौ च रूपम् दारुः = काष्ठम्।

दर्दरीकम्,[1] दारुणः,[2] दरत्,[3] दृषत्,[4] दर्दुरः,[5] उदरम्[6]।

**(१४९४) जॄ—वयोहानौ**। (जीर्ण होना, वृद्ध होना)। अकर्म.। सेट्। परस्मै.। जृणाति। इत्यादि 'दृणाति' (१४९३) वत्।

**कृत्सु**—जरीता[7]-जरिता-त्री, जारयिता-त्री, जारकः-रिका, जृणन्[8]-ती, जारयन्-न्ती, जरिष्यन्-जरीष्यन्-न्ती-ती, जारयिष्यन्-न्ती-ती, जारयमाणः, जारयिष्यमाणः, जीः,[9] जीरौ, जिरः, जीर्णम्[10]-जीर्णः-जीर्णवान्, जारिसः, जरः, जजीर्वान्[11]-जेरिवान्, जरीतव्यम्-जरितव्यम्, जारयितव्यम्, जरणीयम्, जारणीयम्, जार्यम्, जीर्यमाणः,[12] जार्यमाणः, जारः, जरीतुम्-जरितुम्, जारयितुम्, जीर्णिः,[13] जारणा, जरणम्, जारणम्, जरीत्वा[14]-जरित्वा, जारयित्वा, प्रजीर्य, प्रजार्य।

**(१४९५) नॄ—नये**। (ले जाना)। सकर्म.। सेट्। परस्मै.। प्वादिः ल्वादिश्च। नृणाति। ननार। 'दृणाति' (१४९३) वत्। **णिचि**—नरयति-ते। नयभिन्नेऽर्थे नारयति। नीर्णः।

**(१४९६) कॄ—हिंसायाम्**। (मारना, मार डालना, दुःख देना)। सकर्म.। सेट्। परस्मै.। परस्मैपद 'कृणाति' (१८८५) वत्। कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थमिह पुनः पाठः।

**(१४९७) ॠ—गतौ**। (जाना)। सकर्म.। सेट्। परस्मै.। प्वादिः।

१ ऋणति। २ अराञ्चकार। ३ अरिता-अरीता। ४ अरिष्यति-अरीष्यति। ५ ऋणातु। ६ आर्णात्। ७ ऋणीयात्। ८ ईर्यात्। ९ आरीत्।

**कर्मणि**—ईर्यते, प्रेर्यते। **कृत्सु**—अरीतव्यम्-अरितव्यम्, अरणीयम्, अर्यम्, आर्यम्, ईषदरः-दुररः-स्वरः, ईर्यमाणः, अरः, आरः, अरीतुम्-अरितुम्, ईर्णिः, आरणा, अरणम्, आरणम्,

---

१ 'फर्फरीकादयश्च' इत्यत्र पाठात् साधुः। दर्दरीकम् = वाद्यविशेषः।

२ 'कॄवृदारिभ्य उनन्' इत्युनन् प्रत्ययः। दारुणः = घोरः।

३ 'श्रृदृभसोऽदिः' इत्यादिप्रत्ययः। दरत् = भीरुः।

४ 'दृणातेः पुग्घ्रस्वश्च' इत्यदिप्रत्यये षुगागमह्रस्वौ भवतः। दृषत् = शिला।

५ 'मुकुरदर्दुरौ' इत्युसन् प्रत्ययो दुगागमः गुणश्च निपात्यते। दुर्दुरः = मण्डुकः।

६ 'उदि दृणातेरलचौ पूर्वपदान्त्यलोपश्च। इति अल् अच् व प्रत्ययः। उदरम् = जठरम्।

७ 'वृतो वा' (७-२-३८) इति इटो दीर्घविकल्पः।

८ 'क्र्यादिभ्यः श्ना' (३-१-८१) इति श्ना विकरणप्रत्ययः। 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपः 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. ८-४-१) इति णत्वे, 'प्वादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वे च रूपम्।

९ क्विपि, इत्वे रपरत्वे, 'र्वोरुपधायां दीर्घ इकः' ८-२-७६) इति दीर्घः।

१० श्र्युकः क्किति (७-२-११) इति इण्णिषेधः। इत्वरपरत्वयोः, रदाभ्यां निष्ठतो नः पूर्वस्य च दः' (८-२-४२) इति निष्ठानत्वे, णत्वे च रूपम्।

११ 'छान्दसः क्वसुः क्वचिद् भाषायां भवति।' इति न्यायेन लिटः क्वस्वादेशे द्वित्वे 'वाजॄभ्रमुनसाम्' (६-४-१२४) इत्येत्वाभ्यासलोपविकल्पे रूपद्वयं भवति।

१२ भावे यकि इत्वरपरत्वयोः, 'हलिच' (८-२-७७) इति दीर्घे णत्वे च रूपम्।

१३ ॠल्वादिभ्यः क्तिन् निष्ठावद्वाच्यः' (वा. ४-२-४२) इति क्तिनस्तकारस्य नत्वे णत्वे च रूपम्।

१४ 'श्र्युकः क्किति: इति इण्णिषेधे प्राप्ते, जॄव्रश्च्वोः क्त्वि' (७-२-५५) इति नित्यमिट्। दीर्घविकल्पः।

ईर्त्वा, आरयित्वा, समीर्य, समार्य, आरकः-रिका, अरीता-अरिता, ऋणन्-ती, आरयन्-न्ती, अरीष्यन्-अरिष्यन्-न्ती, आरयमाणः, आरयिष्यमाणः, समीर्णम्-र्णः-र्णवान्, अरितम्-तः, अरः, आरः।

**(१४९८) गॄ—शब्दे**। (शब्द करना)। अकर्म.। सेट्। परस्मै.। प्वादिः ल्वादिश्च। गृणति। जगार इत्यादि 'कृणाति' (१४८६) वत्। गृणातीति गुरुः।

**(१४९९) ज्या—वयोहानौ**। (वृद्ध होना, जीर्ण होना, पुराना होना)। अकर्म.। अनिट्। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | जिनाति | जिनीतः | जिनन्ति | प्र. |
| | जिनासि | जिनीथः | जिनीथ | म. |
| | जिनामि | जिनीवः | जिनीमः | उ. |
| लिट् | जिज्यौ | जिज्यतुः | जिज्युः | प्र. |
| | जिज्यिथ-जिज्याथ | जिज्यथुः | जिज्य | म. |
| | जिज्यौ | जिज्यिव | जिज्यिम | उ. |
| लुट् | ज्याता | ज्यातारौ | ज्यातारः | प्र. |
| | ज्यातासि | ज्यातास्थः | ज्यातास्थ | म. |
| | ज्यातास्मि | ज्यातास्वः | ज्यातास्मः | उ. |
| लृट् | ज्यास्यति | ज्यास्यतः | ज्यास्यन्ति | प्र. |
| | ज्यास्यसि | ज्यास्यथः | ज्यास्यथ | म. |
| | ज्यास्यामि | ज्यास्यावः | ज्यास्यामः | उ. |
| लोट् | जिनातु-जिनीतात् | जिनीताम् | जिनन्तु | प्र. |
| | जिनीहि-जिनीतात् | जिनीतम् | जिनीत | म. |
| | जिनानि | जिनाव | जिनाम | उ. |
| लङ् | अजिनात् | अजिनीताम् | अजिनन् | प्र. |
| | अजिनाः | अजिनीतम् | अजिनीत | म. |
| | अजिनाम् | अजिनीव | अजिनीम | उ. |
| वि. लि. | जिनीयात् | जिनीयाताम् | जिनीयुः | प्र. |
| | जिनीयाः | जिनीयातम् | जिनीयात | म. |
| | जिनीयाम् | जिनीयाव | जिनीयाम | उ. |
| आ. लि. | जीयात् | जीयास्ताम् | जीयासुः | प्र. |
| | जीयाः | जीयास्तम् | जीयास्त | म. |
| | जीयासम् | जीयास्व | जीयास्म | उ. |
| लुङ् | अज्यासीत् | अज्यासिष्टाम् | अज्यासिषुः | प्र. |
| | अज्यासीः | अज्यासिष्टम् | अज्यासिष्ट | म. |
| | अज्यासिषम् | अज्यासिष्व | अज्यासिष्म | उ. |

| | | | | |
|---|---|---|---|---|
| लृङ् | अज्यास्यत् | अज्यास्यताम् | अज्यास्यन् | प्र. |
| | अज्यास्यः | अज्यास्यतम् | अज्यासत | म. |
| | अज्यास्यम् | अज्यास्याव | अज्यास्याम | उ. |

**कर्मणि**—जीयते। **णिचि**—ज्यायति-ते। **सनि**—जिज्यासति। **यङि**—जेनीयते। **यङ्लुकि**—ज्यायति-ज्यायेति। **कृत्सु**—ज्यातव्यम्, ज्यानीयम्, ज्येयम्, जीनः, जिनम्, जिनती, ज्यातुम्, ज्यानम्, जीत्वा, प्रज्याय, ज्यश्च इति सम्प्रसारणाभावः, ज्यानिः।

**( १५०० ) री—गतिरेषणयोः**। शेषणं = वृक शब्दः, हिंसा च। (जाना, अरण्य शिशु के समान पुकारना, पीडा करना, दुःख देना, मारना)। गतौ सकर्मः। अनिट्। परस्मै.। ईकारान्तः। प्वादिः ल्वादिश्च।

१ रीणाति। २ रिराय रिर्यतुः। **म.** रिरयिव-रिरेथ। ३ रेता। ४ रेष्यति। ५ रिणातु। **म.** रिणीहि। ८ रीयात्। ९ अरैषीत्। **णिचि**—रेपयति-ते। रीणः।

**( १५०१ ) ली—श्लेषणे**। (युक्त होना, प्राप्त होना, मिलना)। सकर्म.। अनिट्। पर.। ईकारान्तः। प्वादिः ल्वादिश्च। लिनाति। 'व्रीणाति' (१५०४) वत्। लीनः = लयं प्राप्तः। एरच्। लयः। विभाषा लीयतेः। लेता-लाता। प्रलीयते-विलीयते = नश्यति।

**( १५०२ ) ब्ली—वरणे**। (पसन्द करना, ढूढ निकालना, बीनना। आच्छादन करना)। सकर्म.। अनिट्। परस्मै.। ईकारान्तः। प्लादिः ल्वादिश्च। ब्लिनाति ब्लीनाति। 'व्रीणाति' (१५०४) वत्। **णिचि**—ब्लेपयति।

**( १५०३ ) प्ली—गतौ**। (जाना)। सकर्म.। अनिट्। परस्मै.। प्वादिः ल्वादिश्च। प्लिनाति। 'व्रीणाति' (१५०४) वत्। प्लीनः।

**( १५०४ ) व्री—वरणे**। (वरण करना, ढूढकर निकालना, पसन्द करना, बीनना, आच्छादन करना)। सकर्म.। अनि.। परस्मै.।

| | | | | |
|---|---|---|---|---|
| लट् | व्रीणाति[१] | व्रीणीतः | व्रीणन्ति | प्र. |
| | व्रीणासि | व्रीणीथः | व्रीणीथ | म. |
| | व्रीणामि | व्रीणीवः | व्रीणीमः | उ. |
| लिट् | विव्राय | विव्रियतुः | विव्रियुः | प्र. |
| | विव्रयिथ-विव्रेथ | विव्रियथुः | विव्रिय | म. |
| | विव्राय-विव्रय | विव्रियिव | विव्रियिम | उ. |
| लुट् | व्रेता | व्रेतारौ | व्रेतारः | प्र. |
| | व्रेतासि | व्रेतास्थः | व्रेतास्थ | म. |
| | व्रेतास्मि | व्रेतास्वः | व्रेतास्मः | उ. |
| लृट् | व्रेष्यति | व्रेष्यतः | व्रेष्यन्ति | प्र. |
| | व्रेष्यसि | व्रेष्यथः | व्रेष्यथ | म. |
| | व्रेष्यामि | व्रेष्यावः | व्रेष्यामः | उ. |

१ अयमपि प्लादिरिति मते 'व्रिणाति' इत्यादि ह्रस्वमपि।

| | | | | |
|---|---|---|---|---|
| लोट् | व्रीणातु-व्रीणीतात् | व्रीणीताम् | व्रीणन्तु | प्र. |
| | व्रीणीहि-व्रीणीतात् | व्रीणीतम् | व्रीणीत | म. |
| | व्रीणानि | व्रीणाव | व्रीणाम | उ. |
| लङ् | अव्रीणात् | अव्रीणीताम् | अव्रीणन् | प्र. |
| | अव्रीणाः | अव्रीणीतम् | अव्रीणीत | म. |
| | अव्रीणाम् | अव्रीणीव | अव्रीणीम | उ. |
| वि. लि. | व्रीणीयात् | व्रीणीयाताम् | व्रीणीयुः | प्र. |
| | व्रीणीयाः | व्रीणीयातम् | व्रीणीयात | म. |
| | व्रीणीयाम् | व्रीणीयाव | व्रीणीयाम | उ. |
| आ. लि. | व्रीयात् | व्रीयास्ताम् | व्रीयासुः | प्र. |
| | व्रीयाः | व्रीयास्तम् | व्रीयास्त | म. |
| | व्रीयासम् | व्रीयास्व | व्रीयास्म | उ. |
| लुङ् | अव्रेषीत् | अव्रेष्टाम् | अव्रेषुः | प्र. |
| | अव्रेषीः | अव्रेष्टम् | अव्रेष्ट | म. |
| | अव्रेषम् | अव्रेष्म | अव्रेष्म | उ. |
| लृङ् | अव्रेष्यत् | अव्रेष्यताम् | अव्रेष्यन् | प्र. |
| | अव्रेष्यः | अव्रेष्यतम् | अव्रेष्यत | म. |
| | अव्रेष्यम् | अव्रेष्याव | अव्रेष्याम | उ. |

**कर्मणि**—व्रीयते। **णिचि**—व्राययति-ते। **सनि**—विव्रीयति। **यङि**—वेव्रीयते। **यङ्लुकि**—वेव्रयीति-वेव्रेति। **कृत्सु**—व्रायकः-यिका, व्रेता-त्री, व्राययिका-त्री, व्रिणन्-[१]न्ती, व्राययन्-न्ती, व्रेष्यन्-न्ती-ती, व्राययिष्यन्-न्ती-ती, व्रेतव्यम्, व्रयणीयम्, व्रीतः, व्रीणः, व्रीणम्, व्रेतुम्, व्रीत्वा, विव्रीय, व्रेपयति[२], व्रेयम्, व्रयणम्।

**(१५०५) भ्री—भये।** भरणे इत्येके। (डरना, धारण करना, आश्रय देना, पालन करना)। अकर्म.। अनिट्। परस्मै.। प्वादिः। भ्रिणाति। केषाञ्चिन् मतेऽस्य प्वादित्वं नास्ति। तदा भ्रीणाति। 'व्रीणाति' (१५०४) वत्।

**(१५०६) क्षीष्—हिंसायाम्।** (दुःख देना, पीडादेना, मार डालना)। सकर्म.। अनिट्। परस्मै.। प्वादिः। षित्। १ क्षिणाति। २ चिक्षाय। चिक्षियतुः। ३ क्षेता। ८ क्षीयात्। ९ अक्षैषीत्। प्वादित्वमस्य नास्तीति मते क्षीणातीत्यादि षित्वादङ् क्षियः। 'व्रीणाति' (१५०४) वत्।

---

१ शतरि, 'क्र्यादिभ्यः श्ना' (३-४-८१) इति श्नाविकरणप्रत्ययः। तस्य 'श्नाभ्यस्तयोरातः (६-४-११२) इत्याकारलोपे, 'प्लादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वे च रूपम्। ये तु प्लादित्वमस्य नाभ्युपगच्छन्ति, तेषां मते व्रीणन् इति दीर्घघटितत्वमेव रूपम्।

२ "स्वामिकाश्यपादयः 'अतिह्रीव्री–' (७-३-३६) इति षष्ठन्तो व्रेपयतीति पुकं प्रतिपन्नाः" इति धातुवृत्तिः। क्षीरतरङ्गिण्यां तु अत्र नैतादृशः पाठः उपलभ्यते इतः पूर्वं 'ब्ली वरणे' इत्यत्र धातौ। ब्लेपयतीति पुग् विशिष्टत्वेन उदाहियते।

**(१५०७) ज्ञा—अवबोधने**। (जानना, समझाना)। **अनु**—अनुमोदन करना, आज्ञा करना, स्वीकार करना। **अप**—छिपाना, आच्छादित करना, **अव**—अपमान करना, मान खण्डन करना, **उप**—प्रथम जानना, पहिले समझना। **परि**—जान लेना, परिज्ञान कर लेना। **सम्**—प्रतिज्ञा करना, वचन देना। उत्कण्ठा पूर्वक स्मरण करना, अच्छी तरह जानना। **प्रत्यभि**—पहिचानना। **वि**—स्पष्ट जानना। सकर्म.। अनिट्। परस्मै.। मित्।

| | | | | |
|---|---|---|---|---|
| लट् | जानाति[१] | जानीतः | जानन्ति | प्र. |
| | जानासि | जानीथः | जानीथ | म. |
| | जानामि | जानीवः | जानीमः | उ. |
| लिट् | जज्ञौ | जज्ञतुः | जज्ञुः | प्र. |
| | जज्ञिथ-जज्ञाथ | जज्ञथुः | जज्ञ | म. |
| | जज्ञौ | जज्ञिव | जज्ञिम | उ. |
| लुट् | ज्ञाता | ज्ञातारौ | ज्ञातारः | प्र. |
| | ज्ञातासि | ज्ञातास्थः | ज्ञातास्थ | म. |
| | ज्ञातास्मि | ज्ञातास्वः | ज्ञातास्मः | उ. |
| लृट् | ज्ञास्यति | ज्ञास्यतः | ज्ञास्यन्ति | प्र. |
| | ज्ञास्यसि | ज्ञास्यथः | ज्ञास्यथ | म. |
| | ज्ञास्यामि | ज्ञास्यावः | ज्ञास्यामः | उ. |
| लोट् | जानातु-जानीतात् | जानीताम् | जानन्तु | प्र. |
| | जानीहि-जानीतात् | जानीतम् | जानीत | म. |
| | जानानि | जानाव | जानाम | उ. |
| लङ् | अजानात् | अजानीताम् | अजानन् | प्र. |
| | अजानाः | अजानीतम् | अजानीत | म. |
| | अजानाम् | अजानीव | अजानीम | उ. |
| वि. लि. | जानीयात् | जानीयाताम् | जानीयुः | प्र. |
| | जानीयाः | जानीयातम् | जानीयात | म. |
| | जानीयाम् | जानीयाव | जानीयाम | उ. |
| आ. लि. | ज्ञायात् | ज्ञायास्ताम् | ज्ञायासुः | प्र. |
| | ज्ञायाः | ज्ञायास्तम् | ज्ञायासुः | म. |
| | ज्ञायासम् | ज्ञायास्व | ज्ञायास्म | उ. |
| लुङ् | अज्ञासीत् | अज्ञासिष्टाम् | अज्ञासिषुः | प्र. |
| | अज्ञासीः | अज्ञासिष्टम् | अज्ञासिष्ट | म. |
| | अज्ञासिषम् | अज्ञासिष्व | अज्ञासिष्म | उ. |
| लृङ् | अज्ञास्यत् | अज्ञास्यताम् | अज्ञास्यन् | प्र. |
| | अज्ञास्यः | अज्ञास्यतम् | अज्ञास्यत | म. |
| | अज्ञास्यम् | अज्ञास्याव | अज्ञास्याम | उ. |

१ ज्ञाजनोर्जा। इति जादेशे।

एवं– प्रतिजानाति । अनुजानाति । अवजानाति । प्रतिजानीते । संजानीते । अपजानीते ।

**कर्मणि**—ज्ञायते । २ जज्ञे । ९ अज्ञायि । **णिचि**—ज्ञापयति-ते-ज्ञपयति-ते । ९ अजिज्ञपत्-त । **सनि**—जिज्ञासते । **यङि**—जाज्ञायते । **यङ्लुकि**—जाज्ञाति-जाज्ञेति । **कृत्सु**—ज्ञायकः[१] यिका, ज्ञापकः[२]-ज्ञपकः[३] पिका, ज्ञाता-त्री, ज्ञापयिता-ज्ञपयिता-त्री, जिज्ञासकः[४]-सिका, जिज्ञासिता-त्री, जानन्[५]-ती (मातुः) सञ्जानन्[६] (पितुः) प्रतिजानन्, ज्ञापयन्-ज्ञपयन्-न्ती, जिज्ञयिष्यन्-ज्ञीप्सन्-न्ती, अनुजिज्ञासनम्[७]-न्ती, ज्ञास्यन्-न्ती-ती, ज्ञापयिष्यन्-न्ती-ती, ज्ञीप्सिष्यन्-न्ती-ती, अपजाननः[८], (सर्पिषो) जानानः[९], संजानानः,[१०] सहस्तं प्रतिजानानः, (धर्मं) जिज्ञासमानः,[११] सुज्ञाः,[१२] सुज्ञौ-सुज्ञः, ज्ञातम्-ज्ञातः-ज्ञातवान्, ज्ञापितः-ज्ञपितः-ज्ञप्तः,[१३] ज्ञः,[१४] अज्ञः, पथि-प्रज्ञः,[१५] प्राज्ञः,[१६] अभिज्ञः, नयज्ञः,[१७] मनसा ज्ञायी,[१८] नीतिज्ञः, ज्ञापः-ज्ञपः, जिज्ञयिषुः-ज्ञप्सुः, जिज्ञासुः,

१ 'आतो वुक् चिण्कृतोः' (७-३-३३) इति ण्वुलि परतो युगागमः । एवं घञि णवुल्यपि ज्ञेयम् ।
२ मारणाद्यर्थस्याप्रतीत्या अत्र मित्वं न, अतः, उपधाह्रस्वो न । एवं सर्वत्र ण्यन्ते मारणाद्यर्थाप्रतीतौ ज्ञेयम् ।
३ घटादौ 'मारणतोषणनिशामनेषु ज्ञा' इति जानातेः मित्संज्ञायाम्', आदन्तलक्षणे पुगागमे उपधाह्रस्वे रूपमेवम् । एवं ण्यन्ते ह्रस्वघटितरूपस्योपपत्तिः सर्वत्र ज्ञेया ।
४ अस्यधातोणर्यन्तात् सनि रूपाणि प्रदर्शितानि । तत्र हेतुस्तु 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुमरज्ञपिसनाम्' (७-२-४९) इति सूत्रेण ण्यन्तात् परस्य सन इडविकल्प एव इट्पक्षे जिज्ञपयिषकः इति रूपम् । एवं इट्पक्षे सर्वत्र ण्यन्तात् सनि रूपं ज्ञेयम् । इडभावपक्षे, 'आपज्ञपृधामीत्' (७-४-५५) इतीत्वे, 'अत्र लोपोऽभ्यासस्य' (७-४-५८) इति अभ्यासलोपे च रूपम् ज्ञीप्सक इत्यादि । एवं ण्यन्तात् सनि इडभावपक्षे रूपं ज्ञेयम् ।
५ 'क्र्यादिभ्यः–' (३-१-८१) इति श्ना विकरण प्रत्ययः । 'ज्ञाजनोर्जा' (७-३-७९) इति जादेशे, 'श्नाभ्यस्तयोः–' (६-४-११२) इत्याकारलोपे नुमि च रूपम्, अस्य प्वादित्वेऽपि 'प्वादीनां ह्रस्व (७-३-८०) इति ह्रस्वो न, 'जा' इति दीर्घादेशविधानसामर्थ्यात् । एवं जानानः इत्यत्रापि प्रक्रिया ज्ञेया ।
६ 'संप्रतिभ्यामनाध्याने' (१-३-४६) इत्यत्र 'अनाध्याने' इत्युक्तत्वात् प्रकृते शानच् न, आध्यानम् = उत्कण्ठापूर्व स्मरणम् ।
७ 'विभाषोपपदेन प्रतीयमाने' (१-३-७७) इत्यत्र शानचो विकल्पितत्वात्, पक्षे शता भवति ।
८ 'अपह्नवे ज्ञः' (१-३-४४) इति जानातेः शानच् । शतम् अलपत इत्यर्थः ।
९ 'अकर्मकाच्च' (१-३-४५) इत्यात्मनेपदं शानच् । 'ज्ञोऽविदर्थस्य करणे' (२-३-५१) इति सूत्रेण शेषत्वेन विवाक्षित्वे षष्ठी ।
१० 'संप्रतिभ्यामनाध्याने' (१-३-४६) इति शानच् । शतम् अपेक्षमाणः ।
११ 'ज्ञाश्रुस्मृदृशां सनः' (१-३-५७) इति सनन्तात् शानच् ।
१२ क्विपि, रुत्वविसर्गौ भवतः । आकारान्तोऽयं शब्दः ।
१३ 'वा दान्तशान्त–' (७-२-२७) इति ण्यन्तात् निष्ठायां मित्वपक्षे इडभावो विकल्पेन निपातितः । तेन रूपद्वयं बोध्यम् ।
१४ 'इगुपधज्ञाप्रीकिरः कः' (३-१-१३५) इति कर्तरि कप्रत्ययः । आदन्तलक्षणणप्रत्ययस्यापवादः ।
१५ प्रकर्षेण पन्थानं जानातीति पथिप्रज्ञः । 'प्रे दाज्ञः' (३-२-६) इति क प्रत्ययः । 'आतो लोप इटि च' (६-४-४४) इति आकारलोपः ।
१६ आतोपसर्गे कः (३-२-३) इति कप्रत्ययः । आकारलोपः । प्रकर्षेण आ = समन्तात् जानातीति प्राज्ञः = पण्डितः ।
१७ 'आतोऽनुपसर्गे कः' (३-२-३) इति कर्मोपपदे कर्तरि कप्रत्ययः । आकारलोपः ।
१८ 'सुप्यजातौ णिनिस्ताच्छील्ये' (३-२-७८) इति ताच्छील्ये णिनिः' मनसः संज्ञायाम् (६-३-४) इति स्थिते 'आज्ञापयिनि च' (६-३-५) इति तृतीया अलुक् ।

६ अचालयत्-त। ७ चालयेत्। ८ चाल्यात्। ९ अचीचलत्। १० अचालययिष्यत्।

**कृत्सु**—चालकः-लिका, चालयिता-त्री, चालयन्-न्ती, चालयित्वा, प्रचाल्य, चालयितुम्, चालनम्, चालः, चालयमानः, चालयिष्यमाणः, चालितः-तम्-तावन्।

**(१६०९) पाल—रक्षणे**। (पालन करना, संरक्षण करना)। सकर्म.। सेट्। उभय।

१ पालयति-ते। २ पालयाञ्चकार-चक्रे। ३ पालयिता। ४ पालयिष्यति। ५ पालयतु। ६ अपालयत्-त। ७ पालयेत्। ८ पाल्यात्। ९ **प्र.** अपीपलत् अपपिलताम् अपीपलन्। **म.** अपीपलः अपीपलतम् अपीपलत। **उ.** अपीपलम् अपीपलाव अपीपलाम। १० अपालयिष्यत्-त।

**कृत्सु**—पालकः-पालिका, पालयिता-त्री, पालयन्-न्ती, पालयिष्यन्-न्ती-ती, पाल्-पालौ-पालः, पालितम्-तः-तवान्, पालः, पालयितव्यम्, पालनीयम्, पाल्यम्, पाल्यमानः, पालयितुम्, पालना, पालनम्, पालयित्वा, संपाल्य, कपोतपाली[1]।

**(१६१०) लष—हिंसायाम्**। (हिंसा करना, माल डालना)। सकर्म.। सेट्। उभय.। लासयति-ते। इत्यादि।

**(१६११) शूल्व—माने**। (नापना, गिनना, तोलना)। सकर्म.। सेट्। उभय.। शुल्वयति-ते। इत्यादि।

**(१६१२) शूर्प—माने**। (नापना, तोलना)। सकर्म.। सेट्। उभय.।

१ शूर्पयति-ते। २ शूर्पयाञ्चकार-चक्रे। ३ शूर्पयिता। ४ शूर्पयिष्यति-ते। ५ शूर्पयतु। ६ अशूर्पयत्-त। ७ शूर्पयेत्। ८ शूर्प्यात्। ९ **प्र.** अशुशूर्पत् अशुशूर्पताम् अशुशूर्पन्। **म.** अशुशूर्पः अशुशूर्पतम् अशुशूर्पत। **उ.** अशुशूर्पम् अशुशूर्पाव अशुशूर्पाम। १० अशूर्पयिष्यत्।

**कृत्सु**—शूर्पकः-र्पिका, शूर्पयिता-त्री, शूर्पनम्, शूर्पयित्वा, प्रशूर्प्य, शूर्पयितुम्, शूर्पयन्-न्ती, शूर्पयिष्यन्-न्ती-ती, शूर्पितः-तम्-तवान्, शूर्पम्[2], शौर्पम्[3]-शौर्पिकम्, घञि-शूर्पः, शूर्पसदृशं नखमस्या इति शूर्पनखा[4]।

**(१६१३) चुट—छेदने**। (कतरना, चोट मारना)। सकर्म.। सेट्। उभय.।

१ चोटयति-ते। २ चोटयाञ्चकार-चक्रे। ३ चोटयिता। ४ चोटयिष्यति। ५ चोटयतु।

---

१ कपोतं पालयतीति कपोतपालः। 'कर्मण्यण्' (३-२-१) इत्यण्। स्त्रियाम् अणन्तत्वेन ङीप्।

२ एरचि पचाद्यचि वा णिलोपे रूपमवेम्। शूर्पम्=प्रस्फोटनम्।

३ शूर्पेण क्रीतं शैर्पम् शौर्पिकम्। अत्र 'शूर्पादञ् अन्यतरस्याम्' (५-१-२६) इति आर्हीयेष्वर्थेषु अञ् प्रत्ययः। ठञोऽपवादः पक्षे सोऽपि भवति।

४ 'नखमुखात् संज्ञायाम्' (४-१-५) इति ङीप्। 'पूर्वपदात् संज्ञायामगः' (८-४-५) इति णत्वं च संज्ञायामेवेति णत्वाभावष्टाप् च' इति धातुकाव्यव्याख्यायाम्। (३-२२) मल्लिनाथस्तु 'शूर्पणखा इति णत्वविशिष्टमेव पठित्वा व्याचख्यौ (रघु. १३/३२)।

६ अचोटयत्-त । ७ चोटयेत । ८ चोट्यात् । ९ **प्र.** अचूचुटत् अचूचुटताम् अचूचुटन् । **म.** अचूचुटः अचूचुटतम् अचूचुटत । **उ.** अचूचुटम् अचूचुटाव अचूचुटाम । १० अचोटयिष्यत्-त ।

**कृत्सु**—चोटकः-चिका, चोटयिता-त्री, चोटयन्-न्ती, चोटयिष्यन्-न्ती-ती, चोटयित्वा, प्रचोट्य, चोटयितुम्, चोटनम्, चोटः, चोटितम्-तः-तवान् । विचोटी (णिनि प्रत्ययः) ।

**( १६१४ ) मुट—सञ्चूर्णने** । (चूर्ण करना, मर्दन करना) । सकर्म. । सेट् । उभय. । मोटयति-ते । इत्यादि ।

**( १६१५-१६ ) पडि-पसि—नाशने** । (नष्ट करना) । सकर्म. । सेट् । उभय. । पण्डयति-ते । पंसयति-ते । इत्यादि ।

**( १६१७ ) व्रज—मार्गसंस्कारगत्योः** । (संस्कार करना, पूर्ण करना, तैयार करना, सिद्ध करना, जाना, घूमना) । सकर्म. । सेट् । उभय. ।

१ व्राजयति-ते । २ व्राजयाञ्चकार-चक्रे । ३ व्राजयिता । ४ व्राजयिष्यति । ५ व्राजयतु । ६ अव्राजयत्-त । ७ व्राजयेत । ८ व्राज्यात् । ९ अवीव्रजत् । १० अव्राजयिष्यत् ।

**कृत्सु**—व्राजकः-जिका, व्राजयिता-त्री, व्राजयन्-न्ती, व्राजयिष्यन्-न्ती-ती, व्राजयित्वा, प्रव्राज्य, व्राजयितुम्, व्राजितम्-तः, तवान्, व्राजः, व्राजयमानः, व्राजयिष्यमाणः ।

**( १६१८ ) शुल्क—अतिस्पर्शने** । (शुल्क = कर लगाना, उत्पत्ति कर देना, उत्पन्न करना) । सकर्म. । सेट् । उभय. ।

१ शुल्कयति-ते । २ शुल्वयाञ्चकार-चक्रे । ३ शुल्कयिता । ४ शुल्कयिष्यति । ५ शुल्कयतु । ६ अशुल्कयत् । ७ शुल्कयेत् । ८ शुल्क्यात् ।

**( १६१९ ) चपि—गत्याम्** । (जाना) । सकर्म. । सेट् । उभय. ।

१ चम्पयति-ते । २ चम्पयाञ्चकार-चक्रे । ३ चम्पयिता । ४ चम्पयिष्यति । ५ चम्पयतु । ६ अचम्पयत् । ७ चम्पयेत् । ८ चम्प्यात् । ९ अचीचपत् । १० अचम्पयिष्यत् ।

**कृत्सु**—चम्पकः-म्पिका, चम्पयिता-त्री, चम्पयन्-न्ती, चम्पयिष्यन्-न्ती-ती, चम्पमानः, चम्पितः-तम्-तवान्, चम्पयित्वा, चम्पयितुम् ।

**( १६२० ) क्षपि—क्षान्त्याम्** । (सहन करना, कहना, दया करना, चमकना) । सकर्म. । सेट् । उभय. ।

१ क्षम्पयति-ते । २ क्षम्पयाञ्चकार-चक्रे । ३ क्षम्पयिता । ४ क्षम्पयिष्यति । ५ क्षम्पयतु । ६ अक्षम्पयत्-त । ७ क्षम्पयेत् । ८ क्षम्प्यात् । ९ अचक्षम्पत्-त । १० अक्षम्पयिष्यत् । पक्षे क्षमति क्षम्पते । इत्यादि ।

**कृत्सु**—क्षम्पकः-म्पिका, क्षम्पयिता-त्री, क्षम्पयित्वा, क्षम्पयितुम्, क्षम्पमानः, क्षम्पयन्-न्ती, क्षम्पयिष्यमाणः, क्षम्पनम्, क्षम्पितः-तम्-तवान् ।

**( १६२१ ) छजि—कृच्छ्रजीवने** । (कठिन जीवन व्यतीत करना)। सकर्म.। सेट्। उभय.। छञ्जयति-ते। इत्यादि।

**( १६२२-२३ ) श्वर्त-श्वभ्र—गत्याम्** । (जाना)। सकर्म.। सेट्। उभय.।

१ श्वर्तयति-ते। श्वभ्रयति-ते। २ श्वर्तयाञ्चकार-चक्रे। श्वभ्रयाञ्चकार-चक्रे। ३ श्वर्तयिता श्वभ्रयता। ४ श्वर्तयिष्यति-ते। श्वभ्रयिष्यति-ते। ५ श्वर्तयतु। श्वभ्रयतु। ६ अश्वर्तयत्-त। अश्वभ्रयत्-त। ७ श्वर्तयेत् श्वभ्रयेत्। ८ श्वर्त्यात् श्वभ्र्यात्। ९ अश्वर्तत्। अशश्वभ्रत्। १० अश्वर्तयिष्यत्। अश्वभ्रयिष्यत्।

**कृत्सु**—श्वर्तकः-र्तिका, श्वभ्रकः-भ्रिका, श्वभ्रं = छिद्रम्।

**( १६२४ ) ज्ञप[१]—ज्ञानज्ञापनमारणतोषणनिशामनेषु** । (जानना, समझना, सिखाना समझाना, आनन्दित करना, प्रसन्न करना, मारना, ठोकना, तीक्ष्ण करना)। सकर्म.। सेट्। उभय.। मित्।

| | | | | |
|---|---|---|---|---|
| लट् | ज्ञपयति | ज्ञपयतः | ज्ञपयन्ति | प्र. |
| | ज्ञपयसि | ज्ञपयथः | ज्ञपयथ | म. |
| | ज्ञपयामि | ज्ञपयावः | ज्ञपयामः | उ. |
| लिट् | ज्ञपयाञ्चकार | ज्ञपयाञ्चक्रतुः | ज्ञपयाञ्चक्रुः | प्र. |
| | ज्ञपयाञ्चकर्थ | ज्ञपयाञ्चक्रथुः | ज्ञपयाञ्चक्र | म. |
| | ज्ञपयाञ्चकार-चकर | ज्ञपयाञ्चकृव | ज्ञपयाञ्चकृम | उ. |
| लुट् | ज्ञपयिता | ज्ञपयितारौ | ज्ञपयितारः | प्र. |
| | ज्ञपयितासि | ज्ञपयितास्थः | ज्ञपयितास्थ | म. |
| | ज्ञपयितास्मि | ज्ञपयितास्वः | ज्ञपयितास्मः | उ. |

१ जानातीति श्नि सिद्ध्येत् ज्ञपयति तु पुनर्मारणादौ घटादेः णौ (चौ) मित्वेऽपीदमेव 'ज्ञप मिद्' (ज्ञपनम्) इति पदं ज्ञापने मारणादौ। तेनार्थाज् ज्ञापनेऽर्थे ज्ञपयतिपदवज् ज्ञापयेदित्यपि स्याद् उक्तस्योक्तिः 'णिचश्चे' (१-३-७४) ल्युदिता विहये, ज्ञपयेज् 'ज्ञा नियोगे'। (श्लोक ८) इति देवः। अत्र क्षीरस्वामी घटादो 'मारणतोषणनिशानेषु 'ज्ञा' इति, चुरादौ, ज्ञप मारणतोषणनिशानेषु मिच्च' इति चापठत् पशुं संज्ञपयति, विष्णुं विज्ञपयति, शस्त्रं प्रज्ञपयति, इति क्रमेणोदाजहार च। मारणाद्यर्थेषु ज्ञपधातोः पुनर्मित्वविधानं व्यर्थमित्याशङ्क्य, स्वार्थे णिचि, एष्वर्थेषु मित्त्वसिद्धिः फलमिति, चुरादिण्यन्तेभ्यः कर्तृगामिन्यपि क्रियाफले परस्मैपदमेव भवतीति चाभिहितवान्। एवञ्च सति, 'प्रच्छ ज्ञीप्सायाम्' 'श्लाघहनुङ्स्थाशपां ज्ञीप्स्यमानः' (१-४-३४) इत्यादिषु क्रमेण ज्ञानज्ञापनार्थयोः प्रतीयमानत्वात्, वृत्तिन्यासपदमञ्जर्यादिभिस्तथैवाभ्युपगतत्वात् तत्र च मित्त्वप्रयुक्तकार्याणां दर्शनाच्च, क्षीरस्वामिमते तयोः प्रयोगयोरसङ्ग्रहः स्यात्। तदर्थं माधवीयधातु वृत्यादिबहुग्रन्थानुरोधेनात्र 'ज्ञप मिच्च' इत्येव पाठः प्रामाणिकः। यथाप्रयोगं ज्ञाने, ज्ञापने च ज्ञपधातुर्मिद् भवतीति सूत्रार्थः। अत एव सिद्धान्तकौमुद्याम् अयं धातुर्ज्ञाने, ज्ञापने च' इत्येवोक्तम्। घटादौ' निशामनेषु' इतिपाठेन चाक्षुषज्ञानव्यतिरिक्तेऽर्थे मित्त्वाभावः प्रतीयते। अत्र च बोधने। एवञ्च, विज्ञापयति, विज्ञपयति इति रूपद्वयस्यापि साधुत्वं बोध्यम्। 'तज्ज्ञापयत्याचार्यः' (महाभाष्यम्), 'विज्ञापना भर्तृषु सिद्धिमेति' इत्यादिप्रयेगेषु न काप्यनुपपत्तिः एतएव पुरुषकारे (श्लो. ८) 'एवञ्च, 'ज्ञप मिच्च' इत्येव पाठो युक्ततमः।' इत्युक्तं सङ्गच्छते।

| | | | | |
|---|---|---|---|---|
| लृट् | ज्ञपयिष्यति | ज्ञपयिष्यतः | ज्ञपयिष्यन्ति | प्र. |
| | ज्ञपयिष्यसि | ज्ञपयिष्यथः | ज्ञपयिष्यथ | म. |
| | ज्ञपयिष्यामि | ज्ञपयिष्यावः | ज्ञपयिष्यामः | उ. |
| लोट् | ज्ञपयतु-तात् | ज्ञपयताम् | ज्ञपयन्तु | प्र. |
| | ज्ञपय | ज्ञपयतम् | ज्ञपयत | म. |
| | ज्ञपयानि | ज्ञपयाव | ज्ञपयाम | उ. |
| लङ् | अज्ञपयत् | अज्ञपयताम् | अज्ञयपन् | प्र. |
| | अज्ञपयः | अज्ञपयतम् | अज्ञपयत | म. |
| | अज्ञपयम् | अज्ञपयाव | अज्ञपयाम | उ. |
| वि. लि. | ज्ञपयेत् | ज्ञपयेताम् | ज्ञपयेयुः | प्र. |
| | ज्ञपयेः | ज्ञपयेतम् | ज्ञपयेत | म. |
| | ज्ञपयेयम् | ज्ञपयेव | ज्ञपयेम | उ. |
| आ. लि. | ज्ञप्यात् | ज्ञप्यास्ताम् | ज्ञप्यासुः | प्र. |
| | ज्ञप्याः | ज्ञप्यास्तम् | ज्ञप्यास्त | म. |
| | ज्ञप्यासम् | ज्ञप्यास्व | ज्ञप्यास्म | उ. |
| लुङ् | अजिज्ञपत् | अजिज्ञपताम् | अजिज्ञपन् | प्र. |
| | अजिज्ञपः | अजिज्ञपतम् | अजिज्ञपत | म. |
| | अजिज्ञपम् | अजिज्ञपाव | अजिज्ञपाम | उ. |
| लृङ् | अज्ञपयिष्यत् | अज्ञपयिष्यताम् | अज्ञपयिष्यन् | प्र. |
| | अज्ञपयिष्यः | अज्ञपयिष्यतम् | अज्ञपयिष्यत | म. |
| | अज्ञपयिष्यम् | अज्ञपयिष्याव | अज्ञपयिष्याम | उ. |

**कर्मणि**—ज्ञप्यते। १ अज्ञपि, अज्ञापि। **सनि**—ज्ञप्सति। नियोगार्थेतु आज्ञापयतीत्यादौ न ह्रस्वः। **कृत्सु**—ज्ञपकः[१]-पिका, जियज्ञयिषकः-ज्ञप्सकः[२]-प्सिका, ज्ञपयिता-त्री, जिज्ञपयिषिता-त्री, ज्ञीप्सिता-त्री, ज्ञपयन्-न्ती, विज्ञपयन्, जिज्ञपयिष्यन्-न्ती-ती, ज्ञीप्सिष्यन्-न्ती-ती, ज्ञपयमानः, जिज्ञपयिषमाणः, ज्ञप्समानः, ज्ञपयिष्यमाणः, जिज्ञपयिषिष्यमाणः, ज्ञप्सिष्यमाणः, प्रज्ञप्-प्रज्ञब्[३]-प्रज्ञपौ-प्रज्ञपः, ज्ञपितः[४]-ज्ञप्तः-ज्ञप्तवान्, जिज्ञपयिषितः-ज्ञीप्सितः- तवान्, ज्ञपः, जिज्ञपयिषुः-ज्ञप्सुः, ज्ञपयितव्यम्, जिज्ञपयिषतव्यम्, ज्ञप्सितव्यम्, ज्ञप्यमानः, जिज्ञपयिष्यमाणः, ज्ञीप्स्यमानः, जिज्ञयिषः-ज्ञप्सः, ज्ञपयितुम्, जिज्ञपयिषितुम्-ज्ञप्सितुम्, ज्ञापना, ज्ञप्तिः[५],

१ मित्संज्ञकत्वादस्य धातोर्णौ परत उपधाया वृद्धौ, 'मितां ह्रस्वः' (६-४-९२) इति ह्रस्वः। एवं सर्वत्र ज्ञेयम्।

२ 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (७-२-४९) इति सूत्रेण सन इड्विकल्पः। इडभावपक्षे, 'आपज्ञपृधामीत्' (७-४-५५) इतीत्वे, 'सन्यङो' (६-१-९) इति द्वित्वे, 'अत्र लोपोऽभ्यासस्य' (७-४-५८) इत्यभ्यासलोपे रूपमेवम्' एवं सन्नन्ते सर्वत्रेडभावपक्षे रूपम्, इट्पक्षे तु जिज्ञपयिषकः इत्यादीनि रूपाणीति च बोध्यम्।

३ क्विपि, क्विब्लोपे चर्त्वविकल्पे च रूपम्।

४ 'वा दान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्ताः' (७-२-२७) इति सूत्रेण इण्णिषेदो विकल्पेन भवति। तेन रूपद्वयम्।

५ बाहुलकात् क्तिन्। 'तितुत्र—' (७-२-९) इति इण्णिषेधः।

जिज्ञपयिषा-ज्ञीप्सा, ज्ञपनम्, जिज्ञपयिषणम्, ज्ञीप्सनम्, ज्ञपयित्वा, जिज्ञपयिषित्वा, ज्ञीप्सित्वा, विज्ञपय्य[१], प्रजिज्ञपयिष्य-प्रज्ञीप्स्य।

**( १६२५ ) यम—च परिवेषणे।** (स्वाधीन रखना, काबू मे रखना, पोषण करना, खाने को देना)। ज्ञपादित्वान्मित्। परिवेषणभिन्नेऽर्थे न मित्। यामयति-ते। सकर्म.। सेट्। उभय.।

१ यमयति-ते। २ यमयाञ्चकार-चक्रे। ३ यमयिता। ४ यमयिष्यति-ते। ५ यमयतु। ६ अयमयत्-त। ७ यमयेत्। ८ यम्यात्। ९ अयीमयत्। १० अयमयिष्यत्।

**कृत्सु**—यमकः-मिका, यमयिता-त्री, यमयित्वा, प्रयम्य, यमयितुम्, यमनम्, यमयमानः, यमयिष्यमाणः, यमयन्-न्ती, यमयिष्यन्-न्ती-ती।

**( १६२६ ) चह—परिकल्कने।** (ठगना, दुष्कर्मी होना)। परिकल्कनं =दम्भं शाट्यञ्च। अकर्म.। सेट्। उभय.। अदन्तः ज्ञपित्वान्मित्।

१ चहयति-ते। २ चहयाञ्चकार-चक्रे। ३ चहयिता। ४ चहयिष्यति। ५ चहयतु। ६ अचहयत्-त। ७ चहयेत्। ८ चह्यात्। ९ अचहत्-त। १० अचहयिष्यत्। विकल्पे-चाहयति-ते। इत्यादि।

**कृत्सु**—चहकः-हिका, चहयिता-त्री, चहयित्वा, प्रचह्य, चहयितुम्, चहयितव्यम्, चहनीयम्।

**( १६२७ ) रह—त्यागे।** (छोड़ना, त्याग करना)। **वि**—अलग होना, भिन्न होना। सकर्म.। सेट्। उभय.। ज्ञपादिः। रहयति-ते। रहयाञ्चकार-चक्रे। इत्यादि।

**( १६२८ ) बल—प्राणने।** (बलयुक्त होना या करना, स्पष्ट करना)। सक.। सेट्. उभय.। ज्ञपदित्वान्मित्।

१ बलयति-ते। २ बलयाञ्चकार-चक्रे। ३ बलयिता। ४ बलयिष्यति-ते। ५ बलयतु। ६ अबलयत्। ७ बलयेत्। ८ बल्यात्। ९ अबबलयत्। १० अबलयिष्यत्।

**कृत्सु**—बलकः-लिका, बिबलयिषकः-षिका, बलयन्-न्ती, बलयित्वा, प्रबल्य, बलयितुम्-बलनम्, बलितः-तम्-तवान्, बलयितव्यम्, बलयमानः, बलयिष्यमाणः।

**( १६२९ ) चिञ्—चयने।** (ढूँढना, बटोरना, एकत्र करना)। **अप**—नाश करना, विध्वंस करना, **सम्**—संचय करना, जोड़ना, **उप**—पाना, प्राप्त करना, **निर्**—निश्चय करना, ठहरना, **विनिद्**—ठीक निश्चय करना। सकर्म.। सेट्। उभय.। ज्ञपदित्वान्मित्वम्। **'चिक्स्फुरोर्णौ'** इति आत्वपक्षे पुक्।

१ चपयिष्यति-ते। २ चपयाञ्चकार-चक्रे। ३ चपयिता। ४ चपयिष्यति-ते। ५ चपयतु। ६ अचपयत्। ७ चपयेत्। ८ चप्यात्। णिजभावपक्षे—चयति-ते।

१ 'ल्यपि लघुपूर्वात्' इति णेरयादेशः।

**कृत्सु**—चपकः[१]-पिका, चयकः-यिका, चिचपयिषकः-चिचययिषकः-षिकः, चायकः[२]-यिका, चपयिता-चययिता-त्री, चिचपयिषिता-चिचपयिषिता-त्री, चेता-त्री, प्रणिचपयन्[३]-प्रणिचययन्-न्ती, चिचयिषन्-चिचययिषन्-न्ती, चयन्-न्ती, चपयिष्यन्-चययिष्यन्-न्ती-ती, चेष्यन्-न्ती-ती, चपयमानः, चययमानः, चिचपयिषमाणः, चिचययिषमाणः, चयमानः, चपयिष्यमाणः, चययिष्यमाणः, चिचपयिषिष्यमाणः, चिचययिषिष्यमाणः, चेष्यमाणः, विचत्[४]-विचतौ-विचतः, चप्-चपौ-चपः, चपितः-चयितः. चिपत्-तः-तवान्, चपः-चयः, चिचपयिषुः-चिचययिषुः, चपयितव्यम्, चययितव्यम्, चेतव्यम्, चपनीयम्, चयनीयम्, चिचपयिषणीयम्, चिचययिषणीयम्, चप्यम्-चय्यम्, चप्यमानः- चय्यमानः, चेयम्-चीयमानः, चपयितुम्-चययितुम्, चेतुम्, चपना-चयना, चितिः, चपनम्-चयनम्, चपयित्वा-चपयित्वा, चित्वा, संचपय्य[५]-संचयय्य, प्रचित्य, चापम्[६]-चयम्-चायम्-चयम्।

**( १६३० ) घट्ट—चलने**। (जाना, स्थानान्तरण करना, **परि**—फैलाना, घोटना, **वि**—मांजना, घोना, विगाडना)। अकर्म.। सेट्। उभय.।

१ घट्टयति-ते। २ घट्टयाञ्चकार-चक्रे। ३ घट्टयिता। ४ घट्टयिष्यति-ते। ५ घट्टयतु। ६ अघट्टयत्-त। ७ घट्टयेत्। ८ घट्ट्यात्। ९ अजघट्टत्-त। १० अघट्टयिष्यत्।

**कर्मणि**—घट्ट्यते।९ अघट्टि। अघट्टयिषाताम्। अघट्टिषाताम्। **कृत्सु**—घट्टकः-ट्टिका, घट्टयिता-त्री, घट्टयितव्यम्, घट्टनीयम्, घट्टनम्, घट्टः, घट्टी, घट्टितः, घट्टना, घट्टयितुम्, घट्टयित्वा, सङ्घट्ट्य, घट्टयन्-मानः, घट्टयमानः, घट्टयिष्यमाणः, **कर्मणि**—घट्टिष्यमाणः।

**( १६३१ ) मुस्त—सङ्घाते**। (ढेर करना, बटोरना, एकत्र करना, राशि करना)। सकर्म.। सेट्। उभय.।

१ मुस्तयति-ते। २ मुस्तयाञ्चकार-चक्रे। ३ मुस्तयिता। ४ मुस्तयिष्यति। ५ मुस्तयतु। ६ अमुस्तयत्-त। ७ मुस्तयेत्। ८ मुस्त्यात्। ९ अमुमुस्तत्। १० अमुस्तयिष्यत्।

**कृत्सु**—मुस्तकः-स्तिका, शतरि-मुस्तयन्-न्ती, मुस्तयिष्यन्-न्ती-ती, मुस्तयिता-त्री, मुस्तयित्वा, मुस्तयितुम्, मुस्तः

**( १६३२ ) खट्ट—संवरणे**। (आच्छादन करना, छिपाना, ढांकना)। सकर्म.। सेट्। उभय.।

---

१ 'चिस्फुरोर्णौ' (६-१-५४) इत्यात्वविकल्पः आत्वपक्षे आदन्तलक्षणे पुगागमे, ज्ञपादिपञ्चकपाठेन मित्वात्, णौ उपधायाः 'मितां ह्रस्वः' (६-४-९२) इति ह्रस्वः। आत्वाभावपक्षे, वृद्धौ, आयादेशे ह्रस्वे च रूपम्। एवं ण्यन्ते सर्वत्र रूपद्वयस्योपपत्तिर्ज्ञेया।

२ ञित्वकरणसामर्थ्याण्णिचो वैकल्पिकत्वेन णिजभावपक्षे शुद्धाद्धातोः चायकः-यिका इत्यादीनि रूपाणि प्रदर्शितानि।

३ 'शेषे विभाषाऽकखादावषान्त उपदेशे' (८-४-१८) इति नेः णत्वविकल्पः।

४ अत्र यकारस्य बलि लोपे, 'ह्रस्वस्य पिति कृति—' (६-१-७१) इति तुगागमः।

५ 'ल्यपि लघुपूर्वात्' (६-४-५६) इति णेरयादेशः।

६ 'चिण्णमुलोदीर्घोऽन्यतरस्याम्' (६-४-९३) इति णमुल्परे णौ दीर्घविकल्पः।

१ खट्टयति-ते। २ खट्टयाञ्चकार-चक्रे। ३ खट्टयिता। ४ खट्टयिष्यति-ते। ५ खट्टयतु। ६ अखट्टयत्-त। ७ खट्टयेत्। ८ खट्ट्यात्। ९ अचखट्टत्-त। १० अखट्टयिष्यत्।

(१६३३-३५) **षट्ट-स्फिट्ट-चुबि—हिंसायाम्**। (मार डालना, या दुःख देना, पीड़ा देना)। सकर्म.। सेट्। उभय.। सट्टयति-ते। सट्टयाञ्चकार-चक्रे। स्फिट्टयति-ते। स्फिट्टयाञ्चकार-चक्रे। चुम्बयति-ते। इत्यादि।

(१३३६) **पूल—सङ्घाते**। (ढेर लगाना, बटोरना, सञ्चित करना)। सकर्म.। सेट्। उभय.।

पूलयति-ते। पूलयाञ्चकार-चक्रे। पूलयिता। पूलयिष्यति-ते। पूलयतुः। अपूलयत्-त। पूलयेत्। पूल्यात्। अपूपुलत्-त। अपूलयिष्य-त्। केचित् पूण इति वदन्ति। तत्पक्षे-पूणयति-ते। पूणयाञ्चक्रे-चकार। इत्यादि।

**कृत्सु**—पूलक-लिका, पूलयिता-त्री, पूलयित्वा, प्रपूल्य, पूलयितुम्, पूलनम्, पूलयमानः, पूलयिष्यमाणः, पूलः[1]।

(१३३७) **पुंस—अभिवर्धने**। (बढ़ना, वृद्धि होना, बढ़ाना, वृद्धि करना)। सकर्म.। सेट्। उभय.।

१ पुंसयति-ते। २ पूंसयाञ्चकार-चक्रे। ३ पुंसयिता। ४ पुंसयिष्यति-ते। ५ पुंसयतु। ६ अपुंसयत्-त। ७ पुंसयेत्। ८ पुंस्यात्। ९ अपूपुंसत्-त। १० अपुंसयिष्यत्।

**कृत्सु**—पुंसकः-सिका, पुंसयिता-त्री, पुंसना, पुन्[2]-पुंसौ-पुंसः, शतरि-पुंसयन्-न्ती, पुंसयित्वा, पुंसयितुम्, पुंसनम्, पुंसयमानः, पुंसयिष्यमाणः।

(१६३८) **टकि—बन्धने**। (बाँधना, जोड़ना, टांकना)। सकर्म.। सेट्। उभय.।

१ टङ्कयति-ते। २ टङ्कयाञ्चकार-चक्रे। ३ टङ्कयिता। ४ टङ्कयिष्यति-ते। ५ टङ्कयतु। ६ अटङ्कयत्-त। ७ टङ्कयेत्। ८ टङ्क्यात्। ९ **प्र.** अटटङ्कत् अटटङ्कताम् अटटङ्कन्। **म.** अटटङ्कः अटटङ्कतम् अटटङ्कत। **उ.** अटटङ्कम् अटटङ्काव अटटङ्काम। १० अटङ्कयिष्यत्।

**कर्मणि**—टङ्क्यते। **कृत्सु**—टङ्कनम्, टङ्कनीयम्, टटङ्कः-ङ्किका, टङ्की, टङ्किता, टङ्कितः-तम्-तवान्, टङ्का, टङ्कना, टङ्कयितुम्, टङ्कयितव्यम्, टङ्कयित्वा, उट्टङ्क्य, टङ्क्यम्, टङ्क्यन्-मानः, टङ्क्यमानः, टङ्कयिष्यन्-ष्यमाणः।

(१६३९) **धूस (धूष-धूश) —कान्तिकरणे**। (शोभित होना, अलङ्कृत होना)। सकर्म.। सेट्। उभय.। धूसयति-ते। धूषयति-ते। धूशयति-ते।

(१६४०) **कीट—वर्णे**। (रंगना, रंग में डूबोना, बांधना, जंग लगाना)। सकर्म.। सेट्। उभय.।

---

१ 'हलश्च' (३-३-१२१) इति संज्ञायां घञ्। पूलः = मूलिकाविशेषः।

२ 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजश्शकारश्चेषट्टिवर्गस्तवर्गजः॥' इति अभियुक्त्याऽत्रानुस्वारो नकारस्थानिकः। तेन क्विपि संयोगान्तलोपे नकारान्तं रूपं प्रथमैकवचने बोध्यम्।

१ कीटयति-ते। २ कीटयाञ्चकार-चक्रे। ३ कीटयिता। ४ कीटयिष्यति-ते। ५ कीटयतु। ६ अकीटयिष्यति-त। ७ कीटयेत्। ८ कीट्यात्. ९ अचीकिटत्। १० अकीटयिष्यत्।

**कृत्सु**—कीटकः-टिका, कीटयिता-त्री, कीटयन्-न्ती, कीटयिष्यन्-न्ती-ती, कीटयमानः कीटयिष्यामाणः,कीट्-कीटौ-कीटः,कीटितः तम् वान्,कीटः,कीटयितव्यम्,कीटनीयम्,कीट्यम्, कीट्यमानः, कीटयितुम्, कीटना, कीटनम्, कीटयित्वा, प्रकीट्य।

**( १६४१ ) चूर्ण—सङ्कोचने**। (सिकुड़ना)। **सम्**—टुकड़े टुक़ड़े कर देना। सकर्म.। सेट्। उभय.।

१ चूर्णयति-ते। २ चूर्णयाञ्चकार-चक्रे। ३ चूर्णयिता। ४ चूर्णयिष्यति। ५ चूर्णयतु। ६ अचूर्णयत्। ७ चूर्णयेत्। ८ चूर्ण्यात्। ९ अचुचूर्णत्-त। १० अचूर्णयिष्यत्।

**कर्मणि**—चूणर्यते। अचूर्णि। **कृत्सु**—चूर्णनीयम्, चूर्णनम्, चूर्णकः-र्णिका, चूर्णी, चूर्णयिता-त्री, चूर्णितः, चूर्णना, चूर्णयितुम्, चूर्णयितव्यम्, चूर्णयित्वा, संचूर्ण्य, चूर्ण्य, चूर्णयन्-मानः, चूर्ण्यमानः, चूर्णयिष्यन्-ष्यमाणः, **कर्मणि**—चूर्णयिष्यमाणः।

**( १६४२ ) पूज—पूजायाम्**। (पूजा करना, अर्चना करना, सम्मान करना)। **सम्**—उत्तम प्रकार से आदर सत्कार करना, अच्छी तरह से पूजा करना)। सकर्म.। सेट्। उभय.।

१ पूजयति-ते। २ पूजयाञ्चकार-चक्रे। ३ पूजयिता। ४ पूजयिष्यति-ते। ५ पूजयतु। ६ अपूजयत्। ७ पूजयेत्। ८ पूज्यात्। ९ अपूपुजत्-त। १० अपूजयिष्यत्।

**कर्मणि**—पूज्यते। **सनि**—पुपूजयिषति-ते। **कृत्सु**—पूजकः-जिका, पूजयिता-त्री, पूजयितव्यम्, पूजनीयम्, पूजनम्, पूजी, पूजितवान्, पूजा[१], पुनर्ण्यन्तस्य पूजना, पूजयितुम्, पूजयित्वा-सम्पूज्य,पूज्यः,पूजयन्-मानः,पूज्यमानः,पूजयिष्यन्-ष्यमाणः,कर्मणि– पूजिष्यमाणः, पूजितः,[२] राजपूजितः।

**( १६४३ ) अर्क—स्तवने**। तपन इत्येके। (प्रशंसा करना, स्तुति करना, गरम करना)। सकर्म.। सेट्। उभय.।

१ अर्कयति-ते। २ अर्क्याञ्चकार-चक्रे। ३ अर्कयिता। ४ अर्कयिष्यति-ते। ५ अर्कयतु। ६ आर्कयत्-त। ७ अर्कयेत्। ८ अर्क्यात्। ९ **प्र.** आर्चिकत् आर्चिकताम् आर्चिकन्। **म.** आर्चिकः आर्चिकतम् आर्चिकत। **उ.** आर्चिकम् आर्चिकाव आर्चिकाम। १० अर्कयिष्यत्।

---

१ 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (२-३-१०५) इति स्त्रियां भावादौ युजपवादोऽङ् प्रत्ययः।

२ मतिबुद्धिपूजार्थेम्यश्च (३-२-१८८) इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' (२-३-६७) इति कर्तरि षष्ठी। 'क्तेन च पूजायाम्' (२-२-१२) इति समासनिषेधः 'राजपूजितः' इति प्रयोगस्तु राज्ञा पूजितः इति तृतीया समासे साधुः।

**कृत्सु**—अर्ककः-र्किका, अर्कयिता-त्री, अर्कयन्-न्ती, अर्कयिष्यन्-न्ती-ती, अर्कयमानः, अर्कयिष्यमाणः, अर्क्[१]-अर्कौ-अर्कः, अर्कितः[२]-तम्-तवान्, अर्कः, अर्कयितव्यम्, अर्कणीयम्, अर्क्यम्, ईषदर्कः, दुरर्कः, स्वर्कः, अर्क्यमाणः, अर्कयितुम्, अर्कणा[३], अर्कणम्, अर्कयित्वा, समर्क्य।

**(१६४४) शुठ—आलस्ये।** (अलसाना, आलस्य करना)। अकर्म.। सेट्। उभय.।

१ शोठयति-ते। २ शोठयाञ्चकार-चक्रे। ३ शोठयिता। ४ शोटयिष्यति-ते। ५ शोठयतु। ६ अशोठयत्-त। ७ शोठयेत्। ८ शोठ्यात्। ९ अशूशुठत्। १० अशोठयिष्यत्।

**कृत्सु**—शोठकः-ठिका, शोठयिता-त्री, शोठयित्वा, प्रशोठ्य, शोठयितुम्, शोठः, शोठयन्-न्ती, शोठयिष्यन्-न्ती-ती, शोठयमानः, शोठयिष्यमाणः, शोठनम्।

**(१६४५) शुठि—शोषणे।** (सूखना, सुखाना, शोषण करना)। सकर्म.। सेट्। उभय.। शुण्ठयति-ते। शुण्ठयाञ्चकार-चक्रे। इत्यादि संशुण्ठितः।

**(१६४६) जुड—प्रेरणे।** (प्रेरणा करना)। सकर्म.। सेट्। उभय.।

१ जोडयति-ते। २ जोडयाञ्चकार-चक्रे। ३ जोडयिता। ४ जोडयिष्यति-ते। ५ जोडयत्। ६ अजोडयत्-त। ७ जोडयेत्। ८ जोड्यात्। ९ अजूचुडत्-त। १० अजोडयिष्यत्।

**कृत्सु**—जोडकः-डिका, जोडयिता-त्री, विजोडितः।

**(१६४७) गज—शब्दार्थौ।** (शब्द करना)। अकर्म.। सेट्। उभय.।

१ गाजयति-ते। २ गाजयाचङ्कार-चक्रे। ३ गाजयिता। ४ गाजयिष्यति-ते। ५ गाजयतु। ६ अगाजयत्-त। ७ गाजयेत्। ८ गाज्यात्। ९ अजीगजत्-त। १० अगाजयिष्यत्।

**कृत्सु**—गाजकः-जिका, जागयिता-त्री, गाजयन्-न्ती, गाजयितुम्, गाजयितव्यम्, गाजनीयम्, गाजयिष्यमाणः, गाजितः-तम्-तवान्।

**(१६४८) मार्ज—शब्दार्थौ।** (शब्द करना)। अकर्म.। सेट्। उभय.।

१ मार्जयति-ते। २ मार्जयाञ्चकार-चक्रे। ३ मार्जयिता। ४ मार्जयिष्यति-ते। ५ मारजयतु। ६ अमार्जयत्-त। ७ मार्जयेत्। ८ मार्ज्यात्। इत्यादि।

**कृत्सु**—मार्जक-र्जिका, मार्जयिता-त्री, मार्जयित्वा, प्रमार्ज्य, मार्जयुतम्, मार्जनम्, मार्जयन्-न्ती, मार्जयिष्यन्-न्ती, मार्जमानः, मार्जयमानः, मार्जयिष्यमाणः मार्जः, मार्जितः-तम्-तवान्।

**(१६४९) मर्च—शब्दार्थौ।** (शब्द करना) अकर्म.। सेट्। उभय.। मार्चयति-ते। इत्यादि।

---

१ 'रात्सस्य' (८-२-२४) इति नियमात् ककारस्य संयोगान्तलोपो न।
२ 'निष्ठायां सेटि' (६-४-५२) इति णेर्लोपः।
३ 'ण्यासश्रन्थो युच्' (३-३-१०७) इति युच्।

**( १६५० ) घृ—प्रस्रवणे** । (बूद-बूद गिरना, चूना, टपकना) । अकर्म. । सेट् । उभय. । ऋकारान्त घारयति-ते ।

**( १६५१ ) पचि—विस्तारवचने** । (फैलाना, पसारना, प्रपञ्च करना) । सकर्म. । सेट् । उभय. ।

१ पञ्चयति-ते । २ पञ्चयाञ्चकार-चक्रे । ३ पञ्चयिता । ४ पञ्चयिष्यति । ५ पञ्चयतु । ६ अपञ्चयत्-त । ७ पञ्चयेत् । ८ पञ्च्यात् । ९ अपपञ्चत्-त । १० अपञ्चयिष्यत्-त ।

**कृत्सु**—पञ्चकः-पञ्चिका, पञ्चयिता-त्री, पञ्चयित्वा, प्रपञ्चय, पञ्चयन्-न्ती, पञ्चयिष्यमाणः, घञि - प्रपञ्च ।

**( १६५२ ) तिज—निशाने** । निशानं = तीक्ष्णी करणम् । (तीक्ष्ण करना, पैना करना, धार लगाना, **आ.** (तितिक्षते) क्षमा करना, सहना) । सकर्म. सेट्. उभय. ।

१ तेजयति-ते । २ तेजयाञ्चकार-चक्रे । ३ तेजयिता । ४ तेजयिष्यति-ते । ५ तेजयतु । ६ अतेजयत्-त । ७ तेजयेत् । ८ तेज्यात् । ९ **प्र.** अतीतिजत् अतीतिजताम् अतीतिजन् । **म.** अतीतिजः अतीतिजतम् अतीतिजत । **उ.** अतीतिजम् अतीतिजाव अतीतिजाम । १० अतेजयिष्यत् ।

**कृत्सु**—तेजकः-जिका, तेजयित्वा, प्रतेज्य, तेजयितुम्, तेजयितव्यम्, तेजनीयम्, णिजन्ते सनि तु– तितेजयिषकः-षिका, तितेजयिषिता-त्री, तितेजयिष्यन् ।

**( १६५३ ) कृत—संशब्दने** । (प्रसिद्ध करना, कीर्तित होना) । सकर्म. । सेट् । उभय. ।

१ कीर्तयति-ते । २ कीर्तयाञ्चकार-चक्रे । ३ कीर्तयिता । ४ कीर्तयिष्यति-ते । ५ कीर्तयतु । ६ अकीर्तयत्-त । ७ कीर्तयेत् । ८ कीर्त्यात् । ९ अचीकृतत्-त । अचिकीर्तत्-त । १० अकीर्तयिष्यत्-त ।

**सनि**—चिकीर्तयिषति-ते । **कृत्सु**—कीर्तकः-र्तिका कीर्तयिता-त्री, कीर्तयित्वा, प्रकीर्त्य, कीर्तनम्, कीर्तयितुम्, कीर्तयन्-न्ती, कीर्तयिष्यन्-न्ती, कीर्तिः, कीर्तना, कीर्तितः ।

**( १६५४ ) वर्ध—छेदनपूरणयोः** । (काटना, चीरना, भरना, पूर्ण करना) । सकर्म. । सेट् । उभय. ।

१ वर्धयति-ते । २ वर्धयाञ्चकार-चक्रे । ३ वर्धायिता । ४ वर्धयिष्यति-ते । ५ वर्धयतु । ६ अवर्धयत्-त । ७ वर्धयेत् । ८ वर्ध्यात् । ९ **प्र.** अववर्धत् अववर्धताम् अववर्धन् । **म.** अववर्धः अववर्धतम् अववर्धत । **उ.** अववर्धम् अववर्धाव अववर्धाम । १० अवर्धयिष्यत्-त ।

**कर्मणि**—वर्ध्यते । **कृत्सु**—वर्धकः-र्धिका, वर्धयिता-त्री, वर्धयितुम्, वर्धयित्वा, प्रवर्ध्य, वर्धयन्-न्ती, वर्धयिष्यन्, वर्धमानः, वर्धयिष्यमाणः ।

**( १६५५ ) कुबि—आच्छादने** । (आच्छादित करना, ढांकना) । सकर्म. । सेट् । उभय. । इदित् ।

१ कुम्बयति-ते। २ कुम्बयाञ्चकार-चक्रे। ३ कुम्बयिता। ४ कुम्बयिष्यति-ते। ५ कुम्बयतु। ६ अकुम्बयत्-त। ७ कुम्बयेत्। ८ कुम्ब्यात्। ९ अचुकुम्बत्-त। १० अकुम्बयिष्यत्-त।

**कृत्सु**—कुम्बकः-म्बिका, कुम्बयिता-त्री, कुम्बयितुम्, कुम्बयित्वा, प्रकुम्ब्य, कुम्बनम्।

**(१६५६-५७) लुबि-तुबि—अदर्शने**। (नष्ट होना, गुप्त होना, उदृश्य होना)। अकर्म.। सेट्। उभय.।

१ लुम्बयति-ते। तुम्बयति-ते। २ लुम्बयाञ्कार-चक्रे। तुम्बयाञ्चकार-चक्रे। ३ लुम्बयिता, तुम्वयिता। ४ लुम्बयिष्यति-ते। तुम्बयिष्यति-ते। ५ लम्बयतु। तुम्बयतु। ६ अलुम्बयत्-त। अतुम्बयत्-त। ७ लुम्बयेत्। तुम्बयेत्। ८ लुम्ब्यात्। तुम्ब्यात्। ९ अलुलुम्बत्। अतुतुम्बत्। १० अलुम्बयिष्यत्-त। अतुम्बयिष्यत्-त।

**कर्मणि**—लुम्ब्यते। तुम्ब्यते। **कृत्सु**—लुम्बकः, तुम्बकः, कर्मणि क्त प्रत्यये लुम्बितम्-तः-तवान्।

**(१६५८) ह्लप—व्यक्तायां वाचि**। (स्पष्टोच्चराण करना, बोलना)। सकर्म.। सेट्। उभय.। ह्लपयति-ते। ह्लपयाञ्चकार-चक्रे। ९. अजिह्लपत्-त।

**(१६५९) चुटि—छेदने**। (कतरना, तोड़ना, चुटिया मारना, नोचना)। सकर्म.। सेट्। उभय.।

१ चुण्टयति-ते। २ चुण्टयाञ्चकार-चक्रे। ३ चुण्टयिता। ४ चुण्टयिष्यति। ५ चुण्टयतु। ६ अचुण्टयत्-त। ७ चुण्टयेत्। ८ चुण्ट्यात्। ९ अचुचुण्टत्-त। १० अचुण्टयिष्यत्।

**कर्मणि**—चुण्ट्यते। **कृत्सु**—चुण्टकः-ण्टिका, चुण्टयिता-त्री, चुण्टयित्वा, प्रचुण्ट्य, चुण्टयितुम्, चुण्टनम्, चुण्टयन्-न्ती, चुण्टयिष्यन्-न्ती-ती, चुण्टितः-तम्-तवान्।

**(१६६०) इल—प्रेरणे**। (प्रेरणा करना, प्रोत्साहित करना)। सकर्म.। सेट्। उभय.।

१ एलयति-ते। २ एलयाञ्चकार-चक्रे। ३ एलयिता। ४ एलयिष्यति-ते। ५ एलयतु। ६ **प्र.** ऐलयत् ऐलयताम् ऐलयन्। **म.** ऐलयः ऐलयतम् ऐलयत। **उ.** ऐलयम् ऐलयाव ऐलयाम। ७ एलयेत्। ८ एल्यात्। ९ **प्र.** ऐलिलत् ऐलिलताम् ऐलिलन्। **म.** ऐलिलः ऐलिलतम् ऐलिलत। **उ.** ऐलिलम् ऐलिलाव ऐलिलाम। १० एलयिष्यत्-त।

**कृत्सु**—एलकः-लिका, एलयिता-त्री, एलयन्-न्ती, एलयिष्यन्-न्ती-ती, एलयमानः, एलयिष्यमाणः, एलितम्-तः, एलिलिषुः, एलयितव्यम्, एलनीयम्, एल्यम्, एल्यमानः, एलः, एलयितुम्, एलना, एलनम्, एलयित्वा, समेल्य।

**(१६६१) म्रक्ष—म्लेच्छने**। (मिश्रित करना, अशुद्ध करना)। अकर्म.। सेट्। उभय.। म्रक्षयति-ते। म्रक्षकः-क्षिका, म्रक्षयिता-त्री, अनयम्रक्-म्रक्षौ म्रक्षः।

**(१६६२) म्लेच्छ—अव्यक्तायां वाचि।** (अस्पष्ट या अशुद्ध बोलना, असंबद्ध सम्भाषण करना, म्लेच्छ भाषा बोलना, जंगली भाषा बोलना)। अकर्म.। सेट्। उभय.।

१ म्लेच्छयति-ते। २ म्लेच्छयाञ्चकार-चक्रे। ३ म्लेच्छंयिता। ४ म्लेच्छयिष्यति-ते। ५ म्लेच्छयतु। ६ अम्लेच्छयत्-त। ७ म्लेच्छयेत्। ८ म्लेछ्यात्। ९ **प्र.** अमिम्लेच्छत् अमिम्लेच्छताम् अमिम्लेच्छन्। **म.** अमिम्लेच्छः अमिम्लेच्छतम् अमिम्लेच्छत। **उ.** अमिम्लेच्छम् अमिम्लेच्छाव अमिम्लेच्छाम। १० अम्लेच्छयिष्यत्-त।

**कृत्सु**—म्लेच्छकः-च्छिका, म्लेच्छयिता-त्री, म्लेच्छयितुम्, म्लेच्छयित्वा, प्रम्लेच्छ्य, म्लेच्छयन्-न्ती, म्लेच्छयिष्यन्, म्लेच्छयितव्यम्, म्लेच्छनीयम्, म्लेच्छः, म्लेच्छितम्-तः-तवान्।

**(१६६३) ब्रूस—हिंसायाम्।** (मार डालना, दुःख देना)। सकर्म.। सेट्। उभय.। बूसयति-ते।

**(१६६४) बर्ह—हिंसायाम्।** (मार डालना, दुःख देना)। सकर्म.। सेट्। उभय.। बर्हयति-ते। बर्हकः-र्हिका-त्री, बर्हयिता-त्री, बर्हयितुम्, बर्हयित्वा-प्रबर्ह्य।

**(१६६५) गुर्द—पूर्व निकेतने।** (रहना, वास करना, बसना, आमन्त्रण करना)। अकर्म.। सेट्। उभय.।

१ गूर्दयति-ते। २ गूर्दयाञ्चकार-चक्रे। ३ गूर्दयिता-त्री। ४ गूर्दयिष्ति-ते। गूर्दयतु। ६ अगूर्दयत्-त। ७ गूर्दयेत्। ८ गूर्द्यात्। ९ अजुगूर्दत्-त। १० अगूर्दयिष्यत्।

**कृत्सु**—गूर्दकः-र्दिका, गूर्दयिता-त्री, गूर्दयिष्यन् इत्यादि।

**(१६६६) जसि—रक्षणे मोक्षणे च।** (संरक्षण करना, मुक्त करना)। सकर्म.। सेट्। उभय.। जंसयति-ते।

**(१६६७) ईड—स्तुतौ।** (स्तुति करना, प्रशंसा करना)। सकर्म.। सेट्। उभय.। १ ईडयति-ते। २ ईड्याञ्चकार-चक्रे। ३ ईडयिता। ४ इडयिष्यति-ते।

**कृत्सु**—ईडकः-डिका, ईडयिता-त्री, ईडयन्-न्ती, ईडयिष्यन्-न्ती-ती, ईडयमानः, ईडयिष्यमाणः, ईट्-इडौ-ईडः, ईडितम्-तः, ईडः, ईडयितव्यम्, ईडनीयम्, ईड्यम्, ईडयमानः, ईडयितुम्, ईडना, ईडनम्, ईडयित्वा, समीड्य।

**(१६६८) जसु—हिंसायम्।** (मार डालना, दुःख देना)। सकर्म.। सेट्। उभय.।

१ जासयति-ते। २ जासयाञ्चकार-चक्रे। ३ जासयिता। ४ जासयिष्यति-ते। ५ जासयितु। ६ अजासयत्-त। ७ जासयेत्। ८ जास्यात्। ९ अजीजसत्। १० अजासयिष्यत्-त।

**कर्मणि**—जास्यते। **कृत्सु**—जासकः-सिका, जासयिता-त्री, जासयन्-न्ती, जिजासयिषन्-न्ती, जसन्-न्ती, जिजसिषन्-न्ती, जासयिषन्-न्ती-ती, जासयमानः,

जासयिष्यमाणः, उज्जाः[1]-उज्जासौ-उज्जासः, जासितः, जिजासयिषितः, जस्तं[2]-तः, जासः, असुरजासी,[3] जासयितव्यम्, जासनीयम्, जास्यम्, जास्यमानः, जासयितुम्, जासना, जासनम्, (चौरस्य)[4] उज्जासन्, जासयित्वा, जसित्वा[5]-जस्त्वा, प्रजास्य।

**(१६६९) पिडि—सङ्घाते**। (ढेर करना, राशि करना)। अकर्म.। सेट्। उभय.।

पिण्डयति-ते। पिण्डयाञ्चकार-चक्रे। **कृत्सु**—पिण्डयिता-त्री। पिण्डयित्वा, प्रपिण्ड्य, संपिड्य, पिण्डयितुम्, पिण्डनम्, पिण्डकः-ण्डिका, पिण्डयमानः, पिण्डयिष्यमाणः, पिण्डयन्, पिण्डयिष्यन्।

**(१६७०) रुष—रोषे**। (क्रोध करना, गुस्सा करना)। अकर्म.। सेट्। उभय.।

१ रोषयति-ते। २ रोषयाञ्चकार-चक्रे। ३ रोषयिता। ४ रोषयिष्यति-ते। ५ रोषयतु। ६ अरोषयत्-त। ७ रोषयेत्। ८ रोष्यात्। ९ **प्र.** अरुरुषत्-त। अरुरुषताम् अरुरुषन्। **म.** अरुरुषः अरुरुषतम् अरुरुषत। **उ.** अरुरुषम्। १० अरोषयिष्यत्।

**कर्मणि**—रोष्यते। **कृत्सु**—रोषकः-षिका, रोषयिता-त्री, रोषयित्वा, प्ररोष्य, रोषयितुम्, रोषयितव्यम्, रोषनीयम्, रोषयन्-न्ती, रोषयिष्यन्-न्ती-ती, रोषयमानः, रोषयिष्यमाणः, रोषितः-तम्। रोषः, प्ररोषः।

**(१६७१) डिप—क्षेपे**। संघाते च (फेंकना, मारना, एकत्र करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ डेपयते। २ डेपयाञ्चक्रे। ३ डेपयित। **म.** डेपयितासे। ४ डेपयिताहे। ४ डेपयिष्यते डेपयिष्यते डेपयिष्यन्ते। **म.** डेपयिष्यसे डेपयिष्येथे डेपयिष्यध्वे। **उ.** डेपयिष्ये डेपयिष्यावहे डेपयिष्यामहे। ५ **प्र.** डेपयताम् डेपयेताम् डेपयन्ताम्। **म.** डेपयस्व डेपयेथाम् डपयेध्वम्। **उ.** डेपयै डेपयावहै डेपयामहै। ६ अडेपयत। ७ **प्र.** डेपयेत डेपयेताम् डेपयेरन्। **म.** डेपयेथाः डेपयेयाथाम् डेपयेध्वम्। **उ.** डेपयेय डेपयेवहि डेपयेमहि। ८ **प्र.** डेपयिषीष्ट डेपयिषीयास्ताम् डेपयिषीरन्। **म.** डेपयिषीष्ठाः डेपयिषीयास्थाम् डेपयिषीढ्वम्। **उ.** डेपयिषीध्वम्। **उ.** डेपयिषीय डेपयिषीवहे डिपयिषीमहि। ९ **प्र.** अडीडिपत अडीडिपेताम् अडीडिपन्त। **म.** अडीपथाः अडीडिपेथाम् अडीडिपध्वम्। **उ.** अडीडिपे। १० अडेपयिष्यत।

**(१६७२) ष्टूप—समुच्छ्राये**। (ढेर लगाना, राशि करना)। सकर्म.। सेट्। उभय.।

१ स्तूपयति-ते। २ स्तूपयाञ्चकार-चक्रे। ३ स्तूपयिता। ४ स्तूपयिष्यति-ते। ५ स्तूपयतु। ६ अस्तूपयत्-त। ७ स्तूपयेत्। ८ स्तूप्यात्। ९ अतुस्तुपत्। १० अस्तूपयिष्यत्-त।

---

१ णिजन्तात् क्विपि उपधावृद्धौ क्विब्लोपे च, 'ससजुषो रुः' (८-२-६६) इति रुत्वे विसर्गे च रूपम्।
२ उदित्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (७-२-१५) इतीण्णिषेधः।
३ 'इत्थं वदत्युसरजासिनि पिण्डितायस्सथेमाऽथ रोषितमतिः प्रतिमल्लडेपी।' (धातु.का. ३-३२)।
४ कर्मणः शेषत्वविवक्षायाम् 'जासिनिप्रहण—' (२-३-५६) इति षष्ठी भवति। तस्य च 'प्रतिपदविधाना षष्ठी न समस्यते' इति वचनात् समासाभावः फलम्।
५ 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पः तेन रूपद्वयम्।

**कर्मणि**—स्तूप्यते। **कृत्सु**—स्तूपकः-पिका, स्तूपयिता-त्री, स्तूपयितुम्, स्तूपयित्वा, प्रस्तूप्य, प्रस्तूपनम्, स्तूपयन्-न्ती, स्तूपयिष्यन्-न्ती-ती, स्तूपयिष्यन्-न्ती, स्तूपयमानः, स्तूपयिष्यमाणः।

**( १६७३ ) चित—संचेतने**। (विचार कनरा, चिन्तन करना, स्मरण करना, याद करना)। सकर्म.। सेट्। उभय.। आकुस्मीयः।

१ **प्र.** चेतयते चेतयेते चेतयन्ते। **म.** चेतयसे चेतयेथे चेतयध्वे। **उ.** चेतये चेतयावहे चेतयामहे। २ **प्र.** चेतयाञ्चक्रे चेतयाञ्चक्राते चेतयाञ्चक्रिरे। **म.** चेतयाचकृषे चेतयाञ्चक्राथे चेतयाञ्चकृढ्वे। **उ.** चेतयाञ्चक्रे चेतयाञ्चकृवहे चेतयाञ्चकृमहे। ३ **प्र.** चेतयिता चेतयितारौ चेतयितारः। **म.** चेतयिसासे चेतयितासाथे चेतयिताध्वे **उ.** चेतयिताहे चेतयितास्वहे चेतयितास्महे। ४ **प्र.** चेतयिष्यते चेतयिष्येते चेतयिष्यते। **म.** चेतयिष्यसे चेतयिष्येते चेतयिष्यध्वे। **उ.** चेतयिष्ये चेतयिष्यावहे चेतयिष्यामहे। ५ **प्र.** चेतयताम् चेतयेताम् चेतयन्ताम्। **म.** चेतयस्व चेतयेथाम् चेतयध्वम्। **उ.** चेतेये चेतयावहै चेतयामहै। ६ **प्र.** अचेतयत अचेतयेताम् अचेतयन्त। **म.** अचेतयथाः अचेतयेथाम् अचेतयध्वम्। **उ.** अचेतये अचेतयावहि अचेतयामहि। ७ **प्र.** चेतयेत चेतयेताम् चेतयेरन्। **म.** चेतयथाः चेतयेयाथाम् चेतयेध्वम्। **उ.** चेतयेय चतयेवहि चेतयेमहि। ८ **प्र.** चेतयिषीष्ट चेतयिषीयास्ताम् चेतयिषीरन्। **म.** चेतयिषीष्ठाः चेतयिषीयास्थाम् चेतयिषीढ्वम्-ध्वम्। **उ.** चेतयिषीय चेतयिषीवहि चितयिषीमहि। ९ **प्र.** अचीचितत अचीचितेताम् अचीचितन्त। **म.** अचीचितथाः अचीचितेथाम् अचीचितध्वम्। **उ.** अचिचिते अचीचितावहि अचीचितामहि। १० **प्र.** अचेतयिष्यत् अचेतयिष्येताम् अचेतयिष्यन्त। **म.** अचेतयिष्यथाः अचेतयिष्येथाम्-अचेतयिष्यध्वम्। **उ.** अचेतयिष्ये अचेतमिष्यावहि अचितयिष्यामहि।

**कृत्सु**—चेतकः-तिका, चेतयिता-त्री, चेतयमानः, चेत्-चेतौ-चेतः, चेतितम्-तः, चेतः, चेतम्ः-चेतनः, चेतयितव्यम्, चेतनीयम्, चेत्यम्, चेत्यमानः, चेतयितुम्, चेतना, चेतनम्, चेतयित्वा, प्रचेत्य।

**( १६७४ ) दशि—दंशने**। (ढंसना, काटना, दंश मारना)। सकर्म॥ सेट्। आत्मने.। आकुस्मीयः।

१ दंशयते। २ दंशयाञ्चक्रे। ३ दंशयिता। ४ दंशयिष्यति। ५ दंशयताम्। ६ अदंशयत। ७ दंशयेत। ८ **प्र.** दंशयिषीष्ट दंशयिषीयास्ताम् दंशयिषीरन्। **म.** दंशयिषीष्ठाः। **उ.** दंशयिषीय। ९ **प्र.** अददंशत अददंशेताम् अददंशन्त। **म.** अददंशथाः अददंशेथाम् अददंशध्वम्। **उ.** अददंशे अददंशावहि अददंशामहि। १० अददंशयिष्यत।

**कृत्सु**—दंशकः-शिका, दंशयिता-त्री, दंशयन्-न्ती, दंशयिष्यन्-न्ती-ती, दंशयमानः, दंशयिष्यमाणः, देंशितः, दंशः, दंशयितव्यम्, दंशनीयम्, दंश्यम्, दंश्यमानः, दंशनम्, दंशयित्वा, संदंश्य।

**( १६७५ ) दसि—दर्शनदंशनयोः**। (देखना, काटना, डसना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः। दंसयते। दंसयाञ्चक्रे। इत्यादि (१६७४) वत्।

**( १६७६ ) डप—संघाते**। (एकत्र करना, बटोरना, राशि करना)। सक.। सेट्। आत्मने.। आकुस्मीयः।

१ डापयते। २ डापयाञ्चक्रे। ३ डापयिता। ४ डापयिष्यते। ५ डापयताम्। ६ अडापयत। ७ डापयेत। ८ डापयिषीष्ट। ९ अडीडपत। १० अडापयिष्यत।

**कृत्सु**—डापकः-पिका,डापयित्वा,प्रडाप्य,डापयितुम्,डापयितव्यम्,डापनीयम्,डापनम्, डापयिता-त्री।

**( १६७७ ) डिप—क्षेपे संघाते त**। (फेंकना, एकत्र करना, बटोरना)। सकर्म.। सेट्। आत्मने.। आकुस्मीणः। डेपयते। डेपयाचक्रे। इत्यादि।

**( १६७८ ) तत्रि—कुटुम्बधारणे**। कुटुम्बः = परिवारः। (फैलाना, कुटुम्ब पोषण करना, प्रधान होना)। अकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ तन्त्रयते। २ तन्त्रयाचक्रे। ३ तन्त्रयिता। ४ तन्त्रयिष्यते। ५ तन्त्रयताम्। ६ अतन्त्रयत। ७ तन्त्रयेत। ८ तन्त्रयिषीष्ट। ९ **प्र.** अततन्त्रत अततन्त्रेताम् अततन्त्रन्त। **म.** अततन्त्रथाः अततन्त्रेथाम्, अततन्त्रध्वम्। **उ.** अततन्त्रे अततन्त्रेवहि। अततन्त्रेमहि। १० अतन्त्रयिष्यत। इदित्वाण्णिजभावे तन्त्रति।

**सनि**—तितन्त्रयिषते। **कृत्सु**—तन्त्रकः-न्त्रिका, तन्त्रयिता-त्री, तन्त्रयमाणः,[१] तन्त्रयित्वा, तन्[२]-तन्त्रौ-तन्त्रः, तन्त्रितः-तन्त्रः, स्वतन्त्रः, तन्त्रयितव्यम्, तन्त्रणीयम्, तन्त्र्यम्, तन्त्रयितुम्, तन्त्रणा, तन्त्रणम्, प्रतन्त्र्य।

**( १६७९ ) मत्रि—गुप्तपरिभाषणे**। (गुप्त भाषण करना)। आ—सत्कार करना, सम्मान करना, **नि**—आमन्त्रण करना, बुलाना। सकर्म.। सेट्। आत्मने। आकुस्मीयः।

१ मन्त्रयते। २ मन्त्रयाञ्चक्रे। ३ मन्त्रयिता। ४ मन्त्रयिष्यते। ५ मन्त्रयताम्। ६ अमन्त्रयत। ७ मन्त्रयेत। ८ मन्त्रयिषीष्ट। ९ अममन्त्रत। १० अमन्त्रयिष्यत।

**कर्मणि**—मन्त्र्यते। **सनि**—मिमन्त्रयिषते। **कृत्सु**—मन्त्री,[३] मन्त्रः[४]। शेषं तन्त्रि धातुवत्।

**( १६८० ) स्पश—ग्रहणसंश्लेषणयोः** (लेना, संयोग करना, जोड़ना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः। स्पाशयते। निष्ठायाम् '**वा दान्तशान्तपूर्णदस्तस्पष्ट–**' (७-२-२०) इति निपातनात् स्पष्टः-स्पाशित इति रूपद्वयम् ल्यपि प्रस्पाश्य।

१ 'आकुस्मादात्मनेपदिनः' इति वचनात् आत्मनेपदं शानच्।
२ क्विपि, णिलोपे, पूर्वरेफस्य संयोगान्तलोपे, पश्चात् तकारस्यापि संयोगान्तलोपः।
३ 'ग्रह्यादिषु (३-१-१३४) 'मन्त्री' इति पाठात् णिनि प्रत्ययः।
४ 'एरच्' (३-३-५६) इति भावेऽच् प्रत्ययः।

**(१६८१) तर्ज—तर्जने।** (धिक्कारना, निन्दा करना, डराना, धुड़कना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ तर्जयते। २ तर्जयाञ्चक्रे। ३ तर्जयिता। ४ तर्जयिष्यते। ५ तर्जयताम्। ६ अतर्जयत। ७ तर्जयेत। ८ तर्जयिषीष्ट। ९ अततर्जत। १० अतर्जयिष्यत।

**(१६८२) भर्त्स—तर्जने।** (धिक्कारना, निन्दा करना, डराना, धुड़कना)। सकर्म.। सेट्। आत्म.। आकुस्कीयः। भर्त्सयते। भतर्सयाञ्चक्रे। इत्यादि। भर्त्सकः-सिका, प्रभर्त्सः, भर्त्सयमानः।

**(१६८३) बस्त—अर्दने।** (दुःख देना, मार डालना, लजाना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः। बस्तयते।

**(१६८४) गन्द—अर्दने।** (दुःखदेना, मार डालना, लजाना)। सकर्म.। सेट्। आत्मने.। गन्दयते।

**(१६८५) विष्क—हिंसायाम्।** (मार डालना)। सकर्म.। सेट्। आत्मने.। विष्कयते।

**(१६८६) निष्क—परिमाणे।** (मापना, तोलना, गिनना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ निष्कयते। २ निष्कयाञ्चक्रे। ३ निष्कयिता। ४ निष्कयिष्यते। ५ निष्कयताम्। ६ अनिष्कयत। ७ निष्कयेत। ८ निष्यकयिषीष्ट। ९ **प्र.** अनिनिष्कत अनिनिष्केताम् अनिनिष्कन्त। **म.** अनिनिष्कथाः अनिनिष्केथाम् अनिनिष्कध्वम्। **उ.** अनिनिष्के अनिनिष्कावहि अनिनिष्कामहि। १० अनिष्कयिष्यत

**कृत्सु**—निष्ककः-ष्किका, निष्कयित्वा, निष्कयितुम्, निष्कनम्, निष्कयितुम्, निष्कितम्।

**(१६८७) लल—ईप्सायाम्।** (इच्छा करना, चाहना, रमण करना, रति करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः। लालयते।

**(१६८८) कूण—सङ्कोचे।** (संकुचित होना, ऐंठना)। सकर्म.। सेट्। उभय.। अदन्तः।

१ कूणयति-ते। २ कूणयाञ्चकार-चक्रे। ३ कूणयिता। ४ कूणयिष्यति-ते। ५ कूणयतु। ६ अकूणयत्-त। ७ कूणयेत्-त। ८ कूण्यात्। ९ अचूकुणत्-त। १० अकूणयिष्यत्।

**कृत्सु**—कूणकः-णिका। कूणयिता-त्री, कूणयित्वा, कूणयितुम्, कूणनम्, कूणयन्-न्ती, कूणयिष्यन्-न्ती-ती, कूणः।

**(१६८९) तूण—पूरणे।** (भरना, पूर्ण करना)। सकर्म। सेट्। आत्मने.। आकुस्मीयः।

१ तूणयते। २ तूणयाञ्चक्रे। ३ तूणयिता। ४ तूणयिष्यते। ५ तूणयताम्। ६ अतूणयत। ७ तूणयेत। ८ तूणयिषीष्ट। ९ अतूतुणत। १० अतूणयिष्यत।

**कृत्सु**—तूणकः-णिका, तूणयिता-त्री, तूणयित्वा, प्रतूण्य, तूणयितुम्, तूणनम्, तूणयन्-न्ती, तूणयिष्यन्-न्ती-ती, तूणयमानः, तूणयिष्यमाणः।

**(१६९०) भ्रूण**—आशाविशङ्कयोः। (आशा करना, भरोसा करना, शङ्का करना, गर्भ धारण करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ भ्रूणयते। २ भ्रूणयाञ्चक्रे। ३ भ्रूणयिता। ४ भ्रूणयिष्यते। ५ भ्रूणयताम्। ६ अभ्रूणयत। ७ भ्रूणयेत। ८ भ्रूणयिषीष्ट। ९ अबुभ्रूणत। १० अभ्रूणयिष्यत।

**कृत्सु**—भ्रूणकः-णिका, भ्रूणयिता-त्री, भ्रूणयितुम्, भ्रूणयित्वा, प्रभ्रूण्य, भ्रूणनम्, भ्रूणयन्-न्ती, भ्रूणयिष्यन्, भ्रूणयमाणः, भ्रूणयिष्यिमाणः, भ्रूणितः-तम्, भ्रूणः।

**(१६९१) शठ**—श्लाघायाम्। प्रशंसा करना, स्तुति करना। सकर्म.। सेट्. आत्मने.। आकुस्मीयः। शाठयते शाठयाञ्चक्रे इत्यादि।

**(१६९२) यक्ष**—पूजायाम्। (आराधना करना, पूजा करना, सत्कार करना)। सकर्म.। सेट्। आत्मने.।

१ यक्षयते। २ यक्षयाञ्चक्रे। ३ यक्षयिता। ४ यक्षयिष्यते। ५ यक्षयताम्। ६ अयक्षयत। ७ यक्षयेत। ८ यक्षयिषीष्ट। ९ अययक्षत। १० अयक्षयिष्यत।

**कर्मणि**—यक्ष्यते। कृत्सु—यक्षकः-क्षिका, यक्षयिता-त्री, यक्षयितुम्, यक्षयित्वा, प्रयक्ष्य, यक्षयितव्यम्, यक्षणीयम्, यक्षणम्, यक्षयन्-न्ती-ती, यक्षयितः-तम् यक्षयिष्यन्-न्ती-ती, यक्षयमानः, यक्षयिष्यमाणः।

**(१६९३) स्यम**—वितर्के। (चिन्तन करना, मनन करना, तर्क वितर्क करना, विचार करना)। सक.। सेट्। आत्मने.। आकुस्मीयः। स्यामयते। स्यामयाञ्चक्रे।

**कृत्सु**—स्यामकः-मिका, स्यामयिता-त्री, स्यामयितुम्, स्यामयित्वा, प्रस्याम्य, स्यामयमानः, स्यामयिष्यमानः, स्यामयन्-न्ती, स्यामयिष्यन्-न्ती-ती, स्यामयमानः, स्यामयिष्यमाणः, युचि-स्यामनः।

**(१६९४) गूर**—उद्यमने। (प्रयत्न करना, उद्योग करना) सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ गूरयते। २ गूरयाञ्चक्रे। ३ गूरयिता। ४ गूरयिष्यते। ५ गूरयताम्। ६ अगूरयत। ७ गूरयेत। ८ गूरयिषीष्ट। ९ अजूगुरत। १० अगूरिष्यत।

**(१६९५) शम**—आलोचने। (प्रसिद्ध करना, स्पष्टता से दिखाना, जाहिर कना)। सकर्म.। सेट्। आत्मने.। आकुस्मीय।

१ शामयते। २ शामयाञ्चक्रे। ३ शामयिता। ४ शामयिष्यते। ५ शामयताम्। ६ अशामयत। ७ शामयेत। ८ शामयिषीष्ट। ९ अशीशमत। १० अशामयिष्यत।

**कृत्सु**—शामकः-मिका, शामयिता-त्री, शामः, शामयित्वा, प्रशाम्य, शामयितुम्, शामनम्, शामयमानः, शामयिष्यमानः, शामयन्-न्ती, शामयिष्यमाणः, शामा-कृष्णवर्णा-शाकविशेषः।

**( १६९६ ) लक्ष—आलोचने**। (आलोचना करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ लक्षयते। २ लक्षयाञ्चक्रे। ३ लक्षयिता। ४ लक्षयिष्यते। ५ लक्षयताम्। ६ अलक्षयत। ७ लक्षयेत। ८ लक्षयिषीष्ट। ९ अललक्षत। १० अलक्षयिष्यत।

**कृत्सु**—लक्षकः-क्षिका, लक्षयिता-त्री, लक्षयित्वा, लक्षयितुम्, लक्षयितव्यम्, लक्षणीयम्, लक्षणम्, लक्षः, लक्षयन्, लक्षयिष्यन्, लक्षयणः, लक्षयमानः, लक्षयिष्यमाणः।

**( १६९७ ) कुत्स—अवक्षेपणे निन्दने च**। (दोष लगाना, निन्दा करना, तिरस्कार करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ कुत्सयते। २ कुत्सयाञ्चक्रे। ३ कुत्सयिता। ४ कुत्सयिष्यते। ५ कुत्सयताम्। ६ अकुत्सयत। ७ कुत्सयेत। ८ कुत्सयिषीष्ट। ९ **प्र.** अचुकुत्सत अचुकुत्सेताम् अचुकुत्सन्त। **म.** अचुकुत्सथाः अचुकुत्सेथाम् अचुकुत्सध्वम्। **उ.** अचुकुत्से उचुकुत्सावहि अचुकुत्सामहि। १० अकुत्सयिष्यत।

**कृत्सु**—कुत्सकः-त्सिका, कुत्सयिता-त्री, कुत्सयमानः, कुत्सयिष्यमाणः, कुत्[१]-कुत्सौ-कुत्सः, कुत्सितुम्[२]-तः, कुत्सः-कुत्सनः,[३] कौत्सः,[४] कुत्सयितव्यम्, कुत्सनीयम्, कुत्स्यम्, कुत्सयितुम्, कुत्सयित्वा, प्रकुत्स्य। कुत्सना, कुत्सा[५]।

**( १६९८ ) त्रुट—छेदने**। (कतरना, तोड़ना, टूटना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ त्रोतटयते। २ त्रोट्याञ्चक्रे। ३ त्रोटयिता। ४ त्रोटयिष्यते। ५ त्रोटयताम्। ६ अत्रोटयत। ७ त्रोटयेत। ८ त्रोटयिषीष्ट। ९ अतुत्रुटत। १० अत्रोटयिष्यत।

**कृत्सु**—त्रोटकः-टिका, त्रोटयिता-त्री, त्रोटयितव्यम्, त्रोटनीयम्, त्रोटयमानः, त्रोटयिष्यमाणः, त्रोट्-त्रोटौ-त्रोटः, त्रोटितः-तम्, त्रोटः, त्रोट्यम्, त्रोट्यमानः, त्रोटयितुम्, त्रोटना, त्रोटनम्।

---

१ 'संयोगान्तस्य लोपः' (८-२-२३) इति सकारलोपः।

२ 'निष्ठायां सेटि' (६-४-५२) इति णेर्लोपः।

३ 'अनुदात्तेतश्च हलादेः' (३-२-१४९) इति युच् ताच्छीलिकः

४ कुत्सः = तन्नामा ऋषिः। तस्यापत्यामित्यर्थे ऋष्यण्।

५ 'कुत्सश्च कुत्सायाम्' (४-१-१६५) इत्यत्र निर्देशबलात् ण्यन्तादपि बाहुलकात् भावे स्त्रियामङ्। केचितु— 'अनित्याण्यन्ताश्चुरादयः' इत्याश्रित्य कुत्सा— 'कुत्सितव्यमिदं ज्ञेयम्—' इत्यादि प्रयोगाणां साधुत्वमाचक्षते। 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३-३-१०५) इत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वात् युजपवादोऽङ् इति क्षीरस्वामी।

**( १६९९ ) गल—स्रवणे**। (टपकना)। **अव**—नीचे गिरना, **वि**—नजदीक जाना, मदद लेना। अकर्म.। सेट्। आत्मने.। आकुस्मीयः। गालयते। ९. अजीगलत।

**( १७०० ) भल—आभण्डने**। (निरूपण कना, वाद विवाद करना)। सकर्म.। सेट्। आत्मने.। प्रायेणायं निपूर्वः।

१ निभालयते। २ निभालयाञ्चक्रे। ३ निभालयिता। ४ निभालयिष्यते। ५ निभालयताम्। ६ अभालयत। ७ निभालयेत। ८ निभालयिषीष्ट। ९ अबीभलत। १० अभालयिष्यत।

**कृत्सु**—निभालकः-लिका, निभालयिता-त्री, निभालयितुम्, ल्युटि-निभालनम्, निभालयित्वा, निभालनीयम्, निभालयमानः, निभालयिष्यमाणः, निभालनम्, निभालः, निभालना।

**( १७०१ ) कूट—आप्रदाने अवसादने च**। (नही देना, छल करना, अस्पष्ट गूढ या मालूम न हो ऐसा करना, राशि करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ कूटयते। २ कूटयाञ्चक्रे। ३ कूटयिता। ४ कूटयिष्यते। ५ कूटयताम्। ६ अकूटयत। ७ कूटयेत। ८ कूटयिषीष्ट। ९ अचूकूटत। १० अकूटयिष्यत।

**कर्मणी**—कूट्यते। **कृत्सु**—कूटकः-टिका, कूटयिता, कूटयमानः[1], कूटयिष्यमाणः, कूट्-कूटौ-कूटः, कूटितम्-तः, कूटः, कूटयितव्यम्, कूटनीयम्, कूट्यम्, कुट्यमानः, साङ्कुटिनम्,[2] कूटयितुम्, कूटना, कूटनम्, कूटयित्वा, सङ्कूट्य।

**( १७०२ ) कुट्ट—प्रतापने**। (गरम करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः। कुट्टयते। अचुकुट्टत। सर्वं 'कूट' धातु (१७०१) वत्।

**( १७०३ ) वञ्चु—प्रलम्भने**। (ठगना, फंसाना, प्रतारणा करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ वञ्चयते। २ वञ्चयाञ्चक्रे। ३ वञ्चयिता। ४ वञ्चयिष्यते। ५ वञ्चयताम्। ६ अवञ्चयत। ७ वञ्चयेत। ८ वञ्चयिषीष्ट। ९ अववञ्चत। १० अवञ्चयिष्यत।

**कृत्सु**—वञ्चकः-चिका, वञ्चयिता-त्री, वञ्चयितुम्, वञ्चयित्वा, वञ्चयितव्यम्, वञ्चनीयम्, वञ्चनम्, वञ्चयमानः, वञ्चयिष्यमाणः, वञ्चयन्-न्ती, वञ्चिष्यन्-न्ती-ती।

**( १७०४ ) वृष—शक्तिबन्धने**। शक्तिबन्धनं = प्रजनसामथर्यम्, शक्तिसम्बन्धश्च। (गर्भवती होना, अमानवी परक्रम करना, पराक्रमी होना, प्रजोत्पति करने का समर्थ होना)। अकर्म.। सेट्। आत्मने.। आकुस्मीयः। वर्षयते।

**( १७०५ ) मद—तृप्तियोगे**। (तृप्त करना)। सकर्म.। सेट्। आत्मने.। आकुस्मीयः

१ 'आ कुस्मादात्मनेपदिनः' इति गणसूत्रं चुरादौ। तेन शानजेव।
२ 'अभिविधौ भाव इनुण्' (३-३-४४) इतीनुण्। 'अण् इनुणः' (५-४-१५) इति नित्यमण् तद्धितः। 'इनण्यनपत्ये' (६-४-१६४) इत्यनेन प्रकृतिभावः।

१ मादयते। २ मादयाञ्चक्रे। ३ मादयिता। ४ मादयिष्यते। ५ मादयताम्। ६ अमादयत। ७ मादयेत। ८ मादयिषीष्ट। ९ अमीमदत। १० अमादयिष्यत।

**कर्मणि**—माद्यते। **कृत्सु**—मादकः-दिका, मादयिता-त्री, मादयमानः, मादयिष्यमाणः, मादयन्-न्ती, मादयिष्यन्-न्ती-ती, मादयितुम्, मादयितव्यम्, मादनीयम्, मादितः-तम्, मादः, मदः।

**( १७०६ ) दिवु—परिपूजने**। दुःख देना, शोक करना। अकर्म.। सेट्। आत्मने.। देवयते।

**( १७०७ ) गृ—विज्ञाने**। (समझना, जानना)। सकर्म.। सेट्। आत्मने.। ऋकारान्तः। आकुस्मीयः।

१ गारयते। २ गारयाञ्चक्रे। ३ गारयिता। ४ गारयिष्यते। ५ गारयताम्। ६ अगारयत। ७ गारयेत। ८ गारयिषीष्ट। ९ अजीगरत। १० अगारयिष्यत।

**( १७०८ ) विद—चेतनाख्याननिवासेषु**। (शरीर की सुध रखना, समझना, जानना)। **नि-वि-निर्**—समझाके कहना, **प्रति**—देना, अर्पण करना। सकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ वेदयते। २ वेदयाञ्चक्रे। ३ वेदयिता। ४ वेदयिष्यते। ५ वेदयताम्। ६ अवेदयत। ७ वेदयेत। ८ वेदयिषीष्ट। ९ **प्र.** अवीविदत अवीविदेताम् अवीविदन्त। **म.** अवीविदथाः अवीविदेथाम् अवीविदध्वम्। **उ.** अवीविदे अवीविदावहि अवीविदामहि। १० अवेदयिष्यत।

**कृत्सु**—वेदकः-दिका, वेदयिता-त्री, वेदयित्वा, वेदयितुम्, वेदयितव्यम्, वेदनीयम्, वेदयमानः, वेदयिष्यमाणः, वेदयन्-न्ती, वेदयिष्यन्-न्ती-ती, वेदः, वेदनम्, वेद्यम्।

**( १७०९ ) मान (मन) —स्तम्भे**। स्तम्भः = गर्वः। (गर्व करना, स्थिर करना, गर्विला होना)। अकर्म.। सेट्। आत्मने.। आकुस्मीयः।

१ मानयते। २ मानयाञ्चक्रे। ३ मानयिता। ४ मानयिष्यते। ५ मानयताम्। ६ अमानयत। ७ मानयेत। ८ मानयिषीष्ट। ९ अमीमनत। १० अमानयिष्यत।

**कृत्सु**—मानकः-निका, मानयिता-त्री, मानः, मानयन्-न्ती, मानयिष्यन्-न्ती-ती, मानयितुम्, मानयित्वा, आमान्य, मानयितव्यम्, माननीयम्, मानितः-तम्।

**( १७१० ) यु—जुगुप्सायाम्**। (अपमान करना, दोष लगाना, निन्दा करना)। अकर्म.। सेट्। आत्मने.। उकारान्तः आकुस्मीयः। १ यावयते। २ यावयाञ्चक्रे। ९ अयीयवत।

**( १७११ ) कुस्म—कुत्सितस्मये**। (अयोग्य रीति से हंसना)। अकर्म.। सेट्। आत्मने.।

१ कुस्म्यते। २ कुस्मयाञ्चक्रे। ३ कुस्मयिता। ४ कुस्मयिष्यते। ५ कुस्मयताम्। ६ अकुस्मयत। ७ कुस्मयेत। ८ कुस्मयिषीष्ट। ९ अचुकुस्मत। १० अकुस्मयिष्यत।

**कर्मणि**—कुस्मयते। **कृत्सु**—कुस्मकः-स्मिका, कुस्मयिता-त्री, कुस्मयमानः, कुस्मयिष्यमाणः, कूः-कुस्मौ-कुस्मः, कुस्मितम्-तः, कुस्मः, कुस्मनः, कुस्मयितव्यम्, कुस्मनीयम्, कुस्म्यमानः, कुस्मयितुम्, कुस्मना, कुस्मनम्, कुस्मयित्वा, प्रकुस्म्य।

( १७१२ ) **चर्च—अध्ययने**। (पढ़ना, अध्ययन करना)। सकर्म.। सेट्। उभय.। चर्चयति-ते। ९ अचचर्चत्-त। **सनि**—चिचर्चयिषति-ते। चर्चा, चर्चितम्।

( १७१३ ) **बुक्क—भषणे**। (भौंकना, कुत्ते के समान शब्द करना)। सकर्म.। सेट्। उभय.।

१ बुक्कयति-ते। २ बुक्कयाञ्चकार-चक्रे। ३ बुक्कयिता। ४ बुक्कयिष्यति-ते। ५ बुक्कयतु-बुक्कयताम्। ६ अबुक्कयत्-त। ७ बुक्कयेत्-त। ८ बुक्क्यायात् बुक्कयिषीष्ट। ९ अबुबुक्कत्-त। १० अबुक्कयिष्यत्-त।

**कृत्सु**—बुक्ककः-बुक्किका, बुक्कयिता-त्री, बुक्कयन्-न्ती, बुक्कयिष्यन्-न्ती-ती, बुक्कयितुम्, बुक्कयित्वा, प्रबुक्क्य, बुक्कयितव्यम्, बुक्कनीयम्।

( १७१४ ) **शब्द—उपसर्गादाविष्कारे च**। (शब्द करना, भाषण करना, प्रकट करना, **प्र-प्रति-वि**—स्पष्ट बोलना, वचन देना)। सकर्म.। सेट्। उभय.।

१ शब्दयति-ते। २ शब्दयाञ्चकार-चक्रे। २ शब्दयिता। ३ शब्दयिष्यति-ते। ५ शब्दयतु-शब्दयताम्। ६ अशब्दयत्-त। ७ शब्दयेत्-त। ८ शब्द्यात्-शब्दयिषीष्ट। ९ अशशब्दत्-त। १० अशब्दयिष्यत्-त।

( १७१५ ) **कण—निमीलने**। (आंखे मूंदना)। सकर्म.। सेट्। उभय.। काण्यादि।

१ काणयति-ते। २ काणयाञ्चकार-चक्रे। ३ काणयिता। ४ काणयिष्यति-ते। ५ काणयतु-काणयताम्। ६ अकाणयत्-त। ७ काणयेत्-त। ८ काण्यात्-काणयिषीष्ट। ९ अचीकणत्-अचकाणत्-त। १० अकाणयिष्यत्।

**कृत्सु**—काणकः-णिका, काणयिता-त्री, काणयन्-न्ती, काणयिष्यन्-न्ती-ती, काणयमानः, काणयिष्यमाणः, काण्-काणौ-काणः, काणितम्-तः, काणः, काणयितव्यम्, काणनीयम्, काण्यम्, काण्यमाणः, काणयुतम्, काणना, काणनम्, काणयित्वा, सङ्काण्य।

( १७१६ ) **जभि—नाशने**। (नष्ट करना)। सकर्म.। सेट्। उभय.।

१ जम्भयति-ते। २ जम्भयाञ्चकार-चक्रे। ३ जम्भयिता। ४ जम्भयिष्यति-ते। ५ जम्भयतु-जम्भयताम्। ६ अजम्भयत्-त। ७ जम्भयेत्-त। ८ जम्भयात्-जम्भयिषीष्ट। ९ अजजम्भत्-त। १० अजम्भयिष्यत्-त।

**कृत्सु**—जम्भकः-म्भिका, जम्भयिता-त्री, जम्भयन्-न्ती, जम्भयित्वा, जम्भयितुम्, जम्भनम्।

**( १७१७ ) षूद—क्षरणे** । हिंसायाम् च । (टपकना, झरना । घाव करना, मार डालना, मारने का यत्न करना)। सकर्म.। सेट्। उभय.।

१ सूदयति-ते। २ सूदयाञ्चकार-चक्रे। ३ सूदयिता। ४ सूदयिष्यति-ते। ५ सूदयतु-सूदयताम्। ६ असूदयत्-त। ७ सूदयेत्-त। ८ सूद्यात्-सूदयिषीष्ट। ९ असूषुदत्-त। १० असूदयिष्यत्-त।

**कृत्सु**—सूदकः-दिका, सूदयिता-त्री, सूदयित्वा, सूदनम्, सूदयितुम्, सूदयितव्यम्, सूदयन्-न्ती, सूदयिष्यन्-न्ती-ती, सूदयमानः, सूदयिष्यमाणः, सूदितः-तम्, मधुसूदनः[1], सूदः,[2] सूदिता[3]।

**( १७१८ ) जसु—ताडने** । (ताड़ना करना, उपेक्षा करना, मारना)। सकर्म.। सेट्। उभय.।

१ जासयति-ते। २ जासयाञ्चकार-चक्रे। ३ जासयिता। ४ जासयिष्यति-ते। ५ जासयतु-जासयताम्। ६ अजासयत्-त। ७ जासयेत्-त। ८ जास्यात्-जासयिषीष्ट। ९ अजीजसत्-त। १० अजासयिष्यत्-त।

**कृत्सु**—जासकः-सिका, जासयिता-त्री, जासयन्-न्ती, जासयमानः, जासयिष्यमाणः, उज्जाः-उज्जासौ, उज्जासः, जासितः, जिजासयिषितः, जस्तं-तः, जासः, असुरजासी, जासयितव्यम्, जासनीयम्, जास्यम्, जास्यमानः, जासयितुम्, जासना, जासयित्वा, प्रजास्य।

**( १७१९ ) पश—बन्धने** । (बांधना, बेड़ी डालना, फांस लगाना)। सकर्म.। सेट्। उभय.।

१ पाशयति-ते। २ पाशयाञ्चकार-चक्रे। ३ पाशयिता। ४ पाशयिष्यति-ते। ५ पाशयतु-पाशयताम्। ६ अपाशयत्-त। ७ पाशयेत्-त। ८ पाश्यात्-पाशयिषीष्ट। ९ अपीपशत्-त। १० अपाशयिष्यत्-त।

**कृत्सु**—पाशकः-शिका, पाशयिता-त्री, अस्य धातोः णिज् विकल्पो नास्तीति विशेषः। पाशितवान्।

**( १७२० ) अम—रोगे** । (बीमार होना, रोग ग्रस्त होना, अजीर्ण रोग युक्त होना)। सकर्म.। सेट्। उभय.।

१ आमयति-ते। २ आमयाञ्चकार-चक्रे। ३ आमयिता। ४ आमयिष्यति-ते। ५ आमयतु-आमयताम्। ६ आमयत्-त। ७ आमयेत्-त। ८ आम्यात्-आमयिषीष्ट। ९

---

१ मधु सूदयतीति मधुसूदनः = विष्णुः। कर्मण्युपपदेऽणं बाधित्वा नन्द्यादिषु (३-१-१३४) पाठात् कर्तरि ल्युः

२ सूदयतीति सूदः = पाचकः।

३ अनित्यण्यन्तत्वात् चुरादीनां णिजभावपक्षे अनुदात्तेत्वपक्षे 'सूददीपदीक्षश्च' (३-२-१५३) इति निषेधात् न युच् प्रत्ययः 'तृन्' (३-२-१३५) इति तृन्नेव इति केचित्। 'वस्तुतो णिजभावपक्षे शेषात् कर्तरि—' (३-१-७८) इति परस्मैपदस्यैवानुशासनात् न युचः प्रसक्तिः, न वा युचो निषेधस्येति बोध्यम्।

प्र. आमिमत्-त आमिमताम् आमिमन्। म. आमिमः आमिमतम् आमिमत। उ. आमिमम् आमिमाव आमिमाम। १० आमयिष्यत्-त।

**कृत्सु**—आमकः-मिका, आमयिता[१]-त्री, आमयन्[२]-न्ती, आमयिष्यन्-न्ती-ती, आमयमानः, आमयिष्यामानः, आन्[३]-आमौ-आमः, आमितम्-तः-तवान्, आमः, आमयः[४], आमयितव्यम्, आमनीयम्, आम्यम्, आम्यमानः, आमयितुम्, आमना, आमनम्, आमयित्वा, समाम्य।

**(१७२१) चट**—भेदने। (मार डालना, तोड़ना, **उत्**—उच्चाटन करना)। सकर्म.। सेट्। उभय.। चाटयति-ते। चाटयाञ्चकार-चक्रे इत्यादि।

**कृत्सु**—चाटकः-टिका, चाटयिता-त्री, चाटयितुम्, चाटयितव्यम्, चाटनीयम्, चाट्यम्, चाटितः-तम्, चाटयित्वा, प्रचाट्य।

**(१७२२) स्फुट**—भेदने। (कतरना, छेदना, तोड़ना, चीरना, विकसित करना या दुःख देना)। सकर्म.। सेट्। उभय.।

१ स्फोटयति-ते। २ स्फोटयाञ्चकार-चक्रे। ३ स्फोटयिता। ४ स्फोटयिष्यति-ते। ५ स्फोटयतु-स्फोटयताम्। ६ अस्फोटयत्-त। ७ स्फोटयेत्-त। ८ स्फोट्यात्-स्फोटयिषीष्ट। ९ अपुस्फुटत्-त। १० अस्फोटयिष्यत्-त।

**(१७२३) घट**—सङ्घाते। (घोटना, हिलाना, बटोरना, **उत्**—उद्घाटन करना)। सकर्म.। सेट्। उभय.।

१ घाटयति-ते। २ घाटयाञ्चकार-चक्रे। ३ घाटयिता। ४ घाटयिष्यति-ते। ५ घाटयतु-ताम्। ६ अघाटयत्-त। ७ घाटयेत्-त। ८ घाट्यात्-घाटयिषीष्ट। ९ अजीघटत्-त। घटा करिणां समूहः।

**(१७२४) दिवु**—मर्दने। (मर्दन करना)। सकर्म.। सेट्। उभय.। देवयति-ते। देवयाञ्चकार-चक्रे। देवयिता-त्री इत्यादि सर्वं 'दिवु' धातु (१७०६) वत्।

**(१७२५) अर्ज**—प्रतियत्ने। (अर्जन करना, उद्योग करना, तैयार करना)। **अति**—जाने देना, दूर करना, **अनु**—मुक्त करना, **उद्**—चलाना। सकर्म.। सेट्। उभय.।

| | | | | |
|---|---|---|---|---|
| लट् | अर्जयति | अर्जयतः | अर्जयन्ति | प्र. |
| | अर्जयसि | अर्जयथः | अर्जयथ | म. |
| | अर्जयामि | अर्जयावः | अर्जयामः | उ. |

१ अमन्तत्वेन मित्वं तु न। 'नान्ये मितोऽहेतौ' (ग.सू. चुरादौ) निशेषात्। स्वार्थे णिचि परतः ज्ञपादिपञ्चकव्यतिरिक्ताः मितो न भवन्तीति तदर्थः।

२ द्रागामयन् विजटतस्थिकायाऽथ मुष्ट्या प्रास्फोटत् धातुकाव्य (३/३९)।

३ 'मो नो धातोः'(८-२-६४) इति नत्वम्। न चात्र स्थानिवद् भावः—'पूर्वत्रासिद्धे—'(१-१-५८) इति तन्निषेधात्।

४ औणादिकः अयच्। रोगः।

| | | | | |
|---|---|---|---|---|
| लिट् | अर्जयाञ्चकार | अर्जयाञ्चक्रतुः | अर्जयाञ्चक्रुः | प्र. |
| | अर्जयाञ्चकर्थ | अर्जयाञ्चक्रथुः | अर्जयाञ्चक्र | म. |
| | अर्जयाञ्चकार-चकर | अर्जयाञ्चकृव | अर्जयाञ्चकृम | उ. |
| लुट् | अर्जयिता | अर्जयितारौ | अर्जयितारः | प्र. |
| | अर्जयितासि | अर्जयितास्थः | अर्जयितास्थ | म. |
| | अर्जयितास्मि | अर्जयितास्वः | अर्जयितास्मः | उ. |
| लृट् | अर्जयिष्यति | अर्जयिष्यतः | अर्जयिष्यन्ति | प्र. |
| | अर्जयिष्यसि | अर्जयिष्यथः | अर्जयिष्यथ | म. |
| | अर्जयिष्यामि | अर्जयिष्यावः | अर्जयिष्यामः | उ. |
| लोट् | अर्जयतु-तात् | अर्जयताम् | अर्जयन्तु | प्र. |
| | अर्जय | अर्जयतम् | अर्जयत | म. |
| | अर्जयानि | अर्जयाव | अर्जयाम | उ. |
| लङ् | आर्जयत् | आर्जयताम् | आर्जयन् | प्र. |
| | आर्जयः | आर्जयतम् | आर्जयत | म. |
| | आर्जयम् | आर्जयाव | आर्जायाम | उ. |
| वि. लि. | अर्जयेत् | अर्जयेताम् | अर्जयेयुः | प्र. |
| | अर्जयेः | अर्जयेतम् | अर्जेयत | म. |
| | अर्जयेयम् | अर्जयेव | अर्जयेम | उ. |
| आ. लि. | अर्ज्यात् | अर्ज्यास्ताम् | अर्ज्यासुः | प्र. |
| | अर्ज्याः | अर्ज्यास्तम् | अर्ज्यास्त | म. |
| | अर्ज्यासम् | अर्ज्यास्व | अर्ज्यास्म | उ. |
| लुङ् | आर्जिजत् | आर्जिजताम् | आर्जिजन् | प्र. |
| | आर्जिजः | आर्जिजतम् | आर्जिजत | म. |
| | आर्जिजम् | आर्जिजाव | आर्जिजाम | उ. |
| लृङ् | आर्जयिष्यत् | आर्जयिष्यताम् | आर्जयिष्यन् | प्र. |
| | आर्जयिष्यः | आर्जयिष्यतम् | आजयिष्यत | म. |
| | आर्जयिष्यम् | आर्जयिष्याव | आर्जयिष्याम | उ. |

**कृत्सु**—अर्जकः-र्जिका, अर्जयिता-त्री, अर्जयन्-न्ती, अर्जयिष्यन्-न्ती-ती, अर्जयमानः, अर्जयिष्यमाणः, अर्जितम्-तः, अर्जः, अर्जयितव्यम्, अर्जनीयम्, अर्ज्यम्, अर्ज्यमानः, अर्जतुम्, अर्जना, अर्जनम्, अर्जयित्वा, समर्ज्य, अर्जुनः[१]।

(१७२६) **घुषिर् (घुष्)** —**विशब्दने**। (मन में विचार कर कहना, घोषित करना, तरह-तरह के शब्द करना)। **आ**—मिलकर रोना, ढिढोरा पीटना)। सकर्म.। सेट्। उभय.। इरित्।

१ औणादिकः उनन् प्रत्ययो णिलुक् च। अर्जुनः = वृक्षः पार्थश्च।

**'शेषात् कर्तरि परस्मैपदम्'** (१ ।३ ।७८)—आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ।

**'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः'** (१ ।४ ।१०१)—तिङ उभयोः पदयोः त्रयस्त्रिकाः क्रमात् प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषसंज्ञाः स्युः ।

**'तान्येकवचनद्विवचनबहुवचनान्येकशः'** (१ ।४ ।१०२)—लब्ध-प्रथमपुरुषादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः ।

**'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः'** (१ ।४ ।१०५)—तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमपुरुषः स्यात् । त्वं भवसि । भवसि इत्येव वा ।

**'अस्मद्युत्तमः'** (१ ।४ ।१०७)—तथाभूतेऽस्मदि उत्तमपुरुषः स्यात् । अहं भवामि । भवामि इत्येव वा ।

**'शेषे प्रथमः'** (१ ।४ ।१०८)—मध्यमोत्तमयोरविषये प्रथमपुरुषः स्यात् । स भवति । केवलं भवति इति वा ।

**'तिङ्शित् सार्वधातुकम्'** (३ ।४ ।११३)—तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ।

**'कर्तरि शप्'** (३ ।१ ।६८)—कर्त्रर्थे सार्वधातुके प्रत्यये परे धातुभ्यः शप् स्यात् । शपावितौ । 'अ' मात्रं शिष्यते ।

**'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'** (१ ।४ ।१३)—यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसंज्ञं स्यात् । भवामि भविष्यामि इत्यादौ केवलो धातुः, विकरणप्रत्ययविशिष्टा 'भव' इत्यादयश्च अङ्गसंज्ञाः स्युः ।

**'सार्वधातुकार्धधातुकयोः'** (७ ।३ ।८४)—अनयोः परयोः इगन्ताङ्गस्य गुणः स्यात् । 'नी'—नयति । नेष्यति ।

**'आर्धधातुकं शेषः'** (३ ।४ ।११४)—तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्ययः आर्धधातुकसंज्ञः स्यात् ।

**'पुगन्तलघूपधस्य च'** (७ ।३ ।८६)—पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्धधातुकयोः । 'बुध्'—बोधति । बोधिष्यति ।

**'अलोऽन्त्यात्पूर्व उपधा'** (१ ।१ ।६५)—अन्त्याद् वर्णात् पूर्वो वर्णः उपधासंज्ञः स्यात् । 'बुध्' इत्यत्र उकार उपधा ।

अत्र प्रथमं विकरणप्रत्ययार्हाश्चत्वारो लृकाराः ततस्तदनर्हाः षट् इत्येवं क्रमेण दश लकाराः कथ्यन्ते ।

## परस्मैपदे

### (१) लटः[१] परिनिष्ठिताः प्रत्ययाः

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमपुरुषे | ति (तिप्)[२] | तस् | अन्ति[३] (झि) |
| मध्यमपुरुषे | सि (सिप्) | थस् | थ |
| उत्तमपुरुषे | मि (मिप्) | वस् | मस् |

### (२) लिटः[४] प्रत्ययाः

**प्र.** अ[५] (णल्), अतुस्, उस्। **म.** थ[६] (थल्), अथुस्, अ। **उ.** अ (णल्), व, म।

१ 'वर्तमाने लट्' (३।२।१२३) वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ।

२ तिप् सिप् मिप् इत्येते त्रयः प्रत्ययाः पितः। तत्फलं तु द्वेष्टि द्वेक्षि द्वेष्मि द्वेष्टु इत्यादौ गुणः।

३ 'झोऽन्तः' (७।१।३) प्रत्ययावयवस्य झस्य 'अन्त' इत्यादेशः स्यात्।

४ 'परोक्षे लिट्' (३।२।११५) भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। प्रयोक्तुरिन्द्रियगोचरत्वं परोक्षत्वम्। 'लिट् च' (३।४।१२५) लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः।

५ 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' (३।४।८२) लिटस्तिबादीनां नवानां णल् अतुस् उस्, थल् अथुस् अ, णल् व म इति नव आदेशाः स्युः।

६ 'आर्धधातुकस्येड् वलादेः' (७।२।३५) वलादेरार्धधातुकस्य इडागमः स्यात्। थ-व-म-स्यप्रभृतीनां प्रत्ययानां वलादित्वादिडागमे। इथ इव इम इस्य इत्यादयो भवन्ति। एतच्च सेड्धातुभ्य एव। 'एकाच उपदेशेऽनुदात्तात्' (७।२।१०) उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्य इण्न स्यात्।

**सेडनिटो सङ्ग्रहः –**

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहिताः स्मृताः॥ १ ॥

ऊकारान्तान् ऋकारान्तान् यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रिञ् वृङ् वृञ् इत्येतांश्च विना अन्ये अजन्ता एकाचो धातवः निहिताः= अनुदात्ताः। तस्मात्ते अनिटः। ऊकारान्ताः ऋकारान्ताः युप्रभृतिवृञन्ताश्च धातवः उदात्ताः। तस्मात्ते सेटः।

**हलन्तेषु अनुदात्तानाह–**

शक्लृ-पच्-मुचि-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज्-निजिर्-भजः।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रञ्ज्-रुज्-विजिर्-स्वञ्जि-सञ्ज्-सृजः॥ २ ॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः-पद्य-भिद्-विद्यतिर्-विनद्।
शद्-सदी-स्विद्यतिः-स्कन्दि-हदी-क्रुध्-क्षुधि-बुद्ध्यती॥ ३ ॥
बन्धिर्-युधि-रुधी-राधि-व्यध्-शुधः-साधि-सिद्ध्यती।
मन्थ-हन्नाप्-क्षिप्-छुपि-तप्-तिप्-तृप्यति-दृप्यति॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यम्-रभ्-लभ्-गम्-नम्-यमो रमिः।

लिटि प्रत्ययाङ्गपरिष्करणं तिसृभिः विधाभिः सम्भवति। तत्र प्रथमा—धातोः[१] द्विवचनेन।

---

क्रुशि-दंशि-दिशी-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः कृषिः॥ ५॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो-र्घसः।
वसति-र्दह्-दिहि-दुहो-नह्-मिह्-रुह्-लिह्-वहिस्तथा॥ ६॥

१ गद् + णल् इति स्थिते—'लिटि धातोरनभ्यासस्य' (६।१।८) लिटि अभ्यासभिन्नस्य धात्ववयवस्य प्रथमस्य एकाचः द्वे स्तः। आदिभूतादचः परस्य तु द्वितीयस्य गद् गद् अ भवति। 'पूर्वोऽभ्यासः' (६।१।४) यत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्। अनेन प्रथमस्य 'गद्' इत्यस्य 'अभ्यास' इति संज्ञा। 'हलादिः शेषः' (७।४।६०) अभ्यासस्य आदिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। ग गद् इति भवति। 'शर्पूर्वाः खयः' (७।४।६१) अभ्यासस्य शर्पूवाः खयः शिष्यन्ते। 'हलादिः शेषः' (७।४।६०) इत्यस्यापवादः। स्पर्ध् = स्पर्ध् स्पर्ध् = पस्पर्ध। 'अभ्यासे चर्च' (८।४।५४) अभ्यासे झलां चरः स्युः जशश्च। झलां जशः, खयां चर इत्यादिविवेक आन्तरतम्यात्। भण् भण् = बभण्। 'कुहोश्चुः' (७।४।६२) अभ्यासस्थकवर्गहकारयोश्चवर्गादेशः स्यात्। ग गद् = जगद्। हस् हस् = हहस् = जहस्। 'ह्रस्वः' (७।४।५९) अभ्यासस्याचो ह्रस्वः स्यात्। कूज् कूज् = कू कूज् = कुकूज् = चुकूज् + अ = चुकूज। 'एच इग्घ्रस्वादेशे' (१।१।४८) आदिश्यमानेषु ह्रस्वेषु मध्ये एचः इगेव स्यात्। वेष्ट्—वेष्ट् वेष्ट् = वे वेष्ट् = विवेष्ट् + ए = विवेष्टे। 'अत उपधायाः' (७।२।११६) उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। जगद् + (णल्)अ इत्यत्र णलो णित्वात् उपधाभूतस्य गकारोत्तराकारस्य वृद्धौ 'जगाद' इति रूपम्। 'णलुत्तमो वा' (७।१।९१) उत्तमपुरुषैकवचनः णल् प्रत्ययो वा णित् स्यात्। जगाद—जगद। 'अत आदेः' (७।४।७०) अभ्यासस्य आतेरतो दीर्घः स्यात्। अत् + अ इति स्थिते, अत् अत् = अ अत् = आ अत् = सवर्णदीर्घे आत् + अ = आत। 'तस्मान्नुड् द्विहलः' (७।४।७१) द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। अर्द् = अर्द् अर्द् = अ अर्द् = आ अर्द् = आ न् अर्द् + अ = आनर्द।

अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्।
(एतद् द्व्यधिकशतादन्ये हलता धातवः सेटः)

धातुष्वपि कश्चिद् विशेषमाह—'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' (७।२।१३) एभ्यो लिट इण्न स्यात्। कादीनां चतुर्णां ग्रहणं नियमार्थम्। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव। नान्येभ्यः। स्तुद्रुस्रुश्रुवां ग्रहणं थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम्। 'अचस्तास्वत्थल्यनिटो नित्यम्' (७।२।६१) उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्। 'उपदेशेऽत्वतः' (७।२।६२) उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात्। 'ऋतो भारद्वाजस्य' (७।२।६३)। तासौ नित्यानिटः ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन। तेन अन्यस्य स्यादेव।

अयमत्र सङ्ग्रहः —
अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्॥

द्वितीया— एत्वाभ्यास-लोपाभ्याम्।[१] तृतीया—आम्[२] प्रत्ययकृभ्वस्त्यनुप्रयोगाभ्याम्।

## (३) लुटः[३] प्रत्ययाः

प्र. ता।[४] तारौ।[५] तारः। म. तासि।[६] तास्थः। तास्थ।

उ. तास्मि। तास्वः। तास्मः।

---

१ लिटि द्वितीया विधा—**'अत एकहल्मध्येऽनादेशादेर्लिटि'** (६।४।१२०) लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अकारस्य एकारः स्यात् अभ्यासलोपश्च किति लिटि। 'असंयोगाल्लिट् कित्' (१।२।५) असंयोगात् परोऽपि लिट् कित् स्यात्। नद् = नेदतुः। नेदुः। ननाद इत्यत्र तिबादेशस्य णलः पित्वात् कित्त्वाभावात् एत्वाभ्यासलोपौ न स्तः। 'थलि च सेटि' (६।४।१२१) पिबादेशथलः पित्वेऽपि एत्वाभ्यासलोपौ भवतः। नेदिथ। लिण्निमित्तादेशादित्वात् चकणतुः इत्यत्र एत्वाभ्यासलोपौ न स्तः। ततर्दतुरित्यत्र संयुक्तहल्मध्यस्थत्वादकारस्य एत्वाभ्यासलोपौ च। आत्मनेपदे लिटि सर्वेषामपि प्रत्ययानामपित्त्वात् सर्वत्र एत्वाभ्यासलोपौ। देधे। देधाते। देधिरे।

२ लिटि तृतीया विधा—**'कास्प्रत्ययादाममन्त्रे लिटि'** (३।१।३५) 'कासृ' धातोः अनेकाच्कधातोश्च आम् स्याल्लिटि।'इजादेश्च गुरुमतोऽनृच्छः' (३।१।३६) इजादिर्यो धातुर्गुरुमान् ऋच्छत्यन्यः तत आम् स्याल्लिटि। 'दयायासश्च' (३।१।३७) दय् अय् आस् एभ्यः आम् स्याल्लिटि। उक्ष् + णल् इति स्थिते, उक्ष् आम् अ इति भवति। 'कृञ्चानुप्रयुज्यते लिटि' (३।१।४०) आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। उक्ष् आम् कृ अ इति भवति। अत्र अनुप्रयुज्यमानात् कृधातोर्लिटि परे द्वित्वादिकं भवति। 'आम्-प्रत्ययवत् कृञोऽनुप्रयोगस्य' (१।३।६३) आम् प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात्। प्रकृते आम् प्रकृतिकस्य उक्षधातोः परस्मैपदित्वात् कृञोऽपि परस्मैपदमेव भवति। कृधातोर्द्वित्वे कृ कृ। 'उरत्' (७।४।६६) अभ्यासकृवर्णस्य अत् स्यात् प्रत्यये परे। क कृ। 'कुहोश्चुः' इति चुत्वम्। च कृ। उपधावृद्धिः। चकार् + अ = चकार। उक्षाम् + चकार = उक्षाञ्चकार। एवं उक्षाम्बभूव। उक्षामास। अनुप्रयोग - सामर्थ्यात् अस्तेर्भूभावो न। णिजन्ताः सन्नन्ताः यङन्ता इत्यादयः अनेकाच्का धातवः।

३ 'अनद्यतने लुट्' (३।३।१५) भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात्।

४ 'स्यतासी लृलुटोः' (३।१।३३) धातोः लङ्लृटोः परतः 'स्य' प्रत्ययः स्यात्। लुटि परतः 'तास्' प्रत्ययः स्यात्। 'जि-जये' + लुडादेशतिप्रत्यये गुणे च, जे + तास् + ति इति भवति। 'लुटः प्रथमस्य डारौरसः' (२।४।८५) लुटः प्रथमपुरुषप्रत्ययानां ति तस् अन्ति इति त्रयाणां डा रौ रस् इति त्रयः आदेशाः क्रमात् स्युः। जे तास् डा इति जाते, डादेशस्य डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। तास् इत्यत्र टिभूतस्य 'आस्' इत्यस्य लोपे जे त् + आ = जेता इति भवति।

५ तास् + रौ इति स्थिते 'रि च' (७।४।५१) तासेरस्तेश्च लोपः स्यात् रादौ प्रत्यये परे। इति 'स्' इत्यस्य लोपे तारौ इति भवति।

६ 'तासस्त्योर्लोपः' (७।४।५०) तासेरस्तेश्च लोपः स्यात् सादौ प्रत्यये परे।

## (४) लृटः[१] प्रत्ययाः

प्र. स्यति।[२] स्यतः। स्यन्ति। म. स्यसि। स्यथः। स्यथ।

उ. स्यामि।[३] स्यावः। स्यामः।

## (५) लोटः[४] प्रत्ययाः

प्र. तु[५]–तात्।[६] ताम्।[७] अन्तु। म. हि[८]–तात्। तम्। त। उ. आनि[९]। आव। आम।

## (६) लङः[१०] प्रत्ययाः

प्र. त्।[११] ताम्। अन्। म. स्। तम्। त। उ. म्। व। म।

---

१ 'लृट् शेषे च' (३।३।१३) भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च।

२ 'स्यतासी लृलुटोः' (३।१।३३) इति 'स्य' प्रत्ययः।

३ स्य + मि इत्यत्र 'अतो दीर्घो यञि' (६।३।१०१) अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे। इति दीर्घे 'स्यामि' इत्यादि।

४ 'लोट् च' (३।३।१६२) विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनारूपेष्वर्थेषु वाच्येषु द्योत्येषु वा लोट् स्यात्। विधिः = भृत्यादेः कार्येषु प्रवर्तनम्। निमन्त्रणम् = आवश्यके श्राद्धभोजनादौ दोहित्रादेः प्रवर्तनम्। आमन्त्रणम् = यथेच्छं क्रियतामित्यभ्यनूज्ञानम्। अधीष्टः = सत्कारपूर्वको व्यापारः। सम्प्रश्नः = इदं कार्यं न वा? इति विचार्य निर्धारणम्। प्रार्थनम् = याच्ञा।

५ 'एरुः' (३।४।८६) लोट इकारस्य उः स्यात्।

६ 'तुह्योस्तातङाशिष्यन्यतरस्याम्' (७।१।३५) आशिषि तुह्योस्तातङ् वा स्यात्। 'आशिषि लिङ्लोटौ' (३।३।१७३) एतौ आशिष्यपि भवतः।

७ 'लोटो लङ्वत्' (३।४।८५) लोटो लङ् इव कार्यं स्यात्। 'तस्थस्थमिपां ताम्-तम्-तामः' (३।४।१०१) ङितो लकारस्य आदेशभूतानां तस् थस् थ मिप् इत्येषां चतुर्णां ताम् तम् त अम् इत्यादेशाः स्युः। लङ् लिङ् लुङ् लृङ् एते ङितो लकाराः।

८ 'सेर्ह्यपिच्च' (३।४।८७) लोटः सेः हिः स्यात्। स अपिच्च भवति। अपित् फलं तु—'सार्वधातुकमपित्' (१।२।४) अपित् सार्वधातुक ङिद्वत् स्यात्। 'क्ङिति च' (१।१।५) गित् कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। इति स्तुहि इत्यादौ गुणनिषेधः।

९ 'मेर्निः' (३।४।८९) लोटो मेः निः स्यात्। 'आडुत्तमस्य पिच्च' (३।४।९२) लोटः उत्तमपुरुषप्रत्ययानाम् आडागमः स्यात्। सः पिच्च भवति। पित्त्वफलं तु—द्वेषाणि द्वेषाव द्वेषाम इत्यत्र गुणः।

१० 'अनद्यतने लङ्' (३।२।१११) अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्। अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसः अद्यतनः। तद्भिन्नोऽनद्यतनः।

११ 'इतश्च' (३।४।१००) ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात्। 'ति' इत्यत्र अन्तस्य इकारस्य लोपे 'त्' इति भवति।

## (७) विधिलिङः[१] प्रत्ययाः

प्र. यात्।[२] याताम्। युस्।[३] म. यास्। यातम्। यात। उ. याम्। याव। याम।

## (८) आशीर्लिङः[४] प्रत्ययाः

प्र. यात्।[५] यास्ताम्।[६] यासुः। म. यास्। यास्तम्। यास्त। उ. यासम्। यास्व। यास्म।

## (९) परस्मैपदे लुङः[७] प्रत्ययाः सप्तविधाः

तासु प्रथमा विधा—सिचो लोपेन।[८]

---

१ 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' (३।३।१६१) विध्यादिष्वर्थेषु लिङ् स्यात्।

२ 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३।४।१०३) लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च। 'ति' इत्यस्य यासुडागमे यास् ति इति भवति। 'सुट् तिथोः' (३।४।१७) लिङस्तकारथकारयोः सुट् स्यात्। तथा च यास् स् ति इति भवति। 'लिङः सलोपोऽनन्त्यस्य' (७।२।७९) सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात्। इति सकारद्वयस्यापि निवृत्तौ या ति इति भवति। ततः 'इतश्च' (३।४।१००) इति इकारलोपे 'यात्' इति भवति।

३ यास् + झि इति स्थिते सलोपे। या + झि इति स्थिते। 'झेर्जुस्' (३।४।१०८)। लिङो झेर्जुस् स्यात्, या + उस् इति जाते 'उस्यपदान्तात्' (६।१।९६) अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात्। इति 'आ' इत्यस्य पररूपे युस् इति भवति।

४ 'आशिषि लिङ्लोटौ' (३।३।१७३)।

५ विधिलिङि उक्ते 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३।४।१०३) 'सुट् तिथोः' इति सूत्रे अत्र ग्राह्ये। यास् स् ति इति स्थिते। 'लिङाशिषि' (३।४।११६) आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात्। इति आशीर्लिङः आर्धधातुकत्वात् 'लिङः सलोप—' इति न प्रवर्तते। किन्तु 'स्कोः संयोगाद्योरन्ते च' (८।२।२९) पदान्ते झलि च परे यः संयोगः तदाद्योः सकारककारयोर्लोपः स्यात्। इति प्रथमं द्वितीयस्य सस्य, ततः प्रथमस्य च लोपः स्यात्। 'याति' इति जाते। 'इतश्च' इति इकारलोपे रूपम्।

६ तसस्तामादेशे यास् स् ताम् इति जाते 'स्कोरिति—' यासुटः सकारस्य लोपे रूपम्।

७ 'लुङ्' (३।२।११०) भूतार्थवृत्तेर्धातोर्लुङ् स्यात्।

८ 'च्लि लुङि' (३।१।४३) लुङि परे धातोः शबादीनां स्थाने 'च्लि' प्रत्ययः स्यात्। 'च्लेः सिच्' (३।१।४४) स्था + लुङ् = स्था च्लि लुङ् = स्था सिच् लुङ्। 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' (२।४।७७) एभ्यः सिचो लुक् स्यात्, गापाविह इणादेशपिबती गृह्यते। 'दाधा घ्वदाप्' (१।१।२०) दारूपा धारूपा धातवो 'घु' संज्ञा स्युः दाप्दैपौ वर्जयित्वा। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) एषु परेष्वङ्गस्य अडागमः स्यात् स चोदात्तो ङिच्च। इति धातोरडागमे अ + स्था + त् = अस्थात्। 'विभाषा घ्राधेट्शाच्छासः' (२।४।७८) घ्रा धेट् शो छो षो एभ्यः परस्य सिचो लुग् वा स्यात्। अघ्रासीत्। सिजलुगभावपक्षे—चतुर्थी विधा। इट्सकौ।

प्र. त् ।[१] ताम् ।[२] उस् ।[३] म. स् । तम् । त । उ. अम् । व । म ।

लुङि द्वितीया विधा—च्लेरङादेशेन ।[४]

प्र. अत् । अताम् । अन् । म. अस् । अतम् । अत । उ. अम् । अव । अम ।

लुङि तृतीया विधा—च्लेश्चङादेशेन ।[५]

प्र. अत् । अताम् । अन् । म. अस् । अतम् । अत ।

उ. अम् । अव । अम ।

लुङि चतुर्थी विधा—सगादेश[६] इडागमाभ्याम् ।

---

१ 'इतश्च' इति 'ति' इत्यस्यान्तलोपः ।

२ 'तस्थस्थमिपां—' (३ ।४ ।१०१) इति तामादेशः ।

३ 'सिजभ्यस्तविदिभ्यश्च' (३ ।४ ।१०९) सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् । 'आतः' (३ ।४ ।११०) सिज्लुकि आदन्तादेव झेर्जुस् स्यात् । अस्थुः । आदन्तभिन्नेभ्यस्तु अभूवन् इत्यादि ।

४ 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३ ।१ ।५२) एभ्यश्च्लेरङ् स्यात् । 'लिपिसिचिह्वश्च' (३ ।१ ।५३) तथा 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (३ ।१ ।५५) श्यन्-विकरणपुषादेः द्युतादेः ॡदितश्च धातोः परस्य च्लेरङ् स्यात् परस्मैपदेषु । 'सर्तिशास्त्यर्तिभ्यश्च' (३ ।१ ।५६) एभ्यश्च्लेरङ् स्यात् । तथा च—अङादेशार्हा धातवस्तावत्— असु = क्षेपणे । वच् = परिभाषणे । ख्या = प्रकथने । लिप = उपदेहे । षिच = क्षरणे । ह्वेञ् = स्पर्धायां शब्दे च । दिवादौ पुष = पुष्टवित्यारभ्य गृधु = अभिकाङ्क्षायामित्यन्ताः ६४ धातवः पुषादयः । द्युतादयस्तु—भ्वादौ द्युत = दीप्तावित्यारभ्य कृपू = सामर्थ्ये इत्यन्ताः २३ धातवः । एषां 'द्युद्भ्यो लुङि' (१ ।३ ।९१) द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । इति परस्मैपदपक्षे अङ् । यथा—अद्युतत् । द्युतादीनामात्मनेपदपक्षे तु—इट् सिच्च । एकादशी विधा । अद्योतिष्ट । ॡदितस्तत्र तत्र द्रष्टव्याः । जौहोत्यादी गत्यर्थकौ ऋ सृ धातू शासु = अनुशिष्टौ च । इत्येतेभ्यो नित्यमङ् । 'इरितो वा' (३ ।१ ।५७) इरितो धातोश्च्लेरङ् वा स्यात् । जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' (३ ।१ ।९८) एभ्यः च्लेरङ् वा स्यात् ।

५ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' (३ ।१ ।९८) णिजन्तात् श्रयादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे । 'चङि' (६ ।१ ।११) चङि परे अनभ्यासधात्ववयवस्य एकाचः प्रथमस्य द्वे स्तः अजादेस्तु द्वितीयस्य । स्रु = स्रवणे । द्वित्वम्—स्रु स्रु । 'हलादिः शेषः' (७ ।४ ।६०) सुस्रु अडागमः असुस्रु + अत् । 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (४ ।६ ।७७) श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति उवङ् । असुस्रुव् + अत् = असुस्रुवत् । 'विभाषा धेट्श्व्योः' (३ ।१ ।४०) आभ्यां च्लेश्चङ् वा स्यात् । धेट् = पाने—अदधत् । चङभावपक्षे प्रथमा विधा—अधात् । श्वयतेस्तु द्वितीया-षष्ठ्यावपि विधे ।

६ 'यमरमनमातां सक् च' (७ ।२ ।७३) एषां सक् स्यात् एभ्यः सिच इट् च परस्मैपदेषु । यथा—अयंसीत् ।

प्र. सीत् । सिष्टाम् । सिषुः । म. सीः । सिष्टम् । सिष्ट ।
उ. सिषम् । सिष्व । सिष्म ।
लुङि पञ्चमी विधा—क्सादेश[१] इडभावाभ्याम् ।
प्र. अत् । सताम् । सन् । म. सः । सतम् । सत ।
उ. सम् । साव । साम ।
लुङि षष्ठी विधा—अनिड्भ्यो धातुभ्यः सिजलोपाभावेन ।[२]
प्र. सीत् । स्ताम् । सुः । म. सीः । स्तम् । स्त ।
उ. सम् । स्व । स्म ।
लुङि सप्तमी विधा—सेड्भ्यो धातुभ्यः सिज्लोपाभावेन ।[३]
प्र. ईत् । इष्टाम् । इषुः । म. ईस् । इष्टम् । इष्ट । उ. इषम् । इष्व । इष्म ।

## (१०) लृङः[४] प्रत्ययाः

प्र. स्यत् ।[५] स्यताम्[६] स्यन् । म. स्यः । स्यतम् । स्यत । उ. स्यम् । स्याव । स्याम ।

## आत्मनेपदे

**१. लटः प्रत्ययाः**—प्र. त्रे ।[७] इते ।[८] अन्ते ।[९] म. से[१०] । इथे । ध्वे । उ. इ । वहे । महे ।
**२. लिटः प्रत्ययाः**—प्र. ए ।[११] आते । इरे । म. से । आथे । ध्वे । उ. ए । वहे । महे ।

---

१ 'शल इगुपधादनिटः क्सः' (३ ।१२ ।४५) इगुपधो यः शलन्तः तस्मादनिटः च्लेः क्सादेशः स्यात् । क्रुश = आह्वाने रोदने च । अक्रुक्षत् ।
२ सिज्लोपः, अङादेशः, चङादेशः, समागमः," क्सादेशः इति पञ्चविधास्वनन्तर्भूतेभ्यः अनिड्भ्यो धातुभ्यः इयं विधा भवति । 'वदव्रजहलन्तस्याचः' (७ ।२ ।३) वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थानें वृद्धिः स्यात्सिचि परस्मैपदेषु । डुपचष् = पाके । अपाक्षीत्, अपाक्ताम् ।
३ आद्यासु पञ्चसु विधास्वन्तर्भूताः सेटो धातवोऽस्यां गण्यन्ते । षिधु = गत्याम् । असेधीत्, असेधिष्टाम् ।
४ 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' (३ ।३ ।१३९) हेतुहेतुमद्भावादिभविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् ।
५ 'स्यतासी लृलुटोः' (३ ।१ ।३३) इति स्वः । 'इतश्च' (३ ।४ ।१००) इति इकारलोपः ।
६ 'तस्थस्थमिपाम्' (३ ।४ ।१०१) इति तामादेशः ।
७ 'टित आत्मनेपदानां टेरे' (३ ।४ ।९७) टितो लस्यात्मनेपदानां टेरत्वं स्यात् ।
८ 'सार्वधातुकमपित्' (१ ।२ ।४) इति ङिद्वत्त्वे 'आतो ङितः' (६ ।२ ।८१) अतः परस्य ङितामाकारस्य 'ईय्' स्यात् । आताम् इत्येतत् इय् + ताम् इति भवति । 'लोपो व्योर्वलि' (६ ।१ ।७६) वकारयकारयोर्लोपः स्याद् वलि । इति यलोपः । इताम् ततः टेरेत्वम् ।
९ 'झोऽन्तः' (७ ।१ ।३) इत्यन्तादेशः । टेरेत्वम् ।
१० 'थासः से' (३ ।४ ।८०) टितो लस्य थासः 'से' स्यात् ।
११ 'लिटस्तझयोरेशिरेच्' (३ ।४ ।८१) लिडादेशयोस्तझयोः एश् इरेच् एतौ स्तः ।

**३. लुटः प्रत्ययाः**—प्र. ता। तारौ। तारः। म. तासे। तासाथे। ताध्वे।[१] उ. ताहे।[२] तास्वहे। तास्महे।

**४. लृट् प्रत्ययाः**—प्र. स्यते।[३] स्येते[४]। स्यन्ते। म. स्यसे। स्येथे। स्यध्वे। उ. स्ये। स्यावहे।[५] स्यामहे।

**५. लोटः प्रत्ययाः**—प्र. ताम्।[६] इताम्। अन्ताम्। म. स्व।[७] इथाम्। ध्वम्। उ. ऐ।[८] आवहै। आमहै।

**६. लङः प्रत्ययाः**–प्र. त। इताम्।[९] अन्त। म. थास्। इथाम्। ध्वम्। उ. इ.। वहि। महि।

**७. विधिलिङः प्रत्ययाः**—प्र. ईत।[१०] ईयाताम्। ईरन्।[११] म. ईथाः। ईयाथाम्। ईध्वम्। उ. ईय।[१२] ईवहि। ईमहि।

**८. आशीर्लिङः प्रत्ययाः**—प्र. सीष्ट।[१३] सीयास्ताम्।[१४] सीरन्।[१५] म.

---

१ 'धि च' (८।२।२५) धादौ प्रत्यये परे सलोपः स्यात्।

२ 'ह एति' (७।४।५२) तासस्त्योः सस्य हः स्यादेति परे।

३ स्य + त = 'टित आत्मनेपदानां टेरे' (३।४।९७)।

४ स्य + आताम् 'आतो ङितः (७।२।८१) स्य इय् ताम् = 'लोपो व्योर्वलि' (६।१।७६) स्य इताम् = टेरेत्वम्। 'आद् गुणः' (६।१।८७) इति गुणः।

५ 'अतो दीर्घो यञि' (७।३।१०१)।

६ 'आमेतः' (३।४।९०) लोटः एकारस्याम् स्यात्। 'ते' इत्यत्र त्यस्य एकारस्य आम्भावे 'ताम्' इति भवति।

७ 'सवाभ्यां वामौ' (३।४।९१) सवाभ्यां परस्य लोडेतः क्रमात् व अम् इत्येतौ स्तः। 'से' इत्यत्र एकारस्य वकारे 'स्व' इति, 'ध्वे' इत्यत्र वकारात्परस्य एकारस्य अम्भावे 'ध्वम्' इति च भवति।

८ 'एत ऐ' (३।४।९३) लोडुत्तमस्य एत 'ऐ' स्यात्। 'आमेत' इत्यस्यापवादः।

९ 'आतो ङितः' (७।२।८१)।

१० 'लिङः सीयुट्' (३।४।१०२) लिङात्मनेपदस्य सीयुडागमः स्यात्। सीय् त इति भवति। 'लिङः सलोपोऽनन्त्यस्य' (७।२।७९) इति सलोपः। 'लोपो व्योर्वलि' इति यलोपः।

११ 'झस्य रन्' (३।४।१०५) लिङो झस्य रन् स्यात्।

१२ 'इटोऽत्' (३।४।१४६) लिङादेशस्य इटः अत् स्यात्। सीय् + इ = सीय् + अ = सकारलोपे वल्परत्वाभावात् यलोपाभावे ईय् इति भवति।

१३ 'लिङःसीयुट्' (३।४।१०२) 'सुट् तिथोः' (३।४।१०७) सीय् + स् + त = यलोपः। सीस् त = 'आदेशप्रत्यययोः (८।३।५१) इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशावयवश्च यः सकारः तस्य मूर्धन्यादेशः स्यात्। इति सुटः सकारस्य षत्वे ष्टुत्वे च 'सीष्ट' इति भवति।

१४ सीय् + आताम्। तकारात् प्राक् सुडागमे सीयास्ताम् इति भवति।

१५ 'झस्य रन्' सीयुट्। यलोपः।

सीष्ठाः।[१] सीयास्थाम्। सीध्वम्। उ. सीय। सीवहि। सीमहि।

**९. आत्मनेपदे लुङः प्रत्ययाः पञ्चविधाः**

लुङि प्रथमा विधा—च्लेरङादेशेन।[२]

प्र. त। इताम्। न्त। म. थास्। इथाम्। ध्वम्। उ. इ। वहि। महि।

लुङि द्वितीया विधा—च्लेश्चङादेशेन।[३] प्रथमावत्।

लुङि तृतीया विधा—अनिड्भ्यो धातुभ्यः[४] सिज्लोपाभावेन।

प्र. स्त। साताम्। सत। म. स्थाः। साथाम्। ध्वम्। उ. सि। स्वहि। स्महि।

लुङि चतुर्थी विधा—सेड्भ्यो धातुभ्यः[५] सिज्लोपाभावेन।

प्र. इष्ट। इषाताम्। इषत। म. इष्ठाः। इषाथाम्। इध्वम्।[६] उ. इषि। इष्वहि। इष्महि।

लुङि पञ्चमी विधा—क्सादेश ईडभावाभ्याम्।[७] प्र. सत। साताम्। सन्त। म. सथाः। साथाम्। सध्वम्। उ. सि। सावहि। सामहि।

**१०. लृङः प्रत्ययाः**—स्यत[८]। स्येताम्।[९] स्यन्त। म. स्यथाः। स्येथाम्। स्यध्वम्। उ. स्ये। स्यावहि। स्यामहि।

## भावकर्मणी

**'सार्वधातुके यक्'** (३।१।६७)— धातोर्यक् स्यात् भावकर्मवाचिनि सार्वधातुके परे।

**'भावकर्मणोः'** (१।३।१३)— एतयोर्विवक्षितयोः सतोः आत्मनेपदं स्यात्। भावार्थकलकाराणां युस्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमपुरुष एव। तिङ्वाच्यभावनाया लिङ्गसंख्यान्वयायोगात् एकवचनमेव। यथा—त्वया भूयते। मया भूयते। तेन तया तैर्वा भूयते इत्यादि। कर्मणि तु पुरुषत्रयं वचनत्रयमपि।

## हेतुमण्णिजन्ताः

**'तत्प्रयोजको हेतुश्च'** (१।४।५५)— कर्तुः प्रवर्तयिता हेतुसंज्ञः कर्तृसंज्ञश्च भवति। यथा—देवदत्तो गच्छति। गच्छन्तं देवदत्तं यज्ञदत्तः प्रेरयति। अत्र देवदत्तः कर्ता। तस्य

---

१ 'सीष्ट'वत्।

२ इयं द्वितीयायाः संवादिनी। तत्रोक्ताः सर्वे विधयोऽत्राप्यनुसन्धेयाः। यथा अवोचत। अवोचेताम्। अवोचन्त।

३ इयं तृतीयायाः संवादिनी। तत्रोक्तानि सर्वाणि सूत्राणि अत्राप्यनुसन्धेयानि। यथा—'गद व्यक्तायां वाचि' इत्यस्मात् णिचि, अजीगदत। अजीगदेताम्। अजीगदन्त।

४ इयं षष्ठ्याः संवादिनी। यथा—अपक्त अपक्षाताम् अपक्षत।

५ इयं सप्तम्याः संवादिनी। यथा—अबाधिष्ट अबाधिषाताम् अबाधिषत।

६ 'धि च' (८।२।३५) इति सलोपः।

७ इयं पञ्चम्याः संवादिनी। यथा—दिश = अतिसर्जने। अदिक्षत अदिक्षाताम् अदिक्षन्त।

८ 'स्यतासी—' (३।१।३३)

९ 'आतो ङितः' (७।२।८१) 'लुङ्लङ्लृङ्क्षु—' (६।४।७१)

प्रवर्तयिता यज्ञदत्तः हेतुसंज्ञो भवति कर्तृसंज्ञश्च।

**'हेतुमति च'** (३ ।१ ।२६)—प्रेरकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। णचावितौ। 'इ'मात्रं शिष्यते। यथा—गमि इति अयं णिजन्तो धातुः। तस्मात् शपि गमि अ इति स्थिते 'सार्वधातुके'—(७ ।३ ।८४) ति गुणे अयादेशे तिपि च 'गमयति' इति भवति। अत्र गमय इत्येतदङ्गम्।

**'णिचश्च'** (१ ।३ ।७४)— णिजन्ताद्धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। गमयते इत्यपि। गमि इत्यस्य अनेकाल्त्वात् लिटि आम्प्रत्ययकृभ्वस्त्यनुप्रयोगाभ्यां रूपनिष्पत्तिः। गमयाम्बभूव। गमयाञ्चकार। गमयामासेत्यादि। लुङि—तृतीयाद्वितीये विधे। अजीगमत्—अजीगमत।

## अथ सन्नन्ताः

**'धातोः कर्मणः समानकर्तृकादिच्छायां वा'** (३ ।१ ।७)— इषीकर्मीभूतव्यापारवाचकाद्धातोः सन् प्रत्ययो वा स्यात् इच्छायाम्। 'आर्धधातुकं शेषः' (३ ।४ ।११४) इति सन आर्धधातुकत्वम्। 'आर्धधातुकस्येड् वलादेः' (७ ।२ ।३५) इति इटि, 'इस' इति भवति। पठितुमिच्छति इत्यर्थे पठ् इस इति स्थिते 'सन्यङोः' (६ ।१ ।९) सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तः अजादेस्तु द्वितीयस्य। लिटि उक्ताः सर्वेऽपि विधयोऽत्र ग्राह्याः। पठ् पठ् = पपठ् इस इत्यत्र 'सन्यतः' (७ ।४ ।७९) अभ्यासस्यात इकारः स्यात् सनि। पिपठिस, षत्वं 'पिपठिष, इत्यङ्गम् + ति पिपठिषति पठितुमिच्छति इति वाक्यं वा। 'पूर्ववत्सनः' (१ ।३ ।६२) सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। सनः पूर्वो धातुः परस्मैपदं चेत् सन्नन्तात् परस्मैपदं भवति।

## अथ यङन्ताः

**'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'** (३ ।१ ।२२)— पौनःपुन्ये भृशार्थे च द्योत्ये एकाचो हलादेर्धातोर्यङ् स्यात्। पुनः पुनर्भवति इत्यर्थे भूधातोः यङ् भवति। 'सन्यङोः' (६ ।१ ।९)इति द्वित्वम्। जश्त्वम्। बूभूय इति जाते,'गुणो यङ्लुकोः' (७ ।४ ।८२) अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। 'बोभूय' इत्यङ्गम्। ङित्वात्तङ्। बोभूयते बोभूयेते। इत्यादि। धातोरनेकाच्त्वात्। लिटि तृतीया विधा।

## अथ यङ्लुगन्ताः

**'यङोऽचि च'** (२ ।४ ।७४)— यङोऽच् प्रत्यये परे लुक् स्यात्। चकारान्निमित्तं विनापि लुक्। चर्करीतं परस्मैपदमदादिवच्च इति परस्मैपदप्रत्यया एव। अदादाविव शपो लुक्। प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः।

इति पूर्वपीठिका।

# प्रकरण-सूची





# सङ्केत-निर्देशः

| | | | | | |
|---|---|---|---|---|---|
| लट् | — | १ | आत्म. | — | आत्मनेपदम् |
| लिट् | — | २ | पर. | — | परस्मैपदम् |
| लुट् | — | ३ | उभय. | — | उभयपदम् |
| लृट् | — | ४ | अक. | — | सकर्मकः |
| लोट् | — | ५ | सक. | — | सकर्मकः |
| लङ् | — | ६ | प्र. | — | प्रथमपुरुषः |
| विधिलिङ् | — | ७ | म. | — | मध्यमपुरुषः |
| आशीर्लिङ् | — | ८ | उ. | — | उत्तमपुरुषः |
| लुङ् | — | ९ | अनि. | — | अनिट् |
| लृङ् | — | १० | से. | — | सेट् |

